| | |
|---|---|
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै. सं. | तैत्तिरीयसंहिता |
| त्रिकाण्डी | नामलिङ्गानुशासनम् |
| त्रि. म. | त्रिकाण्डमण्डनः |
| दक्ष. | दक्षस्मृतिः |
| देव. | देवलस्मृतिः |
| देवीपु. | देवीपुराणम् |
| धातु. | धातुपाठः |
| नर. | नरसिंहपुराणम् |
| नार. | नारदस्मृतिः |
| नार. TSS | नारदीयमनुसंहिता |
| पद्म. | पद्मपुराणम् |
| परा. | पराशरस्मृतिः |
| परि. | परिशिष्टम् |
| पार. | पारस्करगृह्यसूत्रम् |
| पिता. | पितामहस्मृतिः |
| पुल. | पुलस्त्यस्मृतिः |
| पैठी. | पैठीनसिस्मृतिः |
| प्रचे. | प्रचेतःस्मृतिः |
| प्रजा. | प्रजापतिस्मृतिः |
| बुध. | बुधस्मृतिः |
| बृ. उ. | बृहदारण्यकोपनिषद् |
| बृ. नार. | बृहन्नारदपुराणम् |
| बृ. परा. | बृहत्पराशरस्मृतिः |
| बृ. मनु. | बृहन्मनुस्मृतिः |
| बृ. मरी. | बृहन्मरीचिस्मृतिः |
| बृ. यो. याज्ञ. | बृहद्योगयाज्ञवल्क्यस्मृतिः |
| बृहस्प. | बृहस्पतिस्मृतिः |
| बैज. | बैजवापस्मृतिः |
| बोधा. | बोधायनधर्मसूत्रम् |
| ब्रह्म. | ब्रह्मपुराणम् |
| ब्रह्मवै. or ब्र. वै. | ब्रह्मवैवर्तपुराणम् |
| ब्रह्माण्ड. | ब्रह्माण्डपुराणम् |
| भर. | भरद्वाजस्मृतिः |
| भवि. | भविष्यपुराणम् |
| भविष्यो. | भविष्योत्तरपुराणम् |
| भाग. | भागवतपुराणम् |
| भृगु. | भृगुस्मृतिः |
| मत्स्य. | मत्स्यपुराणम् |
| मनु. | मनुस्मृतिः |
| मरी. | मरीचिस्मृतिः |
| महाभार. | महाभारतम् |
| मार्क. | मार्कण्डेयपुराणम् |
| मिता. | मिताक्षरा |
| मी. सू. | मीमांसासूत्रम् |
| मुण्ड. | मुण्डकोपनिषद् |
| मै. परि. | मैत्रायणीयपरिशिष्टम् |
| मै. सं. | मैत्रायणीयसंहिता |
| यम. | यमस्मृतिः |
| याज्ञ. | याज्ञवल्क्यस्मृतिः |
| यो. याज्ञ. | योगयाज्ञवल्क्यस्मृतिः |
| लघुयम. | लघुयमस्मृतिः |
| लघुविं. | लघुविष्णुस्मृतिः |
| लघ्वाश्व. | लघ्वाश्वलायनस्मृतिः |
| लिखि. | लिखितस्मृतिः |
| लिङ्ग. | लिङ्गपुराणम् |
| लौगा. | लौगाक्षिस्मृतिः |
| वराह. | वराहपुराणम् |
| वसि. | वसिष्ठस्मृतिः |
| वायु. | वायुपुराणम् |
| वायुसं. | वायुसंहिता |
| विज्ञा. | विज्ञानेश्वरः |
| वि. पु. | विष्णुपुराणम् |
| विश्वा. | विश्वामित्रस्मृतिः |
| विष्णु. | विष्णुस्मृतिः |
| विष्णु(T). | विष्णुस्मृतिः AL |
| विष्णुधर्मो. | विष्णुधर्मोत्तरम् |
| वृ. कात्या. | वृद्धकात्यायनस्मृतिः |
| वृ. गौत. | वृद्धगौतमस्मृतिः |
| वृ. प्रचे. | वृद्धप्रचेतःस्मृतिः |
| वृ. मनु. | वृद्धमनुस्मृतिः |
| वृ. याज्ञ. | वृद्धयाज्ञवल्क्यस्मृतिः |

| | | | |
|---|---|---|---|
| वृ. वसि. | वृद्धवसिष्ठस्मृतिः | श्वे. उ. | श्वेताश्वतरोपनिषद् |
| वृ. हारी. | वृद्धहारीतस्मृतिः | षड. | षडशीतिः |
| व्याघ्र. | व्याघ्रपादस्मृतिः | ष. त्रि. | षट्त्रिंशन्मतम् |
| व्यास. | व्यासस्मृतिः | संव. | संवर्तस्मृतिः |
| शं. गी. | शंकरगीता | सि. कौ. | सिद्धान्तकौमुदी |
| शङ्ख. | शङ्खस्मृतिः | सि. शि. | सिद्धान्तशिरोमणिः |
| शङ्खलि. | शङ्खलिखितस्मृतिः | सुम. | सुमन्तुस्मृतिः |
| श. ब्रा. | शतपथब्राह्मणम् | स्कान्द. | स्कान्दपुराणम् |
| शाता. | शातातपस्मृतिः | स्मृ. च. | स्मृतिचन्द्रिका |
| शाबर. | शाबरभाष्यम् | स्मृ. संद. | स्मृतिसंदर्भः |
| शालं. | शालंकायनस्मृतिः | हर. | हरदत्तः |
| शिवपु. | शिवपुराणम् | हरि. | हरिवंशः |
| शुक्र. | शुक्रनीतिसारः | हारी. | हारीतस्मृतिः |
| शौन. | शौनकस्मृतिः | हारी. सं. | हारीतसंहिता |

---

## विषयानुक्रमणी

अध्याय:


१. उपोद्घात:

यज्ञवराहवर्णनम् १ ; भूदेव्युद्धरणम् १० ; भूदेव्या: कश्यपसमीपगमनम् २० ; भूदेवीवर्णनम् २२ ; कश्यपवचनम् ३० ; भूदेव्या विष्णो: स्तुति: ३३ ; विष्णुना धर्मोपदेशस्यारम्भ: ४९

२. वर्णधर्मा:

वर्णानां विभाग: १ ; तेषां धर्मा: ४

I. व्यवहारकाण्ड:—

३. राजधर्मा:

अधिकारिनियमनम् ७ ; बलिग्रहणे व्यवस्था २२ ; राज्याङ्गानि ३३ ; संधिविग्रहादि: ३८ ; मृगयादिव्यसनानि ५० ; निधिलाभे विनियोगव्यवस्था ५९ ; चोरापहृतधनप्रत्याहरणम् ६६ ; पुरोहितवरणम् ७० ; सभ्यनियमनम् ७४ ; राज्ञा सामान्यतोऽवधेया नियमा: ७५ ; भूदानेऽवधेया नियमा: ८१ ; दण्डप्रशंसा ९१

४. अर्थपरिमाणम्

त्रसरेणुमारभ्य सुवर्णनिष्ककार्षापणादिद्रव्यपरिमाणम् १ ; प्रथममध्यमोत्तमसाहसदण्डपरिमाणम् १४

५. व्यवहारपदानि

महापातकिनां दण्ड:१ ; कूटशासनादिकर्तॄणां दण्ड: ९ ; धान्यसुवर्णाद्यपहरणे दण्ड: १० ; तस्कराणां साहाय्याचरणे दण्ड: १४ ; दण्डपारुष्यम् १९ ; वाक्पारुष्यम् २३ ; स्त्रीसंग्रहणम् ४० ; स्त्रीपुंधर्मा: ४९ ; स्तेयम् ७७ ; साहसम् ९१ ; संभूयसमुत्थानम् १२५ ; विक्रीयासंप्रदानम् १२७; क्रीतानुशय: १२९ ; द्यूतसमाह्वय: १३४ ; स्वामिपालविवाद: १३८; वेतनादानम् १५७ ; अस्वामिविक्रय: ; १६५ ; संविद्व्यतिक्रम: १६८ ; सीमाविवाद: १७३ ; साहसदण्डशेष: १७४ ; भिषजो मिथ्याचारे दण्ड: १७६ ; दत्ताप्रदानम् १७९ ; कूटसाक्ष्योत्कोचग्रहणादीनि १८० ; आधिविवाद: १८२ ; दण्डस्य क्वचिदपवाद: १८८ ; आततायिदण्ड: १९२

अध्यायः

६. ऋणादानम्

ऋणे वृद्धिपरिमाणव्यवस्था २ ; वृद्ध्यपवादः ५ ; आधिविशेषे मोचनकालः ७ ; वृद्धेः परमावधिः ११ ; उत्तमर्णाधमर्णयोः नियमाः १८ ; ऋणापाकरणे कर्तृकालौ २७ ; ऋणादाने प्रतिभुवः ४१

७. लेख्यम्

त्रिविधानि लेख्यानि १ ; अप्रमाणलेख्यानि ६ ; लेख्यसंदेहे निर्णयोपायः १२

८. साक्षिणः

असाक्षिपरिगणनम् २ ; स्तेयादिषु साक्षिणो न परीक्षणीयाः ६ ; साक्षिनिरूपणम् ७ ; साक्षित्वनिमित्तम् १३ ; साक्ष्ये सत्यवचनस्य क्वचिदपवादः १५ ; साक्षिणामनृतवचने प्रायश्चित्तम् १७ ; साक्ष्यविचारक्रमः १९ ; साक्ष्ये सत्यप्रशंसा २४ ; साक्षिविप्रतिपत्तौ निर्णयप्रकारः ४०

९. समयक्रिया

शपथे द्रव्यसंख्या ४ ; दिव्ये अधिकारिणोऽनधिकारिणश्च १०

१०. धटदिव्यम्

धटलक्षणम् २ ; धटग्रहणाधिकारिणः ४ ; धटपरीक्षाप्रकारः ५ ; शिक्यच्छेदादिषु कर्तव्यनिरूपणम् १३

११. अग्निदिव्यम्

अग्निमण्डलनिर्माणम् २ ; अग्निपरीक्षाप्रकारः ३ ; अग्निपरीक्षायां मन्त्रः ११

१२. उदकदिव्यम्

उदकस्वरूपम् २ ; उदकपरीक्षाप्रकारः ३ ; उदकपरीक्षायां मन्त्रः ७

१३. विषदिव्यम्

वर्ज्यविषाणि २ ; ग्राह्यविषाणि ३ ; विषदिव्यपरीक्षाप्रकारः ४ ; विषपरीक्षामन्त्रः ६

१४. कोशदिव्यम्

कोशपरीक्षाविधिः २ ; तत्र शुद्ध्यशुद्धिविभावनोपायः ४

१५. पुत्रविशेषाः

औरसपुत्रः २ ; क्षेत्रजपुत्रः ३ ; पुत्रिकापुत्रः ४ ; पौनर्भवपुत्रः ७ ; कानीनपुत्रः १० ; गूढजपुत्रः १३ ; सहोढपुत्रः १५ ; दत्तकपुत्रः १८ ; क्रीतपुत्रः २० ; स्वयंदत्तपुत्रः

अध्यायः

२२ ; अपविद्धपुत्रः २४ ; यत्रक्वचनोत्पादितपुत्रः २७ ; दायानर्हाः ३२ ; अर्थग्राहिणः पिण्डदातारः ४० ; पितृवित्तालाभेऽपि पुत्रः पिण्डं दद्यात् ४३ ; पुत्रप्रशंसा ४४

१६. संकरजपुत्राः

अनुलोमजातानां मातृजातिः २ ; प्रतिलोमजातानां नामानि ४ ; प्रतिलोमजातानां वृत्तिः ८ ; तेषां धर्मः १८

१७. दायविभागः

स्वयमुपार्जितेऽर्थे पितुरिच्छया दायविभागकथनम् १ ; पैतामहद्रव्यविभागः २ ; विभागानन्तरमुत्पन्नस्य पुत्रस्य विभागप्रकारः ३ ; अपुत्रधनग्राहिणः ४ ; संसृष्टिधनग्राहिणः १७ ; स्त्रीधनविभागः १८ ; पितृधनविभागे विशेषः २२

१८. अंशनिर्णयः

सवर्णाजातानामनुलोमजातानां च पुत्राणां समवाये दायविभागक्रमः १ ; अपुत्ररिक्थस्य भिन्नजातीयभार्याभिः भागकल्पनाप्रकारः ३४ ; अविभाज्यानि वस्तूनि ४४

II. आचारकाण्डः—

(१. आशौचप्रकरणम्)

१९. पैतृमेधिकविधिः

पितृनिर्हरणे पुत्राणां मुख्योऽधिकारः ३ ; नवश्राद्धस्य कालः स्वरूपं च ७ ; अस्थिसंचयनम् १० ; आशौचिनां नियमः १४ ; आशौचान्तिमदिनकर्तव्यक्रमः १८ ; ब्राह्मणप्रशंसा २०

२०. प्रेतबन्धूनामाश्वासनम्

कालभेदनिरूपणम् १ ; युगभेदनिरूपणम् ६ ; ब्रह्मायुःपरिमाणम् १९ ; कालगतेरनतिक्रमणीयतानिरूपणेन बन्धूनामाश्वासनम् २२

२१. एकोद्दिष्टादिश्राद्धनिरूपणम्

एकोद्दिष्टविधिः १ ; सपिण्डीकरणविधिः १२ ; संवत्सरात् प्राक् सपिण्डीकरणेऽपि सोदकुम्भश्राद्धं संवत्सरपूर्तिपर्यन्तं कर्तव्यम् २३

२२. आशौचनिरूपणम्

वर्णभेदेन जननमरणाशौचव्यवस्था १ ; साापिण्ड्यनिर्णयः ५ ; आशौचिनां नियमः ६ ; आशौच्यन्नभोजनप्रायश्चित्तम् ९ ; गर्भस्रावाशौचम् २५ ; बालमरणे आशौचम् २६ ; विवाहानन्तरं स्त्रीमरणे पितृपक्षे नाशौचम् ३३ ; आशौचसांकर्ये निर्णयः ३५ ; औरस-

अध्यायः

भिन्नपुत्राशौचम् ४३ ; आचार्यादिमरणे आशौचम् ४४ ; क्वचित् आशौचस्यापवादः ४८ ; पतितादीनां मरणे कर्तव्यक्रमः ५६ ; रजस्वलाशुद्धिः ७२ ; सुराादिस्पर्शे शुद्धिः ८२

(२. शुद्धिप्रकरणम्)

२३. द्रव्यशुद्धिः

अत्यन्तोपहतशुद्धिः १ ; अल्पोपहतशुद्धिः ७ ; कर्माङ्गद्रव्यशुद्धिः १० ; स्पर्शशुद्धिः १२ ; भोज्यद्रव्यशुद्धिः ३८ ; मार्गादिशुद्धिः ४१ ; जलाशयशुद्धिः ४४ ; स्वभावतः शुद्धानि ४८ ; गृहादिशुद्धिः ५६ ; गवादिशुद्धिः ५८

(३. संस्कारप्रकरणम्)

२४. संस्काराः

विवाहः १ ; सगोत्रादिविवाहनिषेधः ९ ; अविवाह्यकन्याः ११ ; अष्टौ विवाहाः १७ ; कन्यादातारः ३८

२५. स्त्रीधर्माः

गुरुपूजनादिः ३ ; प्रोषितभर्तृकाधर्माः ९ ; विधवाधर्माः १४

२६. धर्मकार्यार्हस्त्रियः

ज्येष्ठपत्न्या अधिकारः १ ; सवर्णाया विशेषेणाधिकारः २ ; शूद्राया निषेधः ४

२७. निषेकादिसंस्काराः

निषेकः १ ; पुंसवनम् २ ; नामकरणम् ६ ; चूडाकरणम् १२ ; उपनयनम् १५ ; वर्णविशेषेण मौञ्ज्यादयः १८ ; उपनयनस्य परमावधिकालः २६

२८. ब्रह्मचारिधर्माः

गुरुकुलवासादिः १ ; अभिवादनम् १५ ; गुरावनुष्ठेयधर्माः १८ ; वेदाध्ययनम् ३४ ; व्रतलोपे प्रायश्चित्तम् ४९

२९. आचार्यादिलक्षणम्

आचार्यः १ ; उपाध्यायः २ ; ऋत्विक् ३ ; अनध्यापनीयशिष्याः ७

३०. अध्ययनोपक्रमादिः

श्रावणी १ ; अङ्गाध्ययनम् ३ ; अनध्यायाः ४ ; शिष्यधर्माः ३२ ; गुरुद्रोहनिषेधः ४३ ; आचार्यमहिमा ४५

३१. अतिगुरवः

मात्रादिशुश्रूषा ३ ; तन्महिमा ७

अध्यायः

३२. गुरुधर्मातिदेशः

राजादयो मान्याः १ ; गुरुपत्न्यां विशेषः १३ ; मानार्हाः १६

III. प्रायश्चित्तकाण्डः—

३३. प्रायश्चित्तोपोद्घातः

प्रायश्चित्तनिमित्तानि २

३४. अतिपातकानि

अतिपातकस्वरूपम् १ ; तत्प्रायश्चित्तम् २

३५. कामकृतमहापातकानि

ब्रह्महत्यादयः १ ; तत्प्रायश्चित्तम् ६

३६. कामकृतानुपातकानि

ब्रह्महत्यासमानि १ ; सुरापानसमानि २ ; सुवर्णस्तेयसमानि ३ ; गुरुतल्पगमनसमानि ४ ; तत्प्रायश्चित्तम् ८

३७. कामकृतोपपातकानि

अनृतवचनादि १ ; वेदनिन्दा ४ ; परदारगमनम् ९ ; परिवेदनादि १९ ; तत्प्रायश्चित्तम् ३९

३८. कामकृतजातिभ्रंशकराणि

ब्राह्मणरुजाकरणम् १ ; अघ्रेयघ्राणादि २ ; तत्प्रायश्चित्तम् ७

३९. कामकृतसंकरीकरणानि

पशुहिंसा १ ; तत्प्रायश्चित्तम् २

४०. कामकृतापात्रीकरणानि

निन्दितेभ्यो धनग्रहणादि १ ; तत्प्रायश्चित्तम २

४१. कामकृतमलावहानि

पक्ष्यादिवधः १ ; तत्प्रायश्चित्तम् ९

४२. कामकृतप्रकीर्णकपातकानि

खरयानादि १ ; तत्प्रायश्चित्तम् २

४३. कामकृतपातकेष्वकृतप्रायश्चित्तानां नरकाः

नरकनामानि १ ; यातनानि ३२

अध्यायः


४४. तेषामेव विविधयोनिषु जन्म

स्थावरादिजन्म २

४५. तेषामेव विविधरोगाः

कुष्ठादिरोगाः २

४६. कामकृतपातकप्रायश्चित्तानि

अघमर्षणकृच्छ्रम् २; प्राजापत्यकृच्छ्रम् १०; तप्तकृच्छ्रम् ११; शीतकृच्छ्रम् १२; कृच्छ्रातिकृच्छ्रम् १३; उदकमूलश्रीफलपराकसांतपनमहासांतपनातिसांतपनतुलापुरुषपर्ण-कृच्छ्राणि १४–२३; कृच्छ्राङ्गानि २४

४७. कामकृतपातकप्रायश्चित्तानि

यवमध्यचान्द्रायणम् ३; पिपीलिकामध्यचान्द्रायणम् ४; यतिचान्द्रायणम् ७; शिशु-चान्द्रायणम् ८; सामान्यचान्द्रायणम् ९

४८. कामकृतपातकप्रायश्चित्तानि

यावकव्रतम् १; यावकेनाग्निहोत्रादिनिषेधः २; यावकव्रतप्रक्रिया ४

४९. कामकृतपातकप्रायश्चित्तानि

वैष्णवव्रतानि, तत्र कालश्च १; उपचाराः २; कालभेदेन फलभेदः ३

५०. अकामकृतपातकप्रायश्चित्तानि

ब्रह्महत्याप्रायश्चित्तम् १; ब्रह्महत्यासमपातके प्रायश्चित्तम् ७; नृपवधे प्रायश्चित्तम् ११; गोवधे प्रायश्चित्तम् १६; गजादिवधे प्रायश्चित्तम् २९; हंसादिवधे प्रायश्चित्तम् ३३

५१. अकामकृतपातकप्रायश्चित्तानि

सुरापाने प्रायश्चित्तम् १; तत्समेषु अभक्ष्यभक्षणप्रायश्चित्तम् ३; श्राद्धभोक्तुर्ब्रह्मचारिणः प्रायश्चित्तम् ४३; उच्छिष्टाशनप्रायश्चित्तम् ४६; मांसभक्षणविधिनिषेधव्यवस्था ५९

५२. अकामकृतपातकप्रायश्चित्तानि

सुवर्णस्तेये प्रायश्चित्तम् १; तत्समोपपातकेषु प्रायश्चित्तम् ४; स्तेयप्रायश्चित्तविधिशेषः १४

५३. अकामकृतपातकप्रायश्चित्तानि

गुरुतल्पगमने प्रायश्चित्तम् १; तत्समोपपातकेषु परदारगमने प्रायश्चित्तम् २; व्यभि-चारिणीगमने प्रायश्चित्तम् ८

अध्याय:

५४. संसर्गप्रायश्चित्तम्

संसृष्टिनां पातकिसमप्रायश्चित्तम् १; निषिद्धजलपाने प्रायश्चित्तम २; कौटसाक्ष्ये प्रायश्चित्तम् ९; प्रकीर्णकेषु प्रायश्चित्तम् १०; वेदाग्नित्यागे प्रायश्चित्तम् १३; परिवेदनादिषु प्रायश्चित्तम् १६; अविक्रेयविक्रये प्रायश्चित्तम् १८; असत्प्रतिग्रहे प्रायश्चित्तम् २४; अयाज्ययाजने प्रायश्चित्तम् २५; व्रात्यप्रायश्चित्तम् २६; संध्यादिलोपे प्रायश्चित्तम् २९; अवगोरणे प्रायश्चित्तम् ३०; प्रायश्चित्तफलम् ३१; बालादिविषये प्रायश्चित्तम् ३३

५५. रहस्यपातकप्रायश्चित्तम्

प्रायश्चित्तविधिः १; तत्रोपपातके प्रायश्चित्तम् ७; प्राणायामलक्षणम् ९; गायत्रीप्रशंसा ११

५६. प्रायश्चित्तीयमन्त्राः

अघमर्षणादिसूक्तानि ३

५७. अननुतापिपातकिनः

तेषां त्यागादि १; प्रतिग्रहवर्जनप्रशंसा ७; विषयविशेषेषु प्रतिग्रहे न दोषः १३

आचारकाण्डशेषः—

(४. आह्निकप्रकरणम्)

५८. धनविवेकः

धनत्रैविध्यम् १; शुक्लधनम् ६; शबलधनम् १०; कृष्णधनम् ११

५९. गृहस्थधर्माः

अग्निनिर्णयः १; वैश्वदेवकालः १२; पञ्च यज्ञाः १९; गार्हस्थ्यप्रशंसा २७

६०. शौचविधिः

मूत्राद्युत्सर्गे दिङ्नियमः २; स्थलनियमः ३; आश्रमविशेषेण शौचव्यवस्था २६

६१. दन्तधावनविधिः

निषिद्धकाष्ठानि १; दिङ्नियमः १२; अनिषिद्धकाष्ठानि १४

६२. आचमनविधिः

प्राजापत्यादितीर्थानि १; तत्रानुष्ठेया नियमाः ५

६३. गृहस्थस्य धनार्जनम्

धनिकाभिगमनम् १; यात्रानियमाः २; शकुनानि २८; अपशकुनानि ३३; अभिनन्दनीयानि ३८; अनतिक्रमणीयानि ३९; अकर्तव्यानि ४२

अध्यायः

६४. स्नानविधिः

स्नाने वर्जनीयजलानि १ ; प्रात:स्नानविधि: ९ ; मध्याह्नस्नानविधि: १८ ; तर्पणविधि: २४ ; मध्याह्नस्नानाङ्गविधि: २८

६५. विष्णुपूजाविधिः

तत्राधिकारिनियम: १ ; पूजामन्त्रा: २

६६. विष्णुपूजाविधिः

पूजार्थोदकानि १ ; गन्धपुष्पादीनि २ ; पूजाकर्तृनियमा: १५

६७. पूजोत्तराङ्गानि

होम: १ ; वैश्वदेवम् ३ ; भूतयज्ञ: ४ ; पितृयज्ञ: २३ ; मनुष्ययज्ञ: २७ ; अतिथिलक्षणम् ३४ ; पञ्चयज्ञाकरणे प्रत्यवाय: ४३

६८. भोजनविधिः

उपरागे भोजननिषेध: १ ; भोजननिषेधविषया: ४ ; भोजने नियमा: ४०

६९. स्त्रीसंगमः

तत्र निषिद्धदिनानि १ ; निषिद्धा: स्त्रिय: १७

७०. शयनविधिः

तत्र निषिद्धप्रदेशादय: १

७१. स्नातकधर्माः

तस्य निषिद्धानि कर्माणि १ ; यष्ट्यादिधारणम् १३ ; निषिद्धदर्शनानि १७ ; निषिद्धाचारा: ३२ ; अनुष्ठेयाचारा: ९०

७२. साधारणधर्माः

आश्रमचतुष्टयसाधारणा धर्मा: १ ; शान्तिप्रशंसा ६

(५. श्राद्धप्रकरणम्)

७३. श्राद्धविधिः

पूर्वदिनकृत्यम् १ ; श्राद्धदिनकृत्यम् २ ; ब्राह्मणसंख्या ३ ; श्राद्धविशेषधर्मा: ९ ; श्राद्धप्रक्रिया ११

७४. अष्टकाश्राद्धविधिः

तत्र श्राद्धसामान्यधर्मातिदेश: १ ; विशिष्य कर्षूविधि: २

अध्याय:

७५. श्राद्धदेवता:

जीवत्पितृककर्तृकश्राद्धदेवता: १ ; जीवत्पितृपितामहकर्तृकश्राद्धदेवता: २ ; जीवत्पित्रादि-त्रयकर्तृकश्राद्धदेवता: ३ ; व्युत्क्रममृते श्राद्धविधि: ४ ; मातामहश्राद्धविषय: ७

७६. नित्यश्राद्धानि

अमावास्यादिकालविधि: १ ; श्राद्धाकरणे प्रत्यवाय: २

७७. नैमित्तिकश्राद्धानि

संक्रमणादिकालविधि: १ ; श्राद्धे निषिद्धकाल: ८ ; उपरागश्राद्धप्रशंसा ९

७८. काम्यश्राद्धानि

तिथिवारनक्षत्रविशेषेषु श्राद्धकरणे फलविशेषा: १

७९. श्राद्धोपकरणानि

उदकादिनियम: १ ; पुष्पनियम: ५ ; दीपधूपनियम: ७ ; अनुलेपनविषय: ११ ; पात्रनियम: १४ ; वर्जनीयशाकादीनि १७ ; कर्तृधर्मा: १९

८०. श्राद्धोपकरणानि

तिलादिप्रशंसा १ ; पितृगाथा १३

८१. श्राद्धभोक्तृधर्मादय:

अन्ननियमा: १ ; दर्शनानर्हा: ६ ; हविर्गुणकथननिषेध: २० ; विकिरक्रम: २२

८२. पङ्क्तिदूषका:

श्राद्धभोजने वर्जनीया ब्राह्मणा: ३

८३. पङ्क्तिपावना:

श्राद्धभोजने प्रशस्ता ब्राह्मणा: १ ; पितृगाथा २०

८४. वर्जनीयदेश:

म्लेच्छदेशो वर्जनीय: १ ; म्लेच्छदेशलक्षणम् ४

८५. प्रशस्तदेशा:

पुष्करादिदेशा: प्रशस्ता: १ ; पितृगाथा: ६८

८६. वृषोत्सर्गविधि:

वृषोत्सर्गकाल: २ ; वृषभपरीक्षा ३ ; वृषोत्सर्गप्रकार: ९ ; वृषोत्सर्गफलम् १९

अध्यायः

(६. दानप्रकरणम्)

८७. कृष्णाजिनदानविधिः

कृष्णाजिनदानप्रकारः १ ; तत्र फलनिर्देशः ८

८८. उभयतोमुखीदानम्

उभयतोमुखीदानप्रशंसा १ ; फलनिर्देशः २ ; फलनिर्देशे गाथा ४

८९. कार्त्तिकस्नानविधिः

कार्तिकस्नानप्रशंसा १ ; तत्र फलनिर्देशः ४

९०. प्रकीर्णकदानविधिः

मार्गशीर्ष्यां लवणदानम् ; पौष्यां ब्राह्मणपूजा ३ ; माघ्यां श्राद्धविधिः ६ ; फाल्गुन्यां शय्यादानम् ७ ; चैत्र्यां वस्त्रदानम् ९ ; वैशाख्यां तिलैर्ब्राह्मणभोजनम् १० ; ज्यैष्ठ्यां छत्रोपानहदानम् ११ ; आषाढ्यामन्नदानम् १२ ; श्रावण्यां जलधेनुदानम् १३ ; प्रौष्ठपद्यां गोदानम् १४ ; आश्वयुज्यां घृतपूर्णपात्रदानम् १५ ; कार्त्तिक्यां वृषभदानम् १६ ; अक्षयतृतीयायां वासुदेवस्य विशेषपूजा १७ ; पौषीकृष्णद्वादश्यां वासुदेवस्य विशेषपूजा १९ ; माघीकृष्णद्वादश्यां वासुदेवसंनिधौ दीपसमर्पणम् २० ; आश्विनमासे घृतदानब्राह्मणभोजनादि २४ ; प्रतिमासं रेवत्यां ब्राह्मणभोजनादि २६ ; माघमासे प्रत्यहं कुल्माषैः ब्राह्मणभोजनम् २७ ; चतुर्दशीषु धर्मराजपूजा २८

९१. कूपादिदानम्

कूपदानफलम् १ ; तडागदानफलम् २ ; पानीयदानफलम् ३ ; वृक्षारोपणफलम् ४ ; सेतुबन्धनफलम् ९ ; देवायतननिर्माणफलम् १० ; देवायतनमार्जनादिफलम् १८ ; देवायतननवीकरणफलम् १९

९२. अभयादिदानम्

अभयप्रदानफलम् १ ; भूदानफलम् ३ ; गोदानफलम् ५ ; वृषभदानफलम् १० ; अश्वदानफलम् ११ ; वस्त्रदानफलम् १३ ; रजतादिदानफलम् १४ ; घृतादिदानफलम् १६ ; औषधलवणधान्यदानफलम् १७ ; तिलेन्धनासनशय्यादिदानफलम् २३ ; वास्तुदानफलम् ३१

९३. दानपात्राणि

ब्राह्मणाय दानप्रशंसा १ ; पुरोहितादिभ्यो दानम् ६ ; दाने निषिद्धपात्राणि ७

९४. वानप्रस्थधर्माः

वानप्रस्थाश्रमस्वीकारयोग्यकालः १ ; तत्राधिकारिविशेषणानि ३ ; पञ्चयज्ञानुष्ठानम् ५ ; वस्त्रादिनियमः ८ ; वृत्तिनियमः ११

अध्यायः

९५. वानप्रस्थधर्माः

शरीरशोषणोपायाः १ ; तपःप्रशंसा १९

९६. संन्यासिधर्माः

संन्यासस्वीकारयोग्यकालः १ ; भिक्षाचरणम् २ ; वासस्थलानि १० ; वस्त्राणि १३ ; आचाराः १४ ; संसारजुगुप्सनीयतायाश्चिन्तनम् २९ ; शरीरावयवसंनिवेशकथनम् ४३ ; क्षेत्रक्षेत्रज्ञविवेकः ९७

९७. मोक्षार्थचिन्तनम्

आत्मतत्त्वध्यानम् १ ; निरालम्बनध्यानविधिः २ ; तदशक्तं प्रति सालम्बनध्यानविधिः ७ ; भगवद्वासुदेवध्यानविधिः १० ; वासुदेवध्यानप्रशंसा ११

९८. धरणीकर्तृकविष्णुस्तुतिः

आकाशादिभूतानां भगवदायुधरूपेणावस्थानकथनम् २ ; भगवतः षण्णवत्या नामभिः स्तुतिः ६ ; भगवत्स्तुत्यनन्तरं लक्ष्मीस्तुतिप्रस्तावः १०२

९९. धरणीकर्तृकलक्ष्मीस्तुतिः

लक्ष्म्याः दिव्यसौन्दर्यस्य वर्णनम् २ ; धरण्या लक्ष्मीवासस्थानकथनं प्रति प्रार्थना ६ ; लक्ष्म्या स्वावासस्थानविशेषकथनम् ७ ; लक्ष्म्याः भगवदविनाभूतत्वकथनम् २३

१००. शास्त्राध्ययनफलश्रुतिः

विष्णुस्मृतेः भगवता स्वयमुपदिष्टत्वात् प्राशस्त्यकथनम् १ ; एतच्छास्त्राध्ययनस्य पापक्षयादिकं फलम् २ ; शास्त्रपरिसमाप्तिः ४

# विष्णुस्मृतिः

## नन्दपण्डितकृतया वैजयन्तीव्याख्यया सहिता

### प्रथमोऽध्यायः

**ब्रह्मरात्र्यां व्यतीतायां [1]प्रबुद्धे पद्मसंभवे ।**
**विष्णुः सिसृक्षुर्भूतानि ज्ञात्वा भूमिं [2]जलानुगाम् ॥ १ ॥**
**जलक्रीडारुचि शुभं कल्पादिषु यथा पुरा ।**
**वाराहमास्थितो रूपमुज्जहार वसुंधराम् ॥ २ ॥**

वैजयन्ती व्याख्या

श्रीवत्साङ्कितवक्षसः प्रणयिनो नित्यार्चने संविधा-
माधातुं निहितं गिरीन्द्रसुतयोत्सङ्गे क्षणं धूर्जटेः ।
चूडाचुम्बिकलङ्कपङ्किलकलं चन्द्रं मृणालभ्रमा-
दादातुं करमुत्क्षिपन्तमसकृद्ढुण्ढिं चिरं भावये ॥ १ ॥
सव्यासव्याङ्कसंस्थे क्षितिजलधिसुते संश्लिषन् बाहुयुग्मे-
नैकेनान्येन चैतच्चिबुकमभिमृशन्नेकदैवानुरोधात् ।
माजायाक्षान्तिभीत्या युगपदभिलषंश्चुम्बितुं वक्त्रपद्मे
स्वास्यद्वन्द्वाविधानानुशयिततहृदयः श्रीहरिर्नः सदाव्यात् ॥ २ ॥
जयति सकलसंपत्कल्पनाकामधेनु-
र्जडशशिदृषदां वाग्वारिनिष्यन्दचन्द्रः ।
विविधसुकृतलभ्यः कोऽपि वाग्देवताया
दुरितदलनदक्षः स्नेहपूर्णः कटाक्षः ॥ ३ ॥

[1] विबुद्धे—क, ठ.

[2] जलान्तगाम्—ठ.

यन्मूलं प्रणवस्त्रयी सुवितता स्कन्धाश्च शाखाः शुभाः
शाखा यस्य विधीरितानि विविधाः कर्माणि यत्पल्लवाः ।
पुष्पं यस्य यशः सितं त्रिजगतीविस्तारिसौगन्ध्यवत्
स्वर्गादीनि फलान्यसौ दिशतु वः शर्माणि धर्मद्रुमः ॥ ४ ॥

अस्ति स्वस्तिप्रशस्तिस्त्रिभुवनविदितो दक्षिणाशानितम्ब-
श्चञ्चत्काञ्चीगुणेन स्फुटतरमहिमा तुङ्गभद्राधिकश्रीः ।
[1]श्रीरङ्गस्थानशोभी विविधगुणलसच्चित्रवासोविचित्रो
वेणीसंपातशोभाधिकललिततरः कोऽपि कर्णाटदेशः ॥ ५ ॥

जयत्यमरदुर्लभं सुरपुरातिवर्तिप्रभं
प्रभावविजिताखिलावनितलस्थतीर्थादिकम् ।
पुराणमतकोविदा-विदुरिह क्षितेरङ्गदं
पुरं विजयसंज्ञकं विजयविट्ठलावस्थितम् ॥ ६ ॥

यदीयमसुरद्विषां मुकुटकूटरत्नावली-
मरीचिचयचर्चितं चरणपङ्कजं ध्यायताम् ।
भवन्त्यमरदुर्लभा विषयभुक्तयो मुक्तयः
समस्तजनभूतये [2]विजयविट्ठलो वर्धताम् ॥ ७ ॥

समस्तसुरसेवितं परशुरामसंस्थापितं
मनोऽभिलषितार्थदं मनुजकल्पवृक्षान्तरम् ।
पुरेऽत्र समवस्थितं विततविट्ठलप्रीतित-
स्तदस्तु विजयाय वो जगति रामलिङ्गं सदा ॥ ८ ॥

धन्यः कोऽपि महीतले विजयते वंशो वसिष्ठोद्भवो
यस्मिन् भूतलभूषणानि शतशो रत्नानि संजज्ञिरे ।
सेवन्ते प्रतिपर्व यं द्विजगणाः सच्छायपत्राप्तये
नित्यं कृष्णरुचिं दधत् सरलतां सद्वृत्ततामुन्नतिम् ॥ ९ ॥

श्रीमान् कोण्डपनायकः क्षितिपतिः प्रौढप्रतापोदय-
स्तत्र ब्राह्मणवंशजः समभवद्वर्णाश्रमाणां हितः ।

[1] छ begins here.   [2] From here up to verse 74 there is a gap in घ and च.

धर्मे धर्मसुतो बलेऽनिलसुतः शौर्ये च शक्रात्मजः
सौन्दर्ये नकुलो नये तदनुजो यादृक्स तादृग्गुणैः ॥ १० ॥

वेदोद्धारात् क्षमायाः सततमभिगमाज्ज्योदृधृतेर्द्विड्विदारै-
र्बल्याधानादधस्तात् पितृवचनकृतेर्धर्मसेतुप्रवृत्त्या ।
कामानां पालनेनाश्रितसकलजनस्यातिकारुण्यकीर्त्या
म्लेच्छानां मूर्च्छितैश्चावतरदशकभृज्जन्मनैकेन सोऽभूत् ॥ ११ ॥

वीक्ष्यातीत्रास्य दानव्यसनमविरतं पद्मभूः पद्मनाभे
पद्मां पाथोऽधिनाथे सुरसुरभिमपि द्युद्रुमान् देवराजे ।
दिङ्मातङ्गान् दिगीशेष्वधिजलधि निजं रत्नमग्र्यं समग्रं
संगोप्य स्वैकरक्षं त्रिदशगणवृतो मेरुमध्यारुरोह ॥ १२ ॥

यत्कीर्तिः कुहकेन कौतुकवती नारीव नीलं हरिं
कण्ठं च त्रिपुरान्तकस्य धवलीकृत्योभयोस्तुल्यताम् ।
संपाद्य स्वपतेर्विवेकविरहाल्लक्ष्मीभवान्योः क्षणं
त्यागं च ग्रहणं हरस्य च हरेर्नित्यं हसन्तीक्षते ॥ १३ ॥

यद्यद्भालतलेष्वलेखि [1]विधिना प्रत्यर्थिपृथ्वीभृतां
संग्रामेषु कदर्थनं नृपशिरोरत्नादमुष्मान्नृपात् ।
तत्पैतामहमात्मनि स्थितमृणं संशोध्य तेषामयं
भालान्येव विदारयत्यभिमुखं खड्गप्रहारैर्दृढैः ॥ १४ ॥

श्रीमान् **केशवनायको**ऽस्य तनयो वंशावतंसो जय-
त्यात्मीयातियशःपटीविवरणैर्ब्रह्माण्डमाच्छादयन् ।
दातुं देयमिवोपनीय सहजे प्रौढप्रतापानले
जुह्वद्वैरियशःपयांसि विधये खड्गस्रुवेणानिशम् ॥ १५ ॥

अलभत पितृलालनात् स एष त्रिजगति **तम्मणनायकेति** नाम ।
यदखिलजनताभिलाषसिद्धेः स्मृतिविषयीकृत एव सिद्धिमन्त्रः ॥ १६ ॥

एतत्प्रौढप्रतापज्वलनपरिवृताशेषविद्विट्पुराणां
दूरादालोकमात्राद्बलिसुतनगरभ्रान्तिभीताः पराञ्चः ।
प्रत्यावृत्यापयान्तः प्रबलतरनृपास्तत्पुराणामधीशाः
स्थातुं वान्तः प्रयातुं बहिररिदहनत्रासतो नोत्सहन्ते ॥ १७ ॥

[1] तले व्यलेखि विविध—ख.

नित्यं सत्यानुरक्तो सततमनुगतो यो बलेनानुगृह्णन्
गोपान् कोपानलस्य प्रशमनविधिनानन्दपुष्टः सदैव ।
आश्लिष्टो यः सुदाम्ना बहुषु सहचरेषूद्धवं वर्धयिष्यन्
स श्रीमान् केशवोऽयं जयति कुवलयापीडनिष्पीडनाय ॥ १८ ॥

मित्राणामुदयाचलो रिपुकुलस्यास्ताचलः शीतलो
बन्धूनां मलयाचलः शरणिनां विन्ध्याचलश्चाभये ।
भिक्षूणां धनरत्नसंपदुदये रत्नाचलो धारणे
पृथ्व्या यः कनकाचलो मुनिमनःसिद्धौ तुषाराचलः ॥ १९ ॥

[1]शूराणामवधिः स्मरप्रतिनिधिः . . . . .
कर्तव्येषु विधिर्महाधननिधिर्गाम्भीर्यपूर्णोदधिः ।
विद्याशेवधिरक्षयेषुधिररिव्रात . . . . . .
संग्रामे परिधिर्बलस्य जयति श्रीकेशवः सन्निधिः ॥ २० ॥

गाम्भीर्येण सरित्पतिः सुमहता धैर्येण भूभृत्पति-
र्लक्ष्म्या यक्षपतिः श्रिया रतिपतिर्बुद्ध्या च वाचस्पतिः ।
साम्राज्येन दिवस्पतिः स्वमहसां पुञ्जेन चाहर्पतिः
शीलेनोडुपतिर्बभौ सममतिः श्रीकेशवक्ष्मापतिः ॥ २१ ॥

दुःखानां महिमा सदःसु लघिमा कीर्तेस्तथैवाणिमा
लज्जायां गरिमा पलायनविधौ प्राकाम्यमात्मेशिता ।
प्राप्तिः पर्वतकन्दरस्य वशिता वन्याहृतैर्भूपते-
श्चित्रं यस्य तपःफलं रिपुकुले सिद्ध्यष्टकं दृश्यते ॥ २२ ॥

अक्रूरः सुहृदां भवत्यसुहृदां यश्चोग्रसेनो रणे
दुष्टानामपि सारणः सुमनसां प्रद्योतने माधवः ।
ईर्ष्यूणां हृदये गदः प्रतिभयो जिह्वाद्वयं बिभ्रतां
बभ्रुर्योऽपि शठः शठेषु विषयैर्यश्चानिरुद्धः सदा ॥ २३ ॥

स श्रीमान् केशवेन्द्रो जगति विजयते यद्विषत्कीर्तिदुग्धं
यद्दानाम्भःप्रवाहोद्भवपृथुतटिनीतीरनीरानुषङ्गि ।
तत्तद्दिग्जैत्रपूर्वक्षितिभृदुरुयशःकन्दखण्डोपदंशं
स्वादंस्वादं पिबन्ति प्रमुदितमनसो यद्यशोराजहंसाः ॥ २४ ॥

[1] This verse is incomplete in all the MSS.

यत्कीर्त्या निजया विधुं रविमपि स्वीयैः प्रतापैः परं
चक्रेऽसौ नृपतिस्तदस्य विधितोऽप्यत्यद्भुतं कौशलम् ।
यद्राहुं सममूमुहद्रविशशिग्रासार्थमभ्युद्यतं
पश्यन्तं सदृशावुभावपि मुहुः प्रेक्षाविशेषैरपि ॥ २५ ॥
कैलासे विनिवेश्य शैलतनयां भिक्षामटित्वा क्षितौ
प्रत्यावृत्य निजाश्रमाय [1]चलितः सायं समुत्कण्ठया ।
यत्कीर्त्या धवलीकृते त्रिजगति क्षोणीधरान् सर्वशः
प्रत्येकं भ्रमति भ्रमान्निजगिरेः शैलात्मजावल्लभः ॥ २६ ॥
गन्धर्वैर्गीयमानामनिशमतिरसात् कीर्तिमापीय [2]यस्य
प्रेम्णा शर्वार्धकायो हरिरपि समभूत् कोऽपि कर्पूरगौरः ।
अन्तःसंतोषपूर्णा पतिवपुरखिलं वीक्ष्य यस्मिन्नपर्णा-
सीदर्धस्यापि हानान्मुषितनिजधनेवाब्धिपुत्री बभूव ॥ २७ ॥
प्राक्प्रत्यग्गिरिनिर्मितेऽस्य महति भ्राष्ट्रे प्रतापानलैः
संतप्तं द्विषदिन्धनैस्तदबलानासास्यभस्त्रानिलैः ।
संध्याकीलककीलितेन महताहोरात्रसंदंशके-
नादाय द्युमणिं विधिः प्रतिदिनं निर्वापयत्यम्बुधौ ॥ २८ ॥
वाहोद्धूतधरापरागपटलैः पृथ्वीं द्विषन्मस्तकैः
शैलान् शत्रुवधूविमुक्तनयनाम्भोभिश्च वारां निधीन् ।
निश्वासैर्द्रवतां भिया च पवनं तेजोभिरर्कं निजैः
कीर्त्या चन्द्रमसं स गाधिसुतवन्निर्माति सृष्टिं पराम् ॥ २९ ॥
एतद्दानजलैः प्रतिग्रहविधौ नित्यं पतद्भिः करे
निर्वाणं करसंस्थितं हुतवहं संधुक्षयन्तो द्विजाः ।
स्वाध्यायाध्ययने स्वराभिनयनव्याजेन निर्मन्थने
तिर्यक् चोर्ध्वममी सदारणिमिव व्याधुन्वते स्वं करम् ॥ ३० ॥
यस्योत्तुङ्गातिसर्गप्रभवजलवहा स्वर्धुनीस्पर्धिनी का-
प्याविर्भूतापगान्या जलनिधिमगमत्तज्जलस्यानुषङ्गात् ।
शङ्के पङ्के निमग्नास्त्रिदशमणिवरः कामधुक् कल्पशाखी
नित्यं प्रोत्तुङ्गदानव्यसनमिदममी साधु विख्यापयन्ति ॥ ३१ ॥

[1] वलितः—ख, ग.

[2] स्य—ग.

क्षोणीशाः पौढिमस्मिन् बहुलधनभवां किं करिष्यन्ति यस्य
स्वर्नारीगीतसंपच्छ्रवणकुतुकभृद्वासवोऽपि स्वराज्यम् ।
तुच्छं मत्वा निगूढो निशि निशि सततं पश्यतीहास्य लक्ष्मीं
मिथ्या चेत्तारकास्तन्नयनगणगता व्योम्नि पश्यन्तु लोकाः ॥ ३२ ॥
नो भूमौ पदपङ्क्तयो न च नभस्युद्धूलिता धूल्यो
नाकृष्टास्तरवस्ततेन तरसा नाकर्णि शब्दः पदाम् ।
धावद्भिः सहसा सहैव जनताचेतोभिरस्पर्शि नो
चित्रं धावति वाजिराजिरवनीपालस्य यस्याग्रतः ॥ ३३ ॥
स्फुरत्कनकसंकुलं प्रचुरचारुसिंहासनं
वलद्रुचिरचामरं विकसितोज्ज्वलच्छत्रकम् ।
न शून्यमपि मन्दिरं विसदृशं रिपूणामभू-
द्यदेष महिमाद्भुतो जयति केशवक्ष्मापतेः ॥ ३४ ॥
उपनीय धनौघमर्थिलाभं प्रथमं लिम्पति यत्तु चन्दनेन ।
तदवैमि तदक्षराणि दुष्टान्यपसार्यातनुतेऽस्य योग्यभावम् ॥ ३५ ॥
**गङ्गायां** समजीजनच्छुतनयान् धीरानुदारान् गुणैः
क्षोणीशः कुरुवंशशन्तनुरिवाभीक्ष्णं स पञ्चात्मजान् ।
**गङ्गै**षा जननी बभूव जनको **यत्केशव**स्तद् बुधैः
कार्यं कैर्वचनैर्गुणानुवचनं स्फूर्त्या कया संसदि ॥ ३६ ॥
गुणैरनन्तं परिभाव्य तातो नाम्नाप्यनन्तं विदधे तनूजम् ।
ज्येष्ठं जनन्याहितलालनेन नाम्नाभवद्वावरसः स एव ॥ ३७ ॥
ज्येष्ठो **वावरसो** युधिष्ठिर इवास्त्यस्यानुजोऽप्यक्कणो
धीरो भीम इवापरोऽर्जुन इव **त्रिमल्लनाथो**ऽनुजः ।
तस्यास्तामनुजौ यमाविव परौ **श्रीरामनारायणौ**
दुग्धाब्धेरिव पञ्च कल्पतरवस्तस्याभवन्नात्मजाः ॥ ३८ ॥
**तम्मणणनायक**कृतातुलपूर्वजन्म-
धर्मद्रुपादपजनीनि फलानि पञ्च ।
आरभ्य **वावरसनायक**मादिमेषा-
**मक्कण्ण**नायकमुखानि जगत्सुखानि ॥ ३९ ॥

पञ्चापि कल्पतरवः प्रतिपादिता यत्
पूर्वं द्विजेषु ननु **तम्मणनायकेन** ।
नूनं त एव तनुजत्वमुपेत्य तस्य
प्रादुर्बभूवुरिह **वावरसादि**रूपाः ॥ ४० ॥

स **वावरसनायको** हृदयसायको विद्विषां
जितत्रिदशनायको विविधसंपदां दायकः ।
युधिष्ठिर इवानुजैरनुगतश्चतुर्भिर्निजै-
र्भुवीव सुरपादपैर्जयति पारिजातः परैः ॥ ४१ ॥

यशोविलासैरभिभूतवैन्यः शौर्येण विद्रावितशत्रुसैन्यः ।
दानेन दूरीकृतदीनदैन्यः समः क्षितौ **वावरसेन** नान्यः ॥ ४२ ॥

जिह्वा प्रह्वायते यद्गुणगणगणनारम्भकाले कवीनां
स्वान्तं स्वान्तं तदेव प्रकटयति मनाक् स्फूर्त्यभावात्पदानाम् ।
हस्तो व्यस्तो लिपीनां भवति विलिखने दृक् च चाञ्चल्यमेति
जातः कायस्य कम्पोऽप्यहमहमिकया संस्मृतेस्तद्गुणानाम् ॥ ४३ ॥

संगृह्णाति निरन्तरं त्यजति नो यन्मार्गणौघान् फलैः
संपन्नान् कुरुते परं तु न कदाप्येतान् स्वपृष्ठानुगान् ।
किंचाकर्णमुपेत्य गर्जति गुणे सोऽसौ तदन्तागते
दातुं लक्ष्मलक्ष्यजयति तद्दातृत्वमत्यद्भुतम् ॥ ४४ ॥

ये नित्यं समनुव्रजन्त्यनुवदन्त्यर्हामनर्हां गिरं
ये चित्तानुविधानवर्त्मकुशलाः पूज्यन्त एते नृपैः ।
चित्रं तत्र न किंतु चित्रमिदमस्यालं गुणापेक्षया
यन्नामश्रुतिमात्रतो द्विजवरान् संपूजयत्युन्नतान् ॥ ४५ ॥

तस्यास्य नायककुलाम्बुधिशीतरश्मेः
श्रीकार्तवीर्यनृपतेरिव कीर्तिवीर्ये ।
प्रत्यर्थिदानविधये कुरुते सहस्रं
बाहूनसावपि च **वावरसो**ऽप्यजस्रम् ॥ ४६ ॥

ये सृष्टा जलजासनेन जलदास्ते वारिमात्रं दद-
त्युत्पाते पुनरम्रिरक्तकरका वर्षन्ति गर्जन्ति च ।

एकं वावरसाम्बुवाहमसृजच्छ्रीमांस्ततः केशवो
योऽगर्जन्निभृतं समं क्षितितले स्वर्णं ववर्षामलम् ॥ ४७ ॥

यत्कीर्त्या निजया दशापि विहिता गौर्यो दिशः सर्वश-
श्चातुर्यं तदनन्तनायकनृपस्यातीव लोकोत्तरम् ।
रुद्राणामनुवासरं विवदतां किं न्वेकगौरीकृते
न स्याद्वैशसमन्यथा स्मरवशादेकादशानामपि ॥ ४८ ॥

श्रीमत्तम्मणनायकक्षितिपतेर्वंशावतंसोऽद्भुतः
श्रीमानक्कणनायको विजयते साम्राज्यसर्वंसहः ।
येनाकारि सुरद्रुमस्य मनसो मात्सर्यदोषो महा-
नर्थिप्रार्थनसार्थकत्वविधिना कल्पद्रुमेण क्षितेः ॥ ४९ ॥

शत्रुघ्नत्वमुरीकृतं रिपुकुलध्वंसादनीकेऽमुना
ज्येष्ठाज्ञापरिपालनात् भरतताप्याविष्कृता स्वात्मनः ।
यत् स्वात्मानुजलक्ष्मणानुसरणाद्रामत्वमाविष्कृतं
तद् दृष्ट्याक्कणनायकस्य जगतामासंश्चतुर्णां मुदः ॥ ५० ॥

जित्वा येन दिशो दिशासु निहिताः स्तम्भा जयाङ्काः सितं
नद्धं तेषु गुणैर्महद्भिरमलं कीर्तेर्वितानं महत् ।
यत्प्रान्तेषु विलम्बतेऽतिमहती पीता प्रतापावलि-
र्यन्मध्ये परिमण्डलत्वमभजच्चित्रं विधोर्मण्डलम् ॥ ५१ ॥

भिक्षुः पाणिं पुरस्तादुपनयति ततः पाणियुग्मं ततश्च
प्रावारान्तं ततस्तं सकलमपि ततो मस्तकस्यापि वासः ।
पात्रं तत्राप्यमाति प्रचुरतरतया यद्वितीर्णे धनौघे
पश्चात्तापं महान्तं निजहृदि कुरुते तुर्यवस्त्राग्रहेण ॥ ५२ ॥

यस्मिन् यच्छति वाञ्छिताधिकधनान्याशासते भिक्षुकाः
पाणीनामतिसंख्यतामतिशयायामं परां विस्तृतिम् ।
नैर्बुद्ध्यादिति गर्हणां विदधते धातुश्च बाहून् बहून्
यद्बाणार्जुनयोर्व्यधाद् द्विभुजतामस्माकमब्जासनः ॥ ५३ ॥

लक्ष्मीर्यस्य कराम्बुजेषु विदुषां कीर्तिः कवीनां मुखे
कान्तिः कामतनौ धृतिर्हिमगिरौ विद्या च वाचस्पतौ ।

एकत्र स्थितिसंकटाक्षमतया विश्रम्भतः स्वं श्रमं
स्वे स्वे तातगृहे विनोदयति किं सापत्न्यजान्मत्सरात् ॥ ५४ ॥
यस्योत्सर्गजलप्रवाहपटलैराकालिकप्रावृषा
पूर्णाम्भःसुरनिम्नगोर्मिनिवहैरुन्मत्तगङ्गीकृता ।
**वाराणस्य**भवद्यदा खलु तदा **मत्स्योदरी**संगम-
भ्रान्त्या काशिनिवासिसर्वजनता स्नानाय संप्रस्थिता ॥ ५५ ॥
एकं तावदिदं महन्मनसि नोऽनौचित्यमुद्भासते
यद्दानाम्बुभिराहितेषु जलधिष्वन्येषु सप्तस्वपि ।
तेषां प्राकृतवैकृतादिविषयभ्रान्त्या भ्रमन्त्यो दिशं
गङ्गाद्याः सरितः पतिव्रतमहो धास्यन्त्यभग्नं कथम् ॥ ५६ ॥
असोष्ट सोऽप्यष्टगुणं गुणोच्चैः सुतद्वयं **यावक**नामिकायाम् ।
लक्ष्म्याः सपत्न्यामिव धर्मपत्न्यामाराधनाद् **वावरसः** शिवस्य ॥ ५७ ॥
ज्येष्ठस्तस्य यशःसितातिविभवोत्कण्ठो द्विजिह्वान्निजाद्
देशादप्यपसारयन्ननुदिनं पुष्णाति कामान् बहून् ।
मूर्ध्ना यः शतशो दधद् द्विजपतीन् गौरी यदीया दिशः
कीर्तिर्धावति कोऽप्यसौ विजयते रुद्रोऽरिविद्रावणः ॥ ५८ ॥
किशोरकस्यैव यशोवितानं व्यभूषयत्तस्य दिशो दशापि ।
स एष **रुद्रः** कृतराजमुद्रः क्षुद्रोऽप्यभूद्यस्य पुरः समुद्रः ॥ ५९ ॥
सत्सङ्गावाप्तगङ्गादिकसकलमहातीर्थसङ्गादभङ्गा-
नङ्गादिप्रौढिभङ्गाचरणविमलितान्यन्तरङ्गानि बिभ्रत् ।
**गङ्गादास**स्तदङ्गादनुजनिरभवद्यद्वितीर्णास्तुरङ्गा
मातङ्गाः शैलतुङ्गा विदधुरपधनान्वित्ततुङ्गान् शुभाङ्गान् ॥ ६० ॥
पितृत्वमप्यक्कणनायकस्य लब्धं सुखं **केशवनायकेन** ।
तत्तद्विधानोक्तमिवातिकामव्यूहः सुतीभूय विभाति योऽस्य ॥ ६१ ॥
**तम्मण्णेन** यदाहितं बहुधनं दातुं द्विजेभ्यस्ततो-
ऽनन्तस्तद् द्विगुणीकरोति सहसा त्रैगुण्यमस्याक्कणः ।
**तद्रुद्रः** कुरुते चतुर्गुणमिदं **गङ्गा** शरन्नं ततः
षाड्गुण्यं कुरुते पितामहमनोवृत्तिं दधत् **केशवः** ॥ ६२ ॥

अन्यच्चाद्भुतमेतदस्य सुमहद्यत्तत्प्रतापानल-
स्यौन्नत्यं बहुधा मनःसु रिपवोऽप्याशासते संततम् ।
यत्प्रालेयदिनेष्वपि व्यपगताशेषान्नवस्त्रा वने
शीतत्राणममी मनागपि ततो नान्यल्लभन्ते दृढम् ॥ ६३ ॥
एतच्चाद्भुतमेकमस्य महसः कीर्तेश्च लोकोत्तरं
यत्प्रालेयदिनेषु शीतभयतः शत्रून् महस्त्रायते ।
ग्रीष्मे तत्तपनातितापभयतः कीर्तिः सुधासेवनात्
ताभ्यामात्मकृते हि ते विदधते शीतोष्णयोर्वारणम् ॥ ६४ ॥
श्रीविश्वनाथेक्षणकाम्ययासौ पुत्रैश्च पौत्रैश्च युतः प्रपौत्रैः ।
गम्भीरवेदीव गजः स्वयूथ्यैः कदाचिदा**नन्दवनं** विवेश ॥ ६५ ॥
**काशी**यात्राविधाने सह गृहपतयो येन नीताः सहस्रं
तद्यात्रोपस्करं व्याप्यखिलमनुविधायापनीयापि भीतिम् ।
प्रादक्षिण्ये पृथिव्याः पृथुपृथुलयशास्तीर्थयात्रासु पार्थः
सार्थं नीत्वा मुनीनामिह निजसुकृतस्याष्टगुण्यं व्यधत्त ॥ ६६ ॥
पर्याये प्रथमे तुलाद्वयमसौ स्वस्य स्वपत्न्यास्तथा
**काश्यां** रूप्यमयं चकार विधिवच्छ्रीवासुदेवाङ्गणे ।
ब्रह्माण्डं विदधे हिरण्मयमथो चक्रे तृतीयां तुलां
श्रीविश्वेश्वरमण्डपेऽधित **कुरुक्षेत्रे** चतुर्थीमपि ॥ ६७ ॥
**काश्यामेकं प्रयागे** परमिति विदधत् कोटिहोमद्वयं यो
विप्राणां दक्षिणाभिर्धनविषयगताशेषतृष्णां निरास ।
**काशी**यात्रां द्वितीयामधि विधिविहितं गोसहस्रं प्रयागे
**काश्या**मागत्य हेम्नः पुनरपि विदधे चक्रतीर्थे तुलां सः ॥ ६८ ॥
यश्चाभून्**मणिकर्णिका**परिसरे दिव्यस्तुलामण्डपो
यत्तत्तेरणकिंकिणीध्वजमहादीप्तिः पताकोच्छ्रिता ।
तं दृष्ट्वा जलशायिविष्णुसविधे मन्यामहे पुष्पकं
स्वर्गाद्भूमितलं समागतमिवानन्दाय मन्दाकिनाम् ॥ ६९ ॥
आरुह्य व्योमयानं वियति सुरगणास्तत्तुलाया दिदृक्षा-
क्रान्तस्वान्ता निरुद्धे पथि विपुलतरैर्मण्डपस्य ध्वजाग्रैः ।

यातुं तद्धोमधूमाकुलितविनिमिषप्रेक्षणास्तत्क्षणेना-

शक्तास्तद्वीक्षितुं वाप्यवदधुरवनीचारितामेव धन्याम् ॥ ७० ॥

यत्कामा ननु कुर्महे भुवि महादानं वयं तत्पदं

कीदृक् किं श्रुतिराह तथ्यमथवा मिथ्येति संदेहिनाम् ।

श्रीमान् **केशवनायको**ऽतिभगवद्भक्त्या तुलामण्डप-

व्याजेनैतदिहोपनीय नुनुदे संदेहमात्यन्तिकम् ॥ ७१ ॥

अचीकर**त्तम्मणनायके**न तुलां सुवर्णै**र्मणिकर्णिकायाम्** ।

यदा तदाभूदतुलस्त्रिलोक्यां स्वयं सुतै**र्वावरसोऽक्कण**श्च ॥ ७२ ॥

रथ्यासु स्वेषु गेहेष्वनुदिनमसकृत्तोलयामास लोहै-

र्लक्ष्मीं स्वर्णस्वरूपां यदयमजनयत्तेन भूयोऽपराधान् ।

सर्वास्तान् संप्रमार्ष्टुं स्वजनकमिषतः **केशवेनैव लक्ष्म्या-**

स्तस्यां **काश्यां** वितेने सुरसरिति तुलां स्वप्रभावा**दनन्तः** ॥ ७३ ॥

**लक्ष्मीकेशवयो**स्तुलां विरचितां दृष्ट्वा हरश्चेतसि

प्रायः क्षोभमवाप्स्यतीति चकितस्तुल्यस्तयोर्भक्तितः ।

श्रीमान् **वावरस**स्तदैव निजया गौर्यैव कीर्त्याकरो-

द्गौरस्याप्यतुलां तुलां कुतरणिः संकल्पचिन्तामणिः ॥ ७४ ॥

दृष्टिः सत्कर्मदृष्ट्या श्रुतियुगलमथाकर्णनेनापि कीर्ते-

र्घ्राणं धूपादिगन्धैर्गुणगणगणनैश्चापि जिह्वा जनानाम् ।

सौवर्णस्पर्शनैस्त्वक् करकमलगतैः प्रावृतैः पट्टकूलैः

सर्वाङ्गेष्वप्यनेन प्रमुदितमनसां किं किमानन्दितं न ॥ ७५ ॥

कीर्तिः **केशवनायकस्य** कुशला कैलासशैलं पुरो

गत्वाख्याति मुहुः सडिण्डिमरवं दूतीव संप्रेषिता ।

**काश्यां श्रीमणिकर्णिका**परिसरे कृत्वा तुलां **केशवो**

लब्ध्वेदं पुरमाशु तत्सुरगणैः संपाद्यतां सत्क्रिया ॥ ७६ ॥

काशीपतेः करुणया किल **काशिकायां**

कृत्वा महावितरणानि च षोडशापि ।

विद्वद्गृहान्तरगतानि तमांसि मुग्ध-

माणिक्यदीपशिखयैव निराचकार ॥ ७७ ॥

शतकृत्वोऽपि तुलायामारूढोऽयं महार्घरत्नानाम् ।
अस्य तु कृतप्रयत्नं किमपि न रत्नं तुलां भेजे ॥ ७८ ॥

आत्मानं स हिरण्यगर्भमसृजच्छ्रीमांस्तदा **केशवः**
पश्चात्तापमवाप पङ्कजजनेरन्तर्महान्तं यदा ।
मत्सृष्टो मदधीकृतो मम मुखाज्जातान् द्विजान् मत्तनून्
दारिद्र्योपहतान् श्रिया विरहितांश्चक्रे किमित्यात्मभूः ॥ ७९ ॥

ब्रह्माण्डं दातुकामे नृपतिलकमणौ **केशवे** ब्राह्मणेभ्यो
ब्रह्मा विष्णुश्च रुद्रः सुरगुरुमभिगम्यात्मनीनान्यपृच्छन् ।
किं कुर्मः कुत्र यामेत्यमरगुरुरिमांस्तत्त्रमूचे द्विजा वः
प्रार्थ्या गृह्णीध्वमस्येत्यखिलजनकृते मा विभागं कुरुध्वम् ॥ ८० ॥

दत्तान् **केशवनायकेन** सकलान् कल्पद्रुमान् वृत्रहा
विज्ञायार्थिषु पुष्पभूषणकृते शच्याः सचिन्तोऽभवत् ।
ब्रह्माणं किमुपैमि सृष्टिविधये तेषां पुनर्वाम्बुधिं
मथ्नाम्यर्थनमातनोम्यनुजवत् किं वा द्विजानामिति ॥ ८१ ॥

सहस्रं बाहूनामकृत कृतवीर्यात्मजनृपे
विधिर्बाणे वा तद्द्वितयमभिमन्ये खलु वृथा ।
अमुष्यैकं मन्ये करमहमहो धन्यतरमि-
त्यजस्रं धेनूर्यो वितरति सहस्रं घटदुघाः ॥ ८२ ॥

एका कामगवी सुरैर्नियमिता तत्तत्सुरप्रार्थिता-
नेकानेकविधार्थदानघटनास्वत्यर्थतो व्यापृता ।
नागन्तुं क्षितिमण्डलेऽप्यवसरो यस्याः कथं सा नृणां
कामान् पूरयितेत्यवेत्य विदधे यः कामधेनुव्रजम् ॥ ८३ ॥

निर्मथ्य क्षीरसिन्धुं कथमपि महता क्लेशजातेन जाता-
नुच्चैःश्रुत्यादिकाश्चानमरपरिषदे प्राग्वितीर्याप्यतृप्तः ।
भूलोकं प्राप्य भूयोऽप्यवनिसुरकृतेऽसौ च संसारसिन्धुं
निर्मथ्य प्रत्नरत्नाचितकनककृतान् सिन्धुजान् **केशवो**ऽदात् ॥ ८४ ॥

व्योम्नि व्योमचरैश्चरन्ति विबुधा दिव्यैर्विमानैर्भुवि
क्षोणीमण्डलमण्डनानि त इमे यानैश्चरिष्यन्ति कैः ।

इत्येवं मनसावधार्य नृपतिः श्रीकेशवोऽश्वैर्गजै
हैमैर्हैममयान् विधाय च रथान् प्रादाद् द्विजेभ्यो युतान् ॥ ८५ ॥
एकं लाङ्गलमात्मभूर्यदसृजत् संकर्षणार्थे ततः
कंचिद्देशमसौ पवित्रमकरोत् कृष्ट्वा कलिन्दात्मजाम् ।
यस्मै दास्यति पञ्चलाङ्गलमसौ तेनापि देशे क्वचित्
कृष्टे पञ्चनदे करिष्यति जनः स्नानं क्व वा कार्त्तिके ॥ ८६ ॥
किं दत्ता पृथिवी बलिप्रभृतिभिर्मृत्स्नामयी पर्वतै-
र्व्याप्तारण्यनदीनदीश्वरशतैरल्पोपभोग्या द्विजैः ।
तन्मन्ये सकलापि तेन घटिता स्वर्णैः सपृथ्वीधरा
सप्तद्वीपवती ससागरवना दत्ता द्विजेभ्यः क्षमा ॥ ८७ ॥
संत्यज्याद्य हिरण्यगर्भपदवीं सृष्टिं सिसृक्षुर्नवां
भूतानां महतां धटं प्रथमतो हैरण्यमेवासृजत् ।
तेषामेव यतोऽधिकं जगदुपादानत्वमाह श्रुतिः
सौवर्णं किल केशवः सकलकं तद्विश्वचक्रं व्यधात् ॥ ८८ ॥
स्वर्गे कल्पलता सुरेन्द्रभवने दत्ताश्च कल्पद्रुमा
विप्राणामजिरेषु तद्विरहिता मा भूत्ततो मत्कृता ।
इत्येवं मनसावधार्य सकलक्ष्माभूषणं केशव-
श्चक्रे कल्पलताप्रदानमपि तद्विप्रेभ्य एवादरात् ॥ ८९ ॥
भार्याभिर्भिक्षुकाणां लवणदधिपयःसर्पिरिक्षूदकार्थे
वाणीं प्रोक्तां निशम्य ग्रहिलशिशुसमुद्वेजितेभ्यः पतिभ्यः ।
यत्तेभ्योऽदत्त सिन्धून् षडपि तदभवद्युक्तमत्यन्तमेभ्यो
यत्सौरं सिन्धुमादात्तदनुचरदसच्छूद्रजात्यर्थमूहे ॥ ९० ॥
निर्मथ्य क्षीरसिन्धुं यदजनि हरिणा कौस्तुभाख्यं तदेकं
यच्चोद्भूतं स्यमन्ताभिधमहिमकराद्रत्नमेतद् द्वितीयम् ।
भूमौ चिन्तामणिश्च त्रिभुवनविषये त्रीणि रत्नान्यभूवं-
स्तैरवासंख्यसंख्यैः कथमकृत नृपः केशवो रत्नधेनुम् ॥ ९१ ॥
इत्थं येन कृतानि षोडश महादानानि काश्यां ततो
जाता ब्रह्मपुरीकृता शिवपुरी स्पर्धातिवर्धापिता ।

सर्वोपस्करपूर्णदिव्यभवनाधिष्ठानसत्कर्मजा-
नुष्ठानक्षपिताघसङ्घतुलिता यद्ब्राह्मणा ब्रह्मणा ॥ ९२ ॥
प्रासादोद्यानवापीप्रथितवनमठान् धर्मशालाप्रपादीन्
कृत्वानृण्येन बन्दीकृतभवनभुवां मोचनेन द्विजानाम् ।
उद्वाहांश्चैव मौञ्जीबहुधनवसनानग्निहोत्रादिपूर्वान्
ज्योतिष्टोमादियज्ञानपि बहुधनतोऽचीकरत् कोटिशोऽन्यैः ॥ ९३ ॥
धर्मा यद्यपि कोटिशोऽत्र विहिताः संतोषमन्तस्ततो
नैव प्राप यदा तदा रचयितुं **विष्णुस्मृतेर्व्याकृतिम्** ।
ऐच्छत्तत्र च **रामपण्डित**सुतं **श्रीकेशवः** क्ष्मापति-
र्विद्वत्संसदि **नन्दपण्डित**मतिप्रीत्या न्ययुङ्क्त स्वयम् ॥ ९४ ॥
**काश्यां धर्माधिकार**प्रथितकुलमणिर्धर्मशास्त्रैकनिष्ठः
श्रीमान् श्रीमन्**महीपे**त्यभिधबुधसुता**नन्तसूरे**स्तनूजः ।
**श्रीराम**स्तस्य सूनुः प्रथितबहुकृतिर्धर्मशास्त्रेषु **नन्दो**
व्याचष्टे **केशवीय**प्रणयपरवशो **वैष्णवं धर्मशास्त्रम्** ॥ ९५ ॥
यद्यप्येतदतीव साहसमिवाभाति क्व **विष्णुस्मृति-**
र्बुद्धिर्वा मम मानुषी क्व च तथाप्युत्कण्ठते मे मनः ।
तद्व्याख्याविषये प्रसन्नहृदयः साक्षात्स्वयं **केशवः**
प्रोत्साह्यात्र यदि प्रवर्तयति मां किं स्यादशक्यं तदा ॥ ९६ ॥

इह खलु [1]करुणावरुणालयो भगवान् नारायणः शेषतल्पात् कल्पादावुत्थाय [2]वाराहं वपुरास्थाय निरवधिजलमग्नां दन्तलग्नां वसुंधरामुद्धृत्य [3]स्वधृत्यवदाननिदानजिज्ञासया तयैव पृष्टान् [4]सर्ववर्णाश्रमधर्मान् प्रोवाच । तांश्च कश्चित् विपश्चित् ऋषिः उपश्रोता आद्यन्तयोः संगतिसंपादनाय स्वनिर्मितया चतुरध्याय्या भगवन्मुखनिर्गतानां सपद्यानामनवद्यानां गद्यानां षण्णवत्यध्यायीं परिपूर्य शतमध्यायान् परिकल्प्य काण्डत्रयेण निबबन्ध, यथा भगवत्प्रोक्ता उपनिषदो द्वैपायनः । तत्र प्रथमाध्यायेनोपोद्घातं वर्णयति । तस्य चेमावाद्यश्लोकौ— **ब्रह्मरात्र्यामित्यादि** । [5]महापुरुषविसृष्टः पुरुषो ब्रह्मा ;

[1] करुणा to भगवान् omitted in ख, घ, ङ, छ.
[2] वाराहं च—ग.
[3] निदान omitted in ट.
[4] सर्वेष्टान्—ख, ग, च, छ.
[5] महापुरुष to ब्रह्मणो रात्रिः omitted in ङ.

"यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते ॥"

इति **मानवात्** । तस्य ब्रह्मणो रात्रिः ब्रह्मरात्रिः दैविकयुगसहस्रपरिमितो विरामकालः;

[1]"दैविकानां युगानां च सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥"

इति **मनुस्मरणात्** । तस्यां ब्रह्मरात्र्याम् । "ङिति ह्रस्वश्च" इति नदीसंज्ञायां ङेरामि आटि च कृते रूपम् । व्यतीतायां समाप्तायाम् । पद्मसंभवे ब्रह्मणि प्रबुद्धे अपगतनिद्रे सति; "तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते" इति **मानवात्** । विष्णुः । विशतेर्विषेर्वा नुक्प्रत्यये कृते विष्णुशब्दो निष्पद्यते । तेन च देशकालवस्तुपरिच्छेदशून्यतया व्यापको [2]भगवान् परमात्मा । भूतानि चतुर्विधानि जरायुजादीनि । सिसृक्षुः स्रष्टुमिच्छन् । यद्यपि ब्रह्मण एव स्रष्टृत्वं, न विष्णोः; तथापि हेतुकर्तुरपि कर्तृत्वादणिच्प्रयोगः; "यावतोऽश्वान् प्रतिगृह्णीयात्" इतिवत् । भूमिं जलानुगां जलधिजलमग्नां ज्ञात्वा । जलक्रीडायामेव रुचिः प्रीतिर्यस्य तादृशम् । यथा पुरा; पूर्वपूर्वकल्पादौ यथा तथैव । वराहस्य रूपं देहमास्थितो धृतवान्, वसुंधरां नानावसुधरणशीलामुज्जहार उद्धृतवान् ॥ १, २ ॥

**वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ।**
**अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ ३ ॥**
**अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।**
**आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ॥ ४ ॥**
**धर्मसत्यमयः श्रीमान् क्रमविक्रमसत्कृतः ।**
**प्रायश्चित्तमहाघोणः[3] पशुजानुर्महाकृतिः ॥ ५ ॥**

अथ वक्ष्यमाणं भगवतो यज्ञवराहत्वं नवभिः श्लोकैरुपपादयति । [4]वेदाः ऋगादयश्चत्वार एव पादाः । यद्यपि "यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथम्" इति श्रुत्या त्रयाणामेव वेदानां यज्ञसंबन्धात् चतुर्थस्य पादत्वव्यपदेशो नोपपद्यते, तथापि शान्त्यादीनामपि यज्ञत्वात् तत्संबन्धेन तस्यापि पादत्वमविरुद्धम् । यूप एव एका दंष्ट्रा धरोद्धरणसाधनम्; 'दंष्ट्राग्रेण' इत्येकत्वनिर्देशात् । क्रतवः चतुःषष्टिग्रहाभ्यासाः दन्ताः । चितिः श्येनकङ्कादिः मुखम् । तत्स्थ एवाग्निः जिह्वा [5]रसोपलब्धिसाधनी यस्य स तथा ।

[1] दैविका to तेन च omitted in ङ, ट.
[2] भगवान् to उद्धृतवान् omitted in ट.
[3] मयो वीरः—क;
मयो धीरः—ठ.
[4] वेदाः to एकत्वनिर्देशात् omitted in ङ.
[5] रसो to साधनी omitted in ङ.

दर्भाः वेद्यास्तृतानि बर्हींषि । ब्रह्मैव शिरः; कृताकृतावेक्षणेन मुख्यत्वात् । महत् तपः सामर्थ्यं सृष्ट्यनुकूलं यस्य ॥ ३ ॥

[1]अहोरात्रसंबन्धिनी ईक्षणे नेत्रे, तयोरेव यज्ञव्याप्तत्वात्; अहोरात्रसंबन्धिनौ सूर्याचन्द्रमसौ वा । दिव्यः अलौकिककर्मकारित्वादलौकिकः । वेदः द्विगुणितदर्भमुष्टिः । तौ चैष्टिकपाशुकभेदेन द्वौ । तावेव श्रुती कर्णौ । अङ्गं छिन्नो वेदाग्रभागः स्रुगादिसंमार्जनार्थः । तावेव तद्भूषणे कुण्डले । आज्यम् आज्यधारा नासा नासिका । स्रुवः तुण्डं मुखाग्रभागः । साम्नां त्रिवृदादीनां घोष एव स्वनः घुर्घुरारावः । महान् कार्यानुकूलानुभावदेहवान् । [2]यथोक्तं हरिवंशे—

"जलक्रीडारुचिस्तत्र वाराहं वपुरस्मरत् ।
दशयोजनविस्तारं शतयोजनमुच्छ्रितम् ॥"

इति ॥ ४ ॥

धर्मः अपूर्वम्; सत्यं यथार्थवचनम्; ताभ्यां प्रचुरः । श्रीमान् अनिर्देश्यशोभः । क्रमः विष्णुक्रमः; स एव विक्रमः पराक्रमः; तेन सत्कृतः भूषितः । प्रायश्चित्तं वैगुण्यसमाधातृ कर्म; तदेव घोणा नासा-नालिका । पशुः अग्नीषोमीयादिः जानु । महती आकृतिः देहसंस्थानं यस्य ॥ ५ ॥

**उद्गात्रान्त्रो होमलिङ्गो बीजौषधिमहाफलः ।**
**वेद्यन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥ ६ ॥**
**वेदिस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान्[3] ।**
**प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरन्वितः ॥ ७ ॥**

उद्गातारस्त्रयोऽप्यान्त्राणि शब्दानुकूलवायुसंचारनाड्यः । अत एव सामघोषस्वनः । होम एव लिङ्गं[4] शिश्नम् । बीजानि श्यामाकादीनि । ओषधयो व्रीह्यादयः । महाफले वृषणौ । वेदिः प्राग्वंशान्तःस्थिता ऐष्टिकी । [5]अन्तरात्मा अन्तःकरणम्; प्राग्वंशस्य कायत्वात् । मन्त्रा एव स्फिचौ [6]सक्थिनी; ताभ्यां विकृतः विलक्षणः; ऊहेन मन्त्राणामपि वैलक्षण्यात् । सोमः रसीभूतः शोणितं लोहितं यस्य सः[7] ॥ ६ ॥

वेदिः महावेदिः स्कन्धो ग्रीवा । हविः पुरोडाशादि गन्धः शारीरः । [8]देवतार्थं द्रव्यं हव्यम् । पित्रर्थं कव्यम् । तदादिः वेगो रंहः; तद्वान् । प्राग्वंशः पत्नीशाला । स एव कायो देहो यस्य [9]सः ।

[1] अहो to व्याप्तत्वात् omitted in ङ, च.
[2] यथोक्तं to इति omitted in घ to च.
[3] कव्यातिवेगवान्—ठ.
[4] लिङ्गं omitted in च.
[5] अन्तरात्मा omitted in ट.
[6] शाकिनी—ख, ग, घ.
[7] लोहितं यस्य सः omitted in घ.
[8] देवार्थं—घ.
[9] देहो यस्य सः omitted in घ to च.

द्युतिमान्[1] तेजस्वी । नानादीक्षाः एकत्रिद्वादशसंवत्सराद्याः; ता एव प्रकृतयः सात्त्विक्याद्याः; ताभिर्युक्तः; "दीक्षाप्रकृतिसंयुतः" इति पुराणात् ॥ ७ ॥

**दक्षिणाहृदयो योगमहामन्त्रमयो महान् ।**
**उपाकर्मोष्ठरुचिरः [2]प्रवर्ग्यावर्तभूषणः ॥ ८ ॥**
**[3]नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।**
**छायापत्नीसहायो वै मणिशृङ्ग इवोदितः[4] ॥ ९ ॥**
**महीं सागरपर्यन्तां सशैलवनकाननाम् ।**
**एकार्णवजलभ्रष्टामेकार्णवगतः प्रभुः ॥ १० ॥**
**दंष्ट्राग्रेण समुद्धृत्य लोकानां हितकाम्यया ।**
**आदिदेवो महायोगी चकार जगतीं पुनः ॥ ११ ॥**

दक्षिणा द्वादशशतादिः; सैव हृदयं हृत्पुण्डरीकम् । योगः त्यक्तस्य द्रव्यस्य देवतया संबन्धः; तस्मिन् ये महामन्त्राः याज्यापुरोनुवाक्यादयः; [5]तन्मयः तत्प्रचुरः । महान् एकाहाहीनसत्रादिरूपेण विततः । उपाकर्मणी पशुस्तोत्रोपाकरणे; ते [6]एवाधरोत्तरावोष्ठौ; ताभ्यां रुचिरः [7]मनोहरः । प्रवर्ग्यः घर्मः; तस्यावर्तः पयःसेचनेन ज्वालामालाविततिः; स एव [8]भूषणम् अलंकारो यस्य[9] ॥ ८ ॥

नाना छन्दांसि गायत्र्यादीन्येव गतयः [10]पन्थानो मार्गाः । गुह्याः गूढार्थाः उपनिषदो वेदान्तवाक्यानि आसनम् अवस्थितिस्थलं यस्य[11] । छायाभिधाना लक्ष्मीः पत्नी; सैव सहायो यस्य । उदितः प्रकटीभूतो मणिशृङ्गनामा पर्वत इव ॥ ९ ॥

[12]आदिदेवः चतुर्मुखादिस्रष्टा । महायोगी अप्रविहतयोगः । अत एव प्रभुः सामर्थ्यातिशयवान् । एकार्णवगतः सः । सागरपर्यन्तां समुद्रावधिकाम् । सशैलवनकाननां शैलाः पर्वताः, वनानि उपवनानि काननानि महागहनानि; तैः समेताम् । महीं पृथ्वीम् । एकार्णवजलभ्रष्टाम्; प्रलयदलितवेलावल्यानां सप्तानामप्यर्णवानामेकीभावेनैकार्णवत्वम्; तज्जलमग्नाम् दंष्ट्राग्रेण समुद्धृत्य सम्यक् अक्षततयोद्धृत्य लोकानां हितकाम्यया जगतीम्, गच्छन्ति संचरन्ति अस्यामिति तादृशी पुनः चक्रे ॥ १०, ११ ॥

1 द्युतिमान् omitted in ङ, च.
2 प्रवर्ग्यानन्त—ठ.
3 This line omitted in ठ.
4 उच्छ्रितः—ठ.
5 तन्मयः omitted in ङ.
6 ते एवोष्ठौ अधरोत्तरौ—ख, ग, च.
7 मनोहरः omitted in ङ.
8 भूषणम् omitted in ङ.
9 स तथेति added in ख, ग, छ.
10 पन्थानः omitted in ङ, छ.
11 अस्य—घ.
12 The entire commentary on verses 10 to 44 omitted in ङ; and 10 to 15 in छ.

**एवं यज्ञवराहेण भूत्वा भूतहितार्थिना ।**
**उद्धृता पृथिवी देवी रसातलगता पुरा ॥ १२ ॥**
**उद्धृत्य निश्चले स्थाने स्थापयित्वा तथा स्वके ।**
**यथास्थानं विभज्यापस्तद्गता मधुसूदनः ॥ १३ ॥**
**सामुद्रयश्च समुद्रेषु नादेयीश्च नदीषु च ।**
**पल्वलेषु च पाल्वल्यः सरःसु च सरोभवाः ॥ १४ ॥**
**पातालसप्तकं चक्रे लोकानां सप्तकं तथा ।**
**द्वीपानामुदधीनां च स्थानानि विविधानि च ॥ १५ ॥**

[1]वक्ष्यमाणसृष्टिसंबन्धकरणायोक्तमुद्धारमुपसंहरति— एवम् ; उक्तप्रकारेण । यज्ञरूपो वराहः यज्ञवराहः ; तेन । भूतहितार्थिना भूतहितमात्रकाङ्क्षिणा भूत्वा । रसातलगता देवी पृथिवी । पुरा प्रथमतः । उद्धृता ; तदुद्धारं विना करिष्यमाणजगत्सृष्टिक्रमानुपपत्तेः ; जगत आधारसापेक्षत्वात् ॥ १२ ॥

इदानीं सार्धपञ्चभिः श्लोकैः सृष्टिक्रममाह—उद्धृत्येति । मधुसूदनः भगवान् उक्तप्रकारेण जलमग्नां पृथिवीमुद्धृत्य तथा स्वके साहजिके स्थाने अप्सु ; "अद्भ्यः पृथिवी" इति श्रुतेः । निश्चले चलनवलनादि-राहित्येन निश्चलीकृते स्थापयित्वा । तद्गताः पृथिवीगताः समुद्रजा आपः समुद्रेषु, नदीजा नदीषु, पल्वलोद्भवाः पल्वलेषु, सरोभवाः सरःसु, इत्येवं यथास्थानं विभज्य गमयित्वा पातालसप्तकं चक्रे इत्यग्रेतनेन संबन्धः ॥ १३, १४ ॥

सार्धैस्त्रिभिः श्लोकैस्तदेवाह । पातालानां सप्तकम् । अतलवितलसुतलमहातलरसातलतलातलपातालानां सप्तकम् । पातालस्य सप्तमत्वेऽप्यधोभुवनपर्यायतया सप्तसंख्यान्वयः । तथा भूर्भुवःस्वर्महर्जनस्तपःसत्यानां लोकानामुपरिभवानां सप्तकम् । यद्यपि,

"जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ।
कृतकाकृतयोर्मध्ये महर्लोक इति स्मृतम् ।
शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति ॥"

इति विष्णुपुराणात् भूरादीनां त्रयाणामेव प्रलयात् सर्ग उपपद्यते, नान्येषाम् ; तथापि भूरादित्रयसृष्ट्या महरादिचतुर्णां सप्तसंख्यासंपादनं शक्यमेवेति न विरोधः । द्वीपाः अन्तरीपाणि ; जम्बूप्लक्षशाल्मलीकुशक्रौञ्च-शाकपुष्कराख्या द्वीपाः ; तेषाम् । उदधीनां क्षारेक्षुसुरासर्पिर्दधिदुग्धस्वादूदकोपलक्षितानां सप्तकम् । तेषां स्थानानि लक्षयोजनादिपरिमाणानि भारतादीनि वर्षाणि ॥ १५ ॥

[1] The entire commentary on verses 12 to 15 omitted in घ.

स्थानपालान् लोकपालान् नदीः शैलवनस्पतीन् ।
ऋषींश्च सप्त धर्मज्ञान् वेदान् साङ्गान् सुरासुरान् ॥ १६ ॥
पिशाचोरगगन्धर्वयक्षराक्षसमानुषान् ।
पशुपक्षिमृगाद्यांश्च भूतग्रामं चतुर्विधम् ।
मेघेन्द्रचापशम्पाद्यान् यज्ञांश्च विविधांस्तथा ॥ १७ ॥

[1]तथा स्थानपालाः तत्तद्द्वीपपालाः । लोकपालाः इन्द्रादयोऽष्टौ । नद्यः गङ्गाद्याः । शैलाः मर्यादापर्वताः वर्षपर्वताश्च । वनस्पतयः जम्ब्वाद्या अन्ये च वृक्षाः । तथा ऋषयः कश्यपाद्याः सप्त । धर्मज्ञाः धर्मशास्त्रकर्तारः । वेदः एकः । यद्यपि "न कश्चिद्वेदकर्ता च" इत्यादिपराशरस्मरणेन वेदनिर्माणं नोपपद्यते ; तथापि "वेदं स्मृत्वा चतुर्मुखः" इति स्मृत्या स्मरणाभिप्रायेण वेदानुकीर्तनम् । अङ्गानि तु प्रतिकल्पं भिन्नान्येव । सुरासुराः देवा दैत्याश्च । तथा पिशाचाः मलाशिनः । उरगाः सर्पाः । गन्धर्वाः देवगायना हाहाहूहूप्रभृतयः । यक्षाः माणिभद्रादयो धनपालाः । राक्षसाः पुलस्त्यापत्यानि । मानुषाः मनुष्याः । पशवः गवादयः । पक्षिणः शुकपिकादयः । मृगाः कृष्णसारादयः । आदिशब्देन ग्राम्यारण्यानामन्येषामपि ग्रहणम् । जरायुजाण्डजस्वेदजोद्भिज्जलक्षणो भूतग्रामश्चतुर्धा । मेघाः जलदाः पुष्कलावर्तकाद्याः । इन्द्रचापः इन्द्रधनुः । शम्पा विद्युत् । आदिशब्देन ग्रहनक्षत्रादीनां ग्रहणम् । यज्ञाः ज्योतिष्टोमादयः । विविधाः नित्यनैमित्तिककाम्याः । स यथापूर्वं चक्रे इति प्रत्येकं संबन्धः ॥ १६, १७ ॥

एवं वराहो भगवान् [2]कृत्वेदं सचराचरम् ।
जगज्जगाम लोकानामविज्ञातां तदा गतिम् ॥ १८ ॥
अविज्ञातां गतिं याते देवदेवे जनार्दने ।
वसुधा चिन्तयामास का धृतिर्मे भविष्यति ॥ १९ ॥
पृच्छामि कश्यपं गत्वा स मे वक्ष्यत्यसंशयम् ।
मदीयां वहते चिन्तां नित्यमेव महामुनिः ॥ २० ॥
एवं सा निश्चयं कृत्वा देवी स्त्रीरूपधारिणी ।
जगाम कश्यपं द्रष्टुं दृष्टवांस्तां च कश्यपः ॥ २१ ॥

[1] The entire commentary on verses 16 to 31 omitted in च.

[2] विष्णुः स्थावरजङ्गमम् । चराचरं जगत्कृत्वा तत्रैवान्तरधीयत—ख.

वक्ष्यमाणविशेषविवक्षया सृष्ट्यनन्तरनिष्पन्नमाह। एवम्; उक्तप्रकारेण। भगवान् [1]षड्गुणैः स्वयं संपन्नः। वराहः वराहरूपी विष्णुः। इदं चराचरं स्थावरजङ्गमं जगत् विश्वं कृत्वा। लोकानां चर्मचक्षुषाम्। अविज्ञाताम् अलक्षिताम्। गतिं स्थानं जगाम। भगवच्छब्दनिरुक्तिश्च विष्णुपुराणे—

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥
उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥"

इति॥ १८॥

तदनन्तरवृत्तं द्वाभ्यामाह—अविज्ञातामिति। देवानामिन्द्रादीनां देवः अध्यक्षः, तस्मिन्। जनार्दने; जनान् दुष्टान् अर्दयति, जनैः पुरुषार्थचतुष्टयम् अर्द्यते याच्यते इति वा जनार्दनः, तस्मिन्। अविज्ञातां गतिं याते सति। वसुधा वक्ष्यमाणलक्षणा पृथिव्यधिष्ठात्री देवता। इदं चिन्तयामास। यथा ममेदानीं धृतिराधारशक्तिः का भविष्यतीति॥ १९॥

एतत् कश्यपं गत्वा पृच्छामि प्रक्ष्यामि। स महामुनिः अतिमननशीलः। मे मह्यम्। असंशयं याथातथ्येन, वक्ष्यति। यतोऽहं काश्यपी, अतोऽसौ कश्यपः मदीयां चिन्ताम् उद्धाराधारादिविषयिणीं नित्यं सदा वहते। चिन्ताया अहैतुकतावगमनायात्मनेपदम्॥ २०॥

चिन्तानन्तरकृत्यमाह। एवं सा धरादेवी तदधिष्ठात्री देवता गमनयोग्यं स्त्रीरूपं धृत्वा पूर्वोक्तनिश्चयवती कश्यपं द्रष्टुं जगाम। आगतां च तां कश्यपोऽपि ददर्श॥ २१॥

**[2]नीलपङ्कजपत्राक्षीं शारदेन्दुनिभाननाम्।**
**अलिसंघालकां शुभ्रां [3]बन्धुजीवाधरां शुभाम्॥ २२॥**
**सुभ्रूं सुसूक्ष्मदशनां चारुनासां नतभ्रुवम्।**
**कम्बुकण्ठीं संहतोरूं पीनोरुजघनस्थलाम्[4]॥ २३॥**

अथाष्टभिः श्लोकैस्तां विशिनष्टि। [5]नीलोत्पलाक्षीं शरत्पर्वपूर्णेन्दुमुखीम् अलिकुलनीलालकां सितवसनसंवीतां बन्धूकारुणोष्ठीम् अनवद्याङ्गीं सुभ्रूं कन्दर्पकार्मुकसुन्दरभ्रूयुगां हीरकणिकालसच्चारुदशनां तिलकुसुमरुचिरनासापुटां संनतभ्रूयुगां शङ्खशिखरसुन्दरग्रीवां परस्परस्पर्शसुखानुबुभूषयेवान्योन्यसंश्लिष्टोरुयुगलां करिकरचक्रिचक्रानुकृतानुपूर्वीपीनताभूषितोरुजघनविषयाम्॥ २२, २३॥

[1] षड्गुणैश्वर्यसंपन्नः—ग.
[2] नीलनीरज—ठ.
[3] बन्धुपुष्पाधरां—ग, घ, ठ.
[4] स्तनीम्—क.
[5] नीलोत्पलदलाक्षीं—छ.

विरेजतुः स्तनौ यस्याः समौ पीनौ निरन्तरौ ।
[1]शक्रेभकुम्भसंकाशौ शातकुम्भसमद्युती ॥ २४ ॥
मृणालकोमलौ बाहू करौ किसलयोपमौ ।
रुक्मस्तम्भनिभावूरू गूढे श्लिष्टे च जानुनी ॥ २५ ॥
जङ्घे विरोमे सुसमे पादावतिमनोरमौ ।
जघनं च घनं मध्यं यथा केसरिणः शिशोः ॥ २६ ॥
प्रभायुता नखास्ताम्रा रूपं सर्वमनोहरम् ।
कुर्वाणां वीक्षितैर्नित्यं नीलोत्पलयुता दिशः ॥ २७ ॥
कुर्वाणां प्रभया देवीं तथा वितिमिरा दिशः ।
[2]सुसूक्ष्मशुक्लवसनां रत्नोत्तमविभूषिताम् ॥ २८ ॥
पदन्यासैर्वसुमतीं सपद्मामिव कुर्वतीम् ।
रूपयौवनसंपन्नां विनीतवदुपस्थिताम् ॥ २९ ॥

समौ गर्वपर्वताविव स्वस्थानादचलितौ ; युगपत् तुलातुलिताविवान्यूनाधिकपरिमाणौ वा । पीनौ निरन्तरसुखैकतानाविव[3] मांसलौ । सुहृदाविव निरन्तरौ अन्योन्यसंश्लेषिणौ । शक्रेभकुम्भाविवाविमुक्तमुक्ताकलापौ । [4]मदनमहाराजमहाराज्याभिषेकायासादितौ बहलकुङ्कुमार्चितौ शातकुम्भकुम्भाविव राजमानावुरोजौ ॥ २४ ॥

मृणालकोमले बाहुलते । किसलयकोमले पाणितले । स्वर्णस्तम्भसवर्णे चोरू । गूढे अतिमांसलतया अस्पष्टे । अत एव श्लिष्टे अनभिव्यक्तसंधिनी जानुनी यस्या जाते ॥ २५ ॥

यदीये जङ्घे पिण्डिके निर्लोमे । सुसमे आरोहावरोहाभ्यामतिसमे । पादौ कूर्मपृष्ठाकृतित्वेनातिरमणीयौ । जघनं श्रोणिः । घनं मांसलम् । मध्यं कटितटी सिंहशावकस्येव शुशुभाते इति यथायथं योज्यम् ॥ २६ ॥

यदीया नखराः पद्मरागप्रतिमाः प्रभारागाभ्याम् । रूपं सौन्दर्यातिशयः । सर्वेषां रागिणामरागिणां च मनो हरतीति तथा । नित्यं सहजैरपि वीक्षितैः तिर्यग्दृष्टिपातैः दिशः दिग्भागान् नीलोत्पलयुतानिव कुर्वाणाम् ॥ २७ ॥

देवीं दीप्यमानाम् । अत एव प्रभया निजकान्त्या दिशः वितिमिराः तिमिरापनयनेन द्योतिताः कुर्वाणाम् । अतिसूक्ष्मशुक्लवसनवासिनीम् । दिव्योत्कृष्टप्रभरत्नालंकारभूषिताम् ॥ २८ ॥

[1] मत्तेभ—क ; वरेभ—ठ.
[2] सुशुक्लसूक्ष्म—ग.
[3] सुखोचिताविव—ख, ग, ट ; सुखैधिताविव—छ.
[4] मदनराज—छ.

निजचरणविन्यासैः वसुमतीं विकसितरक्तोत्पलामिव कुर्वतीम्। लावण्यतारुण्यसीमासमवगूढाम्; यौवनात् पूर्वनिपातात् यौवनपूर्वकालीनलावण्यातिशयेन संपन्नामिति वा। तारुण्यलावण्यादिमदहेतुसद्भावेऽपि विनीतवदेवोपस्थितां तां कश्यपो दृष्टवानिति गतेन संबन्धः॥ २९॥

**समीपमागतां दृष्ट्वा पूजयित्वाथ[1] कश्यपः।**
**उवाच तां [2]वरारोहे विज्ञातं हृद्गतं मया॥ ३०॥**
**धरे तव विशालाक्षि गच्छ देवि जनार्दनम्।**
**स ते वक्ष्यत्यशेषेण भाविनी ते यथा धृतिः॥ ३१॥**
**क्षीरोदे वसतिस्तस्य मया ज्ञाता शुभानने।**
**ध्यानयोगेन चार्वङ्गि त्वदर्थं तत्प्रसादनः॥ ३२॥**

कश्यपदर्शनानन्तरवृत्तमाह। कश्यपः समीपमागतां तां धरां दृष्ट्वा गन्धपुष्पादिभिरभ्यर्च्योवाच। हे धरे, श्रुतदृष्टार्थधारणशीले। विशालाक्षि, अतीतानागतालोकनक्षमाक्षि। ते तव हृद्गतम् अन्तर्विपरिवर्तमानं मया सविशेषं ज्ञातम्। देवि दीव्यत्काये, त्वं जनार्दनं सर्वजनप्रार्थनीयं गच्छ। यथा ते धृतिर्भाविनी, तथा स भगवान् ते तुभ्यमशेषेण वक्ष्यति॥ ३०, ३१॥

[3]तस्याविज्ञातगतिगतत्वमाशङ्क्याह—क्षीरोद इति। अङ्गान्तरसौष्ठवेऽपि मुखसौन्दर्याभावे सुरूपत्वानिर्वाहात् 'रूपं सर्वमनोहरम्' इति विशेषणानुपपत्तिः; मुखसौन्दर्येऽप्यङ्गान्तरासौष्ठवे सैवेति 'शुभानने चार्वङ्गि' इति संबोधनद्वयम्। हे धरे, मया कश्यपेन ध्यानयोगेन तस्य वसतिः क्षीरोदे ज्ञाता। अत्र ध्यानं नाम "तत्र प्रत्ययैकतानता ध्यानम्" इति **पातञ्जलसूत्रात्** आन्तरे बाह्ये वा वस्तुविशेषे ध्येये तदालम्बनस्य प्रत्ययस्य प्रत्ययान्तरेणापरामृष्ट एकतानतया प्रवाहोऽभिधीयते। तेन योगः चित्तवृत्तिनिरोधः; तथा **पातञ्जलसूत्रात्**। स च क्षिप्तं, मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धं चेति पञ्चविधमपि चित्तभूमीनां धर्मः। सोऽपि द्विविधः—संप्रज्ञातः, असंप्रज्ञातश्चेति। यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखीकरोति, स संप्रज्ञातः। सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः। तत्र क्षिप्तमूढयोः योगानुपयोगस्य प्रसिद्धत्वात् विक्षिप्तस्यापि विक्षेपोपसर्जनत्वेन योगपक्षाप्रवृत्तेः एकाग्रतारूपायां चतुर्थभूमौ विषयविशेषे धारणाध्यानसमाधित्रयरूपसंयमविशेषात् नानाविधैश्वर्यमाविर्भावयति। तत्र सूर्यसामीप्यात्[4] सकलभुवनप्रत्यक्षता ज्योतिष्मत्यात्मनः प्रवृत्तेः आलोकविन्यासेन सूक्ष्मव्यवहितविप्रकृष्टानां ज्ञानमिति **योगशास्त्र-**

[1] पूजयामास—क to घ.
[2] वरारोहां—ठ.
[3] The entire commentary on verse 32 omitted in घ
[4] संयमात्—घ.

प्रसिद्धिः। तदेवंप्रक्रियया क्षीरोदप्रत्यक्षतायां विप्रकृष्टस्यापि वक्ष्यमाणभगवत्स्वरूपस्य ध्यानयोगेन साक्षात्कार उपपादितः। कैवल्येच्छोः सत्त्वपुरुषशुद्धिसाम्याय यतमानस्य यमोपसर्जनभूतसिद्धौ प्रयोजनाभावात् त्वदर्थमिति प्रयोजननिर्देशः। भक्तिविशेषानुध्यानेनानुकूलितस्य भगवत एव सोपायफलयोगाभिव्यञ्जकत्वात् तत्प्रसादत इति निजयोगोपायनिर्देशः ॥ ३२ ॥

इत्येवमुक्त्वा संपूज्य कश्यपं वसुधा ततः।
प्रययौ केशवं द्रष्टुं क्षीरोदमथ सागरम् ॥ ३३ ॥
सा ददर्शामृतनिधिं चन्द्ररश्मिमनोहरम्।
पवनक्षोभसंजातवीचीशतसमाकुलम् ॥ ३४ ॥
हिमवच्छतसंकाशं[1] भूमण्डलमिवापरम्।
वीचीहस्तैः प्रचलितैराह्वयानमिव[2] क्षितिम् ॥ ३५ ॥
तैरेव शुक्लतां चन्द्रे विदधानमिवानिशम्।
अन्तरस्थेन हरिणा विगताशेषकल्मषम् ॥ ३६ ॥
यस्मात्तस्माद्धारयन्तं सुशुक्लां तनुमूर्जिताम्।
पाण्डुरं खगमागम्यमधोभुवनवर्तिनम् ॥ ३७ ॥
[3]इन्द्रनीलकडाराढ्यं विपरीतमिवाम्बरम्।
फलावलीसमुद्भूतवनसंघमिवाचितम्[4] ॥ ३८ ॥

कश्यपोक्त्यनन्तरवृत्तमाह। यथा भगवतोच्यते एवमित्युक्त्वा जिज्ञासितोपदेशात् गुरुं कश्यपं संपूज्य मनोवाक्कायकर्मभिरभ्यर्च्य ततः कश्यपाश्रमात् अथानन्तरं केशवं द्रष्टुं वसुधा क्षीरोदं क्षीरसागरं प्रययौ ॥ ३३ ॥

तं च सागरं सार्धपञ्चभिः श्लोकैर्विशिनष्टि। ततः प्रयाता सा वसुधा अमृतनिधिम्; क्षीरोदादेवामृतोत्पत्तेस्तस्यामृतनिधित्वेन व्यपदेशः। चन्द्ररश्मिमनोहरत्वेनातिविशदपयःपूरं जवनपवनसंक्षोभसंजाततरलतरवीचीशतसंपादितशोभातिशयम् ॥ ३४ ॥

हिमवतां हिमाचलानां शतेन संकाशमानमपरं भूमण्डलमिव; वीचीनां हिमवदाकारत्वात्। वीचय एव हस्ताः, तैश्चपलैः क्षितिमाह्वयमानमिव ॥ ३५ ॥

[1] संवादं—झ.
[2] ह्रूयानमिव—क.
[3] इन्द्रनीलकताराढ्यं—क, च.
[4] संघमिवान्वितम्—ग; संघसमाचितम्—क, ज.

तैरेव क्षीरवीचीहस्तैरनिशं प्रक्षालनेन चन्द्रमसि शौक्ल्यातिशयं विदधानमिव । नन्वस्य द्विजराजशोधने कुतः सामर्थ्यमित्यत आह । निरन्तरान्तरस्थितश्रीहरिसांनिध्येनापगतसकलकलुषतया अन्यशोधने सामर्थ्यं किं वर्णनीयम्? ॥ ३६ ॥

यस्माद्धरिणा हतकल्मषः, तस्मादतिशुद्धामूर्जितां स्फुरन्तीं तनुं धारयन्तम् । पाण्डून् शङ्खशुक्तिमुक्ताचन्द्रैरावतादीन् राति पातीति पाण्डुरः, तम् । खगमैः पक्षिभिः अगम्यम् अनुलङ्घनीयम् । अधोभुवनानि रसातलादीन्याभिवर्तमानम् ॥ ३७ ॥

इन्द्रिनीलाः नीलमणयः । कडाराः कपिशाः प्रवालादयः । तैः तत्तत्प्रदेशेषूत्पद्यमानैः आढ्यं व्याप्तम् । विपरीतं भूतलगतमम्बरमिव ; तस्यापि नीलरक्तादिमेघव्याप्तत्वात् । फलानाम् आमपक्वतया हरितरक्तानाम् आवलयः राजयः, ताभिः सम्यगुद्भूतं संजातशोभं वनसमुदायमिवाचितमवस्थितम् ॥ ३८ ॥

**निर्मोकमिव शेषाहेर्विस्तीर्णान्तमतीव[1] हि ।**
**तं दृष्ट्वा तत्र मध्यस्थं ददृशे केशवालयम् ॥ ३९ ॥**
**अनिर्देश्यपरीमाणमनिर्देश्यर्द्धिसंयुतम् ।**
**शेषपर्यङ्कगं तस्मिन् ददर्श मधुसूदनम् ॥ ४० ॥**
**शेषाहिफणरत्नांशुदुर्विभाव्यमुखाम्बुजम् ।**
**शशाङ्कशतसंकाशं सूर्यायुतसमप्रभम् ॥ ४१ ॥**

शेषनागविनिर्मुक्तं निर्मोकं कञ्चुकमिवातिविस्तीर्णप्रान्तं तम् उक्तविशेषणविशिष्टं क्षीरसागरं दृष्ट्वा तन्मध्यगतं भगवदालयं ददृशे ॥ ३९ ॥

अनिर्देश्यं वचनागोचरं परिमाणमस्य । तादृश्यैव ऋद्ध्या संपत्त्या संयुतं यत् भगवदालयं, तत्र शेष एव पर्यङ्कः, तस्मिन् शयानं भगवन्तं मधुसूदनं ददर्श ॥ ४० ॥

भगवन्तं विशिनष्टि । शिरःस्थानोपधानीकृतशेषनागीयसहस्रफणागणावस्थितदिव्यरत्नकरनिकरदुर्निरीक्ष्यमुखकमलं शरन्निशापूर्णिमापूर्णशशधरशतशीतलद्युतिद्योतमानं भक्तेभ्यः, खरतरकरनिकरदिनकरायुतसमच्छविच्छटादर्शनीयम् अदर्शनीयेभ्यः ॥ ४१ ॥

**पीतवाससमक्षोभ्यं [2]सवरत्नविभूषितम् ।**
**मुकुटेनार्कवर्णेन कुण्डलाभ्यां विराजितम् ॥ ४२ ॥**

[1] विस्तीर्णं तमतीव—च.

[2] रत्नसंघसमाचितम्—झ.

**संवाह्यमानाङ्घ्रियुगं [1]लक्ष्म्या करतलैः शुभैः ।**
**शरीरधारिभिः शस्त्रैः सेव्यमानं समन्ततः ॥ ४३ ॥**
**तं दृष्ट्वा पुण्डरीकाक्षं ववन्दे मधुसूदनम् ।**
**जानुभ्यामवनिं गत्वा [2]विज्ञापयति चाप्यथ ॥ ४४ ॥**

सुवर्णसमवर्णभव्यनव्यदिव्याम्बरसंव्यानसंपादितोद्यद्विद्युन्नवजलधरशोभं दुर्विनयदनुतनयकृत्यविषयमनः-क्षोभं सकलसुरासुरसमूहसमुद्भूतपयःपयोनिधिमन्थनप्रयत्नसमधिगतप्रत्नरत्ननिवहनिर्व्यूढस्तुपुमं विविधमणिमरीचि-मञ्जरीपिञ्जरितोदयगिरिशिखरतटनटदर्कककर्कशप्रभाप्रसरशेखरेण गण्डलसद्द्युतिमण्डलकुण्डलयुग्मेन च राज-मानम् ॥ ४२ ॥

शेषशायिनो भगवतः चरणप्रदेशावस्थितया पद्मसद्मया मृदुतरैः करतलैः सस्नेहं संवाहितचरणकमलं शङ्खचक्रगदापद्माधिष्ठात्रीभिर्देवताभिः मूर्तिमतीभिः पार्श्वयोरुपास्यमानम् ॥ ४३ ॥

भगवद्दर्शनानन्तरवृत्तमाह । प्रसादातिशयेन पुण्डरीकवत् प्रफुल्ले अक्षिणी यस्य तादृशं मधुसूदनमव-लोक्य, अवनिकृतजानुमण्डला धारिण्यभिवाद्य, अनन्तरं स्वाभिमतं विज्ञापयामास ॥ ४४ ॥

**उद्धृताहं त्वया देव रसातलतलं गता ।**
**स्वस्थाने स्थापिता विष्णो लोकानां हितकाम्यया ॥ ४५ ॥**
**तत्राधुना [3]हि देवेश का धृतिर्मे भविष्यति ।**
**एवमुक्तस्तया देव्या देवो वचनमब्रवीत् ॥ ४६ ॥**
**[4]वर्णाश्रमाचाररताः [5]सन्तः शास्त्रैकतत्पराः ।**
**त्वां धरे धारयिष्यन्ति तेषां त्वद्भार आहितः ॥ ४७ ॥**

विज्ञाप्यमाह । सप्तोदधिजलसमवायेन पातालतलमनुगता अहं, हे विष्णो, हे देव देवेश, त्वयैव लोक-हितेप्सुना त्वया उद्धृता स्वस्थाने स्थापिता । तत्र स्थापिताया मे सांप्रतं कतमा धृतिः आधारः भविष्यतीति ब्रूहि । उत्तरमवतारयति । एवम्; उक्तप्रकारेण वसुधया विज्ञापितो भगवान् वक्ष्यमाणमुवाच ॥ ४५, ४६ ॥

तदेवाह । वक्ष्यमाणानां वर्णाश्रमाणामाचारेषु वक्ष्यमाणेषु ये निरताः स्वस्वाचाररताः । अनुष्ठानस्य

[1] लक्ष्मी—ग.

[2] व्यज्ञापयत सा यथा—ठ.

[3] मे देवेश का धृतिर्हि—घ, ट, ठ.

[4] This verse omitted in झ; वर्णाश्रमाचारयुताः—ठ.

[5] धर्मे—क.

शास्त्रज्ञानपूर्वकस्य श्रेयस्करत्वमाह—शास्त्रमेवैकम्, तस्मिन् धर्मे परमयनं प्राप्त्युपायो येषां ते। त्वां धरे धारयिष्यन्ति; यतस्तेषामेव त्वद्धारोऽस्माभिराहितः। यथोक्तम्—

"गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही॥"

इति॥ ४७॥

**एवमुक्ता वसुमती देवदेवमभाषत।**
**वर्णानामाश्रमाणां च धर्मान् वद सनातन[1]॥ ४८॥**
**त्वत्तोऽहं श्रोतुमिच्छामि त्वं हि मे परमा गतिः।**
**नमस्ते देवदेवेश देवारिबलसूदन[2]॥ ४९॥**
**नारायण जगन्नाथ शङ्खचक्रगदाधर।**
**पद्मनाभ हृषीकेश महाबलपराक्रम॥ ५०॥**

एवं दत्तोत्तरापि धरा भगवन्तं पुनरूचे। यथा—हे सनातन नित्यज्ञानेच्छाप्रयत्न, वर्णानामाश्रमाणाम्, चकारादनुलोमजप्रतिलोमजानां च धर्मान् मह्यं वदेति॥ ४८॥

मामेव प्रति अयं नियोगः कुतः? इत्यत आह। यतो मे परमा सर्वोत्कृष्टा गतिः आश्रयः त्वमेव; अतः त्वत्सकाशादेवाहं धर्मान् श्रोतुमिच्छामि, नान्यत इति; त्वमेव वद। श्रवणार्थमेव गुरुं नत्वा स्तौति। देवानामग्न्यादीनां ये देवाः ब्रह्मादयः; तेषामीशः नियोजकः; तस्मै ते नमः। देवारयः यज्ञविध्वंसकाः दैत्यादयः; तेषां बलमोजः सैन्यं वा सूदयतीति स संबोध्यते॥ ४९॥

नरः परमात्मा; "नयतीति नरः प्रोक्तः परमात्मा सनातनः" इति व्यासस्मरणात्। नरात् जातानि आकाशादीनि कार्याणि। तान्ययनं यस्य;

"यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥"

इति श्रुतेः;

"नराज्जातानि तत्त्वानि नाराणीति ततो विदुः।
तान्येव चायनं तस्य तेन[3] नारायणः स्मृतः॥"

इति स्मृतेश्च।

[1] सनातनान्—क; धर्मान् वासवनन्दन—ज, ठ; धर्मान् मह्यं वदाशु भोः—घ, च.
[2] बलिसूदन—ज.
[3] ततो—ख, घ, ट.

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥"

इति मानवात्। जगता नाथ्यते याच्यते; जगत् उत्पत्त्या आशास्ते; जगतामीष्टे इति वा जगन्नाथः। पाञ्चजन्याख्यं भूताद्यहंकारात्मकं शङ्खम्, मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रं संसारचक्रं वा, बुद्धितत्त्वात्मिकां कौमोदकीं नाम गदां च धारयतीति। पद्मं ब्रह्मयोनिः नाभौ यस्य; पद्मस्य हृत्पुण्डरीकस्य नाभिः मध्यगत इति वा; पद्ममिव नाभिर्यस्येति वा। हृषीकाणां विषयेन्द्रियाणामीशः क्षेत्रज्ञः। हृषः हर्षकाः केशाः रश्मयो यस्येति वा; पृषोदरादिः। महान्तौ सर्वातिशायिनौ बलमोजः पराक्रमः शौर्यं, तौ यस्य ॥ ५० ॥

**अतीन्द्रिय सुदुष्पार देव शार्ङ्गधनुर्धर ।**
**वराह भीम गोविन्द पुराण पुरुषोत्तम ॥ ५१ ॥**
**हिरण्यकेश विश्वाक्ष यज्ञमूर्ते निरञ्जन ।**
**क्षेत्रक्षेत्रज्ञदेवेश सलिलार्णवशायक ॥ ५२ ॥**

इन्द्रियाणि वागादीनि अतिक्रान्तः, तदविषयत्वात्; "यतो वाचो निवर्तन्ते" इति श्रुतेः। "अशब्दमस्पर्शम्" इत्यादिश्रुतेरिन्द्रियरहितो वा। सुतरां दुर्ज्ञेयं पारमन्तो यस्य। सुदुष्प्रापेति पाठे दुरधिगमः। देवः द्युतिमान्। क्रियाद्यहंकारात्मकं शार्ङ्गनामकं धनुर्धारयतीति। वरान् उत्कृष्टान् शत्रून् आ समन्तात् हन्तीति। वरान् अभिलषितान् आहन्ति प्राप्नोति; अर्थनीयत्वेन प्रार्थयतीति वा। तृतीयावतारो वा। बिभेत्यस्मात् सर्वमिति भीमः। रुद्रमूर्तिर्वा; "महद्भयं रुद्रमुद्यतम्" इति मन्त्रवर्णात्। गां विन्दति पालयतीति गोविन्दः; "गोब्राह्मणहिताय च" इति स्मरणात्। गाः वेदान्तवाचः विन्दते वेत्तीति वा; "वेदान्तविद्वेदविदेव चाहम्" इति स्मरणात्। गोभिर्वेद्यते इति वा; "गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः" इति स्मरणात्। गां पृथिवीं समुद्रमग्नां विन्दते इति वा;

"नष्टां वै धरणीं पूर्वमविन्दं वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥"

इति मोक्षधर्मात्। पुराणि शरीराणि अनति प्राप्नोति; सर्वजीर्ण इति वा। पुरुषाणामुत्तमः। नात्र निर्धारणषष्ठीसमासप्रतिषेधः, जात्याद्यनपेक्षया समर्थत्वात्। यत्र पुनर्जात्याद्यपेक्षा तत्र निषेधः। यथा वर्णानां क्षत्रियः शूरः; गवां कृष्णा बहुक्षीरा; गच्छतां धावकः शीघ्रतम इति। पुरुषेभ्य उत्तम इति पञ्चमीसमासो वा;

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥"

इति **स्मरणात्** ॥ ५१ ॥

हिरण्यमिव केशा यस्य। विश्वस्मिन् अक्षिणी यस्य, सर्वसाक्षित्वात्; विश्वतोऽक्षिणी यस्येति वा; "विश्वतश्चक्षुः" इति श्रुतेः। यज्ञो मूर्तिर्यस्य; "यज्ञो वै विष्णुः" इति श्रुतेः। इज्यतेऽसौ यज्ञः; स मूर्तिर्यस्येति वा। अञ्जनं मायामलम्; अस्मान्निर्गतः। क्षेत्रं शरीरम्, क्षेत्रज्ञो जीवः, तौ दीव्यतो येन। ईश सर्वेश्वर। अर्णवस्य सलिलं सलिलार्णवः; तत्र शाययति जगदिति ॥ ५२ ॥

**मन्त्र मन्त्रवहाचिन्त्य[1] वेदवेदाङ्गविग्रह।**
**जगतोऽस्य समग्रस्य सृष्टिसंहारकारक ॥ ५३ ॥**
**धर्माधर्मज्ञ धर्माङ्ग धर्मयोने वरप्रद।**
**विष्वक्सेनामृत व्योम मधुकैटभसूदन ॥ ५४ ॥**
**बृहतां बृंहणाज्ञेय सर्व [2]सर्वाभयप्रद।**
**वरेण्यानघ जीमूत जगन्निर्माणकारक ॥ ५५ ॥**

मन्त्रयते जगदेनमिति; मन्यते संबोध्यत इति वा मन्त्रः। ऋगादिर्वा; "मन्त्रोऽहमहमेवाज्य-महमग्निरहं हविः" इति **भगवद्वचनात्**। मन्त्रं वहति प्राप्नोतीति; मन्त्रप्रकाश्य इति यावत्; मन्त्रं वहति पठतीति होता वा। अचिन्त्यः ध्यानागम्यः। वेदाः ऋगादयः; वेदाङ्गानि शिक्षादीनि; तदुभयं विग्रहो यस्य। स्थावरजङ्गमात्मकस्य जगतो विश्वस्य सृष्टिस्थितिसंहारान् करोतीति; "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति" इति श्रुतेः॥ ५३ ॥

विधिनिषेधार्थौ धर्माधर्मौ; तौ तत्त्वेन जानातीति धर्माधर्मज्ञः। धर्म एवाङ्गं शरीरं यस्य; धर्मस्याङ्गम् उपकारको वा;

"ईश्वरो नित्यकालात्मा चिन्तनीयः स कर्मसु।"
"ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु॥"

इति,

"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥"

[1] महाचिन्त्य—ङ.

[2] सत्त्वाभयप्रद—क.

इत्यादिपुराणात्; धर्म एवाङ्गं प्राप्त्युपायो यस्येति वा। धर्मस्य योनिः उत्पत्तिस्थानम्; "स धर्ममत्यसृजत" इति श्रुतेः; धर्मो योनिः प्राप्त्युपायो यस्येति वा। वरान् भक्ताभिलषितान् प्रकर्षेण अनन्योपघातलक्षणेन ददातीति। विषु समन्ततः अञ्चन्ति पलायन्ते दैत्यसेनाः यदुद्योगेनासौ। न विद्यते मृतं मृत्युः यस्मिन्नित्यमृतम्। विशेषेणावतीति व्योम। मधुकैटभौ दैत्यौ सूदयतीति ॥ ५४ ॥

बृहतां परममहत्परिमाणानां कालाकाशादीनां बृंहणः आवारकः। अज्ञेयः ज्ञातुमशक्यः, प्रत्यक्षप्रमाणाविषयत्वात्। सर्वरूपत्वात् सर्वः; "अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः" इति **स्मरणात्**;

> "असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात्।
> सर्वस्य सर्वदा ज्ञानात् सर्वमेतत् प्रचक्षते ॥"

इति **व्यासस्मरणात्**। सर्वेषामभयं प्रददातीति। वरेण्यः सर्वोत्कृष्टः। अनघः पापसंबन्धरहितः। जीवनं लोकानां, जीवान् वा मूत्रयतीति रेफलोपात् जीमूतः। जगतो विश्वस्य निर्माणं करोति, कारयति वा ब्रह्मणेति ॥ ५५ ॥

**आप्यायन अपां स्थान चैतन्याधार निष्क्रिय।**
**सप्तशीर्षाध्वरगुरो [1]पुराणपुरुषोत्तम ॥ ५६ ॥**
**ध्रुवाक्षर सुसूक्ष्मेश भक्तवत्सल [2]पावन।**
**त्वं गतिः सर्वदेवानां त्वं गतिर्ब्रह्मवादिनाम् ॥ ५७ ॥**

आप्याययति जगदिति; आप्यमयनं यस्येति वा; आप्यानां लक्ष्मीकौस्तुभादीनामयनमिति वा। अपां स्थानम् उत्पत्तिस्थानम्; "आपो वै नरसूनवः" इति **स्मृतेः**। चैतन्यस्य विज्ञानस्याधारः निवासस्थानम्। निर्गताः क्रियाः चेष्टाः, विहिता वा यस्मात्। सप्त सामभक्तयः, पाकसंस्था वा, हविःसंस्था वा, सोमसंस्था वा, भूर्भुवरादयो लोका वा शीर्षाणि यस्य। अध्वरं गृणाति उपदिशतीति। पुराणाश्च ते पुरुषाश्च ब्रह्मादयः, तेभ्यः उत्तमः; "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति **स्मरणात्** ॥ ५६ ॥

ध्रुवः निश्चलः; ध्रुवयति आत्माश्रितमिति वा। अक्षरः अविनाशी। सुतरां सूक्ष्माः परमाणवः, तेषामीशः क्रियादिहेतुः। भक्ता एव वत्साः; तान् लातीति। पावयति पापिष्ठानिति।

> "अतिपातकयुक्तोऽपि ध्यायन्निमिषमच्युतम्।
> भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥"

[1] प्रधानपुरुषोत्तम—ज, ठ.

[2] वामन—ज, ठ.

“अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥”

इत्यादिपुराणात् । सर्वेषां ब्रह्मादिदेवानां त्वमेव गतिः, उत्पत्तिस्थितिप्रलयहेतुः ; “यतो वा इमानि भूतानि जायन्ते” इत्यादिश्रुतेः ;

“यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥”

इति स्मृतेश्च । ब्रह्मवादिनां वैदिकानां त्वमेव गतिर्गम्यः ; “वेद एव द्विजातीनां निश्श्रेयसकरः परः” इति स्मरणात् ॥ ५७ ॥

**तथा विदितवेद्यानां गतिस्त्वं [1]पुरुषोत्तम ।**
**प्रपन्नास्मि जगन्नाथ ध्रुवं वाचस्पतिं प्रभुम् ॥ ५८ ॥**
**[2]सुब्रह्मण्यमनाधृष्यं वसुषेणं वसुप्रदम् ।**
**[3]महायोगबलोपेतं पृश्निगर्भं धृतार्चिषम् ॥ ५९ ॥**

विदितं वेद्यं ब्रह्म यैस्ते विदितवेद्याः ; “वेद्यं नाम परं पदम्” इति स्मरणात् । जगन्नाथध्रुवपदे व्याख्याते । वाचो वेदस्य, वागिन्द्रियस्य वा प्रवर्तकः । अलुक्समासः । प्रभवति सर्वेभ्य इति प्रभुः ॥ ५८ ॥

सुब्रह्मण्यः ऋत्विग्विशेषः ; वाग्विशेषो वा ; “वाग्वैव सुब्रह्मण्यः” इति श्रुतेः ; सोऽस्यास्तीति सुब्रह्मण्यः । सुतरां ब्रह्मण्य इति वा । ब्रह्मणे वेदाय चतुर्मुखाय ब्राह्मणाय वा हित इति ब्रह्मण्यः । दैत्यादिभिराधर्षयितुमशक्यः । वसु द्रव्यं सेना लोकसाधनोपायो यस्य ; द्रव्योन्मादेन हि भगवद्विमुखा जायन्ते । वसु दीयमानं सेना प्राप्त्युपायो यस्येति वा ; “तमेतं विविदिषन्ति यज्ञेन दानेन” इति श्रुतेः । वसु धनं प्रकर्षेण भक्तेभ्यो ददातीति ; “चतुर्विधा भजन्ते माम्” इत्युपक्रम्य “आर्तो जिज्ञासुरर्थार्थी” इत्यभिधानात् । वसूनि सुरारीणां प्रकर्षेण द्यति खण्डयतीति वा । महतोऽकृत्रिमस्य योगस्य बलेन सामर्थ्येन युक्तः ; “पश्य मे योगमैश्वरम्” “योगं योगेश्वरात् कृष्णात्” “यत्र योगेश्वरः कृष्णः” इत्यादिस्मरणात् । पृश्निः आकाशः गर्भे यस्य ; “तस्माद्वा एतस्मादात्मन आकाशः संभूतः” इति श्रुतेः । धृतानि अर्चींषि तेजांसि सूर्यादिषु येन ; “तेजस्तेजस्विनामहम्” “प्रभास्मि शशिसूर्ययोः” “तेजश्चास्मि विभावसौ” इत्यादिस्मरणात् ॥ ५९ ॥

[1] परमेश्वरः—ज.　　[2] ब्रह्मण्यममराराध्यं—ठ.
[3] महावेग—ज.

**वासुदेवं महात्मानं पुण्डरीकाक्षमच्युतम् ।**
**सुरासुरगुरुं देवं विभुं भूतमहेश्वरम् ॥ ६० ॥**
**[1]एकव्यूहं [2]चतुर्बाहुं जगत्कारणकारणम् ।**
**ब्रूहि मे भगवन् धर्मांश्चातुर्वर्ण्यस्य शाश्वतान् ॥ ६१ ॥**

वसति सर्वभूतेषु, वासयति चात्मनि सर्वभूतानीति वा वासुः । दीव्यति क्रीडति विजिगीषते व्यवहरति विद्योतते [3]स्तूयते कामयते गच्छतीति वा देवः । वासुश्चासौ देवश्चेति ;

"सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥"

इति **वैष्णवात्** । महांश्चासावात्मा चेति । महत्त्वमाकाशाद्याधारतया ; "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि" इति **स्मरणात्** ;

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति कीर्तितः ॥"

इति **स्मरणात्** । हृदयपुण्डरीकमश्नुते व्याप्नोति ; "यत्पुण्डरीकं पुरमध्यसंस्थम्" इति **श्रुतेः** । तत्रेक्ष्यत इति वा ; पुण्डरीकवदक्षिणी यस्येति वा ; पुण्डरीकस्थानीकृतमक्षि शिवार्चने येनासाविति वा । न च्यवतीत्यच्युतः ; षड्भावविकारराहित्यात् ; "शाश्वतं शिवमच्युतम्" इति **श्रुतेः** । न च्युतोऽस्मादिति वा ; "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति **स्मरणात्** । सुरानसुरांश्च गृणाति हितमुपदिशतीति ; सुरासुरेभ्यो गरिष्ठ इति वा । देवम् उक्तार्थम् । विभुः व्यापकः ; विशेषेण तत्तत्प्रयोजनवशेन मत्स्यादियोनिषु भवतीति वा । भूतानां पृथिव्यादीनामुत्पत्तिस्थितिलयकारित्वात् महानीश्वरः ॥ ६० ॥

एक एव व्यूहो देहो विराट्स्वरूपो यस्य ; एकस्यैव व्यूहो नानादेहकल्पना यस्येति वा ; "एको देवः सर्वभूतान्तरात्मा" इति **श्रुतेः** । चत्वारो वेदाः, युगानि वा बाहवो ग्रहणसाधनानि यस्य ; चतुर्बाहुरिति वासुदेवे रूढो वा ; "चक्रपाणिश्चतुर्भुजः" इति **कोशात्** । जगत्कारणानां महाभूतानां कारणम् । तमहं प्रपन्नास्मीति सर्वत्र संबन्धः । किमर्थं प्रपन्नेत्यत आह । चतुर्णां वर्णानां समाहारश्चातुर्वर्ण्यम् । तस्य कर्तव्यान् शाश्वतान् सार्वकालिकान्[4] ॥ ६१ ॥

[1] एकशृङ्गम्—ज, छ.
[2] चतुर्वक्त्रम्—क.
[3] श्रूयते—क.
[4] त्वं मे ब्रूहि । शाश्वतपदेन प्रवाहानादित्वमुक्तम्—added in ग, छ.

**आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ।**
**एवमुक्तस्तु देवेशः क्षोण्या क्षोणीमभाषत ॥ ६२ ॥**
**शृणु देवि धरे धर्मांश्चातुर्वर्ण्यस्य शाश्वतान् ।**
**आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ॥ ६३ ॥**
**ये तु त्वां धारयिष्यन्ति सन्तस्तेषां परायणान् ।**
**निषण्णा भव [1]वामोरु काञ्चनेऽस्मिन् वरासने ॥ ६४ ॥**
**सुखासीना निबोध त्वं धर्मान् निगदतो मम ।**
**शुश्रुवे वैष्णवान् धर्मान् सुखासीना धरा तदा ॥ ६५ ॥**

इति [2]श्रीविष्णुस्मृतौ प्रथमोऽध्यायः[3]

धर्मान् विशिनष्टि—आश्रमेति । आश्रमाः ब्रह्मचारिप्रभृतयः; तैः आचर्यन्ते क्रियन्ते इत्याचाराः कर्तव्याः; तैः संयुक्तान् समवेतान् । रहस्यमापद्धर्मः, रहस्यप्रायश्चित्तं वा; तेन सहितान् सरहस्यान् । संग्रहः संक्षेपः; तत्सहितान् । ब्रूहीति संबन्धः । भगवदुत्तरमवतारयति—एवमिति । एवम् उक्तप्रकारेण क्षोण्याभिहितो देवदेवः क्षोणीं वक्ष्यमाणमभाषत ॥ ६२ ॥

तदाह । हे धरे मदुक्तधर्मधारणसमर्थे, स्वजिज्ञासितान् वर्णाश्रमधर्मान् सततानुष्ठेयान् सापद्धर्मान् ससंक्षेपान् । ये सन्तः विहितानुष्ठातारः निषिद्धवर्जकाश्च त्वां धारयिष्यन्ति, तेषां परायणान् परमयनं स्थानं मोक्षलक्षणं येभ्यस्ते; तान् मत्तः शृणु । पुनर्धर्मविशेषणं प्रश्नोत्तरयोरेकविषयताभिधानाय । तच्चोत्तरपर्यालोचनया प्रश्नगतमपि धर्मशब्दं षड्विधस्मार्तपरमेव गमयति । यथोक्तं भविष्ये—

"वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् ।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥
धर्मः साधारणश्चैव षोढा धर्मः प्रकीर्तितः ।
वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते ॥
वर्णधर्मः स उक्तस्तु [4]यथोपनयनं नृप ।
आश्रमत्वं समाश्रित्य यो धर्मः संप्रवर्तते ॥

[1] रम्भोरु—ज.
[2] श्रीवैष्णवे धर्मशास्त्रे प्रथमं प्रकरणम्—ज, ठ.
[3] समाप्तः—added in घ.
[4] चौलोपनयनं—घ, च.

स किलाश्रमधर्मस्तु भिक्षादण्डादिको यथा ।
वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते ॥
स वर्णाश्रमधर्मस्तु स्यान्मौञ्जी मेखला यथा ।
यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते ॥
यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ।
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते ॥
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ।
वर्णांश्चैवाश्रमांश्चैव प्रतिलोमानुलोमजान् ॥
अधिकृत्य प्रवृत्तो यः स साधारण उच्यते ।
श्राद्धकर्म तपश्चैव सत्यमक्रोध एव च ॥
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥"

इति । गौणो गुणनिमित्तकः । वर्णत्वं ब्राह्मणत्वादि । उपनयनम् "वसन्ते ब्राह्मणमुपनीयत" इत्यादि । भिक्षादि; "ब्राह्मणेषु चरेद्भैक्षम्" "दण्डाजिनोपवीतानि धारयेत्" इत्यादि । श्रवणं चावधानं विना नेत्यत आह— निषण्णेति । शुश्रूषितधर्मश्रवणायास्मिन् सौवर्णे सर्वोत्कृष्टे आसने निषण्णा सुखासीना भूत्वा अशेषविशेषपुरःसरं ब्रुवतो मम सकाशात् जिज्ञासितधर्मान् श्रुत्वा निबोध; समनस्कतया बुध्यस्व । [1]तस्मिन् काले सुखासनेन सावधाना धरा भगवता श्रीविष्णुना अभिहितान् धर्मान् शुश्रुवे । श्रवणस्य धारणरूपफलोपयिकताबोधनायात्मनेपदप्रयोगः ॥ ६३-६५ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मजश्रीनन्द-पण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां प्रथमोऽध्यायः

[1] ततः सा किं चकारेत्यत आह—added before in घ, छ.

## द्वितीयोऽध्यायः

**[1]ओम्। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति वर्णाश्चत्वारः ॥ १ ॥ तेषामाद्या द्विजातयस्त्रयः[2] ॥ २ ॥ तेषां निषेकाद्यः श्मशानान्तो [3]मन्त्रवत्क्रियासमूहः ॥ ३ ॥**

एवं शास्त्रोत्पत्तिनिमित्तमभिधाय भमिजिज्ञासितान् वर्णाश्रमधर्मानभिधातुं द्वितीयाध्यायमारभते। तत्रादौ वर्णानाह। वक्ष्यमाणधर्माणां त्रयीमूलकत्वद्योतनाय तन्मूलस्य प्रणवस्यादावुपन्यासः। तेन च प्रणवाधिकारिणां त्रैवर्णिकानामेवास्मिन् शास्त्रेऽधिकारो ध्वनितः। वक्ष्यति चान्ते "ये द्विजा धारयिष्यन्ति" इति। ब्राह्मणादयश्चत्वारो वर्णसंज्ञाः। स्वशास्त्रे व्यवहारलाघवाय संज्ञाकरणम्। तत्प्रयोजनं च "वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम्" इत्यादिषु स्फुटम्। उद्देशेनैव चतुष्ट्वसिद्धावपि चतुर्ग्रहणं "ब्राह्मणात् क्षत्रियायामुत्पन्नः क्षत्रिय एव। वैश्यायामुत्पन्नो वैश्य एव" इत्यादिशङ्खादिप्रयोगेणानुलोमानामपि वर्णसंज्ञां वारयितुम्। तेन च तेषां "राजा राजसूयेन" इत्यादिवर्णधर्मानधिकारः। प्रयोगश्च गौणः, तत्तद्दण्डाजिनादिप्राप्त्यर्थः। यद्वा वर्णजात्यनन्तर्गतायाः वैश्यायाः वर्णतावारणाय। तेन च वर्णधर्मानधिकारेण सामान्यधर्मानधिकारः। अन्ये तु अनुलोमानां कथंचित् वर्णान्तर्भावात् वर्णधर्मप्राप्त्या प्रतिलोमजानां तन्निवृत्त्यर्थमित्याहुः। इतिकरणं त्रयीमार्गानुवर्तिनामेव वर्णत्वम्, अन्यथा नग्नत्वमिति बोधयितुम्। यथाह **विष्णुपुराणम्**—

"ब्राह्मणाद्याश्च ये वर्णाः स्वधर्मादन्यतोमुखम्।
यान्ति ते नग्नसंज्ञा हि हीनकर्मस्ववस्थिताः॥"

इति ॥ १ ॥

तानेव [4]धर्मान् विशेषाभिधित्सया अवान्तरसंज्ञया विभजति। तेषां चतुर्णां वर्णानां मध्ये आद्यास्त्रयो द्विजातयः। द्विर्जातिर्जननं येषां ते द्विजातयः। तत्कारणं च वक्ष्यति—

"मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनम्।
अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥"

इति। एतेनैव तेषां द्विजत्वम्। आद्यग्रहणमन्तिमनिरासाय[5] ॥ २ ॥

[1] omitted in क, झ. [2] त्रयः omitted in झ. [3] मन्त्रवान्—ज, ठ.
[4] धर्मविशेषा—क. [5] शूद्र एकजातिरिति गौतमस्मृतेः—added in घ.

द्विजातिसंज्ञाप्रयोजनमाह । तेषाम् द्विजानाम् । प्रक्रमादेव प्राप्तौ पुनर्निर्देशो द्विजानुलोमजसंग्रहार्थः । शूद्रव्युदासार्थो वा ; "शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः" इति **यमस्मरणात्** । निषेको गर्भाधानम् आद्यो यस्य । श्मशानं तत्संबन्धि प्रेतकर्म अन्ते यस्य[1] । क्रियाणां संस्कारकर्मणां समूहः कलापः । मन्त्रवत् ; मन्त्रो विद्यते यस्यां क्रियायां तद्यथा भवति तथा ; कार्य इति शेषः ॥ ३ ॥

**तेषां च धर्माः ॥ ४ ॥ ब्राह्मणस्याध्यापनम् ॥ ५ ॥ क्षत्रियस्य शस्त्रनित्यता ॥ ६ ॥ वैश्यस्य पशुपालनम् ॥ ७ ॥ शूद्रस्य [2]द्विजातिशुश्रूषा ॥ ८ ॥ द्विजानां यजनाध्ययने ॥ ९ ॥**

तेषाम् ; चतुर्णां वर्णानाम् । व्यवहितपरामर्शाय पुनस्तच्छब्दः । धर्माः ; अभ्युदयस्थानानि । चकारोऽनुलोमजसंग्रहार्थः ॥ ४ ॥

यद्यप्यध्यापनस्य वृत्तितया तास्वेव पठनमुचितम् ; तथापि,

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा ॥"

इति **कात्यायनेन** तस्य नित्यकर्मत्वाभिधानात् धर्मत्वमप्यविरुद्धम् । तच्च ब्राह्मणस्यैव ; "ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः" इति [3]**गौतमस्मरणात्** । क्षत्रियवैश्ययोस्तु आपदि ब्राह्मणप्रेरितयोर्भवति ; "आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः" इति तस्यैव **स्मरणात्** ॥ ५ ॥

शस्त्राणि अमन्त्रप्रयोज्यानि धनुरादीनि । तेषु नित्यता तत्परता युद्धाद्यभिसन्धिं विनापि । आहिताग्न्यादित्वात् पूर्वनिपातेन नित्यशस्त्रतेत्यर्थः ;

"अधीत्य वेदं विप्रेभ्यः क्षत्रियोऽथ धनुःश्रुतिम् ।
आददीत द्विजेभ्यस्तु तथासौ क्षत्रियो भवेत् ॥"

इति [4]**धनुर्वेदस्मरणात्** ॥ ६ ॥

पशूनां गवादीनां पालनम् आहारादिदानेन पोषणम् ; दुग्धाद्यभिसन्धिं विना[5] ॥ ७ ॥

द्विजातीनां ब्राह्मणादीनां त्रयाणां शुश्रूषा परिचर्या ; वेतनाद्यभिसन्धिं विना ॥ ८ ॥

त्रितयसाधारणं धर्ममाह । द्विजाना ब्राह्मणादीनां त्रयाणां यजनं यागः, अध्ययनं [6]गुरुसकाशादेव वेदग्रहणम् । ते धर्मौ । दानं तु सर्वसाधारणमस्त्येव ॥ ९ ॥

[1] यस्य सः—ग, घ, ठ. [2] द्विज —ज, ठ. [3] गौतमीय—घ.
[4] चतुर्वेद—ख, ग. [5] विनापि—छ. [6] गुरोः—ख, ग.

**अथैतेषां वृत्तयः ॥ १० ॥ ब्राह्मणस्य [1]याजनप्रतिग्रहौ ॥ ११ ॥ क्षत्रियस्य [2]क्षितित्राणम् ॥ १२ ॥ कृषिगोरक्षवाणिज्य-कुसीदयोनिपोषणानि वैश्यस्य ॥ १३ ॥ शूद्रस्य सर्वशिल्पानि ॥ १४ ॥ आपद्यनन्तरा वृत्तिः ॥ १५ ॥**

दृष्टार्थान् धर्मान् वक्तुं पृथक् प्रतिजानीते । एतेषां ब्राह्मणादीनां चतुर्णां वर्णानां वृत्तयः जीवनोपाया उच्यन्ते ॥ १० ॥

याजनम् आर्त्विज्यम् । प्रतिग्रहः त्यक्तस्य स्वत्वानुकूलो व्यापारः । द्वन्द्वनिर्देशात् अध्यापनमपि ; "चतुर्थस्तु ब्रह्मसत्रेण जीवति[3]" इति **मानवात्** । तेनाध्यापनमुभयरूपं भवति । वक्ष्यति—"धर्मार्थौ यत्र न स्याताम्" इति ॥ ११ ॥

क्षत्रियस्य साक्षादन्योपसर्जनतया वा क्षितेः तद्वासिनां भूतानां त्राणं चौरादिभयापनयनेन वक्ष्यमाण-बल्यादानम् ; "क्षत्रियश्चेदन्यस्तमुपजीवेत् तद्वृत्त्या" इति **गौतमस्मरणात्** ॥ १२ ॥

कृषिः कर्षणेन सस्योत्पादनम् । गोरक्षः ; रक्षणं रक्षः ; गवां रक्षः गोरक्षः ; गोपालनम् । गावः पशुमात्रोपलक्षणम् ; "पाशुपाल्यं विशः स्मृतम्" इति **योगिस्मरणात्** । वाणिज्यं क्रयविक्रयौ । कुसीदं वृद्ध्यर्थं धनप्रयोगः । योनिः यवव्रीह्यादिबीजम् ; तस्य पोषणं रक्षणम् ; "बीजानामुप्तिविच्च स्याद्बीजक्षेत्र-गुणस्य च" इति **मानवात्** । एतानि वैश्यस्य वृत्तयः ॥ १३ ॥

शिल्पानि चित्रकरणादीनि । सर्वशब्देन वैश्यवृत्तीनां कृष्यादीनामपि ग्रहणम् । यदाह **देवलः**— "शूद्रधर्मस्त्रिवर्णशुश्रूषा कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरज-मृदङ्गवादनादीनि" इति ॥ १४ ॥

आपदि ब्राह्मणादीनां याजनादिभिरनिर्वाहे अनन्तरा संनिहिता कनीयसी ; न तु ज्यायसी वृत्तिः । यथाह **वसिष्ठः**—"अजीवन्तः स्वधर्मेणानन्तरां कनीयसीं वृत्तिमातिष्ठेरन् कदाचिज्ज्यायसीम्" इति । **गौतमस्तु** तामप्याहापत्कालानुवृत्तौ—"याजनाध्यापनप्रतिग्रहाः सर्वेषाम्" इति । तद्विरोधं परिहरति **नारदः**—

"उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते[4] ॥"

इति । शूद्रब्राह्मणयोरुत्कृष्टापकृष्टे कर्मणी न स्तः । परं तु मध्यमे क्षत्रियवैश्यकर्मणी । यतस्ते सर्वसाधारणे । ततश्च ब्राह्मणस्य क्षत्रियवैश्यकर्मणी भवतः ; न शौद्रम् । शूद्रस्यापि वैश्यक्षत्रियकर्मणी भवतः ; न ब्राह्ममिति पर्यवस्यति । यतः स एवाह—

[1] याजनाध्यापनप्रतिग्रहाः—ज, झ, ठ.
[2] क्षत—ज, ठ.
[3] जीवनः—ख, ग.
[4] यतः—घ, च.

"न कथंचन कुर्वन्ति ब्राह्मणाः कर्म वार्षलम् ।
वृषलः कर्म वा ब्राह्मं पतनीये हि ते तयोः ॥"

इति । अनेन **गौतमीयं** सर्वपदं त्रैवर्णिकपरमेव । तेनैकान्तरेत्यपि । यथाह **गौतमः**—"तदलाभे क्षत्रवृत्तिः; तदलाभे वैश्यवृत्तिः" इति । एवमेव क्षत्रियस्य वैश्यवृत्तिः; तदलाभे शूद्रवृत्तिरिति । तत्राप्यानुलोम्ये प्रातिलोम्ये वा पूर्वमनन्तरा; तदसंभवे एकान्तरा । न कथंचन द्व्यन्तरेति । ब्राह्मणस्य विशेषमाह **गौतमः**—"सर्वथा तु वृत्तिरशक्तावशौद्रेण । तदप्येके प्राणसंशये" इति ॥ १५ ॥

**क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।**
**अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥ १६ ॥**
**आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।**
**अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥ १७ ॥**

इति [1]विष्णुस्मृतौ द्वितीयोऽध्यायः

सामान्यधर्मानाह । अपकारेऽपि चित्तस्याविकारः क्षमा । अप्राणिपीडाकरं यथार्थवचनं सत्यम् । अन्तःकरणसंयमो दमः । बाह्याभ्यन्तरशुद्धिः शौचम् । प्राणिनामार्त्यपहाराय यथाशक्ति अन्नोदकादिप्रतिपादनं दानम् । कर्मबुद्धीन्द्रियाणामनिषिद्धविषयवृत्तिरिन्द्रियसंयमः । हिंसा प्राणवियोगफलको व्यापारः; तद्वर्जनमहिंसा । मातृपित्रादीनामनुमताचरणं गुरुशुश्रूषा । काशीप्रयागादिशीलनं तीर्थानुसरणम् । आपन्नभूतहितैषित्वं दया । अकौटिल्यम् आर्जवम् । यथोत्पन्नद्रव्यसंतोषः लोभशून्यत्वम् । देवब्राह्मणयोः संमाननं पूजनम् । परोत्कर्षासहिष्णुत्वमसूया; तद्वर्जनमनसूया । तथाशब्देनानृशंस्यादीनां ग्रहणम् । अयं च प्रत्येकं संकल्पितः ब्राह्मणाद्याचण्डालमतिशयं जनयतीति साधरणो धर्म उच्यते । यथाह **व्यासः**—

"आनृशंस्यमहिंसा च प्रसादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥"

इति ॥ १६, १७ ॥

**इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मजश्रीनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां द्वितीयोऽध्यायः**

[1] वैष्णवे धर्मशास्त्रे द्वितीयं प्रकरणम्—ज.

[2] From here to वाराणसीवासि omitted in च, छ.

## तृतीयोऽध्यायः

**अथ राजधर्माः ॥ १ ॥ [1]प्रजापरिपालनम् ॥ २ ॥ वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम् ॥ ३ ॥ राजा [2]च जाङ्गलं पशव्यं [3]सस्योपेतं देशमाश्रयेत् ॥ ४ ॥ वैश्यशूद्रप्रायं च ॥ ५ ॥**

अभिहिताभिधित्सितवर्णाश्रमधर्माणां राजायत्ततया प्रथमं राजधर्मानेव तृतीयाध्यायेनाह । तत्रावधानविधानाय प्रतिजानीते । अथेत्यधिकारः । राज्ञोऽभिषिक्तस्य क्षत्रियस्य, दृष्टादृष्टसाधनतया नियमितानि कर्माणि धर्मा उच्यन्ते । राज्ञोऽपि धर्माधीनत्वं द्योतयितुं धर्मशब्दप्रयोगः । तथा च **वाजसनेयके**—"तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः" इति ॥ १ ॥

प्रजाः स्वदेशवासिनो जनाः; तेषां परितः सर्वतः चौरादिभ्यः पालनम् आपदुद्धारः ॥ २ ॥

तत्प्रकारमाह । वर्णाः ब्राह्मणादयः । आश्रमाः ब्रह्मचर्यादयः । तेषां स्वे स्वे धर्मे अध्यापनपालनादौ भैक्षभिक्षादानादौ च विशेषेणाप्रच्युततयावस्थापनं निग्रहादिप्रदर्शनेन तत्परतासंपादनम् । वर्णशब्देनैव तन्मूलानां संकराणां ग्रहणम् । आश्रमशब्देन च तन्मूलकानां पाषण्डादीनाम्;

"यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते ।
परिव्राडपि मैत्रेय स नग्नः पापकृन्नरः ॥"

इति **विष्णुपुराणात्** । वीप्सा च तत्तत्समयसंसिद्धधर्मस्यापि संग्रहार्था । यदाह **याज्ञवल्क्यः**

"श्रेणिनैगमिपाषण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत् पूर्ववृत्तिं च पालयेत् ॥"

इति ॥ ३ ॥

राज्ञो निवासस्थानमाह । यद्यप्यल्पोदकतरुपर्वतो देशो जाङ्गलः; तथाप्यत्र समजलतरुपर्वत एव योग्यतया विवक्षणीयः । पशुभ्यो हितः सुरसबहुलतृणादिमत्तया पशव्यः । सस्यैः वार्षिकशारदहैमन्तवासन्तिकादिभिरुपेतम् अव्यवहितोत्पत्तिकतयाश्रितं देशं जनपदमाश्रयेत् अधिवसेत् ॥ ४ ॥

वैश्यशूद्रबहुलम् । चकारादार्यबहुलं च । यथाह **मनुः**—"आर्यप्रायमनाविलम्" इति ॥ ५ ॥

[1] प्रजापालनं—ज, ठ.   [2] च omitted in ज, ठ.   [3] सर्वसस्यो—ज, ठ.

**तत्र धन्वनृमहीवारिवृक्षगिरिदुर्गाणामन्यतमं दुर्गमाश्रयेत् ॥ ६ ॥ तत्रस्थश्च[1] स्वस्वग्रामाधिपान् कुर्यात् ॥ ७ ॥ दशाध्यक्षान् ॥ ८ ॥ शताध्यक्षान् ॥ ९ ॥ देशाध्यक्षांश्च ॥ १० ॥**

धन्वदुर्गम्; धन्विनामेव मण्डलरूपं दुगम्। निर्जलपर्यन्तभूमिकं स्थानमित्यन्ये। नृदुर्गम्; अन्योन्यसंश्लिष्टमानुषमण्डलम्। महीदुर्गम्; मह्यामेवेष्टकापाषाणादिनिर्मितं दुर्गम्। मह्येवोच्चावचप्रदेशप्रचुरा दुर्गमित्यन्ये। वारिदुर्गम्; नद्यादिप्रवाहेणोभयतः समवेतेन दुर्गम्। वृक्षदुर्गम्; [2]घनतरगहनवेष्टितो भूभागः। गिरिदुर्गम्; परिमण्डलगिरिवलयवेष्टितो देशः। गिरिशिरोभभागो वा। तत्रोक्ते देशे एषामन्यतमं दुर्गमधिवसेत् ॥ ६ ॥

एकस्य राज्ञः व्यवहितानेकदेशपरिपालनं कथं शक्यमित्यत आह। तत्र दुर्गे स्थितः सन् स्वस्वग्रामे प्रत्येकमेकैकस्मिन् ग्रामे अधिपान् साधारण्येन पालननियुक्तान् कुर्यात् ॥ ७ ॥

प्रत्येकाध्यक्षसत्त्वेऽपि दशानां दशानां ग्रामाणामेकैकमपरमध्यक्षं कुर्यात् ॥ ८ ॥

दशाध्यक्षसद्भावेऽपि शतशतग्रामाध्यक्षमेकैकमपरं कुर्यात् ॥ ९ ॥

शताध्यक्षे सत्यपि देशानां ग्रामसमूहानां प्रत्येकमध्यक्षानपरांश्च कुर्यात्। चकारात् [3]द्विशतीशसहस्रेशयोर्ग्रहणम्। [4]यथाह **मनुः**—

" ग्रामस्याधिपतिं कुर्याद्दशग्रामाधिपं तथा।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥"

इति ॥ १० ॥

**ग्रामदोषाणां ग्रामाध्यक्षः [5]परिहारं ॥ कुर्यात् ॥ ११ ॥ अशक्तो दशग्रामाध्यक्षाय निवेदयेत् ॥ १२ ॥ सोऽप्यशक्तः [6]शताध्यक्षाय ॥ १३ ॥ सोऽप्यशक्तो देशाध्यक्षाय ॥ १४ ॥ देशाध्यक्षोऽपि [7]सर्वात्मना दोषमुच्छिन्द्यात् ॥ १५ ॥**

तेषां प्रयोजनमाह। यस्य यस्य ग्रामस्य यो योऽध्यक्षः, स स तत्तद्ग्रामोद्भवानां चौर्यादिदोषाणामुचिताचरणेन [8]परिहारं कुर्यात् ॥ ११ ॥

स्वयं तद्ग्रामपरिहारं कर्तुमशक्तो दशग्रामाध्यक्षाय तं दोषं निवेदयेत्। स तत्परिहारं कुर्यात् ॥१२॥

1 तत्रस्वस्व—ग, घ. 2 घनतरतरु—छ. 3 विंशतीश—ख, छ, ट.
4 From here to पतिमेव च omitted in ख to छ. 5 परीहारं—च; परिहारान्—ठ.
6 शतेशाय—ज, ठ. 7 सर्वमात्मना—ज. 8 परीहारं—च, छ.

स [1]दशाध्यक्षोऽप्यशक्तश्चेत् शतग्रामाध्यक्षाय तं दोषं निवेदयेत् । स तं परिहरेत् ॥ १३ ॥

स शताध्यक्षोऽप्यशक्तश्चेत् देशाध्यक्षाय तं दोषं निवेदयेत् । स तं परिहरेत् ॥ १४ ॥

अनवस्थां परिहरति । देशाध्यक्षः सर्वात्मनापि, सर्वेण धनादिना, आत्मना प्राणव्ययेनापि तं दोषमुच्छिन्द्यात् उच्छिन्नमूलमेव कुर्यात् । न तु राजनि निवेदयेत् । एतद्वृत्तीराह **मनुः**—

"यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ।
अन्नपानेन्धनादीनि [2]ग्रामिकस्तान्यवाप्नुयात् ॥
दशी कुलं तु भुञ्जीत विंशी पञ्चकुलानि च ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम्[3] ॥"

इति । कुलं हलद्वयीकर्षणीया भूमिः ; "हलं तु द्विगुणं कुलम्" इति वचनात् । हलमानं चाह **हारीतः**—

"अष्टगवं धर्महलं षड्गवं जीवितार्थिनाम् ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥"

इति । अत्र धर्महलमेव ग्राह्यम् ॥ १५ ॥

**आकरशुल्कतरनागवनेष्वाप्तान् नियुञ्जीत ॥ १६ ॥ धर्मिष्ठान् धर्मकार्येषु ॥ १७ ॥ निपुणानर्थकार्येषु ॥ १८ ॥ शूरान् संग्रामकर्मसु ॥ १९ ॥ उग्रानुग्रेषु ॥ २० ॥ षण्ढान् स्त्रीषु ॥ २१ ॥**

क्वचिन्नियोज्यविशेषानाह । आकरः ; रत्नाद्युत्पत्तिस्थानम् । शुल्कम् ; राजग्राह्यं [4]पण्यविंशतिभागादि । स्थलशुल्कमिति यावत् । तरः ; तीर्यते नद्यादिः अनेनेति तरः ; नौकादिः ; तज्जं शुल्कम् । जलशुल्कमिति यावत् । नागाः गजाः । वनानि अरण्यानि । नागवन्ति वनानीति वा । नगः पर्वतः ; तत्संबन्धि नागम् ; गिरिशुल्कमिति वा । तेषु आप्तान् स्वहितैषिणो नियुञ्जीत । न ग्रामाध्यक्षादिभिरेव निश्चिन्तः स्यात् ; आकरादीनां राज्योपष्टम्भकतया विश्रद्धपरिहारायोगात् ॥ १६ ॥

धर्मकार्येषु दानादिव्यापारेषु धर्मिष्ठान् दानादिव्यसनिन एव नियुञ्जीत; तेषां तद्व्यसनित्वेन तन्निपुणत्वात् ॥ १७ ॥

अर्थकार्येषु सुवर्णादिपरीक्षासु तन्निपुणानेव नियुञ्जीत । यद्वा ऊहापोहादिना प्रयोजननिर्णयवत्सु कार्येषु निपुणान् पण्डितान् नियुञ्जीत ॥ १८ ॥

संग्रामकर्माणि सेनागुल्मनिवेशादीनि । तेषु शूरान् अभीरून् नियुञ्जीत ॥ १९ ॥

1 दशग्रामाध्यक्षोऽपि—च, छ.
2 ग्रामकः—घ.
3 पुनः—ख, घ.
4 पण्यादि—च.

उग्रेषु ताडनमारणादिषु उग्रान् क्रूरान्तःकरणान् नियुञ्जीत ॥ २० ॥

षण्ढान् नपुंसकान् स्त्रीरक्षणादिषु नियुञ्जीत । यथाहुः—

" धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् ।
क्लीबान् स्त्रीषु नियुञ्जीत नीचान्नीचेषु कर्मसु ॥ "

इति ॥ २१ ॥

**[1]प्रजाभ्यो बल्यर्थं संवत्सरेण धान्यतः षष्ठमंशमादद्यात् ॥ २२ ॥ सर्वसस्येभ्यश्च ॥ २३ ॥ द्विकं शतं पशुहिरण्येभ्यो[2] वस्त्रेभ्यश्च[3] ॥ २४ ॥ [4]मांसमधुघृतौषधिगन्धपुष्पमूलफलरसदारुपत्राजिनमृद्भाण्डाश्मभाण्डवैदलेभ्यः [5]षाष्ठभागं [6]राजा ॥ २५ ॥**

राज्ञो वृत्तिमाह । राजा यथोक्तविधिना रक्षिताभ्यः प्रजाभ्यो बल्यर्थं कररूपनिजवृत्त्यर्थं संवत्सरेण प्रतिसंवत्सरमुत्पन्नात् धान्यात् व्रीहियवादेः षष्ठमंशं गृह्णीयात् । **गौतमस्तु**—" राज्ञो बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा " इत्याह । स च कृष्टाया भूमेरतिभोगमध्यमभोगाल्पभोगविषयो व्यवस्थितो विकल्पः—अतिभोगे दशमांशः; मध्यमभोगे अष्टमांशः; अल्पभोगे षष्ठांश इति । **मनुस्तु**—" धान्यानामष्टमो भागः षष्ठो द्वादश एव वा " इत्याह । तत्रापि पूर्वैव व्यवस्था । तथा दशमद्वादशयोरपि ॥ २२ ॥

सस्यानि वार्षिकादीनि श्यामाकादीनि । तेभ्योऽपि सर्वेभ्यः षष्ठमंशमादद्यात् । पृथङ्निर्देशः शास्त्रान्तरीयविकल्पनिरासार्थः ॥ २३ ॥

पशूपजीविनां पशुभ्यो हिरण्योपजीविनां हिरण्येभ्यो वस्त्रोपजीविनां वस्त्रेभ्यश्च प्रतिसंवत्सरं द्विकं शतमादद्यात् । द्वावुपादीयेते यस्मिन् शते तत् द्विकं शतम् । " तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते " इति कन् । पशुहिरण्यवस्त्रोपजीविभ्यः पशुहिरण्यवस्त्रशतात् पशुहिरण्यवस्त्रद्वयमुपादायादद्यात् ॥ २४ ॥

मांसं छागादेः । मधु क्षौद्रम् । घृतं सर्पिः । ओषध्यः गुडूच्यादयः । गन्धाः चन्दनादयः । पुष्पाणि चम्पकादीनि । मूलानि हरिद्रादीनि । फलान्याम्रादीनि । रसाः लवणादयः । दारूणि काष्ठानि । पत्राणि तालीपत्रादीनि । अजिनानि कृष्णाजिनादीनि । मृद्भाण्डानि घटादीनि । अश्मभाण्डानि [7]मणिकादीनि । वैदलानि वंशविदलकृतानि शूर्पादीनि । तेभ्यः षाष्ठभागम्; षष्ठ एव षाष्ठः, स चासौ भागश्चेति षाष्ठभागः । तं राजा शुल्करूपमादद्यात् । प्रतिसंवत्सरमित्यत्राप्यनुवर्तते ;

[1] प्रजाभ्यश्च—ङ. [2] हिरण्ययोः—ठ. [3] वस्त्रेभ्यः—ग, छ, ठ.
[4] पुष्प omitted in क ; फलमूल for मूलफल and शाक for दारु—ज, ठ.
[5] अष्टभागं—ग, ज, झ, ठ ; षड्भागं—ख. [6] राजा omitted in ग, ज, झ.
[7] मणिमात्रा—छ.

"यत्किंचिदपि वर्षस्य दापयेत् करसंज्ञितम् ।
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥"

इति **मनु**स्मरणात् । यत्तु षष्ठः षष्ठितम इति **हरदत्तः**; तन्न;

"आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ।
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥
पत्रशाकतृणानां च चर्मणामजिनस्य च ।
मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥"

इति **मनु**विरोधात् ॥ २५ ॥

**ब्राह्मणेभ्यः करादानं न कुर्यात् ॥ २६ ॥ ते हि राज्ञो धर्मकराः ॥ २७ ॥ राजा च [1]प्रजाभ्यः सुकृतदुष्कृतेभ्यः[2] षष्ठांशभाक् ॥ २८ ॥**

पूर्वोक्तस्य कचिदपवादमाह । ब्राह्मणेभ्यः कर्षकेभ्यो व्यवहर्तृभ्यश्च पूर्वोक्तकरादानं न कुर्यात् । परं तु श्रोत्रियेभ्यः; "म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम्" इति **मानवात्** ॥ २६ ॥

तत्र हेतुमाह—ते हि श्रोत्रियाः ब्राह्मणाः करविषयेऽपि राज्ञे धर्ममेव निजाचारसंपन्नं करत्वेन ददति, सम्यक् रक्षिताश्चेत् । यथाह **मनुः**—

"स रक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ॥"

इति ॥ २७ ॥

ननूक्तकरग्रहणस्य वृत्त्यर्थत्वेनान्यतो वृत्तिसंभवे तदनावश्यकमित्यत आह । करग्रहणेन संयताभ्यः प्रजाभ्यो यान्युत्पन्नानि पुण्यानि, तदग्रहणेनासंयताभ्यो यानि पापानि तेभ्यो राजा षष्ठमंशं भजते । तत्षष्ठांशसममदृष्टान्तरमाप्नोतीत्यर्थः; न तु तदेव; "शास्त्रफलं प्रयोक्तरि" इति न्यायविरोधात्;

"पुण्यात् षड्भागमादत्ते न्यायेन परिपालयन् ।"
"अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ।"

इति **योगिमनु**स्मरणात् । यत्तु—

"अरक्ष्यमाणाः कुर्वन्ति यत् किंचित् किल्बिषं प्रजाः ।
तस्मात्तु नृपतेरर्धं यस्माद् गृह्णात्यसौ करान् ॥"

[1] सर्वप्रजाभ्यः—झ.  [2] दुष्कृतयोः—ठ.

इति [1]**योगिस्मरणं**, तत् अरक्ष्यमाणा इति शानचा अत्यन्तारक्षणोत्पन्नात्यन्तदुष्कृतपरम्। तस्मात् करादानं दृष्टादृष्टार्थत्वेनावश्यकम् ॥ २८ ॥

**स्वदेशपण्याच [2]शुल्कांशं दशममादद्यात् ॥ २९ ॥ परदेशपण्याच विंशतितमम् ॥ ३० ॥**

यत् पण्यं स्वदेश एव क्रीत्वा विक्रीयते वणिग्भिः, तस्मात् पण्यात् राजा दशमं शुल्कांशं शुल्करूपोंऽशः, तमादद्यात्। पण्यस्य दशममंशं शुल्कं गृह्णीयादित्यर्थः ॥ २९ ॥

यत् पण्यं देशान्तरे क्रीत्वा देशान्तरे विक्रीयते, तस्मात् विंशतितममंशमादद्यात्। पण्यस्य विंशांशं शुल्कं गृह्णीयादित्यर्थः। अत्र यद्यपि वाक्यद्वयेऽपि पण्यस्यैव दशमविंशतितमौ भागौ शुल्कांशः प्रतीयते; तथापि देशकालानुरूपेणाभियुक्तकृतस्य पण्यमूल्यस्येति ज्ञेयम्;

"शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥"

इति **मानवात्**। सामुद्रपण्यशुल्के तु विशेषो **बोधायनीये**—"सामुद्रः शुल्को वरं रूपमुद्धृत्य दशपणं शतम्। अन्येषामपि सारानुरूपमनुद्धृत्य धर्मं प्रकल्पयेत्" इति। सामुद्रः समुद्रसंबन्धी। वरं रूपमुद्धृत्य दशपणं शतमिति। श्रेष्ठमुक्ताफलादिषु मध्ये एकं वस्तु पृथक् कृत्वा अन्यत्र वस्तुनि दशममंशं शुल्कं गृह्णीयादित्यर्थः ॥ ३० ॥

**[3]शुल्कस्थानादपाक्रामन् सर्वापहारमाप्नुयात् ॥ ३१ ॥ शिल्पिनः कर्मजीविनश्च[4] [5]मासेनैकं राज्ञः कर्म कुर्युः ॥ ३२ ॥**

शुल्कप्रसङ्गादाह। शुल्कस्य ग्रहणस्थानं हट्टघट्टादि। तस्मात् शुल्कदानभिया अपाक्रामन् अन्यमार्गेण गच्छन् वणिक् सर्वपण्यापहारमाप्नुयात्। तस्य सर्वं पण्यमपहार्यमित्यर्थः। इदं च राजयोग्यराजप्रतिषिद्धपण्यविषयम्। यथाह **मनुः**—

"राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च।
तानीह हरतो लोभात् सर्वहारं हरेन्नृपः ॥"

इति। अन्यत्र तु

"शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी।
मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥"

इति **मानवं** द्रष्टव्यम् ॥ ३१ ॥

[1] गोभिलस्मरणं—घ.
[2] पण्यांशं—ठ.
[3] शुल्कस्थानम्—ज, ठ.
[4] कर्मजीविनः शूद्राश्च—ख.
[5] मासेनैकैकं—ज. ठ.

मासिकं करमाह । शिल्पिनो लोहकारादयः । कर्मजीविनः कारवः वर्धक्यादयः । चकारादात्मोपजीविनः शूद्राश्च मासेन प्रतिमासमेकैकाहःसाध्यं लोहकाष्ठादिकर्म कुर्युः । स एव तेषां करः । यथाह **मनुः**—

" कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः ।
एकैकं कारयेत् कर्म मासि मासि महीपतिः ॥ "

इति । **गौतमोऽपि**—" एतेनात्मोपजीविनो व्याख्याताः [1]नौचक्रवन्तश्च " इति । आत्मोपजीविनः शरीर-कष्टकारिणः । नौमन्तो नाविकाः । चक्रवन्तः शाकटिकाः । राजकर्मकरेभ्यो राज्ञा तस्मिन्नहनि भक्तं देयमेव । यथाह **स एव**—[2]" भक्तं तेभ्यो दद्यात् " इति । वणिजां विशेषमाह **स एव**—" पण्यं वणिग्भिरर्घा-पचयेन देयम् " इति । इदं च शुल्कादधिकम् । तदाह **बृहस्पतिः**—

" शुल्कं दद्युस्ततो मास एकैकं पण्यमेव च ।
अर्घावरं च मूल्येन वणिजस्ते पृथक् पृथक् ॥ "

इति । अर्घावरं न्यूनलाभम् । मूल्यं द्रव्यम् ॥ ३२ ॥

**[3]स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतय ॥ ३३ ॥ तद्दूषकांश्च हन्यात् ॥ ३४ ॥ स्वराष्ट्रपरराष्ट्रयोश्च चारचक्षुः स्यात् ॥ ३५ ॥ साधूनां पूजनं कुर्यात् ॥ ३६ ॥ दुष्टांश्च हन्यात् ॥ ३७ ॥**

यदुक्तं प्रजानां परिपालनं, तस्याङ्गान्याह । स्वामी राजा । अमात्याः मन्त्रिपुरोहितादयः । दुर्गं पूर्वोक्तं धन्वादि । कोशो धननिचयः । दण्डो हस्त्यश्वादियुतं बलम् । राष्ट्रं प्रजानिवासो देशः । मित्राणि सहजप्राकृतकृत्रिमाणि । एतानि अभिहिताभिधित्सितराजधर्माणां प्रकृतयः मूलकारणानि ॥ ३३ ॥

तासां प्रकृतीनां स्वाम्यादीनां ये दूषकाः कार्याक्षमतापादकदोषासञ्जकाः शत्रुचारादयः, तान् हन्यात् ॥ ३४ ॥

स्वराष्ट्रं स्वाज्ञावशवर्ती देशः । तथा परराष्ट्रं परेषां शत्रूणां यत् राष्ट्रम् । चकारात् मित्रोदासीन-राष्ट्रयोश्च, चाराः स्पशा एव चक्षुषी यस्य तथा स्यात् । चारैः सर्वराष्ट्रवृत्तं जानीयादित्यर्थः ॥ ३५ ॥

तत्र स्वराष्ट्रवृत्तज्ञानप्रयोजनमाह—साधूनां पूजनमिति । साधूनां सुवृत्तानां पूजनं च स्वस्वादिदानेन संमानं कुर्यात् ॥ ३६ ॥

दुष्टान् दुर्वृत्तान् हन्यात् अपराधानुसारेण ॥ ३७ ॥

1 नौचक्रीवन्तश्च—घ, झ. 2 भक्ष्यं—घ. 3 स्वाम्यमात्यसुहृत्कोश—क.

**शत्रुमित्रोदासीनमध्यमेषु सामभेददानदण्डान्[1] [2]यथार्हं यथाकालं प्रयुञ्जीत ॥ ३८ ॥ संधिविग्रहयानासनसंश्रयद्वैधीभावांश्च यथाकालमाश्रयेत् ॥ ३९ ॥**

अथ परराष्ट्रवृत्तज्ञानप्रयोजनमाह । शत्रुः द्वेष्टा । मित्रं सुहृत् । उदासीनः उभयविलक्षणः । मध्यमः शत्रुविजिगीषुमध्यवर्ती नृपः । तांश्चाह **योगीश्वरः**—"अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः" इति । अनन्तरः अरिः; तत्परः मित्रम्; तस्मात् परः उदासीनः । अन्यत्रापि—"अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः" इति । तेषु प्रतिदिशमवस्थितेषु द्वादशस्वपि । यथार्हम्; अर्हं योग्यतामनतिक्रम्य । यथाकालं स्वशत्रूपचयाद्यनतिक्रमेण सामादीन् प्रयुञ्जीत । तत्र साम प्रियवाक्यम् । दानं धनादेः । भेदः तत्सामन्तादीनामन्योन्यवैरोत्पादनम् । दण्डः धनापहारादिः । तद्यथा—हीनो दण्डेन, समः साम्ना, अधिको दानेन, अधिकतरो भेदेन साधनीय इति । यद्वा शत्रुः दण्डेन, मित्रं साम्ना, उदासीनो दानेन, मध्यमो भेदेनेति ॥ ३८ ॥

सामादिप्रयोगाणां फलमाह । संधिः व्यवस्थाकरणम् । विग्रहः [3]अपकरणम् । यानम् अरिं प्रति यात्रा । आसनम् उपेक्षा । संश्रयः बलवदाश्रयणम् । द्वैधीभावः स्वबलस्य द्विधा करणम् । एवं संधिप्रभृतीन् गुणान् यथाकालं यथार्हं देशकालशक्त्याद्यनतिक्रमेणाश्रयेत् । एषां च देशकालस्वरूपादिभेदा **मानवे** द्रष्टव्याः । तत्र सामफलं संधिः । दण्डफलं विग्रहः । भेदफलं दानम् । आसनसंश्रयद्वैधीभावा दानफलमिति विवेकः ॥३९॥

**चैत्रे मार्गशीर्षे वा यात्रां यायात् ॥ ४० ॥ परस्य व्यसने वा ॥ ४१ ॥ परदेशावाप्तौ तद्देशधर्मान् नोच्छिन्द्यात् ॥ ४२ ॥ परेणाभियुक्तश्च सर्वात्मना [4]स्वराष्ट्रं गोपायेत् ॥ ४३ ॥**

"सास्मिन् पौर्णमासीति संज्ञायाम्" इत्यनुशासनेन चैत्रमार्गशीर्षयोः पौर्णमासीसंबन्धात् दर्शपूर्णिमान्तो द्विविधोऽपि मासो गृह्यते । वाशब्दात् फाल्गुनोऽपि । यथाह **मनुः**—

"मार्गशीर्षे शुभे मासि यात्रां यायान्महीपतिः ।
फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथासुखम् ॥"

इति । "यस्मिन् यात्रां यायादेतया पुनराधेयसंमितयेष्ट्या इष्ट्वा" इतिवत् प्रत्ययमात्रार्थविवक्षया प्रयोगः; तेषां नातिशीतोष्णतया समजलतया[5] पुनराधेये च सुखदत्वात् ॥ ४० ॥

[1] भेद omitted in ठ. [2] यथार्हं omitted in ज. [3] अपकारकरणम्—छ.
[4] स्व omitted in ज, झ, ठ. [5] समजलान्नतया—छ, ट.

नैमित्तिकं कालान्तरमाह । परस्य शत्रोः व्यसनं धनबलमित्रादिनाशः । वाशब्देनात्मनो धनबलमित्रादियोगश्च[1] गृह्यते । तस्मिन् यात्रां यायात् । तदाह **मनुः**—

"[2]अन्येष्वपि च कालेषु यदा पश्येद् ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥"

इति ॥ ४१ ॥

यानफले विशेषमाह । परेषां शत्रूणां यो देशो राष्ट्रं, तस्यावाप्तौ स्ववशीभावे, तद्देशस्य धर्मान् आचारान् नोच्छिन्द्यात्; नाचारान्तरे प्रवर्तनेन परावर्तयेत्; न समूलं वा लुम्पेत् । यथाह **योगीश्वरः**—

"यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योऽसौ यदा वशमवाप्नुयात् ॥"

इति । तत्पदेनैव देशप्राप्तौ पुनर्देशपदोपादानं संनिहितावाप्तिपरामर्शभ्रमवारणाय । ततश्चावाप्तिधर्माणाम्

"उपरुध्यारिमासीत राष्ट्रं तस्योपपीडयेत् ।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥"

इत्यादीनां तदवाप्तावनुच्छेदो निरस्तः ॥ ४२ ॥

आसनादिफलविशेषमाह । आसनादिषु यथाकथंचित् स्वराष्ट्ररक्षणमेव फलम् । तत्र शत्रुणाभियुक्तः आस्कन्दितश्चेत् तदा स्वराष्ट्रं सर्वेण बलकोशादिना अन्ततः आत्मना स्वशरीरेणापि गोपायेत् रक्षेत् ॥ ४३ ॥

**नास्ति राज्ञां समरे तनुत्यागसदृशो धर्मः ॥ ४४ ॥ गोब्राह्मणनृपमित्रधनदारजीवितरक्षणात्[3] ये हतास्ते स्वर्गलोकभाजः ॥ ४५ ॥ वर्णसंकररक्षणार्थं[4] च ॥ ४६ ॥**

ननु आत्मना रक्षणे प्रधानविरोध एवेति क्व धर्मः? इत्यत आह । अवेष्टिन्यायेन राज्ञां क्षत्रियाणाम्, न पार्थिवानामेव; समरे संग्रामे यः तनुत्यागो मरणं, तत्तुल्योऽन्यो धर्मो नास्ति । तेन तनुत्यागेन राष्ट्ररक्षणे धर्मद्वयलाभः ॥ ४४ ॥

प्रासङ्गिकमाह । गोब्राह्मणौ जातिमात्रेण । नृपः धार्मिकः प्रजापालकः । मित्रं स्वोपकारकः सुहृत् । धनं जीवनसाधनम् । दाराः धर्मापत्यसाधनानि स्त्रियः । जीवितं प्राणाः । एतेषां रक्षणाद्धेतोः ये हताः

1 पोषश्च—च.
2 अन्यान्येष्वपि—क to घ.
3 रक्षणार्थं—ज, झ, ठ.
4 रक्षणार्थे—क to च, ज, ठ.

प्रतिपक्षैः, ते स्वर्गलोकं भजन्ति । इदं च युद्धं विनाप्ययुद्धधर्मिणां फलोपदर्शनेन काम्यं मरणान्तरमुपदिश्यते ; अन्यथा युद्धमरणमात्रस्य स्वर्गफलकतया विशेषवचनानर्थक्यात् । अत एव **मनुः**—

> " शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
> द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
> आत्मनश्च परित्राणे दक्षिणानां च संगरे ।
> स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति ॥ "

इति ॥ ४५ ॥

परदाराभिमर्शनेन जायमानात् वर्णसंकराच्च यत् रक्षणं वर्णानां, तदर्थमपि वा हता ये. बन्दिग्राह-जारादिभिः, तेऽपि स्वर्गलोकभाजो भवन्ति । अत एवाह **मनुः**—

> " परदाराभिमर्शेषु प्रवृत्तान् नॄन् महीपतिः ।
> उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ॥
> तत्समुत्थो हि लोकस्य जायते वर्णसंकरः ।
> येन मूलहरोऽधर्मः सर्वनाशाय कल्पते ॥ "

इति । **वसिष्ठोऽपि**—" आत्मत्राणे वर्णसंवर्गे वा ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् । क्षत्रियस्य तु तन्नित्यमेव ; रक्षणाधिकारात् " इति । पूर्वं दाराणां प्राणरक्षणमुक्तम् । अत्र तु वर्णसंकराद्रक्षणमिति भेदः ॥४६॥

**राजा परपुरावाप्तौ तत्र तत्कुलीनमभिषिञ्चेत् ॥ ४७ ॥ न राजकुलमुच्छिन्द्यात् ॥ ४८ ॥ अन्यत्राकुलीनराजकुलात् ॥ ४९ ॥**

यदा रिपुहननादिना तत्पुरमवाप्नोति राजा, तदा तत्रारिपुरे तस्यैव राज्ञः कुलीनं कुलसंभूतमभिषिञ्चेत् ; न त्वन्यम् । यदि स्वचिकीर्षितं विख्याप्य समयं करोति,

> " सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम् ।
> स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥ "

इति **मानवात्** ॥ ४७ ॥

अकुलीनाः ; राजकुलानुत्पन्नाः राजसेवकादयो दासीपुत्रादयो वा केवलभाग्योदयेन राजानः, तत्कुलादन्यत्र ; तत्कुलं तूच्छिन्द्यादेवेत्यर्थः । यथा वक्ष्यति—" ये चाकुलीना राज्यमभिकामयेयुः " इति । तान् हन्यादिति वर्तते ॥ ४८, ४९ ॥

**मृगयाक्षस्त्रीपानाभिरतिं परिहरेत् ॥ ५० ॥ वाक्पारुष्य-दण्डपारुष्ये च ॥ ५१ ॥ नार्थदूषणं कुर्यात् ॥ ५२ ॥ [1]आद्यद्वाराणि नोच्छिन्द्यात् ॥ ५३ ॥**

मृगया आखेटकम् । अक्षो द्यूतम् । स्त्रियो मैथुनम् । पानं मद्यादेः । इदमन्येषामप्युपलक्षणम् । यथाह **मनुः**—

"मृगयाक्षो दिवा स्वापः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥"

इति । चतुष्टयपरिगणनं तु तेषां कष्टतरत्वमभिप्रेत्य । यथाह **मनुः**—

"पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतरं विद्याच्चतुष्कं कामजे गणे ॥"

इति । कष्टतरम् अत्यन्ताभिरतिजनकत्वेन दुष्परिहरम् । अत एव तेषु अभिरतिमत्यासक्तिं परिहरेत् ॥ ५० ॥

वाक्पारुष्यं परुषभाषणम् । दण्डपारुष्यं निर्दयप्रहरणम् । ते उभे परिहरेत् ॥ ५१ ॥

अर्थस्य सुवर्णादेः दूषणं वृथा व्ययः ; तं न कुर्यात् । इदमप्यन्येषामुपलक्षणम् । यथाह **मनुः**—

"[2]पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥"

इति । त्रितयगणनं तु पूर्ववदेव । यथाह **मनुः**—

"दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत् त्रिकं सदा ॥"

इति ॥ ५२ ॥

स्वपुरे परदुर्गेषु वा आद्यद्वाराणि पूर्वराजकृतानि तोरणगोपुरादीनि नोच्छिन्द्यात्, न परावर्तयेत् न लुम्पेद्वा, यद्यायादीनि शुद्धानि भवेयुः ॥ ५३ ॥

**नापात्रवर्षी स्यात् ॥ ५४ ॥ आकरेभ्यः सर्वमादद्यात् ॥ ५५ ॥ निधिं लब्ध्वा तदर्धं ब्राह्मणेभ्यो दद्यात् ॥ ५६ ॥ द्वितीयमर्धं कोशे प्रवेशयेत् ॥ ५७ ॥**

[1] आयद्वाराणि—झ.

[2] पैशुन्यं to पूर्ववदेव—omitted in ग, घ, ज.

अपात्रेषु नटविटवन्दिचारणमागधादिषु धनवर्षणशीलो न स्यात्;

"धूर्ते वन्दिनि मत्ते च कुवैद्ये कितवे शठे।
नटे चारणमल्लेषु दत्तं भवति निष्फलम् ॥"

इति **दक्षस्मरणात्**। ताच्छील्यनिषेधादानृशंस्याय यत्किंचित् दद्यात् ॥ ५४ ॥

उत्तरविवक्षयेदमारभते। आकराः सुवर्णरत्नाद्युत्पत्तिस्थानानि। तेभ्यो यदुपात्तं तत् सर्वं स्वयमादद्यात्। न तत्र विप्राद्यंशकल्पना ॥ ५५ ॥

निधौ विशेषमाह। अज्ञातस्वामिकं भूमौ चिरनिखातं निधिं लब्ध्वा राजा ब्राह्मणेभ्यः तदर्धं दद्यात्। अर्धमित्यनेनैव सिद्धौ तच्छब्दो यस्य सुवर्णादेः अर्धकरणं संभवति, तस्यैव दानमाचष्टे, मूल्यादिकल्पनया न रत्नहीरकादेरपीति। यथाह **मनुः**—

"निधीनां हि पुराणानां धातूनामेव च क्षितौ।
अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥"

इति ॥ ५६ ॥

लब्धस्य निधेरर्धं ब्राह्मणेभ्यो दत्ते द्वितीयमर्धं राजा कोशे प्रवेशयेत्, स्थापयेत्। 'अर्धं ब्राह्मणेभ्यो दद्यात्' इत्यनेनैवार्धादानसिद्धौ पृथक् सूत्रकरणं कोशप्रवेशमात्रविधानार्थम्; न तदानीमेव तत् व्ययीतेत्येवमर्थम्। अत एव प्रत्यागते स्वामिनि रूपसंख्यादिविभावितोऽसौ प्रत्यर्पणीय इति वक्ष्यति ॥ ५७ ॥

**निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात् ॥ ५८ ॥ क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात्, चतुर्थमंशं ब्राह्मणेभ्यः, अर्धमादद्यात् ॥ ५९ ॥ वैश्यस्तु चतुर्थमंशं राज्ञे दद्यात्, ब्राह्मणेभ्योऽर्धं, चतुर्थमंशमादद्यात् ॥ ६० ॥ शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान् राज्ञे दद्यात्, पञ्चांशान् ब्राह्मणेभ्यः, अंशद्वयमादद्यात् ॥ ६१ ॥**

पूर्वोक्तं निधिं ब्राह्मणो लब्ध्वा सर्वमेवादद्यात्; राज्ञे न दद्यात्; षट्कर्माभिरतश्चेत्। यथाह **वसिष्ठः**— "ब्राह्मणश्चेदधिगच्छेत् षट्कर्मसु वर्तमानो न राजा हरेत्" इति ॥ ५८ ॥

क्षत्रियश्चेत् पूर्वोक्तं निधिं लभते, तदा तं चतुर्धा विभज्य, एकं चतुर्थांशं राज्ञे, अपरं चतुर्थांशं ब्राह्मणेभ्यो दद्यात्; अवशिष्टमर्धं स्वयमादद्यात् ॥ ५९ ॥

यदि वैश्यो निधिं लभते, तदा तं चतुर्धा विभज्य एकमंशं राज्ञे, अंशद्वयं ब्राह्मणेभ्यो दत्त्वा अवशिष्टं चतुर्थांशं स्वयमादद्यात् ॥ ६० ॥

यदि शूद्रो निधिं लभते, तदा तं द्वादशधा विभज्य पञ्चांशान् राज्ञे, पञ्चांशान् ब्राह्मणेभ्यो दत्त्वा अवशिष्टमंशद्वयं स्वयमादद्यात्। एतेन "अप्रज्ञायमानं वित्तं योऽधिगच्छेत् राजा तद्धरेत, अधिगन्त्रे षष्ठमंशं प्रदाय" इति **वासिष्ठे** "अब्राह्मणोऽप्याख्याता षष्ठमंशं लभते" इति **गौतमीये** च यच्छब्दाब्राह्मणशब्दौ शूद्रपरावेव व्याख्यातौ। यत्तु "इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्" इति **योगीश्वरवाक्ये** इतरशब्दः अविद्वद्ब्राह्मणक्षत्रियादिपरो व्याख्यातो **मिताक्षरायां**, तत् क्षत्रियवैश्यविषयकैतद्वचनद्वयादर्शननिबन्धनमिति मन्तव्यम्। यत्तु **अपरार्केण** इतरशब्दोऽविद्वद्ब्राह्मणमात्रपरोऽभिहितः, तत् गोरक्षकादिब्राह्मणपरतया कथंचित् साधु,

"गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्।
प्रेष्यान् वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत्॥"

इति **स्मरणात्**॥ ६१॥

**अनिवेदितविज्ञातस्य सर्वमपहरेत्॥ ६२॥ स्वनिहिताद्राज्ञे ब्राह्मणवर्जं द्वादशमंशं दद्युः॥ ६३॥**

यद्यधिगन्त्रा राज्ञे न निवेदितो निधिः, अथ च विज्ञातः कथंचिद्राज्ञा, तदा तस्य निधेः सर्वमप्यंशमपहरेत्। अधिगन्ता च शास्त्रानुसारेण दण्डनीयः। यथाह **योगीश्वरः**—"अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च" इति। यद्वा अनिवेदित इति कर्तरि निष्ठा। यः कश्चित् निधिं लब्ध्वा राज्ञे न निवेदितवान्, विज्ञातश्च निध्यधिगन्तृत्वेन, राजास्य सर्वं निधिधनं पूर्वधनं चापहरेत्। मूर्धावसिक्ताद्यनुलोमजानां मातृसमानधर्मत्वात् क्षत्रियादिवदेव निर्णयः। प्रतिलोमजानां शूद्रसधर्मत्वात् शूद्रवदेवेति॥ ६२॥

विज्ञातस्वामिके त्वाह। यद्यसौ [1]राजलब्धो निधिः स्वयं ब्राह्मणादिवर्णैरेव निहितो भवेत्, तदा ब्राह्मणवर्जं क्षत्रियादयः द्वादशमंशं राज्ञे दद्युः; स्वीयं निधिं चाप्नुयुः। अयमर्थः—यद्यधिगतो निधिः क्षत्रियादिभिः स्वामिभिरागत्य रूपसंख्यादिभिर्भाव्यते, तदा द्वादशमंशं दत्त्वा लभ्यत इति। यथाह **मनुः**—

"ममायमिति यो ब्रूयात् निधिं सत्येन मानवः।
तस्याददीत [2]षड्भागं राजा द्वादशमेव वा॥"

इति। अंशविकल्पस्तु वर्णापेक्षया कालापेक्षया वा योज्यः। यथाह **स एव**—

"प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्।
अर्वाक् त्र्यब्दाद्धरेत् स्वामी परतो नृपतिर्हरेत्॥"

[1] राजलब्धो omitted in घ. [2] तद्भागं—ख, छ, ट.

इति । हरणं न व्ययः, पश्चादप्यागते दानावश्यंभावात् । ततश्च त्र्यब्दादर्वाक् द्वादशांशम् , उपरिष्टात् षष्ठमंशमिति ध्येयम् । द्वादशांशमिति नियमेन च स्वाम्यागमनात् पूर्वं राजादिभिर्दत्तस्याप्यर्धादेः ब्राह्मणाद्यं-शस्यास्वामिदत्ततया प्रत्याहरणीयत्वं गम्यते, " अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् " इति **बृहस्पति**-स्मरणात् । [1]यद्वा स्वनिहितमेव निधिं चिरकालमनासादितं यदि स्वयमेव लभन्ते वर्णाः, तदा ब्राह्मणवर्जं राज्ञे द्वादशमंशं दद्युः । ब्राह्मणश्च द्वादशमपि न दद्यात् । यथाह **नारदः**—

" स्वमप्यर्थं तथा नष्टं लब्ध्वा राज्ञे निवेदयेत् ।
गृह्णीयात् तं ततः शुद्धमशुद्धः स्याद्तोऽन्यथा ॥ "

इति । यद्वा ब्राह्मणवर्जं पूर्वोक्तं ब्राह्मणांशं विना राज्ञ एव दद्युः; ब्राह्मणेभ्यो न दद्युरिति ॥ ६३ ॥

**परनिहितं [2]स्वनिहितमिति ब्रुवंस्तत्समं दण्डमावहेत्[3] ॥ ६४ ॥ बालानाथस्त्रीधनानि राजा[4] परिपालयेत् ॥ ६५ ॥ चौरहृतं धनम-वाप्य सर्वमेव सर्ववर्णेभ्यो दद्यात् ॥ ६६ ॥ अनवाप्य च स्वकोशा-देव[5] दद्यात् ॥ ६७ ॥**

मिथ्यावादिनं प्रत्याह । यः पुनः परनिहितम् अन्यदीयं निधिं लोभातिशयेन स्वनिहितं स्वीयमिति ब्रूते, स तत्समं प्रकृतनिधिसमं दण्डमावहेत् दद्यात् । **मनु**स्त्वष्टमांशं दण्डमाह—

" अनृतं तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम् ।
तस्यैव वा विधानस्य संख्ययाल्पीयसीं कलाम् ॥ "

इति । अल्पीयसीं षोडशीम् । तत्रेयं व्यवस्था—अस्वस्य स्वत्ववचने तत्समो दण्डः । स्वस्यैव संख्यान्यथा-वचने अष्टमांशादिरिति ॥ ६४ ॥

बालः आ षोडशाद्वर्षात् । अनाथः अवेक्षकरहितः अन्धपङ्ग्वादिः । स्त्री वन्ध्यापुत्रादिः । मध्येऽनाथ-पदप्रयोगादुभयत्रान्वयेन बालस्त्रियोरप्यनाथत्वं गम्यते । ततश्चानाथयोर्बालस्त्रियोः अबालस्त्रियः अनाथस्य च धनानि स्वयमुपलब्धानि तैर्विभावितान्यपि रूपसंख्यादिभिः न तदानीमेव प्रत्यर्पयेत् । किंतु यावत्तत्सामर्थ्यं स्वयमेव राजा परिपालयेत् । यथाह **मनुः**—

" बालदायादिकं रिक्थं तावद्राजानुपालयेत् ।
यावत् स्यात् स समावृत्तो यावद्वातीतशैशवः ॥

[1] यद्वा omitted in ख, घ, छ.
[2] स्वीयमिति—ख.
[3] आचरेत्—झ.
[4] राजा omitted in ङ.
[5] एव च—ज.

वशापुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥ ”

इति । चकारात् स्वयमनुपलब्धानि तद्गृहस्थान्यपि पालयेत् । तथाच शङ्खलिखितौ—“न हार्यं राज्ञा देवब्राह्मणसंस्थितम् । न निक्षेपोपनिधी । न क्रियाक्रमागतम् । न बालस्त्रीधनानि ” इति । निक्षेपोपनिधी यद्धस्ते स्थापितौ तस्मिन्मृतेऽपि राज्ञा तौ न हार्यौ; किंतु यथास्थानं पालनीयौ । तथा क्रियाः और्ध्वदेहिकाः; क्रमाः पित्रादीनाम् । राजानुवृत्तावपि राजग्रहणं लुब्धतद्बान्धवादिनिरासाय; तेषां तदपहर्तृत्वसंभवात् । यथाह **मनुः**—

“ जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्छिष्याच्चोरदण्डेन धार्मिकः पृथिवीपतिः ॥ ”

इति । प्रजापालनेनैवास्य सिद्धौ पृथग्विधानं राजभागग्रहणनिवृत्त्यर्थम्; पूर्वोक्तशङ्खलिखितवचनारम्भसामर्थ्यात् ॥ ६५ ॥

चौरहृतं प्रत्याह । चौरैः प्रच्छन्नं प्रकाशं वा अपहृतं जानपदधनमवाप्य प्रत्यानीय, सर्वमेव सर्ववर्णेभ्यो दद्यात् प्रत्यर्पयेत् । सर्वमेवेत्यनेन भृतित्वेनापि किंचिन्नादेयमित्युक्तम्; उपयोगे दोषश्रवणात् । यथाह **मनुः**—

“ दातव्यं सर्ववर्णेभ्यो राज्ञा चौरहृतं धनम् ।
राजा तदुपयुञ्जानश्चोरस्याप्नोति किल्बिषम् ॥ ”

इति । सर्वमेवेत्यवधारणं ददातिनापि संबध्यते; अदाने दोषश्रवणात् । यथाह **योगीश्वरः**—

“ देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ।
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥ ”

इति । एतेनोपेक्षोपभोगौ निराकृतौ ॥ ६६ ॥

चौरहृतं प्रत्याहर्तुं यतमानोऽपि द्रव्यमप्राप्य, तावत् द्रव्यं स्वकोशादेव दद्यात् । चकारादशक्तोऽपि । यथाह **व्यासः**—

“ प्रत्याहर्तुमशक्तस्तु धनं चौरहृतं यदि ।
स्वकोशात् तद्धि देयं स्यादशक्तेन महीक्षिता ॥ ”

इति ॥ ६७ ॥

**शान्तिस्वस्त्ययनोपायैर्दैवोपघातान् [1]प्रशमयेत् ॥ ६८ ॥ परचक्रोपघातांश्च शस्त्रनित्यतया ॥ ६९ ॥**

[1] शमयेत्—ग, घ, छ.

एवं प्रजापालने दृष्टोपायानभिधायेदानीमदृष्टोपायांस्तत्राह । प्रत्युत्पन्नारिष्टशमनाय क्रियमाणं कर्म शान्तिः ग्रहशान्तिमहाशान्त्यादि । अनुत्पन्नारिष्टानुत्पत्त्यै क्रियमाणं कर्म स्वस्त्ययनम्; प्रास्थानिकहोमादि । बहुवचनेन च पुण्याहादीनां ग्रहणम् । तैः दैवोपघातान् प्रशमयेत् । दैवं पौर्वदैहिकमिष्टानिष्टफलकं कर्म । तेनोपघातान् आपदः प्रशमयेत् । प्रशमनं नामोत्पन्नानां प्रध्वंसनम्, अनुत्पन्नानां च प्रागभावपरिपालनमिति । यथाह **गौतमः**—" यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत । [1]तदधीनमपि ह्येके योगक्षेमं प्रतिजानते । शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात्" इति । 'पुण्याहं भवन्तो ब्रुवन्तु' इति दिनदोषनाशकं कर्म पुण्याहम् । आयुष्यं जन्मदिनकर्तव्यं दूर्वाहोमादि । मङ्गलं वास्तुशान्त्यादि । विद्वेषणं शत्रूणां परस्परं विरोधोत्पादनम् । संवननं वशीकरणम् । अभिचारः मारणम् । द्विषद्व्यृद्धिः द्विषताम् [2]ऋद्ध्यभावः । एतानि शालाग्नौ कार्याणि । स च " राज्ञस्तु विशेषान् वक्ष्यामः" इति प्रकृत्य वेश्म आवसथः सभेति त्रीणि स्थानान्यभिधाय " सर्वेष्वेवाजस्रा अग्नयः स्युः। अग्निपूजा च नित्या यथा गृहमेधे" इति **आपस्तम्बोक्तानां** त्रयणामप्यग्नीनामन्यतमः[3] शालाग्निरवसेयः । नौपासनो नापि त्रेताग्निः, तयोः गार्ह्येषु श्रौतेषु च नियमितत्वात् ॥ ६८ ॥

परेषां शत्रूणां चक्रं बलम् । तेनोपघातान् आपदः शस्त्रनित्यतया शस्त्राभियोगेन प्रशमयेत् । चकारात् स्वचक्रोपघातांश्च ॥ ६९ ॥

**वेदेतिहासधर्मशास्त्रार्थकुशलं कुलीनमव्यङ्गं [4]तपस्विनं पुरोहितं च वरयेत् ॥ ७० ॥ शुचीनलुब्धान् [5]अवहितान् शक्तिसंपन्नान् सर्वार्थेषु च सहायान् ॥ ७१ ॥**

वेदाः ऋगादयश्चत्वारोऽपि; शान्त्यादीनामथर्वाभिधेयत्वात् । यथाह **योगीश्वरः**—

" पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥"

इति । इतिहासाः **महाभारताद्याः** । धर्मशास्त्रं **मानवादि** । अर्थः अर्थशास्त्रम् **औशनसादि** । तेषु कुशलम् । कुलीनम्; महाकुलप्रसूतम् । अव्यङ्गम्; अविकलाङ्गम् । तपस्विनम्; कृच्छ्रचान्द्रायणादिनिष्ठम् । वरणेन अभ्यर्थनेन पुरोहितम् अग्रतो निहितं सर्वकार्येषु कुर्यात् । यद्यपि सामान्यतोऽभिहितं, तथापि ब्राह्मणमेव; " तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत" इति **श्रुतेः** । चकारादभिजनादिसंपन्नम् । यथाह **गौतमः**—" ब्राह्मणं पुरो दधीत विद्याभिजनवाग्रूपवयःशीलसंपन्नं न्यायवृत्तं तपस्विनम्" इति । यद्वा

[1] तदधीनमपीत्येके—ख, च, छ. [2] वृद्ध्यभावः—ख, च, छ.
[3] उत्तमः—ख, च, छ, ट. [4] तपस्विनं च पुरोहितं—ज. [5] हितान्—ज, ठ.

चकारात् ऋत्विजोऽपि वरयेत्। यथाह **योगीश्वरः**—"श्रौतस्मार्तक्रियाहेतोर्वृणुयादृत्विजस्तथा" इति। ऋत्विगेव च क्रमागतो विप्रादीनामुपाध्याय इत्युच्यते। तथा च **शङ्खलिखितौ**—"स एवादुष्टस्तस्य ऋत्विक् कुलोपाध्यायः" इति ॥ ७० ॥

शुचीन्; बाह्याभ्यन्तरशौचयुक्तान्। अलुब्धान्; लिप्सातिशयरहितान्। अवहितान्; सर्वत्र सावधानान्। शक्तिभिः प्रभावोत्साहमन्त्रजाभिः संपन्नान् युक्तान्। सर्वार्थेषु सर्वकार्येषु लौकिकवैदिकेषु मतिविषयेषु कृतिविषयेषु च सहायान्; सह अयन्ते इति सहायाः सहकारिणः; मन्त्रिणो वरयेत् अभ्यर्थयेत्। बहुवचनसामान्येऽपि सप्ताष्टौ वा कार्याः। यथाह **मनुः**—

"मौलाञ्छास्त्रविदः शूरान् लब्धलक्षान् कुलोद्भवान्।
मन्त्रिणः सप्त वाष्टौ वा कुर्वीत सुपरीक्षितान् ॥"

इति। तथा—

"दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम्।
इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्भवम् ॥"

इति। **भारतेऽपि**—

"सेनान्यं चाभिषिञ्चेत सेनाकर्मस्ववस्थितम्[1]।
शूरं व्यूहविधानज्ञं हस्त्यश्वरथकोविदम् ॥"

इति ॥ ७१ ॥

**स्वयमेव व्यवहारान् पश्येद्विद्वद्भिर्ब्राह्मणैः सार्धम्[2] ॥ ७२ ॥**

**व्यवहारदर्शने ब्राह्मणं वा नियुञ्ज्यात् ॥ ७३ ॥**

पूर्वोक्तो राजा स्वयमेव; नान्यद्वारा; व्यवहारान् विरुद्धाभिधानविषयान् पश्येत् सदसद्रूपेण विवेचयेत्। यथोक्तम्—

"परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिषु।
वाक्यान्न्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥"

इति। तस्य च बहुवचनेनानेकविधत्वमुक्तम्। तदाह **मनुः**—

"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।
संभूय च समुत्थानं दत्तस्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥

1 अधिष्ठितम्—छ.

2 साकम्—ट.

सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥"

इति । कथम्? विद्वद्भिः वेदव्याकरणधर्मशास्त्राभिज्ञैः ब्राह्मणैः, न क्षत्रियादिभिः, सार्धम् । तृतीयानिर्देशात् ब्राह्मणानामप्राधान्येन नान्यथादर्शनादर्शनफलसंबन्धः ; किंतु राज्ञ एव । यथाह **मनुः**—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥"

इति । एते च विधायका इत्युच्यन्ते ;

"विधायकैस्त्रिचतुरैः सम्यक् शास्त्रार्थकोविदैः ।
सभ्यैर्निर्णीतमर्थं तु राजा विप्रैः परीक्षयेत् ॥"

इति **नारद**स्मरणात् । राज्ञोऽनुवृत्तावपि स्वयमेवेति वचनं क्रोधलोभादिदोषपरवशतानिरासाय । यथाह **याज्ञवल्क्यः**—

"व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥"

इति ॥ ७२ ॥

स्वयमेवेत्यस्यानुकल्पमाह । पूर्वोक्ते व्यवहारदर्शने स्वस्याशक्तौ ब्राह्मणं प्राड्विवाकं नियुञ्ज्यात् । यथाह **योगीश्वरः**—

"अपश्यता कार्यवशाद्व्यवहारान् नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥"

इति । प्राड्विवाकशब्दार्थमाह **बृहस्पतिः**—

"विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥"

इति । वाशब्दात् तदसंभवे क्षत्रियः । तदसंभवे वैश्यं वा नियुञ्ज्यात् । न तु शूद्रम् । यथाह **कात्यायनः**—

"ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥"

इति ॥ ७३ ॥

**जन्मकर्मव्रतोपेताश्च[1] राज्ञा सभासदः कार्याः, रिपौ[2] मित्रे च ये समाः, [3]कामक्रोधभयलोभादिभिः कार्यार्थिभिरनाहार्याः ॥ ७४ ॥**

सभ्यानाह । जन्म विशिष्टमातापितृतः । कर्म जातकर्मादिसंस्काराः । व्रतानि अध्ययनाङ्गानि सौम्यप्राजापत्यादीनि । तैः उपेताः युक्ताः । चकारात् श्रुताध्ययनसंपन्नाः । यथाह **योगीश्वरः**—

"श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥"

इति । रिपौ मित्रे च ये समाः रागद्वेषरहिताः । कामो भोगलिप्सा । क्रोधः अमर्षः । भयं त्रासः । लोभः लिप्सातिशयः । आदिशब्दात् स्नेहादीनां ग्रहणम् । तैः कृत्वा कार्यार्थिभिः व्यावहारिकैः अनाहार्याः अनाकर्षणीयाः । अयमर्थः—कार्यार्थिभिः स्त्र्यादिप्रदानेन स्वविषयकपक्षपातजननं सभ्यानां कामेनापकर्षणम् । प्रतिपक्षतिरस्कारश्रवणेन स्वपक्षपातजननं [4]क्रोधेनाकर्षणम् । विपक्षबाधकदर्शनेन स्वपक्षपातजननं भयेनाकर्षणम् । धनदानादिना स्वपक्षपातजननं लोभेनाकर्षणम् । तद्रहिता ब्राह्मणा राज्ञा दानमानसत्कारैर्यथा सभासु सीदन्ति तथा कार्याः । यथोक्तं **कात्यायनेन**—

"स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ।
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥"

इति । बहुवचनसामान्येऽपि सप्त पञ्च त्रयो वा कार्याः । यथाह **बृहस्पतिः**—

"लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥"

इति । चकारात् गणकलेखकसाध्यपालवणिजां ग्रहणम् । यथाह **व्यासः**—

"त्रिस्कन्धज्योतिषाभिज्ञं स्फुटप्रत्ययकारकम् ।
श्रुताध्ययनसंपन्नं गणकं योजयेन्नृपः ॥
स्फुटलेखं नियुञ्जीत शाब्दलक्षणिकं शुचिम् ।
स्पष्टाक्षरं जितक्रोधमलुब्धं सत्यवादिनम् ॥
साध्यपालस्तु कर्तव्यो राज्ञा साध्यस्य साधकः ।
क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थितः ॥

[1] श्रुतोपेताश्च—ज, ठ.
[2] रिपौ च—ट.
[3] कामक्रोधादिभिः—क ; क्रोधलोभादिभिः—ट.
[4] क्रोधेनाकर्षणम् to धनदानादिना omitted in छ.

आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्तव्यस्तु स्वपूरुषः ।
श्रोतारो वणिजस्तत्र कर्तव्या न्यायदर्शिनः ॥"

इति । द्वितीयचकारात् राजन्यपि समाः ;

"अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः ।
तेऽपि तद्भागिनस्तस्माद् बोधनीयः [1]स तैर्नृपः ॥"

इत्यनेन राजानुरोधस्यापि परिहरणीयत्वस्मरणात् । व्यवहारदर्शनप्रकारमाह **मनुः**—

"धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥"

इति । धर्मासनं धर्मसभा । तत्र **बृहस्पतिः**—

"दुर्गमध्ये गृहं कुर्याज्जलवृक्षाश्रितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत् सभाम् ॥"

इति । सैव धर्माधिकरणमित्याह **कात्यायनः**—

"धर्मशास्त्रविचारेण मूलशास्त्रविवेचनम् ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥"

इति । मूलं व्यवहारः । शास्त्रं तत्प्रतिपादकं स्मृत्यादि । व्यवहारदर्शननिमित्तमाह **याज्ञवल्क्यः**—

"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥"

इति । चेच्छब्देन स्वयमेवावेदयति, न राजादिप्रेरित इत्युक्तम् ।

"नोत्पादयेत् स्वयं कार्यं राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसेतार्थं कथंचन ॥"

इति **मानवात्** । आधर्षित इत्यनेन तत्संबन्धी तन्नियुक्तोऽपि वा गृह्यते ;

"अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥"

इति **कात्यायनीयात्** । असंबन्धी तु दण्ड्यः ;

"यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद् व्यवहारेषु विब्रुवन् ॥"

[1] स चेन्नयः—छ.

इति **नारदीयात्** । आवेदितं श्रुत्वा प्रष्टव्योऽसौ—

“ काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥
केन कस्मिन् कदा कस्मात् पृच्छेदेवं सभागतम् । ”

इति । तदुक्तं च सर्वं लेख्यम्;

“ रागादिना यदैकेन कोपितः करणे वदेत् ।
तदोमिति लिखेत् सर्वं वादिनः फलकादिषु ॥ ”

इति **नारदीयात्** । करणं सभा । अनन्तरकृत्यमाह **कात्यायनः**—

“ एवं [1]पृष्टे स यद् ब्रूयात् तत् सभ्यैर्ब्राह्मणैः सह ।
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ॥
मुद्रां वा निक्षिपेत् तस्मिन् पुरुषं वा समादिशेत् ।
अकल्यबालस्थविरविषमस्थक्रियाकुलान् ॥
कार्यातिपातव्यसनिनृपकार्योत्सवाकुलान् ।
मत्तोन्मत्तप्रमत्तार्तभृत्यान् नाह्वानयेन्नृपः ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां [2]ता ज्ञातिप्रभुकाः स्मृताः ॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥
देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः ॥
ज्ञात्वा [3]नियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येऽप्यकोपयन्[4] ॥ ”

इति । आहूतस्यानागमने **कात्यायनः**—

“ आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥ ”

[1] प्रष्टुः—ट.
[2] नाकृतिप्रभुकाः—ख, ग.
[3] भियोगं—छ.
[4] च कामयन्—ख.

इति । पलायने तु हीनता, "आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" इति **स्मरणात्** । यदि वाद्युक्तं प्रतिवाद्यतिक्रामति, तदासावासेद्धव्यः । तत्र **नारदः**—

"वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥"

इति । आसेधो राजाज्ञयावरोधः । स च 'इतो न गन्तव्यम्; इदं न कर्तव्यम्' इत्यादिरूपः । तदतिक्रमकारी दण्ड्यः ।

"आसेधकाल आसिद्ध आसेधं योऽतिवर्तते ।
स विनेयोऽन्यथा कुर्वन् नासेद्धा दण्डभाग्भवेत् ॥
नदीसंतारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात् ॥"

इति । आदिशब्दात् अत्यावश्यककार्येषु विवाहादिष्वपि । स च व्यवहारश्चतुष्पात्—

"भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥"

इति । भाषा प्रतिज्ञा पक्ष इत्येकार्थाः । क्रिया प्रमाणं साधनानीति च । स च द्विविधः—

"[1]भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृता ।
भूतं तत्त्वार्थयुक्तं यत् प्रमादाभिहितं छलम् ॥"

इति **स्मरणात्** । तत्र विशेषः—"छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः" इति । युगपदनेकव्यवहारप्राप्तौ **बृहस्पतिः**—

"अहंपूर्विकया प्राप्तावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य वा ॥"

इति । तत्र प्रतिज्ञामाह **योगीश्वरः**—

"प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥"

इति । पूर्वं समादिराहित्यम् । अत्र तु तदिति विशेषः । तत्र विशेषो **बार्हस्पत्ये**—

"प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥

1. भूतस्थला—ख, ग.

अल्पाक्षरस्त्वसंदिग्धो बह्वर्थश्चाप्यनाकुलः ।
मुक्तो विरोधिकरणैर्विरोधप्रतिषेधकः ॥"

इति । प्रतिज्ञादोषा **नारदोक्ताः**—

"अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम् ।
लेख्यं हीनाधिकं भ्रष्टं भाषादोषाः प्रकीर्तिताः ॥"

इति । साध्यं साधनक्षमम् । सत्कारणैः सद्धेतुभिः । निश्चितम् असंदिग्धम् । [1]लोकप्रसिद्धपक्षलक्षणाभावे पक्षाभासः । यथा

"अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥"

इति । अप्रसिद्धं यथा—'कूश्माण्डपरिमाणं मौक्तिकं मेऽपहृतमनेन' इति । निराबाधम्; 'अस्मद्‌गृहाध्ययायं प्रत्यहं गच्छति' इति । निरर्थम्; टबडबडढणेति । निष्प्रयोजनम्; 'अस्मत्प्रतिवेशेऽयं चिरं देवान् पूजयति' इति । असाध्यम्; 'मां दृष्ट्वानेनाक्षि निकोचितम्' इति, 'अल्पत्वादल्पकालत्वान्न दिव्यसाक्षिणौ; लिखितभुक्ता दुरापास्ते' इति । विरुद्धं ग्रामदेशादीनाम् । तत्र **बृहस्पतिः**—

"राज्ञा च वर्जितो यश्च यश्च पौरविरोधकृत् ।
राष्ट्रस्य [2]च समस्तस्य प्रकृतीनां तथैव च ॥
अन्ये वा ये पुरग्राममहाजनविरोधिनः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥"

इति । स्थावरविवादे त्वयं विशेषः—

"देशश्चैव तथा स्थानं संनिवेशस्तथैव च ।
जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥"

इति । देशः काला(मालवा)दिः । स्थानं काश्यादि । संनिवेशो गृहादि । जातिः अर्थिप्रत्यर्थिनोः ब्राह्मणत्वादि । संज्ञा देवदत्तादि । अधिवासः [3]प्रतिवेशजनः । प्रमाणं निवर्तनादि । क्षेत्रनाम शालिक्षेत्रादि । पित्रादीनां पूर्वेषां च राज्ञां नामेति । अत्र विशेषः **कात्यायनीयः**—"अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति" इति । युगपदिति शेषः । पक्षं च संशोध्य पत्रं लिखेत्;

[1] लोकप्रसिद्धोपलक्षणाभावे—ख, ग.　　[2] वा—घ.　　[3] प्रतिवेशि—घ.

"पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥"

इति **कात्यायनीय**स्मरणात् । विशोधनं विस्मृतानुसंधानेनान्यथाभूतमप्यनुपन्यस्तम्; अन्यथा "हीयते व्यवहारतः" इति वास्तववस्तुनोऽप्यसिद्ध्यापत्तेः । शोधनं च यावदुत्तरदानम्;

"शोधयेत् पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥"

इति **नारदीयात्** । इति प्रतिज्ञा ।

अथोत्तरम् । तत्र **योगीश्वरः**—"श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ" इति । तत्र विशेषो **नारदीयः**—

"[1]पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥"

इति । तच्चतुर्विधम्; यथा **कात्यायनः**—

"सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥"

इति । तल्लक्षणमाह **कात्यायनः**—

"साध्यस्य प्रतिपत्तिस्तु सत्योत्तरमिति स्मृतम् ।
अभियोगापह्नवश्च मिथ्योत्तरमुदाहृतम् ॥
प्रत्यवस्कन्दनं पक्षे प्रपन्ने करणाभिधा ।
अयं मया जितः पूर्वमिति प्राङ्न्याय उच्यते ॥"

इति । तत्र मिथ्योत्तरं चतुर्धा—

"मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥"

इति । उत्तरलक्षणाभावे उत्तराभासः । यथा—

"संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यन्यत् तथा नैवोत्तरं भवेत् ।

[1] यत्तस्य—ख, ग.

यद् व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ ''

इति । संदिग्धम् ; ऋणाभियोगे ' गृहीतं, न वा मया ' इति । प्रकृतादन्यत् ; ऋणाभियोगे ' नाहं त्वा गाल्यामि ' इति । अत्यल्पम् ; शताभियोगे ' पञ्च धारयामि ' इति । अतिभूरि ; पञ्चाभियोगे ' शतं धारयामि ' इति । पक्षैकदेशव्यापि ; सुवर्णरजतवस्त्राभियोगे ' वस्त्राणि धारयामि ' इति । व्यस्तपदम् ; ऋणाभियोगे ' अहमनेन ताडितः ' इति । अव्यापि ; देशकालादिविशेषणव्यभिचारि ; यथा ' काश्यां प्रभववत्सरे अनेन ऋणं गृहीतम् ' इत्यभियोगे ' मधुरायां [1]विभववत्सरे गृहीतम् ' इति । निगूढार्थम् ; ऋणाभियोगे ' मत्स्वरूपं त्वं न जानासि ' इति । अत्र व्यञ्जनया ' दुष्टोऽहं त्वां हनिष्यामि ' इति गमयति । आकुलम् ; पूर्वापरविरुद्धम् । ऋणाभियोगे ' सत्यं गृहीतम् ; न धारयामि ' इति । व्याख्यागम्यम् ; अप्रसिद्धपदप्रयोगेण, यथा—' मदीया गौरनेनापहृता ' इत्यभियोगे ' न मयार्जुनोऽपहृतः ' इति अर्जुनपदेन गौरुच्यते । असारम् ; न्यायविरुद्धम्, यथा—' अनेन गृहीतस्य धनस्य वृद्धिर्दत्ता, न मूलम् ' इत्यभियोगे ' सत्यं वृद्धिर्दत्ता ; न मूलं धारयामि ' इति । उत्तरं चैकमेव ग्राह्यम् । नोत्तरसंकरः । यथाह **कात्यायनः**—

" पक्षैकदेशे यत् सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च संकरात् तदनुत्तरम् ॥ "

इति । यथा सुवर्णरूप्याभियोगे ' सुवर्णं न गृहीतम् ; रूप्यं गृहीतं प्रतिदत्तं च ' इति । एवमुत्तरत्रयसंकरेऽपि ज्ञेयम् । तत्र कारणमाह **स एव**—

" न चैकस्मिम् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ "

इति । द्वयोरपि क्रियोत्तरभेदेन यथा—" मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि " इति । संकीर्णानां च युगपदनुत्तरत्वम् । क्रमेण तूत्तरत्वमेव ; तेन तेन विना तस्य तस्यानुपमर्दात् । क्रमं चाह **हारीतः**—

" यत् प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।
उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥ "

इति । संकीर्णमिति शेषः । क्वचित् संकराद्यनुज्ञानमाह **हारीतः**—" मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम् " इति । यथा यः कश्चित् ब्रूते—' इयं गौर्मदीया कार्तिकेऽस्मद्गृहान्नष्टा अस्य गृहे दृष्टा ' इति । अपरो ब्रूते—' मिथ्यैतत् ; कार्तिकात् प्रागेवाषाढे मया क्रीता ' इति । अत्र संकीर्णस्यैव पक्षदूषकत्वादुत्तरत्वम् ।

[1] मध—ख, ग, छ.

नेदं मिथ्यैव ; कारणोपन्यासात् । नापि कारणमेव ; एकदेशानभ्युपगमात् । तस्मात् संकीर्णस्यैवोत्तरत्वमिति । तस्य च कालमाह **योगीश्वरः**—

" साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ "

इति । इत्युत्तरम् ।

अथ क्रिया । तत्र **योगीश्वरः**—" ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् " इति । ततः ; उत्तरानन्तरम् । अर्थी ; साध्यवान् । साधनम् ; प्रमाणम् । ततश्च मिथ्योत्तरे पूर्ववाद्येवार्थीति स एव साधनं निर्दिशेत् । प्राङ्न्यायकारणोक्तौ प्रत्यर्थ्येवार्थीति स एव ; प्राङ्न्यायकारणयोरेव साध्यत्वात् । संप्रतिपत्तौ तु द्वयोरपि साध्याभावान्नैकस्यापि साधनोपन्यास इति द्विपादेव व्यवहारः । तदाह **हारीतः**—

" प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥ "

इति[1] । साधनोपन्यासस्य फलमाह **योगीश्वरः**—" तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा " इति । तस्य साधनस्य वक्ष्यमाणस्य लिखितसाक्ष्यादेः सिद्धावबाधे सिद्धिं साध्यस्य जयलक्षणं प्राप्नोति । अतोऽन्यथा ; साधनासिद्धौ, विपरीतं पराजयमित्यर्थः । ततः सभापतिकर्तव्यमाह **स एव**—

" उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।
निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ॥ "

इति । इति साधारणी व्यवहारमातृका ।

अथासाधारणी । तत्र **योगीश्वरः**—

" अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ "

इति । आवेदनकाले अभिहितपदं भाषाकाले न परिवर्तयेत् । यथाह **नारदः**—

" पूर्वं पदं परित्यज्य योऽन्यदालम्बते पुनः ।
पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥ "

इति । हीनवादी दण्ड्यः ; न तु हीनार्थः ।

" सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति ।
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥ "

[1] After इति the following lines are added in च, छ, ट.—तस्यासंभवे कात्यायनः—" अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः । स रक्षितो दिनस्यान्ते दद्याद् भृत्याय वेतनम् ॥ " इति ।

इति । 'अभियोगमनिस्तीर्य' इत्यस्यापवादः—"कुर्यात् प्रत्यभियोगं च कलहे साहसेषु च" इति । अस्य फलमाह **नारदः**—

"पूर्वमाक्षारयेद्यस्तु नियतं स्यात् स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥"

इति । युगपत् प्रवृत्तौ तु द्वयोरपि तुल्यो दण्डः ।

"कलहे साहसे चैव युगपत् संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात् समस्तयोः ॥"

इति । मिथ्याभियोगिन्याह **योगीश्वरः**—"मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्" इति । सपण-विवादेऽप्याह—

"सपणश्चेद्विवादः स्यात् तत्र हीनं तु दापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥"

इति । अनेकाभियुक्तार्थापह्नवेऽप्याह—

"निह्नुते निखिलं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥"

इति । पूर्वोत्तरकार्ययोर्बलाबलमाह—

"सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥"

इति । व्यवहारदर्शिनां बलाबलमाह—

"नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥"

इति । परावर्तनीयव्यवहारानाह—

"बलोपाधिविनिर्वृत्तान् व्यवहारान् निवर्तयेत् ।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥
मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।
असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥"

इति । यत्तु,

"गुरोः शिष्ये पितुः पुत्रे दंपत्योः स्वामिभृत्ययोः ।
विरोधे तु मिथस्तेषां व्यवहारो न सिध्यति ॥"

इति, तत् दृष्टादृष्टविरोधाभिप्रायेण ; न तु अत्यन्तासिद्ध्यभिप्रायेण ; तेषामपि विषयविशेषे व्यवहारस्येष्टत्वात् । यथा अशास्त्रीयताडने गुरुशिष्ययोः ; पैतामहधनादाने पितापुत्रयोः ; स्त्रीधनोच्छेदने दंपत्योः ; [1]भृत्यदाने स्वामिभृत्ययोरित्यादि । यदपि,

"एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥"

इति, तदनेकार्थे बहुभिः, भर्तरि विद्यमाने कुलस्त्रीणां, स्वामिनि विद्यमाने प्रेष्यस्य च व्यवहारासिद्ध्यभिप्रायेण ; न तु गणद्रव्यापहारादौ बहुभिः, गोपशौण्डिकादिस्त्रीभिः, अर्थादिनियुक्तस्य प्रेष्यस्य चेति ॥ ७४ ॥

**राजा च सर्वकार्येषु सांवत्सराधीनः स्यात् ॥ ७५ ॥ देवब्राह्मणान् सततमेव पूजयेत् ॥ ७६ ॥ वृद्धसेवी भवेत् ॥ ७७ ॥ यज्ञयाजी च ॥ ७८ ॥**

राजा पूर्वोक्तः । सर्वकार्येषु लौकिकवैदिकेषु । सांवत्सरो ज्यौतिषिकः ; तदधीनः स्यात् ; तदुदितग्रहनक्षत्रादिपूजनपरः स्यात् । चकारान्मन्त्रिणोऽपि । राजधर्मप्रस्ताव एव राज्ञः पुनरुपादानं तस्य तदावश्यकत्वबोधनार्थम् । यथाह **योगीश्वरः**—

"ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।
भावाभावौ च [2]जगतस्तस्मात् पूज्यतमा ग्रहाः ॥"

इति ॥ ७५ ॥

देवान् विष्ण्वादीन् ब्राह्मणान् स्नातकांश्च सततं निरन्तरमेव पूजयेत् । यथाह **मनुः**—

"[3]आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत् ।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते ॥"

"ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान् विदुषस्तेषां तिष्ठेच्च शासने ॥"

इति ॥ ७६ ॥

1 भृतिदाने—घ.
2 भवतः—घ.
3 This verse is read after ब्राह्मणान् पर्युपासीत, etc., in घ, च.

वृद्धानां [1]ज्ञानैश्वर्यवयोवृद्धानां विप्राणां सेवाशीलः स्यात्। यथाह **मनुः**—

"वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
वृद्धसेवी च सततं रक्षोभिरपि पूज्यते॥"

इति॥ ७७॥

यज्ञानां ज्योतिष्टोमादीनां यजनशीलो भवेत्। चकारात् भोगधनदानशीलश्च। यथाह **मनुः**—

"यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः।
धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगान् धनानि च॥"

इति॥ ७८॥

**न चास्य विषये ब्राह्मणः क्षुधार्तोऽवसीदेत्॥ ७९॥ न चान्योऽपि सत्कर्मनिरतः॥ ८०॥**

अस्य राज्ञो विषये देशे ब्राह्मणः श्रोत्रियः क्षुधार्तो नावसीदेत्, न क्लिश्येत्। यथाह **मनुः**—"न च क्षुधास्य संसीदेच्छ्रोत्रियो विषये वसन्" इति। चकारादश्रोत्रियोऽपि॥ ७९॥

अन्यः क्षत्रियादिरपि सत्कर्मसु इज्याध्ययनदानेषु नित्यं वृत्त्यर्थकर्मपरिहारेण रतो राज्ञो विषये क्षुधा न सीदेत्। नेदं ब्राह्मणादीन् प्रत्युपदिश्यते; प्रक्रमविरोधात्। किंतु राजानं प्रत्येव; तस्यैव फलसंबन्धश्रवणात्। यथाह **मनुः**—

"यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा।
तस्यापि तत् क्षुधा राष्ट्रमचिरेणावसीदति॥"

इति। ततश्चायमर्थः—राजा यथा स्वविषये ब्राह्मणादिः क्षुधा नावसीदेत्, तथा कुर्यादिति॥ ८०॥

**ब्राह्मणेभ्यश्च भुवं प्रतिपादयेत्॥ ८१॥ येषां च प्रतिपादयेत् तेषां स्ववंश्यान् भुवः परिमाणं दानच्छेदोपवर्णनं च पटे[2] ताम्रपट्टे वा लिखितं [3]स्वमुद्राङ्कितं चागामिनृपतिविज्ञापनार्थं[4] दद्यात्॥८२॥**

अनवसादोपायमाह। ब्राह्मणेभ्यः श्रोत्रियेभ्यः। चकारादन्येभ्यश्च। तज्जीवनपर्याप्तां भुवं सस्योत्पत्त्यर्हां प्रतिपादयेत् दद्यात्। यथाह **मनुः**—

"श्रुतवृत्ते विदित्वास्य धर्म्यां वृत्तिं प्रकल्पयेत्।
संरक्षेत् सर्वतश्चैतान् पिता पुत्रानिवौरसान्॥"

इति॥ ८१॥

[1] शान्ततपोवृद्धानां—घ. [2] पटे वा—ज. [3] स्वमुद्राङ्कं—ज, ठ. [4] विज्ञानार्थं—ठ.

ननु प्रतिपादिताया अपि भुवः परेणापहारे तदवसादस्तदवस्थ एवेत्यत आह। येषां ब्राह्मणादीनां भुवं दद्यात्, तेषां वक्ष्यमाणलक्षणं शासनपत्रं दद्यादिति संबन्धः। चतुर्थ्यर्थे षष्ठी। स्ववंश्यान् पित्रादीन् त्रीन्, बहुवचनसामर्थ्यात्। चकारात् संप्रदानवंश्यान् आत्मानं च। भुवः क्षेत्रादिकायाः। प्रमाणं निवर्तनादि परिमाणम्। दीयत इति दानम्; भूम्यादि। तस्य छेदः अपहारः उपवर्ण्यते प्रत्यवायजनकतया येन शास्त्रेण वक्ष्यमाणलक्षणेन, तत् दानच्छेदोपवर्णनम्। यद्वा दानस्य भूम्यादेः छेदः अवच्छेदः नद्याघाटादिः; तस्योपवर्णनम्। 'पूर्वतोऽमुकनद्याः, पश्चिमतः अमुकोद्यानस्येदं[1] क्षेत्रम्' इत्येवमादिवाक्यकदम्बकम्। चकारात् 'मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्" इति स्वहस्तम्। शाकनृपातीतसंवत्सररूपं रविचन्द्रोपरागादिरूपं च कालम्। पटे कार्पासिके वस्त्रखण्डे; ताम्रपट्टे ताम्रफलके वा, उत्कीर्णवर्णैर्लिखितं, मुख्यमन्त्रिणा तद्द्वारा लेखयित्वेति यावत्। स्वमुद्रा; हंसवराहादिका, तया अङ्कितं सर्वोपरि चिह्नितं च कृत्वा आगामिनां भविष्यतां नृपाणां विज्ञापनार्थं "दानाच्छ्रेयोऽनुपालनम्" इति प्रार्थनार्थं दद्यात्। यथाह **योगीश्वरः**—

"दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत्।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः॥
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्।
स्वहस्तकालसंपन्नं शासनं [2]स्थापयेत् स्थिरम्॥"

इति। **व्यासः**—

"स्थानं वंशानुपूर्वीं च देशं ग्राममुपागतान्।
ब्राह्मणांस्तु तथा चान्यान् मान्यानधिकृतानपि॥"

स्थानं राजधानीम्। उपागतान्; तत्काल आगन्तुकान्।

"कुटुम्बिनोऽथ कायस्थान् दूतवैद्यमहत्तरान्।
मेदचाण्डालपर्यन्तान् सर्वान् संबोधयन्निति॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे।
दत्तं मयामुकायाद्य दानं सब्रह्मचारिणे॥
अनाच्छेद्यमनाहार्यं सर्वभागविवर्जितम्।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम्॥

[1] अमुकस्थानस्येदं—छ.

[2] कारयेत्—च, छ, ट.

दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिवर्षसहस्राणि दानच्छेदफलं लिखेत् ॥
स्वमुद्रावर्षमासार्धदिनाध्यक्षाक्षरान्वितम् ।
एवंविधं राजकृतं शासनं समुदाहृतम् ॥"

इति । भागैः; चतुर्धरिकमहत्तमादिलभ्यैः विशेषेण वर्जितम् । मासार्धं पक्षः । दिनाध्यक्षो वारः । शासनपत्रलेखकश्च सन्धिविग्रहाधिकारी; न तु यः कश्चित् । तथाच **स्मृत्यन्तरे**—

" सन्धिविग्रहकारी तु भवेद्यस्तस्य लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥"

इति । अनेन भोगातिशयेन फलातिशय उपपादितः ॥ ८२ ॥

**परदत्तां च[1] भुवं नापहरेत् ॥ ८३ ॥ ब्राह्मणेभ्यः[2] सर्वदायान्[3] प्रयच्छेत् ॥ ८४ ॥ सर्वतस्त्वात्मानं गोपायेत् ॥ ८५ ॥ सुदर्शनश्च स्यात् ॥ ८६ ॥**

ब्राह्मणानवसादे प्रकारान्तरमप्याह । परैरन्यैर्नृपतिभिर्दत्तां भुवं ग्रामक्षेत्रादिकां नापहरेत्; किंतु पालयेदेव । चकारात् स्वदत्तामपि;

" स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥"

इति **स्मरणात्** ॥ ८३ ॥

किंच, दीयन्त इति दायाः विविधविषयाः; तान् ब्राह्मणेभ्यः प्रयच्छेत् प्रकर्षेण प्रत्यावृत्त्या दद्यात् । यथाह **योगीश्वरः**—

" दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद् गाः काञ्चनं महीम् ।
नैवेशिकानि च तथा श्रोत्रियेभ्यो गृहाणि च ॥"

इति ॥ ८४ ॥

सर्वतो यानशय्यासनादिभ्योऽप्यात्मानं गोपायेत् रक्षेत् । यथाहात्मरक्षाप्रक्रमे **मनुः**—

" एवं प्रयत्नं कुर्वीत यानशय्यासनेषु च ।
स्नाने प्रसाधने चैव सर्वालंकारिकेषु च ॥"

[1] च omitted in क.  [2] ब्राह्मणेभ्यश्च—ठ.  [3] अपदोषवर्णनं च पटे added in क.

इति। यद्यपि "सर्वत एवात्मानं गोपायेत्" इति[1] श्रुत्या साधरण्येनैवात्मरक्षणं विहितम्; तथापि तस्यापद्धर्मविषयकत्वेनानापद्यपि राज्ञामरिबाहुल्येन सर्वकालमवधानविधानायेदमुच्यत इति नानर्थक्यमिति तुशब्दार्थः ॥ ८५ ॥

सुदर्शनः; विशिष्टवेषाभरणः भवेत्। दिदृक्षूणां सुलभदर्शन इति वा। चकारात् बलदर्शननिरतश्च भवेत्। यथाह **मनुः**—

"अलंकृतश्च संपश्येदायुधीयं पृथग्जनम्।
वाहनानि च सर्वाणि शस्त्राण्याभरणानि च॥"

इति ॥ ८६ ॥

**[2]विषघ्नागदमन्त्रधारी च ॥ ८७ ॥ नापरीक्षितमुपयुञ्ज्यात् ॥ ८८ ॥ स्मितपूर्वाभिभाषी स्यात् ॥ ८९ ॥ वध्येष्वपि न भ्रुकुटीमाचरेत्[3] ॥ ९० ॥**

यदुक्तं 'सर्वतस्त्वात्मानं गोपायेत्' इति, तदुपायमाह। विषघ्नाः विषनाशकाः, अगदाः रोगनाशकाश्च ये मन्त्राः, तद्धारणशीलो भवेत्। चकारात् विषघ्नरत्नधारी च भवेत्। यथाह **मनुः**—

[4]"विषघ्नैरगदैश्चास्य सर्वद्रव्याणि शोधयेत्।
विषघ्नानि च रत्नानि नियतो धारयेत् सदा॥"

इति ॥ ८७ ॥

किंच परिचारकैरपरीक्षितमन्नादि नोपयुञ्ज्यात् नोपभुञ्जीत। अपरीक्षितनिषेधेन परीक्षितमभ्यनुज्ञायते। यथाह **मनुः**—

"तत्रात्मभूतैः कालज्ञैरहार्यैः परिचारकैः।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः॥"

इति ॥ ८८ ॥

स्मितपूर्वमभिभाषितुं शीलमस्य तथा स्यात् ॥ ८९ ॥
वध्येषु चौरादिष्वपि स्वयं कोपावेशलक्ष्म नाचरत् ॥ ९० ॥

**अपराधानुरूपं [5]च दण्डं दण्ड्येषु दापयेत् ॥ ९१ ॥ [6]सम्यग्दण्डप्रणयनं कुर्यात् ॥ ९२ ॥**

[1] इत्यसाधारण्येन—ख, घ, च, ज. [2] विषघ्नागम—च, ठ. [3] आवहेत्—ज.
[4] विषघ्नागदैः—ख, ग; ट omits from here up to the end of the commentary on Sūtra 92.
[5] च omitted in ज. [6] सम्यक् च—ज.

तर्हि कथं तेषां दमनमित्यत आह। दण्ड्येषु दण्डार्हेषु अपराधानुरूपम् अपराधे चौर्यादौ अनुरूपं योग्यं, [1]महीयसि महीयांसम्, अल्पीयसि अल्पीयांसं दण्डं दमनफलकं क्रियाविशेषं दापयेत् भृत्यादिद्वारा प्रणयेत्। चकारात् देशकालवयोऽवस्थाद्यनुरूपं च। यथाह **योगीश्वरः**—

"ज्ञात्वापराधं देशं च कालं बलमथापि वा।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत्॥"

इति॥ ९१॥

तर्हि किं दण्डे प्रयोजककर्तृत्वमेव राज्ञः? इत्यत आह। यत्र "गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम्" इत्यादिविशेषविधानमस्ति, तत्र स्वयमेव सम्यक् यथा दण्डनं भवति, तथा दण्डप्रणयनं कुर्यात्। अन्यत्र भृत्यादिद्वारैव दापयेत्; न स्वयं कुर्यात्। यद्वा अपराधानुरूपे दण्डे कृतेऽपि यदि दण्ड्यस्य दुर्वृत्ततया दमनं न भवति, तदा कथमित्यत आह—सम्यग्दण्डप्रणयनं कुर्यादिति। सम्यक् यथा दण्ड्यस्य दमनं भवति, तथा दण्डप्रणयनं कुर्यात्; दण्डस्य दमनार्थत्वात्। यथाह **गौतमः**—"दण्डो दमनादित्याहुः, तेनादान्तान् दमयेत्" इति॥ ९२॥

**द्वितीयमपराधं न स[2] कस्यचित् क्षमेत॥ ९३॥ स्वधर्ममपालयन् नादण्ड्यो नामास्ति राज्ञाम्॥ ९४॥**

"चत्वारो वा त्रयो वापि यद् ब्रूयुर्वेदपारगाः।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः॥"

इत्यादि**मन्वा**दिवाक्यात् कथंचिदेकस्मिन्नज्ञानकृतेऽपराधे 'राजन्, न दण्ड्योऽयमस्मद्वचनात्' इत्यादिवेदवित्संघवचनस्यैव धर्मत्वमनुसंदधानो राजा यमनुजानाति 'दण्ड्य, मुक्तोऽसि त्वम्; गच्छ यथेच्छम्' इति, तस्य यस्य कस्यचित् भ्रात्रादेरपि [3]द्वितीयमपराधं स राजा न क्षमेत। अनेन प्रथमेऽपराधेऽनुज्ञानमप्यनुज्ञातं भवति। यथाह **गौतमः**—"अनुज्ञानं वा वेदवित्समुदायवचनात्" इति। राजधर्मेषु पुनस्तच्छब्देन राजपरामर्शः अन्येन नियुक्तादिना क्षान्तमपि स्वयं न क्षमेतेत्येवमर्थः। यथाह **मनुः**—

"अमात्यः प्राड्विवाको वा यः कुर्यात् कार्यमन्यथा।
तत् स्वयं नृपतिः कुर्यात् तं सहस्रं च दण्डयेत्॥"

इति॥ ९३॥

[1] महति—च.　[2] स omitted in च.　[3] द्वितीयवारकृतं तमन्यं वापराधं—ग, छ.

अत्रैव हेतुमाह । स्ववर्णाश्रमादिविहितं धर्ममपालयन् अकुर्वन् राज्ञः अदण्ड्यो नाम नास्ति । यथाह **योगीश्वरः**—

"अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।
नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥"

इति । एतदपि मातापितृव्यतिरेकेण । तथा च **शङ्खः**—"अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तः ; ते हि धर्माधिकारिणः" इति । इदमपि दमदण्डाभिप्रायेण । यथाह **बृहस्पतिः**—

"गुरून् पुरोहितामात्यान्[1] वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् वाग्दमाभ्यां च दण्डयेत् ॥"

इति । पूर्वं सर्वत्रैकवचनपरामर्शेऽप्यत्रैव बहुवचनमेकेन राज्ञा कथंचित् दण्डितोऽप्यनेनासौ दण्डनीय इत्येवमर्थम् । तच्च कैमुतिकन्यायेनाह **कात्यायनः**—

"सचिह्नमपि पापं तु पृच्छेत् पापस्य कारणम् ।
[2]तदा दण्डं नियुञ्जीत दोषमाक्षिप्य मूलतः ॥"

इति । राजान्तरेण गुरुतल्पगमनादौ भगादिना चिह्नितमपि, अन्यो राजा पापकारणं पृच्छेदिति वदता चिह्नरहितं पापं पृच्छेदित्युक्तं भवति ॥ ९४ ॥

**यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः ।**
**प्रजास्तत्र विवर्धन्ते नेता चेत् साधु पश्यति ॥ ९५ ॥**
**स्वराष्ट्रे न्यायदण्डः[3] स्याद् भृशदण्डश्च शत्रुषु ।**
**[4]सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ९६ ॥**

यत्र राष्ट्रे दण्डः निर्भयः अप्रतिहतः चरति प्रवर्तते, तत्र प्रजाः विशेषेण वर्धन्ते । कथं स निर्भयः प्रवर्ततामित्यत आह—नेता चेत् साधु पश्यतीति । नेता राजा यदि साधु रागद्वेषौ विहाय युक्तं पश्यति अध्यवस्यति, तदा निर्भयः प्रवर्तत इत्यर्थः । दण्डाधिष्ठातृदेवतास्वरूपनिरूपकश्यामादिविशेषणत्रयेण दण्डस्यापि

1 मान्यान्—च, छ.
2 न वा—च.
3 वृत्तिः—ज.
4 सुहृत्स्वजनस्निग्धेषु—क.

त्रिगुणात्मकत्वमभिहितम् । तत्र श्याम इत्यनेन तामसत्वं, लोहिताक्ष इत्यनेन राजसत्वं, निर्भय इत्यनेन सात्त्विकत्वमभिहितम् । रजस्तमोभ्यामुत्पत्तेः, सत्त्वेन च प्रवृत्तेरिति ॥ ९५ ॥

उक्तदण्डविषये विषयप्रदर्शनेनान्यत्रापवादमाह । स्वराष्ट्रे येऽपराधिनः, तेषु न्यायेन देशकालाद्यौचित्येन दण्डो यस्य । शत्रुषु शत्रुराष्ट्रेषु भृशमुत्कटो विनाशको दण्डो यस्य । तथाह **मनुः**—

" उपरुध्यारिमासीत राष्ट्रं तस्योपपीडयेत् ।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥ "

इति । अस्य क्वचिदपवादमाह । सुहृत्सु बन्धुवर्गेषु, स्निग्धेषु मित्रेषु शत्रुदेशवासिष्वपि, अजिह्मः अकुटिलमतिः । तथा ब्राह्मणेषु तद्देशवासिष्वपि क्षमया सहिष्णुत्वेनान्वितो भवेदिति प्रत्येकं संबन्धः । शत्रुदेशगतेष्वप्येतेषु भृशदण्डो न स्यात्; किमुत स्वदेशगतेष्वित्यर्थः ॥ ९६ ॥

**एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।**
**[1]विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥ ९७ ॥**
**प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः ।**
**स कीर्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥ ९८ ॥**

[2]इति श्रीविष्णुस्मृतौ तृतीयोऽध्यायः

एवम् 'अथ राजधर्माः' इत्यारभ्याभिहितं वृत्तमाचारो यस्य स तथा । तस्य नृपतेः यशो लोके पृथिव्यां विस्तीर्यते विस्तारमायाति । यथाम्भसि तैलबिन्दुः । तत्र दृष्टान्तः—शिलोञ्छेनेति । अपिः इवार्थे । शिलोञ्छेन[3] जीवतो विप्रस्य यथा कोशाद्यभावे वृत्तमात्रेणैव यशोलाभः, तथा यथोक्तदण्डेनाल्पकोशस्यापि नृपतेरिति । कैमुतिकन्यायपरत्वे तूक्तिविरोधः; शिलोञ्छस्य ब्राह्मणमात्रविषयत्वात्; "विप्रो जीवेदनापदि" इत्युपक्रम्य **मानवे** तदभिधानात् । 'अथ राजधर्माः' इति राजपदेनोपक्रम्य 'एवंवृत्तस्य नृपतेः' इत्युपसंहारे नृपतिपदोपादानं तद्राजनियुक्तानामन्येषामपि यथोक्तधर्मप्राप्त्यर्थम्; **मनुना** "राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः" इति नृपमात्रे राजधर्मातिदेशाभिधानात् ॥ ९७ ॥

1 विस्तीर्येत—ठ.
2 इति वैष्णवे धर्मशास्त्रे तृतीयं प्रकरणम्—ज, ठ ; इति वैष्णवे तृतीयोऽध्यायः—क, झ.
3 शाल्यादेर्निपतितपरित्यक्तमञ्जरीग्रहणं शिलम् । एकैकेनोपादानमुञ्छः । तयोः समाहारः शिलोञ्छम् । तेन—added in ग, घ.

यथोक्तधर्मानुष्ठानस्योक्तोपसंहारेण संयोगान्तरमाह । यो राजा प्रजानां लोकानां सुखे सति तेनैव हेतुना सुखवान् संतोषवान्, यश्च तासां प्रजानां दुःखे सति तेनैव हेतुना दुःखवान् अरतिमान् भवति, स लोकेऽस्मिन् जनपदे कीर्तियुक्तः सन् प्रेत्य प्रायणानन्तरं स्वर्गे ब्रह्मलोकादौ महीयते मोदते । एतेन यथोक्त-धर्मजातस्यैहिकामुष्मिकफलकत्वेन सर्वधर्मोत्कृष्टतया अवश्यानुष्ठेयत्वमभिहितम् ॥ ९८ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डिता**त्मजश्री**नन्द-पण्डितकृतौ विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** तृतीयोऽध्यायः

1 श्रीमन्महा to वाराणसीवासि omitted in छ.

## चतुर्थोऽध्यायः

**जालस्थार्कमरीचिगतं रजः [1]त्रसरेणुसंज्ञकम्[2] ॥ १ ॥ [3]तदष्टकं लिक्षा ॥ २ ॥ तत्त्रयं राजसर्षपः ॥ ३ ॥ तत्त्रयं गौरसर्षपः ॥ ४ ॥**

पूर्वाध्याये 'दण्डं दण्ड्येषु दापयेत्' इत्युक्तम् । स च दण्डो द्विविधः—शारीरः अर्थदण्डश्च । यथाह **नारदः**—

"शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मारणान्तः प्रकीर्तितः ॥
काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ॥"

इति । तत्रार्थदण्डे अपेक्षितं परिमाणं चतुर्थाध्यायेनाह । जालं गवाक्षः । तत्र तिष्ठन्तीति जालस्थाः; ते चार्कमरीचयः सूर्यकिरणाः; तद्गतं तत्र परिदृश्यमानं यत् सूक्ष्मं रजः, तत् त्रसरेणुसंज्ञकम्; त्रसरेणुरिति संज्ञा यस्य तत् तथा । तत् सर्वपरिमाणानां पूर्वावधिभूतम् । यथाह **मनुः**—

"जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत् प्रमाणानां त्रसरेणुः स उच्यते ॥"

इति ॥ १ ॥

तेषां त्रसरेणूनाम्, अष्टकम् अष्टानां समुदायः, लिक्षा स्वेदजं यूकाण्डम् ॥ २ ॥

तासां लिक्षाणां त्रयं राजसर्षपो राजिका भवति ॥ ३ ॥

तेषां राजसर्षपाणां त्रयं गौरसर्षपः सिद्धार्थः । गौरपदं न्यूनाधिकपरिमाणानां रक्तादीनां व्युदासाय ॥ ४ ॥

**तत्षट्कं[4] यवः[5] ॥ ५ ॥ तत्त्रयं कृष्णलम् ॥ ६ ॥ तत्पञ्चकं माषः ॥ ७ ॥ तद्द्वादशकमक्षार्धम् ॥ ८ ॥ अक्षार्धमेव सचतुर्माषकं सुवर्णः[6] ॥ ९ ॥ चतुःसुवर्णको निष्कः ॥ १० ॥**

[1] त्र्यसरेणु—ख, घ, च, छ. [2] संज्ञम्—ठ. [3] तत्त्रयम्—ज, ठ.
[4] तत्षष्ठं—ज. [5] यवाः—ज. [6] सुवर्णम्—ठ.

तेषां गौरसर्षपाणां षट्कं षण्णां समुदायः यवः । सोऽपि न सूक्ष्मः, न स्थूलः; किंतु मध्य एव । यथाह **मनुः**—"सर्षपाः षड् यवो मध्यः" इति । गौरसर्षपादीनां न स्थूलसूक्ष्मत्वं स्पष्टम् । यवस्य तु तत् स्पष्टमुपसंहर्तुं शक्यमिति तस्यैवोपादानम् । तदपि स्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतम इति षट्कस्य[1] परिहारेणोपादेयम् ॥ ५ ॥

तेषां यवानां त्रयं त्रयाणां समुदायः, कृष्णलम् । कृष्णं लातीति कृष्णलं गुञ्जा । सापि मध्यैव ॥ ६ ॥

तेषां कृष्णलानां पञ्चकं पञ्चानां समुदायः, माषः ॥ ७ ॥

तेषां माषाणां द्वादशकं द्वादशानां समुदायः, अक्षार्धम् । अक्षार्धमिति च रूढा संज्ञा । न तु "ते षोडशाक्षः कर्षोऽस्त्री" इति **त्रिकाण्डी**परिभाषितषोडशमाषात्मकसुवर्णपर्यायाक्षस्यार्धमिति यौगिकी; द्वादशमाषात्मकत्वेन पादोनसुवर्णत्वात्; चतुर्विंशतिमाषस्याक्षस्याप्रसिद्धेश्च ॥ ८ ॥

अक्षार्धमेव द्वादशमाषकं सचतुर्माषकं चतुर्भिर्माषकैः सहितं षोडशमाषः, सुवर्णः । स एव च बिस्तोऽक्षश्चेत्युच्यते; "सुवर्णबिस्तौ हेम्नोऽक्षे" इति **त्रिकाण्डी**स्मरणात् । **कुरुदेशे** पुनः बिस्तशब्देन पलमुच्यते; "कुरुबिस्तस्तु तत्पले" इति तस्यैव **स्मरणात्** । **बृहस्पतिस्तु** सुवर्णशब्दार्थमन्यथैवाह—

"ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ।
स एव ताम्रिका प्रोक्ता ताश्चतस्रस्तु दानकः ।
ते द्वादश सुवर्णस्तु दीनाराख्यः स एव तु ॥"

इति । **कात्यायनोऽपि**—

"कार्षापणोऽण्डिका ज्ञेया ताश्चतस्रस्तु दानकः ।
ते द्वादश सुवर्णस्तु दीनारश्चित्रकः स्मृतः ॥"

इति ॥ ९ ॥

चत्वारः सुवर्णाः पूर्वोक्ता यस्मिन् स चतुःसुवर्णको निष्क उच्यते । तदेव च पलम्; "पलं सुवर्णाश्चत्वारः" इति **मानवात्** । निष्कपलयोस्तुल्यपरिमाणताप्रत्ययात् लाघवाभिसंधिना च न पृथक् संज्ञाकरणम् । [2]सुवर्णरजतपरिमाणयोरन्तरा सूत्रकरणं चोभयविधस्यापि निष्कस्य चतुःसौवर्णिकत्वाभिधानाय । अत एव **मनुयोगीश्वराभ्यां** रजतपरिमाणेऽपि चतुःसौवर्णिको निष्कः "निष्कं सुवर्णाश्चत्वारः" इत्युक्तम् । यद्यपि "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री" इति **त्रिकाण्डी**स्मरणात् निष्कशब्दो नानार्थः, तथापि दण्डविधावयमेव मुख्य इत्यस्यैव लक्षणाभिधानम् । यथाह **बृहस्पतिः**—

"संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणानां सा दिव्ये नियोज्या विनये तथा ॥"

[1] षट्कस्यापरिगणनमुपादेयम्—घ. [2] सुवर्णरजतपरिमाणोऽपि चतुःसौवर्णिको निष्कः—ख, ज.

इति[1] । **व्यासस्तु** सुवर्णनिष्कयोरुभयोरप्यन्यथा परिमाणमाह—

"पलान्यष्टौ सुवर्णस्तु सुवर्णास्तु चतुर्दश ।
एवं निष्कप्रमाणं तु व्यासेन परिकीर्तितम् ॥"

इति । दीनारपरिमाणं तु **स्मृत्यन्तरे**—

"दीनारो रूपकैरष्टाविंशत्या परिकीर्तितः ।
सुवर्णसप्ततितमो भागो रूपकमुच्यते ॥"

इति । **कात्यायनबृहस्पतिभ्यामष्टाचत्वारिंशत्पणकः** सुवर्णापरपर्यायो दीनारोऽभिहितः । स ताम्रिक एव; "ताम्रकर्षकृता मुद्रा" इति प्रक्रमात् । अनेन तत्रत्यसुवर्णशब्दोऽपि व्याख्यातः । प्रस्तुतस्तु द्वात्रिंशत्कृष्णलकः सौवर्णिको व्यावहारिको निष्को वराहापरपर्यायो निष्पद्यत इत्यलम् ॥ १० ॥

**द्वे कृष्णले समधृते रूप्यमाषकः ॥ ११ ॥ तत्षोडशकं धरणम्[2] ॥ १२ ॥ ताम्रकार्षिकः कार्षापणः ॥ १३ ॥**

इदानीं रजतपरिमाणमाह । पूर्वोक्ते द्वे कृष्णले समधृते तुल्यपरिमाणे भवत एव; तथापि मध्यमपरिमाणे रूप्यसंबन्धी माषको भवति । अयं च राजसर्षपादीनां यवान्तानां त्रयाणामपि शेषः; अन्यथा न्यूनाधिकपरिमाणैस्तैरुत्तरोत्तरपरिमाणकल्पने तेषामपि वैषम्यापत्तेः । यद्यपि स्थूले सूक्ष्मे वा द्वे कृष्णले तुल्यपरिमाणे भवत एव, तथापि मध्यमपरिमाणे ग्राह्ये; **योगीश्वरीये** यवेषु तद्विशेषणस्य सर्वशेषत्वात् । वल्लोऽपि तावानेव; "वल्लः स्यात् कृष्णलद्वयम्" इति **स्मरणात्** । वल्लः सिंबीधान्यविशेषः ॥ ११ ॥

तेषां रूप्यमाषाणां षोडशकं षोडशानां समुदायः धरणम् । तदेव च पुराण इत्युच्यते; "ते षोडश स्याद्धरणं पुराणश्चैव राजतः" इति **मनुस्मरणात्** । राजत इति विशेषणदानात् सौवर्णं धरणं त्वन्यदेव । तदप्याह **स** एव—"पलं सुवर्णाश्चत्वारः पलानि धरणं दश" इति । राजतैर्दशभिर्धरणैः राजतशतमानम्; "धरणानि दश ज्ञेयः शतमानस्तु राजतः" इति **मनुस्मरणात्** । शतमानमपि निष्कपलयोस्तुल्यपरिमाणमेव; "शतमानं च दशभिर्धरणैः पलमेव च । निष्कं सुवर्णाश्चत्वारः" इति **योगीश्वरस्मरणात्** । राजत इति विशेषोपादानात् सौवर्णः शतमानः सौवर्णैरेव दशभिर्धरणैर्भवति; "शतमानं [भवति] येन हिरण्यं मिमते" इति **आपस्तम्बस्मरणात्** । **विष्णुगुप्तस्तु** रजतपरिमाणमन्यथैवाह—"अष्टाशीतिर्गौरसर्षपा रूप्यमाषः । ते षोडश धरणम् । निष्पावा विंशतिर्वा रूप्यम् । दशधरणिकं तत्पलानां शतं तुला । तत्तुलाविंशतिर्भारः" इति । निष्पावो राजमाषः । **त्रिकाण्ड्यपि**—

[1] बृहत्पराशरस्तु अष्टादशभिर्माषैः कर्षानाह—added in च, ट.
[2] धरणकः—ज; धारणम्—ख, ढ.

" तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।
आचितो दश भाराः स्युः शकटो भार आचितः ॥"

इति ॥ १२ ॥

कर्षः षोडशमाषः पलचतुर्थोऽशः ; " ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्" इति **स्मरणात्** । कर्षेणोन्मितः कार्षिकः । ताम्रश्चासौ कार्षिकश्चेति ताम्रकार्षिकः । कर्षपरिमितताम्रनाणकः कार्षापण इत्यर्थः । इष्टापूर्तमितिवदाकारश्छान्दसः । यथाह **बृहस्पतिः**—" ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः" इति । स कार्षापणस्तु ताम्रिका, ताम्रिकः, अण्डिका, पणश्चेत्युच्यते ; " कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः" इति **मनुस्मरणात्** ; " स एव ताम्रिका प्रोक्ता ताश्चतस्रस्तु दानकः" इति **बृहस्पतिस्मरणात्** ; " कार्षापणोऽण्डिका ज्ञेया" इति **कात्यायनस्मरणात्** । यत्तु " पणोऽशीति-कपर्दकः" इति, तदुपचारात् तन्मूल्यमेवाभिधत्ते । षोडशपणः कार्षापणोऽपरोऽप्यस्तीत्याह **कात्यायनः**—

" कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते ।
पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु ॥"

इति । षोडशपणमूल्यरजतनिर्मितः षोडशपण एव वा दिग्भेदेन व्यवस्थित इति । यत्तु " माषो विंशतमो भागः पणस्य परिकीर्तितः" इति, तत् पञ्चसुवर्णपलपक्षे ; " पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तिताः" इति **योगिस्मरणात्** । एवं च यद्यपि सुवर्णाक्षबिस्तकर्षपणकार्षापणशब्दाः समानार्थाः, तथापि कर्षपणकार्षापणशब्दाः ताम्रविषया एव ; सुवर्णाक्षबिस्तशब्दाः सुवर्णविषया एवेति व्यवस्था । **बृहत्पराशरस्तु** अष्टादशभिर्माषैः कर्षमाह—

" पञ्चगुञ्जो भवेन्माषः कर्षोऽष्टादशभिश्च तैः ।
तैश्चतुर्भिः पलं प्रोक्तं दाने माने च पेशसः ॥"

इति । पेशसः सुवर्णस्य[1] । एवं द्रव्यान्तरेष्वपीदं परिमाणमूहनीयम् ॥ १३ ॥

**पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।**
**मध्यमः पञ्च विज्ञेयः [2]सहस्रं त्वेष चोत्तमः ॥ १४ ॥**

## इति [3]श्रीविष्णुस्मृतौ चतुर्थोऽध्यायः

पणानां कार्षापणानां सार्धे द्वे शते प्रथमसाहसः । पणानां पञ्च शतानि मध्यमसाहसः । पणानां सहस्रमुत्तमसाहसो दण्डः । [4]इदममतिपूर्वापराधे । [5]मतिपूर्वापराधे तु **योगीश्वरोक्तम्**—

[1] हेम्नः—च, ट.
[2] सहस्रत्वेन—ङ.
[3] वैष्णवे चतुर्थोऽध्यायः—क, ग ; वैष्णवे धर्मशास्त्रे चतुर्थं प्रकरणम्—ज, ठ.
[4] इदमसति—ख, ग, ट.
[5] सति—ख, ग, ठ.

"साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥"

इति द्रष्टव्यम् । अत्र विशेषो **नारदीयः**—

"चतुर्विंशावरः पूर्वः परः षण्णवतिर्भवेत् ।
शतानि पञ्च चतुरो मध्यमो द्विशतावरः ॥
साहस्रस्तूत्तमो ज्ञेयः स तु पञ्चशतावरः ।
त्रिविधः साहसेष्वेवं दण्ड उक्तः स्वयंभुवा ॥"

इति । **कात्यायनः**—

"सुवर्णशतमेकं तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्धं तु विवासार्हस्तदर्धकम् ॥"

इति । **मनुः**—

"कार्षापणं भवेद् दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राजा भवेद् दण्ड्यः सहस्रमिति धारणा ॥"

इति । **कात्यायनः**—

"माषः पादो द्विपादो वा दण्डो यत्र प्रकल्पितः ।
अनिर्दिष्टं तु सौवर्णं माषकं तत्र कल्पयेत् ॥
यत्रोक्तो माषको दण्डो राजतं तत्र कल्पयेत् ।
मध्यमानं तु रौप्यं स्यादधमानं तु ताम्रकम् ॥"

इत्याद्यवधेयम् ॥ १४ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय**श्रीकेशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि**श्रीरामपण्डिता**त्मज**श्रीनन्दपण्डित**कृतौ **विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** चतुर्थोऽध्यायः

[1] श्रीमन्महाराज to वाराणसीवासि omitted in छ.

## पञ्चमोऽध्यायः

**अथ महापातकिनो ब्राह्मणवर्जं[1] सर्वे[2] वध्याः ॥ १ ॥ न शारीरो ब्राह्मणस्य[3] दण्डः ॥ २ ॥**

एवं पूर्वाध्यायेनार्थदण्डं निरूप्य शारीरदण्डं निरूपयन्नेव तदुभयविनियोगमष्टादशस्वपि व्यवहारपदेषु पञ्चमाध्यायेनाह । तत्र शारीरो दण्डो दशधा ; " शारीरो दशधा प्रोक्तः " इति **स्मरणात्** । [4]नायं नियमः ; बन्धनाङ्ककरणकर्मकरणबन्धनागारप्रवेशनताडनमुण्डनादीनामन्येषामपि दर्शनात् । तत्र नवविधमाह **मनुः**—

" दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् ।
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥ "

इति । तथा—

" शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे वाभिशस्ताङ्कः प्रयाणं गर्दभेन तु ॥ "

इत्यादि तत्र तत्रावधेयम् । तत्राष्टादशानां व्यवहारपदानामुपजीव्योपजीवकभावाद्यभावात् पाठक्रमस्यातन्त्रत्वेन पूर्वं साहसदण्डोपक्रमाच्च साहस एव तावत् शारीरदण्डविनियोगमुपक्रमते । तल्लक्षणमाह **नारदः**—

" सहसा क्रियते कर्म यत् किंचिद्बलदर्पितैः ।
तत् साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥
तत् पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
फलमूलोदकादीनां [5]क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्दाद्यैः[6] प्रथमं साहसं स्मृतम् ॥

[1] वर्ज्यं—ख to घ.
[2] सर्वे omitted in ज, ठ.
[3] ब्राह्मणदण्डः—ज, ठ.
[4] नायं to दर्शनात् omitted in ख, घ.
[5] क्षेत्रोपकरणस्य to पानानां omitted in ख, झ.
[6] मर्दादौ—ठ.

वासःपश्वन्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥
तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते ।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः ॥"

इति । तत्रोत्तमसाहसे तमाह । अथेति दण्डविनियोगाधिकारः । महापातकिनो ब्रह्महादयो वक्ष्यमाणाश्चत्वारः । तेषु ब्राह्मणं वर्जयित्वा सर्वे वध्याः । वधोऽत्र प्राणवियोगफलको व्यापारः । इदं च प्रायश्चित्ताकरणे ;

"चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् ।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥"

इति **मानवात्** । चतुर्णामेतेषां ब्राह्मणादीनां शारीरो दण्डो वधः । धनदण्डः सर्वस्वापहारः । एतदुभयसमुच्चयस्तु "क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणं च" इति **बोधायन**स्मरणात् । ब्राह्मणस्य तु सर्वस्वापहार एवं । न वधः ; "महापातकयुक्तोऽपि न विप्रो वधमर्हति" इति **बृहस्पति**स्मरणात् । महापातकिपदेनैव सिद्धौ सर्वपदोपादानं महापातकसमेष्वपि वधप्राप्त्यर्थम् । अत एव **याज्ञवल्क्यः**—"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि" [1]इत्युपक्रम्य "छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि" इत्याह । एवमन्यत्राप्युदाहार्यम् । इदं च कामतो महापातकेषु ज्ञेयम् । अकामतस्तूत्तमसाहसो दण्डः । यथाह **मनुः**—

"इतरे कृतवन्तस्तु पापान्येतान्यकामतः ।
सर्वस्वहारमर्हन्ति सकामास्तु प्रवासनम् ॥"

इति । इतरे ; विप्रातिरिक्ताः । प्रवासनम् ; वधः । अयमर्थः — क्षत्रियादीनां कामतो महापातकेषु प्रायश्चित्ताकरणे वधसर्वस्वापहारौ कार्यौ । प्रायश्चित्तकरणे तु उत्तमसाहसो दण्ड एव । तेषामेवाकामतस्तेषु प्रायश्चित्ताकरणे सर्वस्वापहारः । तत्करणे तु मध्यमसाहसो दण्ड इति ॥ १ ॥

ब्राह्मणवर्जमित्यत्र हेतुमाह । शारीरः शरीरसंबन्धी अङ्गच्छेदादिरपि यतो न ब्राह्मणस्य दण्डः ; "न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः" इति **हारीत**स्मरणात् ॥ २ ॥

[1] इत्याद्युपक्रम्य—घ, ट.

**स्वदेशात् ब्राह्मणं कृताङ्कं विवासयेत् ॥ ३ ॥ तस्य च ब्रह्महत्यायामशिरस्कं पुरुषं ललाटे कुर्यात् ॥ ४ ॥ सुराध्वजं सुरापाने ॥ ५ ॥ [1]श्वपदं स्तेये ॥ ६ ॥ भगं गुरुतल्पगमने ॥ ७ ॥**

कथं तर्हि पातके तस्य दण्ड इत्यत आह। स्वदेशात् स्वाज्ञाधीनात् राष्ट्रात्, वक्ष्यमाणः कृतः अङ्कः चिह्नं यस्य, तथाविधं ब्राह्मणं विवासयेत् निष्कासयेत्। यद्वा वाससो विगतः विवासाः। विवाससं करोतीति णिचि कृते "णाविष्ठवत् प्रातिपदिकस्य" इति टिलोपे रूपम्। नग्नीकुर्यादित्यर्थः। अथवा वसत्यस्मिन्निति वासः गृहम्। विवासयेत्; भग्नगृहं कुर्यादिति। एषां चानुबन्धाद्यपेक्षया व्याससमासौ योज्यौ ॥ ३ ॥

महापातकविशेषेणाङ्कव्यवस्थामाह। तस्य ब्राह्मणस्य। ब्रह्महत्यायाम्; ब्रह्मणो ब्राह्मणस्य हननं ब्रह्महत्या; तस्यां जातायाम्। अशिरस्कं शिरोहीनं पुरुषं पुरुषाकृतिमङ्कं ललाटे कुर्यात्। चकारात् शिरोमुण्डनादि च। यथाह **यमः**—

"ब्राह्मणस्यापराधेषु चतुर्ष्वपि विधीयते।
शिरसो मुण्डनं दण्डं पुरान्निर्वासनं तथा ॥
प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च।
ललाटे चाङ्ककरणं कुर्याद्राजा यथाविधि ॥"

इति ॥ ४ ॥

सुरायाः त्रिविधाया अपि पाने, सुराध्वजं शौण्डिकद्वारस्थितध्वजाकृतिमङ्कम् ॥ ५ ॥

श्वपदाकारमङ्कं स्तेये सुवर्णस्तेये ॥ ६ ॥

गुरुतल्पं पितृभार्या। तद्गमने भगं भगाकारमङ्कं ब्राह्मणस्य ललाटे कुर्यादिति प्रत्येकं संबध्यते। अङ्कं च तत्तदाकृतिना तप्तायसेन कार्यम्। यथाह **बोधायनः**—"तप्तायसेन ललाटेऽङ्कयित्वा विषयान्तान्निर्वासनम्" इति। यद्यपि संसर्गिणामङ्कविशेषो नोक्तः, तथापि येन महापातकिना यस्य संसर्गः, तदङ्केनैवाङ्कयेत्; "यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते" इति कर्मविपाकसाम्यलिङ्गात्; "स तस्यैव व्रतं कुर्यात्" इति प्रायश्चित्तसाम्यलिङ्गाच्च। इदमपि प्रायश्चित्ताकरणे। तत्करणे तूत्तमसाहसो दण्ड एव; नाङ्कनम्। यथाह **मनुः**—

"प्रायश्चित्तं तु कुर्वाणास्त्रयो वर्णा यथोदितम्।
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥"

[1] श्वापदं—ठ.

इति । यत्तु प्रायश्चित्ताकरणेऽङ्कनं क्षत्रियादीनामप्यत्र व्यतिरेकेणोच्यते, तत् ब्राह्मणसमानधर्मसवनस्थ-क्षत्रियादिविषयमवधेयम्; इतरेषां वधविधानात्, अङ्कननिषेधाच्च[1] । यथाह **उशनाः**—

"ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते ।
इतरेषां तु वर्णानामङ्कनं [2]नात्र कारयेत् ॥
महापातकयुक्तांश्च वधदण्डेन शातयेत् ॥"

इति । एतदपि कामतो महापातके ज्ञेयम् । अकामतस्तु **मनुः**—

"आगःसु ब्राह्मणस्यैषु कार्यो मध्यमसाहसः ।
विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ॥"

इति । आगःसु महापातकेषु प्रायश्चित्तकरणाकरणयोर्यथाक्रमं मध्यमसाहससद्रव्यविवासने द्रष्टव्ये ॥ ७ ॥

**अन्यत्रापि [3]वध्यकर्मणि तिष्ठन्तं समग्रधनमक्षतं विवासयेत् ॥ ८ ॥ कूटशासनकर्तॄंश्च राजा हन्यात् ॥ ९ ॥ कूटलेख्यकारांश्च ॥ १० ॥**

तर्हि अपराधान्तरे ब्राह्मणस्य कथमित्यत आह । वध्यं वधार्हम्; वधनिमित्तमिति यावत् । तादृशे अन्यस्मिन्नपि कर्मणि वक्ष्यमाणे कूटशासनकरणादौ वर्तमानं ब्राह्मणं समग्रमनपहृतं धनं यस्य तादृशम्; अक्षतम्; अकृतकरच्छेदादिक्षतं विवासयेत् निष्कासयेत् । समग्रधनत्वश्रवणात् नग्नीकरणाद्यसंभवः । यथाह **मनुः**—

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् ।
राष्ट्रादेनं बहिः कुर्यात् समस्तधनमक्षतम् ॥"

इति । यत्तु **आपस्तम्बेनोक्तम्**—"वस्त्रनिरोधो ब्राह्मणस्य" इति, तत् निर्वासनकाले वस्त्रादिनावरोधपरम्; "अक्षतो ब्राह्मणो व्रजेत्" इति **मनुस्मरणात्** । तिष्ठन्तमिति शत्रा वर्तमानक्रियस्यैवायं दण्डः; न भूतभाविक्रियस्येति गम्यते;

"आरम्भे प्रथमं दण्ड्यः प्रवृत्तौ मध्यमः स्मृतः ।
यस्य यो विहितो दण्डः स पर्याप्तस्य तद्भवेत् ॥"

इति **कात्यायनेन** तत्र दण्डान्तराभिधानात् ॥ ८ ॥

[1] प्रतिषेधाच्च—घ.
[2] नोपयुज्यते—घ.
[3] वध्येऽपि कर्मणि—ज; वध्ये कर्मणि—झ, ठ.

वधार्हकर्माण्याह । शासनं 'पटे ताम्रपट्टे वा लिखितम्' इत्यादिनोक्तम् । तत् ये कूटं राजाज्ञामन्तरेण स्वेच्छाकल्पितं कुर्वन्ति, तान् अमात्यादीन् राजा हन्यात् । चकारात् प्रकृतिभेदकांश्च । यथाह **मनुः**—

"कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद् द्विट्सेविनस्तथा ॥"

इति । यत्तु **योगीश्वरेणोक्तम्**—

"तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥"

इति, तत् ब्राह्मणविषयम्; तस्य वधनिषेधात् । राजपदं तस्य हननावश्यकताबोधनाय । यथाह **मनुः**—

"अमात्यः प्राड्विवाको वा यः कुर्यात् कार्यमन्यथा ।
तत् स्वयं नृपतिः कुर्यात् तं सहस्रं च दण्डयेत् ॥"

इति ॥ ९ ॥

राजशासनातिरिक्तमपि व्यावहारिकं लेख्यम् ऋणादिपत्रं[1] कूटं कृत्रिमं ये कुर्वन्ति, तानपि हन्यात् । यथाह **कात्यायनः**—

"प्रमाणेन तु कूटेन [2]मुद्रया वापि कूटया ।
कार्यं तु साधयेद्यो वै स दण्ड्यो दममुत्तमम् ॥"

इति । स्थावरे विशेषमाह **स** एव—

"स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
स सम्यग् भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः[3] ॥"

इति । चकारात् कूटसाक्षिकारान् कूटसाक्षिणश्च ;

"कूटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥"

इति **मनुस्मरणात्** । प्रवासयेत् मारयेत् । यत्तु **योगीश्वरेणोक्तम्**—

"पृथक् पृथग् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादद्द्विगुणं दण्डं विवास्यो ब्राह्मणस्तथा ॥"

इति द्विगुणदण्डवचनं, तत् अल्पसाक्षिकूटविषयम् ॥ १० ॥

1 यन्त्रं—ख, ग, घ.  2 तुलया—च.  3 पण्यविवर्जितः—ख, ग, घ.

**[1]गरदाग्निदप्रसह्यतस्करान् [2]स्त्रीबालपुरुषघातिनश्च ॥ ११ ॥ ये च धान्यं दशभ्यः कुम्भेभ्योऽधिकमपहरेयुः ॥ १२ ॥ धरिममेयानां शतादभ्यधिकम् ॥ १३ ॥**

गरं ददातीति गरदः; विषप्रयोक्ता। अग्निं ददातीति अग्निदः; परगृहदाहकृत्। प्रसह्य बलात्कारेण तस्कराः परस्वापहारिणः। स्त्रीबालपुरुषाः जातिमात्रेण; तान् ये घ्नन्ति ते तद्घातिनः। तान् हन्यात्;

"व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्।
प्राणोपरोधि यच्चान्यदुक्तमं साहसं स्मृतम्॥"

इति **नारदे**नैषामुत्तमसाहसत्वमभिधाय,

"वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः॥"

इति [3]उत्तमसाहसवधाभिधानात्। स चानुबन्धाद्यपेक्षया योजनीयः। यथाह **योगीश्वरः**—

"क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥
शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः।
उत्तमो वाधमो वापि पुरुषस्त्रीप्रमापणे॥"

इति। चकारात् तादृशस्त्रीणामपीत्याह **स** एव—

"विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम्।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्॥"

इति॥ ११॥

धान्यं व्रीहियवादि। तत् ये दशभ्यः कुम्भेभ्यः अधिकमपहरेयुः, तानपि हन्यात्। विंशतिद्रोणः कुम्भः; "द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते" इति **भविष्यत्पुराणात्**। कचित्तु "कुम्भो द्रोणद्वयं ज्ञेयः खारी द्रोणास्तु षोडश" इत्युक्तम्; तत् देशकालहर्तृह्रियमाणस्वामिगुणापेक्षया योज्यम्। यथाह **मनुः**—

"धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः।
शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम्॥"

इति। दशकुम्भन्यूने तु वक्ष्यति॥ १२॥

[1] गराग्निद—ठ. [2] आबाल—ट. [3] उत्तमसाहस omitted in घ.

धरिमेन तुलया मीयन्त इति धरिममेयानि सुवर्णरजतादीनि । तेषां ये माषशतादभ्यधिकमपहरेयुः, तान् हन्यात् । अभिरभिव्याप्त्या आधिक्यस्योत्तरावधिशून्यतां गमयति । यद्यपि धरिममेयानि गुडादीन्यपि भवन्ति, तथापि **मानवे** सुवर्णादिभिरेव तेषां विशेषणान्नान्यसंभवः । यथाह **मनुः**—

"तथा धरिममेयानां शतादभ्यधिके वधः ।
सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥"

इति । आदिशब्दात् रत्नाद्युपसंग्रहः ;

"सुवर्णरजतादीनामुत्तमानां च वाससाम् ।
रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥"

इति **नारद**स्मरणात् । शतमत्र माषाणामेव ; **मानवे** "स दण्डं प्राप्नुयान्माषम्" इति माषस्यैवोपक्रमात् । शतन्यूने तु वक्ष्यति । यद्यप्येतत् स्तेयदण्डप्रस्तावेऽभिधेयम्, तथापि साहसेऽप्यन्तर्भवतीति नात्रासंगतिः॥१३॥

**ये [1]चाकुलीना राज्यमभिकामयेयुः ॥ १४ ॥ सेतुभेदकांश्च[2] ॥ १५ ॥ प्रसह्य तस्कराणां चावकाशभक्तप्रदांश्च ॥ १६ ॥ अन्यत्र राजाशक्तेः ॥ १७ ॥ स्त्रियमशक्तभर्तृकां तदतिक्रमणीं च ॥ १८ ॥**

अकुलीनाः अराजबीजिनो दासीपुत्रादयो वा ये राज्यमभिकामयेयुः, तानपि हन्यात् । अभिरत्र कात्स्न्यार्थः । तेन राज्यैकदेशकामनायां न वधः, किंतु उत्तमसाहसो दण्ड एवेति गम्यते । चकारात् ये राजक्रीडाद्यनुकुर्युः । यथाह **कात्यायनः**—

"राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः ।
अप्रियं चास्य वक्तारो वधं तेषां प्रकल्पयेत् ॥"

इति । राजासनाद्यारोहणे तु मध्यमसाहसो दण्डः । यथाह **योगीश्वरः**—"राजयानासनारोढुर्दण्डो मध्यमसाहसः" इति । कोशापहारे तु वध एव । यथाह **मनुः**—

"राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थितान् ।
घातयेद्विविधैर्दण्डैर्हरेत् सर्वस्वमेव च ॥"

इति ॥ १४ ॥

सेतुः; जलप्रवाहबन्धः । स च द्विविधः—खेयो बन्ध्यश्च । यथाह **नारदः**—

"सेतुस्तु द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्तनात् खेयो बन्ध्यः स्यात् तन्निवर्तनात् ॥"

1 वा—झ.

2 भेदकृतश्च—ज, झ, ठ.

इति । तस्य भेदकाः भेत्तारो ये, तानपि हन्यात्; यदि न प्रतिसंस्कुर्युः । तत्संस्कारे तु उत्तमसाहसो दण्ड एव । यथाह **मनुः**—

"तडागभेदकं हन्यादप्सु शुद्धवधेन वा ।
तद्वापि प्रतिसंस्कुर्याद् दाप्यश्चोत्तमसाहसम् ॥"

इति । तडागभेदः सेतुभेदादिना । सेतुभेदकरीं तु स्त्रियमपि हन्यात् । यथाह **योगीश्वरः**—

"विप्रदुष्टां स्त्रियं चैव [1]पुरुषघ्नीमगर्भिणीम् ।
सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥"

इति । चकारात कोष्ठागारादिभेदकांश्च । यथाह **मनुः**—

"कोष्ठागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥"

इति । कोष्ठं वस्तुसमूहः ॥ १५ ॥

ये प्रसह्य तस्कराः बलावष्टम्भेन चौराः, तेषामवकाशं निवासस्थानं भक्तमशनं च, प्रकर्षेण ज्ञात्वा ये ददति, तांश्च हन्यात् । यथाह **मनुः**—

"ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥"

इति । चकारात् प्रसह्य हन्तॄणां च । यथाह **योगीश्वरः**—

"भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।
दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः ॥"

इति ॥ १६ ॥

उक्तार्थस्य पर्युदासमाह । यदुक्तं चौरावकाशभक्तप्रदान् हन्यादिति, तत् राजाशक्तेरन्यत्र; राजाशक्तिं विना । राज्ञश्चेत् चौरनिवारणे न शक्तिः, तदा ग्रामवासिनामात्मत्राणाय चौरादिरक्षणेऽपि न वध इत्यर्थः; "सर्वत एवात्मानं गोपायेत्" इत्यात्मरक्षणस्य यथाकथंचिदावश्यकत्वात् ॥ १७ ॥

भरणादिसमर्थोऽप्यशक्तो निरोद्धुमन्यायेभ्यो भर्ता यस्यास्ताम्; भर्तारमतिक्रमितुं परपुरुषोपभोगलम्पटतया शीलमस्याः; तां च स्त्रियं हन्यात् । यथाह **मनुः**—

"भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिबलदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥"

[1] पुरुषघ्नीं च गर्भिणीम्—ख, घ, च, छ.

इति । चकारात् वृषलादिगामिनीं च । तथाच **यमः**—

" वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् ॥
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥ "

इति । **बृहस्पतिः**—

" गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत् तत्र सा दण्ड्या न तस्य हि दमः स्मृतः ।
छिन्ननासोष्ठकर्णां तु परिभ्रम्याप्सु मज्जयेत् ॥ "

इति ॥ १८ ॥

**हीनवर्णोऽधिकवर्णस्य येनाङ्गेनापराधं कुर्यात् तदेवास्य [1]शातयेत् ॥ १९ ॥ एकासनोपवेशी कट्यां कृताङ्को निर्वास्यः ॥ २० ॥ निष्ठीव्यौष्ठद्वयविहीनः [2]कार्यः ॥ २१ ॥ अवशर्धयिता च[3] गुदहीनः ॥ २२ ॥**

एवं साहसे दण्डो निरूपितः । इदानीं दण्डपारुष्ये तं प्रस्तौति । तल्लक्षणमाह **नारदः**—

" परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥ "

इति । तदपि त्रिविधम्—

" तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् ।
[4]अवगोरणनिःशङ्कपातनक्षतदंशनैः ॥
हीनमध्योत्तमानां च द्रव्याणां समतिक्रमात् ।
त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनम् ॥ "

इति । तत्रोत्तमवर्णातिक्रमणे दण्डमाह । हीनवर्णः क्षत्रियादिः अधिकवर्णस्य ब्राह्मणादेः येनाङ्गेन हस्तपादादिना अपराधं प्रहारादि कुर्यात्, तदेवाङ्गमस्य हीनवर्णस्य शातयेत् छिन्द्यात् । यथाह **मनुः**—

" येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥ "

[1] शासयेत्—क, झ. [2] कार्यः omitted in झ. [3] च omitted in च, ख.
[4] अवगूरण—ग, छ, ट ; अवगूढन—ख, च.

इति । अन्त्यजग्रहणं क्षत्रियाद्युपलक्षणार्थम् । यथाह **योगीश्वरः**—" विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु " इति । वैश्यस्यापि क्षत्रियापकारिणः शूद्रस्य च वैश्यापकारिणोऽप्ययमेव दण्डः । सामान्यसूत्रमनुक्तविषयेष्वेवंविधदण्डप्राप्त्यर्थम् । विशेषसूत्राण्यङ्गविशेषनियमार्थानीति नान्यतरानर्थक्यम् ॥ १९ ॥

हीनवर्णोऽधिकवर्णस्येति यावत्समवर्णाक्रोशनमनुवर्तते । स तस्यैकासनोपवेशनशीलः कट्यां स्फिचि तप्तायसेनाङ्कितो राष्ट्रान्निष्कासनीयः । यथाह **मनुः**—

" सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वाप्यस्य कर्तयेत् ॥ "

इति । यत्तु **आपस्तम्बेन** " वाचि पथि शय्यायामासने समीभवतो दण्डताडनम् " इति दण्डेन ताडनमुक्तम् , तत् सकृत्कृते द्रष्टव्यम् ॥ २० ॥

हीनवर्णोऽधिकवर्णस्योपरि दर्पात् निष्ठीव्य थूत्कारं कृत्वा, ओष्ठद्वयेन विहीनः कार्यः; ओष्ठद्वयं छेत्तव्यमित्यर्थः । यथाह **मनुः**—" अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः " इति ॥ २१ ॥

हीनवर्णोऽधिकवर्णस्योपरि दर्पादवशर्धयिता पायुवायूत्स्रष्टा, गुदहीनः कार्यः । चकारात् अवमूत्रयिता च मेढ्रहीनः । यथाह **मनुः**—" अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् " इति ॥ २२ ॥

**आक्रोशयिता च विजिह्वः ॥ २३ ॥ दर्पेण धर्मोपदेशकारिणां राजा तप्तमासेचयेत् तैलमास्ये ॥ २४ ॥ द्रोहेण च नामजातिग्रहणे दशाङ्गुलोऽस्य शङ्कुर्निखेयः ॥ २५ ॥**

एवं दण्डपारुष्ये दण्डोऽभिहितः । इदानीं वाक्पारुष्ये तं प्रस्तौति । तल्लक्षणमाह **नारदः**—

" देशजातिकुलादीनामाक्रोशान्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥ "

इति । तदपि त्रिविधम्—

" निष्ठुराश्लीलतीव्रत्वात् तदपि त्रिविधं स्मृतम् ।
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥ "

इति । तत्र तीव्राक्रोशे दण्डमाह । हीनवर्णोऽधिकवर्णं जातिभ्रंशादिभिराक्रोशयिता, विजिह्वो जिह्वारहितः कार्यः । स्वार्थे णिजयम् ; कर्तृप्रयोजकयोस्तुल्यदण्डानुपपत्तेः । यथाह **मनुः**—

" एकजातिर्द्विजातींस्तु वाचा दारुणयाक्षिपन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥ "

इति। एकजातिग्रहणं क्षत्रियाद्युपलक्षणम्; जघन्यज इति हेतुसाम्यात्; "त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः" इति योगिस्मरणात्। यत्तु—

"शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति।
वैश्योऽध्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति॥"

इति, तदत्यन्तसगुणक्षत्रियवैश्यविषयम्। चकारात् वेदोदाहर्ता शूद्रश्च,

"धर्मोपदेशकर्ता च वेदोदाहरणान्वितः।
आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते॥"

इति बार्हस्पत्यात्॥ २३॥

दर्पेण विद्यागर्वेणोत्तमवर्णस्य धर्मोपदेशकारिणां हीनवर्णानामास्ये राजा तप्तं तैलमासेचयेत् प्रक्षेपयेत्। यथाह मनुः—

"धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः।
तप्तमासेचयेत् तैलं वक्त्रे श्रोत्रे च पार्थिवः॥"

इति। श्रोत्रे; श्रोतुरिति शेषः; "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणम्" इति गौतमीयात्। एतच्च दर्पेण साक्षात् श्रवणे। ब्राह्मणमन्तरा कृत्वा श्रवणे तु न दोषः। दर्पेणेति वचनात् ब्राह्मणाभ्यर्थितयोः क्षत्रियवैश्ययोः [1]अध्यापने न दोष इत्युक्तं प्राक्॥ २४॥

द्रोहेणेर्ष्यातिशयेन[2] 'अरे डित्थ, अरे विप्र' इत्याद्यधिकवर्णनामजातिग्रहणे अस्य हीनवर्णस्य मुखे ज्वलन् अयोमयः दशाङ्गुलः शङ्कुर्निखेयो विधेयः। यथाह मनुः—

"नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः।
निखेयोऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः॥"

इति॥ २५॥

**श्रुतदेशजातिकर्मणामन्यथावादी कार्षापणशतद्वयं दण्ड्यः॥ २६॥ काणखञ्जादीनां [3]तथ्यवाद्यपि कार्षापणद्वयम्[4]॥ २७॥ गुरूनाक्षिपन् कार्षापणशतद्वयम्[5]॥ २८॥**

एवं शारीरदण्डविषयमभिधाय इदानीमर्थदण्डविषयमाह। श्रुतम्; वेदादिविद्या। देशः; मध्यदेशादिः। जातिः; ब्राह्मण्यादिः। कर्म; संध्यास्नानादिः। बहुवचनात् शारीरमुपनयनादिसंस्कारकर्म।

[1] अध्ययने—ट.
[2] ईर्ष्यातिशयेन to अधिकवर्ण omitted in ख, घ, च.
[3] तथा—ख, घ, च.
[4] शतद्वयम्—झ; शतम्—क, ठ.
[5] शतम्—झ.

तेषामधिकवर्णनिष्ठानाम् ; अन्यथा अपकर्षे, द्रोहेण यो वदति हीनवर्णः, स कार्षापणानां शतद्वयं दण्ड्यः। यथाह **मनुः**—

"श्रुतं देशं च जातिं च कर्म शारीरमेव च।
वितथेन ब्रुवन् दर्पाद् दाप्यः स्याद् द्विशतं दमम् ॥"

इति ॥ २६ ॥

एकाक्षिविकलः काणः। एकपादविकलः खञ्जः। आदिशब्देन पङ्ग्वादीनां ग्रहणम्। तेषामुत्तमवर्णानां [1]तथ्यवाद्यपि सत्यदोषवक्तापि हीनवर्णः कार्षापणद्वयं दण्ड्यः। असत्यवचने तु **शङ्खलिखितौ**—"शुक्तवाक्याभिधाने कार्षापणत्रयम्" इति। अयमपिशब्दार्थः। इदमत्यन्तनिर्गुणोत्तमवर्णक्षेपविषयम्। सगुणसमवर्णक्षेपे तु **योगीश्वरः**—

"सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम्।
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् ॥"

इति। अत्यन्तनिर्गुणहीनवर्णक्षेपे तु **मनुः**—

"काणं वाप्यथवा खञ्जमन्धं वापि तथाविधम्।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम् ॥"

इति ॥ २७ ॥

गुरून् मात्रादीनधिक्षिपन् पुत्रादिः कार्षापणशतद्वयं दण्ड्यः। यथाह **मनुः**—

"मातरं पितरं जायां भ्रातरं तनयं गुरुम्।
आक्षारयन् शतं दाप्यः पन्थानं चाददद् गुरोः ॥"

इति। इदं च सापराधमात्रादिविषयं निरपराधविप्रादिविषयं च ज्ञेयम्। निरपराधाक्रोशे तु **शङ्खलिखितौ**—"तथाधिकृतान् विप्रान् गुरूंश्च निर्वासनं मुण्डनं ताडनं वा गोमयानुलेपनं खरारोहणं दर्पहरणं वाग्दण्डो वा" इति। क्रोशव इत्यनुवर्तते ॥ २८ ॥

**परस्य पतनीयाक्षेपे कृते [2]तूत्तमसाहसम् ॥ २९ ॥ उपपातकयुक्ते मध्यमम् ॥ ३० ॥**

पतनीयं महापातकादि। तद्युक्ते आक्षेपे 'ब्रह्महा त्वमसि' इत्यादौ हीनवर्णेनोत्तमवर्णस्य कृते तु उत्तमसाहसं दण्ड्यः। सोऽयं धनदण्डः पूर्वोक्तेन जिह्वाच्छेदेन विकल्प्यते, समानविषयत्वात्। कृते

[1] तथा—घ.  [2] तु omitted in च.

त्वित्यनेनासति दोष इति ज्ञेयम्; दण्डगुरुत्वात्। सवर्णाक्षेपे तु **योगीश्वरः**—"पतनीयकृते क्षेपे दण्डो मध्यमसाहसः" इति ॥ २९ ॥

उपपातकं गोवधादि। तद्युक्ते आक्षेपे 'गोघ्नस्त्वमसि' इत्यादौ हीनवर्णेनोत्तमवर्णस्य कृते, स मध्यमसाहसं दण्ड्यः। समानाक्षेपे तु **योगीश्वरः**—"उपपातकयुक्तोऽपि दाप्यः प्रथमसाहसम्" इति। एतदुभयातिरिक्तपापाहिते क्षेपे प्रथमसाहसं दण्ड्यः। यथाह **व्यासः**—

"पापोपपापवक्तारौ महापातकशंसकाः।
आद्यमध्योत्तमान् दण्डान् दद्युस्त्वेते यथाक्रमम्॥"

इति ॥ ३० ॥

**त्रैविद्यवृद्धानां क्षेपे[1] जातिपूगानां च ॥ ३१ ॥ ग्रामदेशयोश्च[2] प्रथमसाहसम्[3] ॥ ३२ ॥ [4]न्यङ्गतायुक्ते क्षेपे कार्षापणशतम् ॥ ३३ ॥**

त्रैविद्याः वेदत्रयसंपन्नाः। तेषु वृद्धाः विश्वास्याः। चकारात् नृपदेवयोर्ग्रहणम्। तेषामाक्षेपे। जातीनां ब्राह्मण्यादिजातीनां, पूगानां सभ्यादिसंघानाम् 'मिष्टान्नलोलुपा विप्राः; राजभृत्याः सभासदः' इत्यादिक्षेपे हीनवर्णकृते यथाक्रममुत्तममध्यमसाहसौ दण्डौ कार्यौ। यथाह **याज्ञवल्क्यः**—"त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः। मध्यमो जातिपूगानाम्" इति ॥ ३१ ॥

'हिंस्रा राढीयाः; मत्स्यादा गौडाः' इति ग्रामदेशयोराक्षेपे। चकारात् क्रूरचरित्रविश्वामित्रादिकुलाक्षेपे च हीनवर्णेन कृते स प्रथमसाहसं दण्ड्यः। तदुक्तम्—"प्रथमो ग्रामदेशयोः" इति। अल्पाक्षेपे तु **बृहस्पतिः**—

"देशादिकं क्षिपन् दाप्यः पणानर्धत्रयोदशान्।
पापेन योजयन् दर्पाद्दाप्यः प्रथमसाहसम्॥"

इति ॥ ३२ ॥

अश्लीलाक्षेपे दण्डमाह। न्यङ्गम् अश्लीलम्; "अश्लीलं न्यङ्गसंयुतम्" इति **नारद**स्मरणात्। तस्य भावो न्यङ्गता। तद्युक्ते क्षेपे 'त्वद्भगिनीं गमिष्यामि, त्वत्कन्यां वा गमिष्यामि' इत्यादिके। कार्षापणशतं दण्ड्यः ॥ ३३ ॥

**मातृयुक्ते तूत्तमम् ॥ ३४ ॥ समवर्णाक्रोशने द्वादश पणान् दण्ड्यः ॥ ३५ ॥ [5]हीनवर्णाक्रोशने षट् ॥ ३६ ॥ यथाकालमुत्तम-**

[1] क्षेपे च—च; क्षेपे वा—ठ. [2] च omitted in ठ. [3] साहसं omitted in झ.
[4] तन्न्यङ्गता—क, ग, च; क reads this Sūtra along with the previous one as Sūtra 32.
[5] From here to the end of Sūtra 40 the text and commentary are missing in झ.

**वर्णाक्षेपे तत्प्रमाणो दण्डः ॥ ३७ ॥ त्रयो वा कार्षापणाः ॥ ३८ ॥**
**[1]शुक्तवाक्याभिधाने त्वेवमेव ॥ ३९ ॥**

विशेषणविशेषेण विशेषमाह । मातृयुक्ते क्षेपे 'मातरं ते गमिष्यामि' इत्यादिके तूत्तमसाहसं दण्ड्यः । इदमप्युत्तमाक्षेपे । हीनवर्णाक्षेपे तु **योगीश्वरः**—

"अभिगन्तासि भगिनीं मातरं वा तवेति ह ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥"

इति । समवर्णाक्षेपे तु—

"समानयोः समो दण्डो [2]न्यूनस्य द्विगुणस्तु सः ।
उत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्परम् ॥"

इति **बृहस्पत्या**द्युक्तरीत्या कल्पनीयः ॥ ३४ ॥

निष्ठुराक्षेपदण्डमाह । [3]समवर्णमेव 'धिङ् मूर्ख' इत्यादीनि निष्ठुरमाक्षिप्य द्वादश पणान् दण्ड्यः । वर्णो गुणोपलक्षणम् । यथाह **बृहस्पतिः**—

"समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः शास्त्रे पणा ह्यर्धत्रयोदशाः ॥"

इति । अर्धः त्रयोदशो येष्विति सार्धद्वादशेत्यर्थः । अनेन समवर्णस्यापि गुणोत्कर्षाभ्यां दण्डतारतम्यं कल्प्यम् ॥ ३५ ॥

हीनवर्णविषये निष्ठुरमाक्षेपे उत्तमवर्णः षट् पणान् दण्ड्यः । इदमपि सगुणाक्षेपे । निर्गुणाक्षेपे तु न दण्डः; "गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात्" इति **बार्हस्पत्यात्** ॥ ३६ ॥

समकालाक्षेपे हीनवर्णस्य दण्डमाह । कालोऽत्राक्षेपकालः । तमनतिक्रम्येति यथाकालम् । आक्षेपकाल एवेति वा । तत्रोत्तमवर्णाक्षेपे हीनवर्णस्य तत्प्रमाणः षट्कार्षापणप्रमाणो दण्डः कार्यः । समोत्तमवर्णाक्षेपकाल एव क्षिपन् हीनवर्णः षट् पणान् दण्ड्य इत्यर्थः । अनेन द्वादशपणो दण्डः पूर्वाक्षारण इति सिद्धम् । यथाह **नारदः**—

"पूर्वमाक्षारयेद्यस्तु नियतं स्यात् स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥"

[1] शुक्र—ख.
[2] भूतस्य—ख, ग, च.
[3] सवर्णमेव—छ, ठ.

इति । निर्धनविषयमेतत् । सधनविषये तु **स** एव—

“ पारुष्ये साहसे चैव युगपत् संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात समस्तयोः ॥ ”

इति । समो द्वादशपणः ॥ ३७ ॥

पश्चादाक्षेपे हीनवर्णस्य दण्डमाह । यथाकालपक्षात् पक्षान्तरं पश्चात्कालत्वमभिप्रेत्य वाशब्दः । समोत्तमवर्णाक्षेपानन्तरमाक्षिपतो हीनवर्णस्य त्रयः कार्षापणा दण्डः ।

“ आक्रुष्टस्तु तमाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वापराधिनं चैव नापराधी भवेन्नरः ॥ ”

इति **बृहस्पतिना** अल्पदण्डप्राप्त्यै निरपराधताभिधानात् ॥ ३८ ॥

उक्तदण्डातिदेशमाह । शुक्तं निष्ठुरम् । तादृशवाक्याभिधाने त्वेवमेव । त्रयः कार्षापणा दण्ड इत्यर्थः ॥ ३९ ॥

**पारजायी सवर्णागमने [1]तूत्तमसाहसं दण्ड्यः ॥ ४० ॥ हीनवर्णागमने[2] मध्यमम् ॥ ४१ ॥ गोगमने[2] च ॥ ४२ ॥ अन्त्यागमने[2] वध्यः ॥ ४३ ॥ पशुगमने[2] कार्षापणशतं दण्ड्यः ॥ ४४ ॥**

एवं वाक्पारुष्ये दण्डो निरूपितः । इदानीं स्त्रीसंग्रहणे तं प्रस्तौति । तल्लक्षणमाह **मनुः**—

“ उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् ।
सह खट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥ ”

इति । तच्च त्रिविधम् । तदाह **व्यासः**—

“ त्रिविधं तत् समाख्यातं प्रथमं मध्यमोत्तमम् ।
अदेशकालभाषाभिर्निर्जने च परस्त्रियाः ॥
कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् ।
प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ॥
प्रलोभनं चान्नपानैर्मध्यमं समुदाहृतम् ।
सहासनं विविक्ते तु परस्परमपाश्रयः ।
केशाकेशिग्रहश्चैव सम्यक्संग्रहणं स्मृतम् ॥ ”

[1] तु omitted in ग ; तूत्तमं—ज.

[2] गमे—ठ.

इति । तत्र सम्यक्संग्रहणे दण्डमाह । परजायां गच्छतीति पारजायी । स बलात्कारेण सजातीयगुप्तपरदारगमने उत्तमसाहसं दण्ड्यः । इच्छन्तीगमने तु मध्यमसाहसमेव । यथाह **मनुः**—

"सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः ॥"

इति । एवं क्षत्रियादिष्वपि [1]कल्प्यम् ॥ ४० ॥

आनुलोम्येन गमने त्वाह । ब्राह्मणादिरगुप्तक्षत्रियादिहीनवर्णागमने मध्यमसाहसं दण्ड्यः । यथाह [2]**मनुः**—

"अगुप्ते वैश्यराजन्ये शूद्रां च ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात् सहस्रं त्वन्त्यजां स्त्रियम् ॥"

इति । ता एव गुप्ता व्रजन् प्रथमसाहसं दण्ड्यः । यथाह **स** एव—

"सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥"

इति । प्रातिलोम्येन गुप्तागुप्तागमने **मनु**राह—

"उभावपि हि तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम् ॥
वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥
क्षत्रियायामगुप्तायां वैश्यः पञ्चशतं दमम् ।
मूत्रेण मौण्ड्यमन्विच्छेत् क्षत्रियो दण्डमेव वा ॥
शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तावङ्गसर्वस्वैर्गुप्तौ सर्वेण हीयते ॥"

इति । अत्र क्षत्रियं पञ्चशतं, वैश्यं सहस्रिणमित्यन्वयः कार्यः ; "प्रातिलोम्यापवादे तु द्विगुणत्रिगुणा दमाः" इति **योगिस्मरणात्** । स्त्रीणामप्ययमेव दण्डः,

"स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥"

[1] कृत्यम्—ख, घ, ट.    [2] स एव—घ.

इति योगिस्मरणात्। न चात्र प्रातिलोम्यव्यवायमात्र एव स्त्रिया दण्डाभिधानम्; न तु सवर्णानुलोमव्यवायेऽपि, तद्दण्डाभिधानस्य पुंमात्रविषयत्वादिति वाच्यम्। पुंस इव स्त्रिया अपि तत्र दण्डाकाङ्क्षातौल्येनाभिहितदण्डस्य च योग्यतयान्वये बाधकाभावात्; "यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्" इति प्रायश्चित्तसाम्यदर्शनाच्च ॥ ४१ ॥

गोगमने च मध्यमसाहसं दण्ड्यः; "पशून् गच्छञ्छतं दाप्यो हीनां स्त्रीं गां च मध्यमम्" इति योगिस्मरणात् ॥ ४२ ॥

क्षत्रियादिरन्त्यागमने वध्यः। अन्त्याश्चाण्डालाद्याः;

"चाण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥"

इत्यङ्गिरःस्मरणात्। ब्राह्मणस्य तु अङ्कयित्वा निर्वासनम्; "अन्त्याभिगमने त्वङ्कय कुबन्धेन प्रवासयेत्" इति योगिस्मरणात्। इदमपि प्रायश्चित्ताकरणे; प्रायश्चित्तकरणे तूत्तमसाहसो दण्ड एवेत्युक्तं प्राक्। यत्तु—"हीनां स्त्रीं गां च मध्यमम्" इति योगिवचनं, तत्र हीना अन्त्यजा ज्ञेया। ते च—

"रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ॥"

इति संवर्तोक्ताः। अयमपि दण्डः क्षत्रियादीनामेव। ब्राह्मणस्य तु तत्राप्युत्तम एव; "सहस्रं त्वन्त्यजां स्त्रियम्" इति मनुस्मरणात्। [1]अतः अन्त्यस्याप्यार्यागमने वध एवाभिहितः, "अन्त्यस्यार्यागमे वधः" इति योगिस्मरणात् ॥ ४३ ॥

पशूनां गोव्यतिरिक्तानां गमने कार्षापणानां शतं दण्ड्यः; "पशून् गच्छञ्छतं दाप्यः" इति योगिस्मरणात् ॥ ४४ ॥

**दोषमनाख्याय कन्यां प्रयच्छंश्च ॥ ४५ ॥ तां च बिभृयात्[2] ॥ ४६ ॥ अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसम् ॥ ४७ ॥**

एवं स्त्रीसंग्रहणे दण्डोऽभिहितः। इदानीं प्रसङ्गात् स्त्रीपुंधर्मे तं प्रस्तौति। तल्लक्षणमाह **नारदः**—

"विवाहादिविधिः स्त्रीणां यत्र पुंसां च कथ्यते।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥"

[1] अतः to योगिस्मरणात् omitted in ख, ग, च, ट.
[2] This Sūtra omitted in ख, ग, घ, छ.

इति। तत्र दोषमनुक्त्वा कन्यादाने दण्डमाह। अल्पीयांसमौषधापनेयमपि दोषमनुक्त्वा कन्यां प्रयच्छन् कार्षापणशतं दण्ड्यः। दीर्घकुत्सितरोगादिदोषे तु **नारदः**—

"यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।
तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम्॥"

इति। संसृष्टमैथुनत्वादिदोषे तु **योगीश्वरः**—"अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्" इति। दोषानाह **नारदः**—

"दीर्घकुत्सितरोगार्ता व्यङ्गा संसृष्टमैथुना।
धृष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः॥"

इति॥ ४५॥

तां संसृष्टमैथुनत्वादिदोषवतीं कन्यां कन्यादाता यावज्जीवं स्वयमेव बिभृयात् पोषयेत्; न तु दीर्घकुत्सितरोगादिमतीम्;

"व्याधितां स्त्रीप्रजां वन्ध्यामुन्मत्तां विगतार्तवाम्।
अदुष्टां लभते त्यक्तुं तीर्थान्न त्वेव कर्मणः॥"

इति **देवलस्मरणात्**। तीर्थात्; संभोगत इत्यर्थः। यद्वा दीर्घरोगादिदोषानाख्यान एव शतं दण्डो भरणसमुचितो वाक्यद्वयैकविषयतया विधीयते। स चोत्तमसाहसेन तुल्यबल एवेति कल्प्यते। **नारद**वाक्यं तु औषधापनेयव्याध्यादिदोषपरमिति॥ ४६॥

अदुष्टामदूषितां दुष्टां मैथुनादिसंसर्गेण दूषितामिति ब्रुवन् उत्तमसाहसमेव दण्ड्यः। दोषान्तरेण दूषणे तु शतमेव; "दूषयंस्तु मृषा शतम्" इति **योगिस्मरणात्**॥ ४७॥

**गजाश्वोष्ट्रगोघाती[1] [2]त्वेककरपादः कार्यः॥ ४८॥ विमांसविक्रयी च[3]॥ ४९॥ ग्राम्यपशुघाती कार्षापणशतं दण्ड्यः॥ ५०॥ पशुस्वामिने[4] तन्मूल्यं दद्यात्॥ ५१॥ आरण्यपशुघाती पञ्चाशतं कार्षापणान्॥ ५२॥ पक्षिघाती मत्स्यघाती च दश कार्षापणान्॥ ५३॥ कीटोपघाती च कार्षापणम्॥ ५४॥**

1 गो omitted in ग, घ, च.
2 ०्येककरपादः—ठ.
3 कार्षापणशतम् added in ज, ठ.
4 स्वामिनश्च—ज.

एवं स्त्रीपुंधर्मे दण्डोऽभिहितः। इदानीं दण्डपारुष्य एवोत्तमद्रव्यातिक्रमे वक्तव्यावशिष्टं दण्डं प्रस्तौति। तुशब्दः प्रकरणान्तरारम्भार्थः। गजमश्वमुष्ट्रं गां वा यो हन्ति, स एककरपादः कार्यः। एकं करपादं यस्य तथेति; एकं करपादं तस्य छिन्द्यादित्यर्थः। यत् पुनर्मनुना—

"मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषं भवेत्।
प्राणभृत्सु महत्स्वर्धं गजाश्वोष्ट्रगवादिषु॥"

इत्युक्तम्; आदिशब्दात् महिष्यादेर्ग्रहणम्; अर्धमुत्तमसाहसस्य; यच्च **योगीश्वरेण**—

"लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः॥"

इति; द्विगुण उत्तमसाहसः; तदुभयमपि देशकालव्यतिरेकेणोक्तितारतम्येण व्यवस्थाप्यम्॥ ४८॥

विरुद्धमांसं च विड्वराहादेः; तद्विक्रयशीलो विमांसविक्रयी। सोऽप्येककरपादः कार्यः। यत्तु—

"कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।
अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम्॥"

इति योगिवचने, तत् पौनःपुन्येन ताच्छील्यविषयम्। अङ्गहीनः; नासाकर्णहीनः॥ ४९॥

मध्यमद्रव्यातिक्रमे दण्डमाह। ग्राम्याः पशवः अजाविकादयः। तद्धाती कार्षापणशतं दण्ड्यः। व्यक्तिविशेषे तु "क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः" इति **मानवं** द्रष्टव्यम्। व्यक्त्यपकृष्टत्वे तु—

"गर्दभाजाविकानां च दण्डः स्यात् पञ्चमाषकः।
माषकस्तु भवेद्दण्डः श्वसूकरनिपातने॥"

इति **कात्यायनीयं** द्रष्टव्यम्। माषोऽत्र राजतः। अल्पद्रोहे च—

"दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृति क्रमात्॥"

इति **योगीश्वरीयं** ज्ञेयम्॥ ५०॥

उक्तविधिशेषं कंचिद्विशेषमाह। यस्य पशुर्हतः, तस्मै तस्य पशोर्मूल्यं दद्यात्। इदं च प्रतिरूपकाभावे। यथाह **पराशरः**—

"प्रमापणे प्राणभृतां दद्यात् तत्प्रतिरूपकम्।
तस्याभावे तु मूल्यं वा दाप्यमित्यब्रवीन्मनुः॥"

इति । तस्याप्यभावे स्वामितोषमुत्पादयेत् । यथाह **मनुः**—

"यो यस्य हिंस्याद् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत् तुष्टिं राज्ञे दद्याच्च तत्समम् ॥"

इति । तत्समं दण्डमनुक्तदण्डेषु । इदं च पशुमरणे । मरणाभावे तु [1]समुत्पन्नव्ययदा॰ वक्ष्यति ॥ ५१ ॥

हीनद्रव्यातिक्रमे दण्डमाह । अरण्ये भवाः आरण्याः; ते च ते पशवश्च । तद्धाती पञ्चाशतं कार्षापणान् दण्ड्यः। यथाह **मनुः**—"पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु" इति । शुभेषु हंसमयूरादिषु ॥ ५२ ॥

पक्षिणां शुकपिकादीनां, मत्स्यानां पाठीनरोहितादीनां च घातकः दश कार्षापणान् दण्ड्यः । चकारात् सर्पादिवधेऽपि । यथाह **कात्यायनः**—

"विपणो द्वादशपणो वधे तु मृगपक्षिणाम् ।
सर्पमार्जारनकुलश्वसूकरवधे नृणाम् ॥"

इति । विपणः; पणन्यूनो द्वादशपणः; एकादशपण इत्यर्थः । व्यवस्था तु पूर्ववत् दण्डानाम् ॥ ५३ ॥

कीटाः स्वर्णकीटाद्याः । तद्धाती चैकं कार्षापणं दण्ड्यः ॥ ५४ ॥

**[2]फलोपगमद्रुमच्छेदी तूत्तमसाहसम् ॥ ५५ ॥ [3]पुष्पोपगमद्रुमच्छेदी मध्यमम् ॥ ५६ ॥ [4]वल्लीगुल्मलताच्छेदी कार्षापणशतम् ॥ ५७ ॥ तृणच्छेद्येकम् ॥ ५८ ॥ सर्वे च तत्स्वामिनां तदुत्पत्तिम् ॥ ५९ ॥**

स्थावराभिद्रोहे दण्डमाह । फलैरुपगम्यन्त इति फलोपगमाः; फलोपकारिणः पनसाम्रादयः । तादृशद्रुमच्छेदी तूत्तमसाहसं दण्ड्यः । फलोपभोगेति पाठे फलैरुपभुज्यन्त इति विग्रहः । एवं पुष्पोपभोगेति । यत्तु—

"प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥"

इति **योगिवचनं**, तत् फलोपभोगतारतम्येन व्यवस्थाप्यम् ।

"वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥"

[1] समुत्थान—घ.
[2] फलोपगद्रुम—ठ.
[3] पुष्पोपगच्छेदी—ठ.
[4] वल्ली omitted in ज.

इति **मनुस्मरणात्**। तुशब्दात् चैत्यादिवृक्षच्छेदेऽपि। तथाच **योगीश्वरः**—

"चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते॥"

इति। चैत्यं चयनस्थानम्॥ ५५॥

पुष्पैरुपगम्यन्त इति पुष्पोपगमाः; पुष्पोपकारिणश्चम्पकादयः। तच्छेदी मध्यमसाहसं दण्ड्यः॥ ५६॥

वलते वेष्टते इति वल्ली; गुडूचीमाधव्यादिः। गुडतीति गुल्मः; अनतिदीर्घनिबिडलतासंतानः माल्त्यादिः। लातीति लता; सरलप्राया दीर्घयायिनी द्राक्षादिः। तच्छेदी प्रत्येकं कार्षापणशतं दण्ड्यः। यत्तु—

"गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने॥"

उक्तस्थानेषु शाखास्कन्धमूलेषु पूर्वस्मृतात् विंशतिचत्वारिंशदशीतिरूपादर्धमिति **योगिवचनं**, तदप्युपकारतारतम्येन व्यवस्याप्यम्॥ ५७॥

तृणं कुशदूर्वादि, गवाद्यर्थं विना; तच्छेदी एकं कार्षापणं दण्ड्यः। यत्तु "द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत्" इति **योगिवचनं**, तत् गवाद्यर्थतृणादिविषयम्; "गोऽग्न्यर्थं तृणमेधान् वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्" इति **गौतमस्मरणात्**। एतच्च परिगृहीतविषयम्; अपरिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः। यथाह **स** एव—"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इति। यत् पुनः **बार्हस्पत्ये**—

"तृणं वा यदि वा काष्ठ पुष्पं वा यदि वा फलम्।
अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति॥"

इति, तत् ब्राह्मणस्वामिकापहर्तृद्विजव्यतिरिक्तविषयम्; अनापद्विषयं वा; गवादिव्यतिरिक्तविषयं वा; राजादिरक्षितविषयं वा; ब्राह्मणस्यापि बलात् ब्राह्मणस्वामिकापहारविषयं वा। तथाच **शङ्खलिखितौ**—"ब्राह्मणो ब्राह्मणस्य [1]समिदाज्येध्माग्निकाष्ठतृणोलपपुष्पमूलफलान्यपहरन् बलादपि ज्ञातो वा हस्तच्छेदनमाप्नुयात्। कुशकरकाग्निहोत्रद्रव्याण्यपहरन् प्रत्यक्षतोऽङ्गच्छेदः स्यात्" इति। एतेन स्ववदाहरणस्य परिगृहीतविषयत्वे "[2]फलैधःकुसुमस्तेयमधैर्यं च मलावहम्" इति विरुध्येतेति चोद्यं निरस्तम्; गवाद्यर्थविषयत्वात्तस्य॥ ५८॥

सर्वे फलोपगमद्रुमादिच्छेदिनः तत्स्वामिनां छिन्नद्रुमादिस्वामिनां तदुत्पत्तिं फलपुष्पोपगमद्रुमाद्युत्पत्तिं फलपुष्पादिसंततिं पुनःप्रतिरोपितद्रुमादिभोगकालपर्याप्तां दाप्या इति शेषः॥ ५९॥

[1] उपल for उलप—ख, ग, घ, च.

[2] फलैध—ख, ग, च, छ.

**हस्तेनोद्गूरयिता दशकार्षापणम् ॥ ६० ॥ पादेन विंशतिम् ॥ ६१ ॥ काष्ठेन प्रथमसाहसम् ॥ ६२ ॥ पाषाणेन मध्यमम् ॥ ६३ ॥ शस्त्रेणोत्तमम् ॥ ६४ ॥**

ताडनार्थं हस्तमुद्गूर्य दशकार्षापणं दण्ड्यः ॥ ६० ॥

पादेनोद्गूर्य विंशतिं कार्षापणान् दण्ड्यः ॥ ६१ ॥

काष्ठमुद्गूर्य प्रथमसाहसं दण्ड्यः ॥ ६२ ॥

पाषाणमुद्गूर्य मध्यमसाहसं दण्ड्यः ॥ ६३ ॥

शस्त्रं खड्गादि उद्गूर्य उत्तमसाहसं दण्ड्यः । सजातीयविषयं सर्वमेतत् ।

"उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥"

इति **योगिस्मरणात्** । परस्परं सजातीयेषु उत्तमवर्णेषु तु पाण्यादिच्छेद एव; 'हीनवर्णोऽधिकवर्णस्य येनाङ्गेनापराधं कुर्यात्, तदेवास्य शातयेत्' इति सामान्यसूत्रात् । अत एव **मनुः**—

"पाणिमुद्यम्य वा दण्डं पाणिच्छेदनमर्हति ।
पादेन प्रहरन् कोपात् पादच्छेदनमर्हति ॥"

इति । हीनवर्णेषु त्वर्धं कल्प्यम्; "हीनेष्वर्धदमो मोहमदादिभिरदण्डनम्" इति **योगिस्मरणात्** । यत्तु "शस्त्रे मध्यमसाहसः" इति तत् हीनवर्णविषयम्; समोत्तमवर्णयोर्दण्डान्तराभिधानात् । हस्तादिपातने[1] तूक्ता एव दण्डा द्वैगुण्येन योज्याः । यथाह **कात्यायनः**—

"उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः ।
स एव द्विगुणः प्रोक्तः पातनेषु सजातिषु ॥"

इति । संस्पर्शमात्रे त्वर्ध एव; "उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धकः" इति **योगिस्मरणात्** ॥ ६४ ॥

**पादकेशांशुककरलुञ्चने दश पणान्[2] ॥ ६५ ॥ शोणितेन विना दुःखमुत्पादयिता द्वात्रिंशत्पणान् ॥ ६६ ॥ सह शोणितेन चतुःषष्टिम् ॥ ६७ ॥ करपाददन्तभङ्गे[3] कर्णनासाविकर्तने मध्यमम् ॥ ६८ ॥**

1 घातने—च.    2 दण्ड्यः added in ख, ज, झ, ट.    3 भग्ने—ज.

पादकेशवस्त्रकराणामन्यतमस्य लुञ्चने झटित्याकर्षणे दश पणान् दण्ड्यः। हीनवर्णेनोत्तमवर्णस्य गले वस्त्रं दत्वा निष्पीडय निपात्य पादप्रहारे शतं दण्ड्यः। यथाह **योगीश्वरः**—

"पादकेशांशुककरोल्लुञ्चने तु पणान् दश।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः॥"

इति। हीनवर्णेनोत्तमवर्णस्य केशादिग्रहणे तु **मनुराह**—

"केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्।
पादयोर्दाढिकायां वा ग्रीवायां वृषणेषु च॥"

इति॥ ६६॥

शोणितेन विना, शोणितं यथा न दृश्यते तथा मुष्ट्यादिभिस्ताडयिता द्वात्रिंशत्पणान् दण्ड्यः॥ ६६॥

सह शोणितेन, शोणितं यथा दृश्यते तथा ताडयिता चतुःषष्टिपणान् दण्ड्यः। अत्र विशेषमाह **बृहस्पतिः**—

"त्वग्भेदे प्रथमो दण्डो मांसभेदे तु मध्यमः।
उत्तमश्चास्थिभेदे तु घातने तु प्रमापणम्॥"

इति॥ ६७॥

करपाददन्तस्य प्रत्येकं भङ्गे कर्णनासस्य च प्रत्येकं विकर्तने मध्यमसाहसं दण्ड्यः। अयं च स्वस्थानादपतितेषु। पतितेषु तूत्तमः;

"कर्णनासाकरच्छेदे दन्तभेदेऽस्थिभेदने।
कर्तव्यो मध्यमो दण्डो द्विगुणः पतितेषु च॥"

इति बृहस्पतिस्मरणात्। एवं सर्वत्र ज्ञेयम्॥ ६८॥

**चेष्टाभोजनवाग्रोधे प्रहारदाने च॥ ६९॥ नेत्रकंधराबाहुसक्थ्यंसभङ्गे चोत्तमम्॥ ७०॥ उभयनेत्रभेदिनं राजा यावज्जीवं बन्धनान्न मुञ्चेत्[1]॥ ७१॥ तादृशमेव [2]वा कुर्यात्॥ ७२॥**

चेष्टा [3]वलनादिः। भोजनमभ्यवहारः। वाक् व्याहारः। तेषां प्रत्येकं रोधे स्कन्धादिना घातदाने च मध्यमसाहसं दण्ड्यः। यथाह **बृहस्पतिः**—

"प्रथमः शस्त्रसंपाते संयोज्यः [4]क्षुब्धयोर्द्वयोः।
कार्यः कृतानुरूपस्तु लग्ने घाते दमो बुधैः॥"

[1] मोचयेत्—ठ. [2] च—ख, घ, छ. [3] चालनादिः—च. [4] क्षत्रयोः—च.

इति । चकारात् व्रणोद्भेदादौ च ; "मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा" इति **योगिस्मरणात्** ।। ६९ ।।

नेत्रं नेत्रगोलकम् । कंधरा ग्रीवा । बाहू प्रसिद्धौ । सक्थि जघनम् । अंसः स्कन्धः । चकारादोष्ठादि-ग्रहणम् । एतेषां प्रत्येकं भङ्गे उत्तमसाहसं दण्ड्यः । यत्तु—

"चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कंधराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः ।। "

इति **योगिवचनं**, तत्र भङ्गो भेदनम् ; न तु छेदनमिति व्याख्येयम् । यथाह **कात्यायनः**—

"कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ।। "

इति । छेदनं द्वैधीभावः । भेदनम् अवयवशैथिल्यमात्रम् । यद्वा सवर्णोत्तमवर्णविषयत्वेन मध्यमोत्तमसाहसयो-र्व्यवस्था कार्या ।। ७० ।।

उभयोरपि नेत्रयोर्यो भेदं करोति, तं राजा यावज्जीवं बन्धनात् न विमुञ्चेत्; बन्धनागारात् न बहिः कुर्यात् । राजानुवृत्तौ पुनः राजग्रहणं राजविषयकेऽपराधे दण्डान्तरबोधनार्थम् । तथाच **नारदः**—

"राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
शूल्यं तमग्नौ विपचेद् ब्रह्महत्यासजातिगम् ।। "

इति । शूल्यं शूलार्हम् ।। ७१ ।।

तादृशं नेत्रद्वयरहितं वा कुर्यात्; कारयेदित्यर्थः । एवकारो मध्यमसाहसस्यैकनेत्रभेदविषयव्यवस्थापनार्थः । वाशब्दोऽत्र ब्राह्मणक्षत्रियादिविषयत्वेन पक्षद्वयव्यवस्थापनार्थः । यत्तु—

"द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ।। "

इति **योगिवचनं**, तत् औषधप्रतिसमाधेयभेदविषयम् ।। ७२ ।।

**एकं बहूनां निघ्नतां [1]प्रत्येकमुक्ताद् दण्डाद् द्विगुणः ।। ७३ ।। उत्क्रोशन्तमनभिधावतां तत्समीपवर्तिनां [2]संसरतां च ।। ७४ ।। सर्वे च पुरुषपीडाकरास्तदुत्थानव्ययं दद्युः ।। ७५ ।। ग्राम्यपशु-पीडाकराश्च ।। ७६ ।।**

1 प्रत्येकमुक्तदण्डौ— ज, झ.     2 संसरतां omitted in क, झ.

यदा पुनर्बहवो मिलिता एकं निघ्नन्ति, तदा तेषां प्रत्येकमुक्तो दण्डो द्विगुणः कार्यः। द्वैगुण्यं चात्र धनदण्डाभिप्रायेण; अङ्गच्छेदादौ तदसंभवात्। निहननं चात्र दण्डपारुष्ये। तेनात्र सर्वे तद्विषया लक्ष्यन्ते। ततश्च सर्वेष्वपि दण्डपारुष्यविषयेषु बहुकर्तृकेषु द्विगुणो दण्डोऽवधेय इत्यर्थः। अत एव **मनुः**—

"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम्।
यद्येको घातयेत् तत्र सर्वे ते घातकाः स्मृताः॥"

इति। **कात्यायनोऽपि**—

"आरम्भकृत् सहायश्च तथा मार्गानुदेशकः।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम्॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्तकः[1]।
उपेक्षाकार्ययुक्तस्य दोषावक्तानुमोदकः॥
अनिषेद्धा क्षमो यश्च सर्वे तत्कार्यकारिणः।
यथाशक्त्यनुरूपं च दण्डं तेषां प्रकल्पयेत्॥"

इति॥ ७३॥

शत्रुचौरादिभिरभिभूयमानं '[2]चलत, धावत' इत्युत्क्रोशन्तं जनमनभिधावतां अभिभूयमानतत्समीपवर्तिनां संसरतां पलायमानानां चानभिभावकानामपि तत्तन्निमित्ताद्दण्डात् द्विगुणो दण्डो भवति; "उपेक्षकः शक्तिमांश्चेत्" इत्यनेनोपेक्षकस्यापि [3]पातकित्वाभिधानात्। यत्तु—"विक्रुष्टे नाभिधावकः, शतदण्डभाक्" इति **योगिवचनं** तदशक्तासमीपवर्तिविषयम्। चकारादकारणविक्रोष्टुर्ग्रहणम्; "अकारणे च विक्रोष्टा" इति **योगिस्मरणात्**। तत्र शाठ्येन विक्रोष्टुर्द्विगुणो दण्डः। परिहासेन विक्रोष्टुः शतदण्ड इति ज्ञेयम्॥ ७४॥

एवं दण्डपारुष्ये प्रतिनिमित्तं दण्डमभिधाय, इदानीं सर्वशेषं कंचिद्विशेषमाह। सर्वे समानोत्तमहीनवर्णाः साक्षात् साहाय्येन वा पुरुषपीडाकराः मनुष्यताडकाः, तेषां मनुष्याणाम् उत्थानम् अव्रणीभावः, तदर्थमौषधपथ्यादिना यावान् व्ययः, तावत् धनं दद्युः। चकारात् तुष्टिकरणं च। यथाह **कात्यायनः**—

"देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत्।
तथा तुष्टिकरं देयं समुत्थानं च पण्डितैः॥"

इति। ससमुत्थानमिति पाठे, समुत्थानं परिचर्या; तया सह वर्तमानं व्ययं दद्युः। व्ययं दत्त्वा परिचरेयुरित्यर्थः। दरिद्रैस्तु परिचर्यामात्रमेव कार्यम्। यथाह **कात्यायनः**—

"वाग्दण्डस्ताडनं चैव येषूक्तमपराधिषु।
हृतं भग्नं प्रदाप्यास्ते शोध्यं निःस्वैस्तु कर्मणा॥"

[1] प्रदर्शकः—घ, च. [2] धावत—घ, च. [3] घातकित्वा—छ.

इति । व्ययदानानिच्छुः तावन्तं दण्डमेव दाप्यः । यथा **मनुः**—

"अङ्गावपीडनायां च व्रणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्वं दण्डमथापि वा ॥"

इति । व्ययशब्दसामर्थ्यात् कलहापहृतमपि दद्युः ; "समुत्थानव्ययं दाप्यः कलहापहृतं च यत्" इति **बार्हस्पत्यात्** । अपहर्तॄणां च द्विगुणो दण्डः ; "कलहापहृतं देयं दण्डश्च द्विगुणस्ततः" इति **योगिस्मरणात्** । ततः ; अपहृताद्वस्तुनः ॥ ७५ ॥

ग्राम्याः पशवः गवाश्वादयः । तेषां पीडाकराः व्रणादिकर्तारः । ते तदुत्थानव्ययं दद्युः । ग्राम्यग्रहणादारण्येषु न । पृथक्सूत्रकरणं तु मनुष्येषु पशुवन्मूल्यकरणं नास्तीति बोधयितुम् ; 'पशुस्वामिने तन्मूल्यम्' इत्यत्र पशुग्रहणात् । ततश्च "प्रमापणे प्राणभृतां दद्यात् तत्प्रतिरूपकम्" इति प्राणभृच्छब्दोऽपि पशुपर एव । चकारात् तैलाभ्यङ्गादि च कर्तव्यम् । यथा **पराशरः**—

"व्रणभङ्गे च कर्तव्यस्तैलाभ्यङ्गस्तु पाणिना ।
यवसश्चोपहर्तव्यो यावदच्छबलो[1] भवेत् ॥"

इति ॥ ७६ ॥

**[2]गोऽश्वोष्ट्रगजापहार्येककरपादः कार्यः ॥ ७७ ॥ अजाव्यपहार्येककरश्च ॥ ७८ ॥ धान्यापहार्येकादशगुणं दण्ड्यः ॥ ७९ ॥ सस्यापहारी च ॥ ८० ॥**

एवं दण्डपारुष्ये दण्डोऽभिहितः । इदानीं स्तेये तं प्रस्तौति । तल्लक्षणमाह **नारदः**—

"उपायैर्विविधैरेषां छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥"

इति । तथा,

"तदपि त्रिविधं ज्ञेयं हीनमध्योत्तमक्रमात् ।
हीनमध्योत्तमानां तु द्रव्याणामपहारतः ॥
मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमी धान्यं कृतान्नं च क्षुद्रधान्यमुदाहृतम् ॥
वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥

[1] दृढबलो—छ.

[2] From here up to Sūtra 22 of ch. 18 the comm. is omitted in च.

हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम् ॥
साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥"

इति । तत्रोत्तमद्रव्यापहारे दण्डमाह । गोऽश्वोष्ट्रगजानामपहारकः एककरपादः; एकं करपादं यस्य तादृशः कार्यः । एकं करपादं [1]छेत्तव्यमित्यर्थः । यत्तु—

"अग्न्यगारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥"
"वन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥"

इति **मनुयोगीश्वरवचनं**, तत् पौनःपुन्येन ताच्छील्यविषयं बहुमूल्यव्यक्तिविषयं वावधेयम् । द्वन्द्वबलात् नरहरणेऽप्ययमेव दण्डः; "नरहर्ता हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे" इति **बार्हस्पत्यात्** ॥ ७७ ॥

मध्यमद्रव्यापहारे दण्डमाह । अजमविं वा यः सर्वदापहरति, स एककरः कार्यः । एकः करोऽस्य छेत्तव्य इत्यर्थः; "[2]हरन् बलादविज्ञातो हस्तच्छेदनमाप्नुयात्" इति **शङ्खलिखितस्मरणात्** ॥ ७८ ॥

धान्यं वार्षिकं श्यामाकादि । तत् यावद्दशकुम्भं योऽपहरति, स एकादशगुणं दण्ड्यः; ततोऽधिके वधाभिधानात् । यथाह **मनुः**—

"धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ।
शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

इति । सकृद्धरणे तु सार्धद्वादशपणान् दण्ड्यः; "अजाविकेऽपहृते अर्धत्रयोदशपणाः । नकुलबिडालापहरणे त्रयः कार्षापणाः" इति **शङ्खलिखितस्मरणात्** । चकारात् फलपुष्पापहारी च । यथाह **बृहस्पतिः**—

"तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति ॥"

इति । बलादपहारे चेदम् । ब्राह्मणो ब्राह्मणस्य समिदाज्येध्माग्निकाष्ठतृणोलपपुष्पमूलफलान्यपहरन्नप्येकादशगुणं दाप्य इत्यर्थः ।

"स्तेये ब्रह्मस्वभूतस्य सुवर्णादिकृते पुनः ।
स्वामिनेऽपहृतं देयं हर्त्रा त्वेकादशाधिकम् ॥"

इति **स्मरणात्** ॥ ७९ ॥

1 क्षेतव्य—ख, छ.

2 This sentence is corrupt in ख.

सस्यानि हेमन्तवसन्तोद्भवानि व्रीहियवादीनि । तानि यावद्दशकुम्भं योऽपहरति, स एकादशगुणं दण्ड्यः । पृथक्सूत्रकरणात् ततोऽधिके सस्येऽप्यपहृते वध एवेति गम्यते । चकारात् तुलामेयानामन्येषामपि सुवर्णरजतादीनां शतन्यूनानामपहारे एकादशगुणः; "शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्" इति **स्मरणात्** । अयं च दण्डः ताच्छील्यप्रत्ययादभ्यासविषयो ज्ञेयः । सकृदपहारे तु विशेषमाह **बृहस्पतिः**— "धान्यहारी दशगुणं दाप्यस्तद्द्विगुणं दमम्" इति । दशगुणं [1]धान्यं स्वामिने दाप्यः । राज्ञे द्विगुणं दण्डमित्यर्थः ॥ ८० ॥

**[2]सुवर्णरजतवस्त्राणां पञ्चाशतस्त्वभ्यधिकमपहरन् विकरः ॥ ८१ ॥ तदूनमेकादशगुणं दण्ड्यः ॥ ८२ ॥**

पुनरुत्तमद्रव्यापहारे परिमाणविशेषेण दण्डविशेषमाह । सुवर्णरजतोत्तमवस्त्राणामन्यतमं पञ्चाशतोऽधिकं यावच्छतमपहरन् विकरः कररहितः कार्यः; शताधिके वधाभिधानात् । सुवर्णरजतयोः पञ्चाशत्संख्या त्वत्र माषाणामेवेत्युक्तं प्राक् ॥ ८१ ॥

ततः पञ्चाशतः ऊनं सुवर्णरजतादि अपहरन् मूल्यादेकादशगुणं दण्ड्यः । यथाह **मनुः**—

"तथा धरिममेयानां शतादभ्यधिके वधः ।
सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।
शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥"

इति ॥ ८२ ॥

**[3]सूत्रकार्पासगोमयगुडदधिक्षीरतक्रतृणलवणमृद्भस्मपक्षिमत्स्यघृततैलमांसमधुवैदलवेणुमृन्मयलोहभाण्डानामपहर्ता[4]मूल्यात् त्रिगुणं दण्ड्यः ॥ ८३ ॥ पक्वान्नानां च ॥ ८४ ॥ [5]पुष्पहरितगुल्मवल्लीलतापर्णानामपहरणे पञ्चकृष्णलम् ॥ ८५ ॥ शाकमूलफलानां च ॥ ८६ ॥**

हीनद्रव्यापहारे दण्डमाह । सूत्रं कार्पासनिर्मितम् । कार्पासः तूलम् । गोमयं गोशकृत् । गुडदधिक्षीराणि प्रसिद्धानि । तक्रम् उदश्वित् । तृणं दूर्वादि । लवणं सैन्धवसामुद्रादि । मृत् गङ्गामृत्तिकादिः । भस्म आहवनीयादेः । पक्षिणः शुकादयः । मत्स्याः पाठीनादयः । घृततैले प्रसिद्धे । मांसं छागादेः । मधु

[1] दण्डं—ख, छ, ट.
[2] This Sūtra and comm. omitted in ख, ग.
[3] गुड is read after तक्र in ज, ठ.
[4] हरणे तन्मूल्यात् द्विगुणं—ज, ठ.
[5] गुल्म and पर्ण omitted in ज.

क्षौद्रम् । वैदलं शूर्पव्यजनादि । वेणुः वंशः । मृन्मयं घटकरकादि । लोहभाण्डं कटाहादि । एषामेकविंशति-द्रव्याणामपहर्ता प्रत्येकं [1]ह्रियमाणद्रव्यमूल्यात् त्रिगुणं धनं दण्ड्यः । तथाच **व्यासः**—

"अल्पधान्यापहरणे क्षीरेतद्विकृतौ तथा ।
स्वामिने तत्समं दाप्यो दण्डं च त्रिगुणं नृप ॥"

इति । बहुवचनात् किण्वादिग्रहणम् । देशकालादिवैषम्ये द्विगुणमपि दण्ड्यः । यथाह **मनुः**—

"सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणुवैदलभाण्डानां लवणानां तथैव च ।
मृन्मयानां च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसंभवम् ॥
अन्येषां चैवमादीनां मद्यानामोदनस्य च ।
पक्वान्नानां च सर्वेषां तन्मूल्याद् द्विगुणो दमः ॥"

इति । द्विगुणत्रिगुणदण्डयोः देशाद्यपेक्षया व्यवस्था ॥ ८३ ॥

पक्वान्नानि शष्कुल्यपूपादीनि । तेषामपहर्ता तन्मूल्यात् त्रिगुणं दण्ड्यः । चकारात् ओदनादीनाम् ;

"पक्वान्नानां कृतान्नानां मद्यानामोदनस्य च ।
सर्वेषामल्पमूल्यानां मूल्यात् पञ्चगुणो दमः ॥"

इति **नारदस्मरणात्** । अत्रापि पूर्ववत् व्यवस्था ॥ ८४ ॥

पुष्पं चम्पकादि । हरितं क्षेत्रस्थमार्द्रं धान्यम् । गुल्मः मालत्यादिः । वल्ली गुडूच्यादिः । लता द्राक्षादिः । पर्णानि ताम्बूलीपर्णादीनि । एतेषामपहरणे पञ्च कृष्णलान् राजतान् दण्ड्यः । यथाह **कात्यायनः**—

"यत्रोक्तो माषकैर्दण्डो राजतं तत्र निर्दिशेत् ।
कृष्णलैश्चोक्त एवं स्यादुक्तदण्डो विनिश्चितः ॥"

इति । बहुवचनात् वृक्षादिग्रहणम् । यथाह **मनुः**—

"पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ।
अन्येष्वपरिपूतेषु दण्डः स्यात् पञ्चकृष्णलः ॥"

इति । अपरिपूतम् [2]अनपगतबुसम् ॥ ८५ ॥

[1] हीयमान—ख, छ.  [2] अनपहृत—ग, छ, ट.

शाकं वास्तुकादि दशविधम् ;

“ मूलपत्रकरीराग्रफलकाण्डविरूढकाः ।
त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥ ”

इति **स्मरणात्** । मूलम् आर्द्रकादि । फलम् आम्रादि । चकारादन्यदपि गोरसादि गृह्यते । यथाह **नारदः**—

“ शाकानामल्पमूल्यानां हरणे फलमूलयोः ।
गोरसेक्षुविकाराणां तथा लवणतैलयोः ।
सर्वेषामल्पमूल्यानां मूल्यात् पञ्चगुणो दमः ॥ ”

इति । एतेषामपहरणे पञ्च कृष्णलान् दण्ड्यः । यथाह **मनुः**—“ परिपूतेषु धान्येषु शाकमूलफलेषु च ” इति । “ दण्डः स्यात् पञ्चकृष्णलः ” इति पूर्वेण संबन्धः । परिपूतं परिहृततुसम् ॥ ८६ ॥

**रत्नापहार्युत्तमसाहसम् ॥ ८७ ॥ अनुक्तद्रव्याणामपहर्ता [1]मूल्यसमम् ॥ ८८ ॥ स्तेनाः सर्वमपहृतं धनिकस्य दाप्याः ॥ ८९ ॥ ततस्तेषामभिहितदण्डप्रयोगः ॥ ९० ॥**

पुनरुत्तमद्रव्यापहरणे दण्डमाह । रत्नानां च [2]वज्रवैडूर्यादीनां [3]बहुमूल्यानामेकस्याप्यपहार्युत्तमसाहसं दण्ड्यः । ब्राह्मणविषयमेतत् ; तस्य वधनिषेधात् । अन्येषां तु वध एव । यथाह **गौतमः**—“ न शारीरो दण्डो ब्राह्मणस्य ” इति । पुरुषादीनामपि रत्नपदेन ग्रहणम् । यथाह **मनुः**—

“ पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥ ”

इति । अत्र विशेषमाहतुः **शङ्खलिखितौ**—“ राजपुत्रहरणे सहस्रं शारीरो वा दण्डः । तत्कुलीनेष्वर्धम् ” इति । **नारदः**—

“ सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः ।
दासीं च हरतो मध्यः पादस्य छेदनं तथा ॥ ”

इति । कन्याविषये विशेषमाह **याज्ञवल्क्यः**—

“ अलंकृतां हरन् कन्यामुत्तमं त्वन्यथाधमम् ।
दण्डं दद्यात् सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥

[1] द्रव्य—ख, ग. [2] वज्र omitted in ग.
[3] From here up to the middle of Sūtra 94, comm. omitted in छ.

सकामास्वनुलोमासु न दोषस्त्वन्यथाधमः ।
दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥ ”

इति ॥ ८७ ॥

द्रव्याणामानन्त्यात् प्रत्येकं वक्तुमशक्तेरेकोपाधिना दण्डमाह । यानि उत्तममध्यमाधमकोटिष्वनुक्तानि द्रव्याणि अधान्यतुषादीनि, तेषामपहर्ता तन्मूल्यसमं दण्ड्यः ॥ ८८ ॥

सर्वस्तेयशेषमाह । स्तेनाः चोराः ; सर्वमपहृतं धनं सारमसारं वा यत्र दशैकादशगुणादिदण्डः, तत्र दशैकादशगुणम् ; यत्र मूल्यसमं, तत्र समं तदेव द्रव्यं तत्सजातीयं तन्मूल्यं वा धनिकस्य स्वामिनो दाप्याः ॥८९॥

उक्तदण्डविधेः कालमाह । ततः अपहृतद्रव्यदापनानन्तरमभिहितस्य दण्डस्य प्रयोगः अनुष्ठानं कार्यम् ;

“ संसर्गचिह्नरूपैश्च विज्ञाता राजपूरुषैः ।
प्रदाप्यापहृतं दण्ड्याः क्रमैः शास्त्रप्रचोदितैः ॥ ”

इति बार्हस्पत्यात् ॥ ९० ॥

**[1]येषां देयः पन्थास्तेषामपथदायी कार्षापणपञ्चविंशतिं दण्ड्यः ॥ ९१ ॥ आसनार्हस्यासनमददच्च ॥ ९२ ॥ पूजार्हमपूजयंश्च ॥ ९३ ॥ [2]प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रमणे च ॥ ९४ ॥ निमन्त्रयित्वा भोजनादायिनश्च ॥ ९५ ॥ निमन्त्रितस्तथेत्युक्त्वा [3]चाभुञ्जानः सुवर्णमाषकम् ॥ ९६ ॥ निकेतयितुश्च द्विगुणमन्नम् ॥ ९७ ॥**

स्तेयप्रसङ्गात् पुनरपि साहसविषयमवशिष्टं दण्डमाह । येषां वृद्धादीनां पन्था देय इति वक्ष्यते, तेषां पन्थानमदत्त्वा कार्षापणानां पञ्चविंशतिं दण्ड्यः । गुर्वादिविषये तु **मनुः**—

“ मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं चाददद् गुरोः ॥ ”

इति ॥ ९१ ॥

आसनार्हस्यातिथ्यादेर्वक्ष्यमाणस्यासनमप्रयच्छंश्च पञ्चविंशतिं कार्षापणान् दण्ड्यः । चकारात् अनभ्युत्तिष्ठंश्च ;

“ ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ ”

इति **मनुना**नभ्युत्थाने दोषाभिधानात् ॥ ९२ ॥

[1] Text from here up to the end of Sūtra 94 corrupt in क.

[2] प्रतिवेश्म—ठ.

[3] न भुञ्जानः—ठ.

पूजार्हं मधुपर्कार्हं वक्ष्यमाणं स्नातकादिकं विभवे सति अपूजने[1] पञ्चविंशतिकार्षापणान् दण्ड्यः। चकारात् उक्तोऽप्रतिवदंश्चाभिवादितोऽप्रत्यभिवादयंश्च[2] ॥ ९३ ॥

वेशः वेश्म। [3]तस्य प्रति संनिहितं संमुखं पार्श्वस्थं च वेश्म प्रतिवेशः। तत्र भवाः प्रातिवेश्याश्च ते ब्राह्मणाश्च प्रातिवेश्यब्राह्मणाः। तेषां श्रुतवृत्तसंपन्नानां निमन्त्रणातिक्रमणे कल्याणादावभोजने पञ्चविंशतिकार्षापणान् दण्ड्यः। इदं च प्रामादिके। बुद्धिपूर्वके तु सुवर्णमाषकं दण्ड्यः। यथाह **मनुः**—

“ प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे।
अर्हावभोजयन् विप्रो दण्डमर्हति माषकम् ॥ ”

इति। अयं च दण्डः द्विगुणभोज्यदानानन्तरम्। कल्याणदर्शनार्थमनिमन्त्रणे तु **योगीश्वरः**—

“ तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ ”

इति। चकारात् दानातिक्रमणे च। यथाह **कात्यायनः**—

“ संनिकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
यद्ददाति तमुल्लङ्घ्य तस्य स्तेयेन लिप्यते ॥ ”

इति। अधीयानत्वविशेषणात् मूर्खातिक्रमे न दोषः। यथा **स** एव—

“ यस्य त्वेकगृहे मूर्खो दूरे चार्घ्यगुणान्वितः।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ”

इति ॥ ९४ ॥

योग्यं ब्राह्मणं निमन्त्र्याभोजयंश्च पञ्चविंशतिकार्षापणान् दण्ड्यः। चकारात् द्विगुणभोज्यं दाप्यः। प्रामादिके चेदम्। बुद्धिपूर्वके तु हिरण्यमाषकं दण्ड्यः। यथाह **मनुः**—

“ श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन्।
तदन्नं द्विगुणं दाप्यो हिरण्यं चैव माषकम् ॥ ”

इति ॥ ९५ ॥

निमन्त्रितो निमन्त्रणं स्वीकृत्य यदि न भुङ्क्ते, तदा सुवर्णमाषकं दण्ड्यः। निमन्त्रित इत्येकत्वनिर्देशात् एकब्राह्मणके कर्मणि निमन्त्रितस्याभोजनदण्डं ज्ञेयम्। बहुषु निमन्त्रितेष्वेकस्याभोजने नायं दण्डः;

[1] अपूजयन्—ग.   [2] अनभिवादयंश्च—ग, घ.   [3] तत्र—ख.

किंतु दण्डान्तरं कल्प्यम् । सुवर्णपदं निरुपपदे माषके रजतप्राप्त्यर्थम् । तदुक्तं प्राक्—"यत्रोक्तो माषकैर्दण्डः" इत्यनेन । इदं चात्यक्तपरान्नभोजनविषयम् ;

"आमन्त्रितस्तु यो विप्रो वर्तमानः [1]प्रतिग्रहे ।
निष्कारणं न गच्छेत्तु स दाप्योऽष्टशतं दमम् ॥"

इति मात्स्यात् । चकारात् प्रतिग्रहं स्वीकृत्याप्रतिग्राही च ; "वर्तमानः प्रतिग्रहे" इत्युक्तवचनात् ॥ ९६ ॥

निमन्त्रितोऽभुञ्जानो निमन्त्रयितुर्द्विगुणमन्नं च दाप्यः । चकारात् प्रतिग्राह्यं च ॥ ९७ ॥

**अभक्ष्येण ब्राह्मणस्य दूषयिता षोडश सुवर्णान् ॥ ९८ ॥ जात्यपहारिणा शतम् ॥ ९९ ॥ सुरया वध्यः ॥ १०० ॥ क्षत्रियं दूषयितुस्तदर्धम् ॥ १०१ ॥ वैश्यं दूषयितुस्तदर्धमपि ॥ १०२ ॥ शूद्रं दूषयितुः प्रथमसाहसम् ॥ १०३ ॥**

अभक्ष्यं विष्ठादि । तेन प्रच्छन्नभोजितेन ब्राह्मणस्य दूषयिता दोषोत्पादयिता षोडश सुवर्णान् दण्ड्यः ॥ ९८ ॥

जात्यपहारिणा लशुनादिना प्रच्छन्नभोजितेन यो ब्राह्मणस्य जातिमपहरति, स शतं सुवर्णान् दण्ड्यः ॥ ९९ ॥

सुरया पैष्ट्याद्यन्यतमया निगूढं पायितया यो ब्राह्मणस्य जातिमपहरति, स वध्यः ब्राह्मणव्यतिरिक्तश्चेत् । स तु कृताङ्को विवास्यः । एवं सर्वत्र ॥ १०० ॥

यः क्षत्रियमभक्ष्यादिना दूषयति, स तदर्धम् अष्टौ सुवर्णान् दण्ड्यः । एवं जात्यपहारेऽप्यर्धेन पञ्चाशत्सुवर्णेन दण्ड्यः । पैष्ट्यादिसुरया क्षत्रियादीनामपि दूषणे वध्य एव ॥ १०१ ॥

यो वैश्यमभक्ष्यादिना दूषयति, स तेषामष्टानामप्यर्धं चतुरः सुवर्णान् दण्ड्यः । एवं जात्यपहारे पञ्चविंशतिम् । पैष्ट्यादिसुरया तु वध्य एव ॥ १०२ ॥

शूद्रं योऽभक्ष्यादिना दूषयति, स प्रथमसाहसं दण्ड्यः । एवं जात्यपहारे सार्धद्वादशसुवर्णान् । सुरया पैष्ट्यादिकया वध्य एव ; शूद्रस्यापि सुरापाननिषेधस्य वक्ष्यमाणत्वात् ;

"अभक्ष्येण द्विजं दूष्य दण्ड्य उत्तमसाहसम् ।
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकम् ॥"

[1] परिग्रहे—छ.

इति **योगिस्मरणात्**। यत्तु—

" अभक्ष्यमथवापेयं वैश्यादीनाशयन् द्विजान् ।
जघन्यमध्यमोत्कृष्टान् दण्डान् दद्याद्यथाक्रमम् ॥
पणाञ्छूद्रो भवेद्दण्ड्यश्चतुष्पञ्चाशदेव तु ।
आशितारः स्वयं कार्या राज्ञा निर्विषयास्ततः ॥ "

इति **मानवं** दण्डाल्पत्वं, तदल्पप्रायश्चित्ताभक्ष्यापेयविषयमिति ध्येयम् । आशितार इति आशयितार इत्यर्थे छान्दसम् । विषयेभ्यो निर्गताः निर्विषयाः ; राष्ट्रबहिष्कृता[1] इत्यर्थः ॥ १०३ ॥

**अस्पृश्यः कामकारेण स्पृशन्[2] स्पृश्यं त्रैवर्णिकं[3] वध्यः ॥ १०४ ॥ रजस्वलां शिफाभिस्ताडयेत् ॥ १०५ ॥ पथ्युद्यानोदकसमीपेऽप्यशुचिकारी[4] पणशतम् ॥ १०६ ॥ तच्चापास्यात् ॥ १०७ ॥**

अस्पृश्यश्चाण्डालादिः कामकारेण बुद्धिपूर्वकं स्पृश्यं त्रैवर्णिकं स्पृशन् वध्यः । यत्तु " चण्डालश्चोत्तमान् स्पृशन्, शतदण्डभाक् " इति **योगिस्मरणं**, तत् विवाहादिमहोत्सवसंमर्दे द्रष्टव्यम् ॥ १०४ ॥

रजस्वलां बुद्धिपूर्वकं त्रैवर्णिकान् स्पृशन्तीं शिफाभिः वटप्ररोहैः ताडयेत् ॥ १०५ ॥

पथि मार्गे । उद्यानं पुष्पवाटिका ; उदकमुदकाशयः तटाकादिः ; एषां समीपे मूत्रपुरीषाद्यशुचिकारी पणशतं दण्ड्यः ॥ १०६ ॥

तच्च मूत्रपुरीषादि अपास्यात् अपसारयेत् । चकारात् अमेध्यसंसृष्टं मृदाद्यपि । यत्तु—

" समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥
आपद्गतस्तथा वृद्धो गर्भिणी बाल एव च ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥"

इति **मानवं**, तत् श्लेष्माद्यमेध्याभिप्रायम् । परिभाषणं 'भूयोऽप्येवं न कार्यम्' इति संवित् ; भर्त्सनं वा । तीर्थादिविषये तु विशेषमाह **कात्यायनः**—

" तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत् पूर्वसाहसम् ॥ "

इति ॥ १०७ ॥

[1] बहिर्भूताः—ख, छ, ट.
[2] स्पृशन् वध्यः—ठ.
[3] त्रैवर्णिकं omitted in ख.
[4] त्यागी—ठ.

**गृहभूकुड्याद्युपभेत्ता मध्यमसाहसम् ॥ १०८ ॥ तच्च योजयेत् ॥ १०९ ॥ गृहे पीडाकरं द्रव्यं प्रक्षिपन् पणशतम् ॥ ११० ॥**

पुनर्दण्डपारुष्ये दण्डमाह। गृहं घट्टशालादि। भूः अङ्गणादिः। कुड्यं भित्तिः। आदिशब्दात् द्वारप्राकारादि। तदुपभेत्ता तन्नाशको मध्यमसाहसं दण्ड्यः। इदं च प्रस्तरादिबद्धगृहविषयम्; दण्डभूयस्त्वात्। इष्टकादिबद्धविषये तु **कात्यायनः**—

"प्राकारं भेदयेद्यस्तु पातयेच्छातयेत्तु वा।
बध्नीयादम्भसो मार्गं प्राप्नुयात् पूर्वसाहसम्॥"

इति। राजकीयप्राकारादिभेदने तु **मनुः**—

"प्राकारस्य च भेत्तारं परिखाणां च पूरकम्।
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रमापयेत्॥"

इति ॥ १०८ ॥

तच्च पातितं गृहभित्त्यादि पुनर्योजयेत् उत्थापयेत्; तदुत्थापनद्रव्यं दद्यादित्यर्थः। यत्तु—

"अभिघाते तथा छेदे भेदे कुड्यावपातने।
पणान् दाप्यः पञ्चदश विंशतिं तद्व्ययं तथा॥

इति **योगिवचनं**, तत् मृदादिभित्तिविषयम् ॥ १०९ ॥

परगृहे पीडाकरं कण्टकपुत्तलिकादि द्रव्यं क्षिपन् पणशतं दण्ड्यः। यत्तु—

"दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा।
षोडशाद्यः पणान् दण्ड्यो द्वितीयो मध्यमं दमम्॥"

इति **योगिवचनं**, तत् कण्टकादिप्रक्षेपे विषसर्पादिप्रक्षेपे च द्रष्टव्यम् ॥ ११० ॥

**साधारणापलापी च ॥ १११ ॥ [1]प्रेषितस्याप्रदाता च ॥ ११२ ॥ [2]पितृपुत्राचार्ययाज्यर्त्विजामन्योन्यापतितत्यागी च ॥ ११३ ॥ न च तान् जह्यात् ॥ ११४ ॥**

एवमुक्तावशिष्टदण्डपारुष्ये दण्डमभिधाय, पुनः साहसे तं प्रस्तौति। तत्रापराधविशेषे दण्डमाह। अनेकस्वामिकं द्रव्यं साधारणम्। तस्यापलपनशीलः पणशतं दण्ड्यः। चकारात् दासीगर्भविनाशकश्च; "साधारणस्यापलापी दासीगर्भविनाशकृत्, शतदण्डभाक्" इति **योगिस्मरणात्** ॥ १११ ॥

[1] प्रोषितस्य—क. [2] पितृपुत्रार्य—ठ.

देवब्राह्मणार्थं प्रेषितस्यार्थस्य लोभेनाप्रदाता च पणशतं दण्ड्यः । चकारात् अर्घ्याक्रोशकादिग्रहणम् ; "अर्घ्याक्रोशातिक्रमकृद् भ्रातृभार्याप्रहारकः" इति योगिस्मरणात् । यत्त्वत्र "पञ्चाशत्पणको दण्ड एषामिति विनिश्चयः" इति तदीयमेवाल्पदण्डाभिधानं, तत् प्रामादिकाप्रदानादिविषयम् ॥ ११२ ॥

पिता जनकः । पुत्र औरसः । आचार्य उपनीयाध्यापयिता । याज्यो यजमानः । ऋत्विक् वृतः सन् कर्मकरः । एषामन्योन्यस्यापतितस्य त्यागी च शतं दण्ड्यः ;

"पितृपुत्रस्वसृभ्रातृदंपत्याचार्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥"

इति योगिस्मरणात् । चकारात् स्वसृभ्रातृदंपतिशिष्याणां ग्रहणम् । अपतितत्वं शक्तादेरप्युपलक्षणम् ;

"ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक् त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डः शतं शतम् ॥"

इति मानवात् । त्यागः प्रवासोपलक्षणम् ; "अथ चेत् प्रतिषिद्धः प्रवासे कामादन्यत्र प्राप्तः सवने ऋत्विक् शतं दण्ड्यः" इति शङ्खलिखितस्मरणात् । इदं चाकामतः । कामतो द्विशतम् । यथाहतुस्तावेव— "कामाच्चेदपतितं याज्यं त्यजेदृत्विक् प्राप्नुयाद् द्विशतं दमम् । याज्यश्चेत् तदेवाप्नुयात् त्यागे ऋत्विजोऽपतितस्य" इति । अस्यापवादमाहतुस्तावेव—"काममपतितमश्रोत्रियं[1] त्यजेद्याज्यमभिशस्तमदातारम्" इति ॥ ११३ ॥

तान् पित्रादीन् न जह्यात्, न त्यजेत् । चकारात् गुणवत्सपिण्डग्रहणम् । तथाच शङ्खलिखितौ— "अत्याज्या माता तथा पिता सपिण्डा गुणवन्तः सर्व एवात्याज्याः" इति । त्यागोऽतिक्रमस्याप्युपलक्षणम् ; "न मातापितरावतिक्रमेन्न गुरुं त्रयाणां व्यतिक्रमादङ्गच्छेदः" इति तयोरेव स्मरणात् । दण्डविधानादेवात्याज्यात्वे सिद्धे पृथक्सूत्रकरणं त्रयाणामपाङ्क्तेयत्वश्राद्धपरिहार्यत्वयोर्ज्ञापनार्थम् । तच्च द्व्यशीतितमे स्पष्टयिष्यते । अयं च शतदण्डोऽकामतस्त्यागे । कामतस्त्यागे तु द्विशतो दण्डः । यथाहतुः शङ्खलिखितौ— "अत्याज्या माता" इत्युपक्रम्य "यस्त्यजेत् कामादपतितान् स दण्डं प्राप्नुयाद् द्विशतम्" इति । अत्यन्ताभिनिवेशेन त्यागे तु षट्शतम् । यथाह मनुः—

"न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेतान् राज्ञा दाप्यः शतानि षट् ॥"

इति ॥ ११४ ॥

**शूद्रप्रव्रजितानां दैवे पित्र्ये भोजकाश्च ॥ ११५ ॥ अयोग्यकर्मकारी [2]च ॥ ११६ ॥ समुद्रगृहभेदकश्च ॥ ११७ ॥ [3]अनियुक्तः शपथकारी ॥ ११८ ॥**

[1] श्रोत्रियं—ख, ट. [2] वा—छ. [3] अभियुक्तःशपथ—ट; अनियुक्तश्च—ठ.

शूद्राश्च ते प्रव्रजिताश्च शूद्रप्रव्रजिताः, दिगम्बरादयः। तेषां दैवे पित्र्ये च भोजयिता शतं दण्ड्यः। चकारात् स्वच्छन्दविधवागामी च; "स्वच्छन्दविधवागामी" इति **योगिस्मरणात्**॥ ११५॥

यत् यस्य योग्यं न भवति, यथा अनुपनीतस्याध्ययनम्, तादृशकर्मकारी च शतं दण्ड्यः। चकारात् सामन्ताद्यपकारी च; "सामन्तकुलिकादीनामपकारस्य कारकः" इति **योगिस्मरणात्**। यत्त्वत्र [1]त्रयोविंशतिपणकदण्डाभिधानं, तत् अनावृत्त्यभिप्रायम्; मूलोक्तस्य ताच्छील्यप्रत्ययेनावृत्तिविषयत्वात्॥ ११६॥

राजादिमुद्रया सह वर्तमानं समुद्रम्। तादृशगृहस्य भेदकः उद्घाटयिता शतं दण्ड्यः। चकारात् समुद्रपरिवर्तकश्च;

"समुद्रपरिवर्तं च सारभाण्डं च कृत्रिमम्।
आधानं विक्रयं वापि नयतो दण्डकल्पना॥
भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्॥"

इति **योगिस्मरणात्**। समुद्रं सपिधानं करण्डकादि; तस्य परिवर्तो व्यत्यासः। सारभाण्डं कर्पूरादि। यत्तु "समुद्रगृहभेदकृत्। पञ्चाशत्पणको दण्ड एषाम्" इति **योगिस्मरणं**, तत् स्वामिमुद्रितविषयम्॥ ११७॥

राज्ञा सभ्यैर्वा अनियुक्तः अनादिष्टः शपथं विप्रपादस्पर्शपूर्वकं यः करोति, स शतं दण्ड्यः। "अयुक्तं शपथं कुर्वन्" इति **योगीश्वरः**। 'मातरं ग्रहीष्यामि' इत्याद्ययुक्तमिति तदर्थः॥ ११८॥

**पशूनां पुंस्त्वोपघातकारी॥ ११९॥ [2]पितापुत्रविरोधे साक्षिणां दशपणो दण्डः॥ १२०॥ यस्तयोश्चान्तरे[3] स्यात् तस्योत्तमसाहसः॥ १२१॥**

पशूनां वृषादीनां पुंस्त्वस्य प्रजननशक्तेः अण्डनिष्कासनादिना उपघातकारी विनाशकः शतं दण्ड्यः। यथाह **योगीश्वरः**—"वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकः" इति। 'शतदण्डभाक्' इति शेषः। क्षुद्रग्रहणादश्वादिषु द्विगुणः; "महापशूनामेतेषु स्थानेषु द्विगुणः स्मृतः" इति **योगिस्मरणात्**॥ ११९॥

पितापुत्रयोर्विरोधे द्रव्यादिविषयविवादे ये कलहाभिवृद्ध्यभिसंधिना साक्ष्यं कुर्वन्ति, तेषां दशपणो दण्डः॥ १२०॥

यः पुनः तयोः पितापुत्रयोरन्तरे मध्ये अभिनिवेशेन पणदानाय धनदानाय वा प्रतिभूः स्यात्, तस्योत्तमसाहसो दण्डः। यत्तु—

"पितापुत्रविरोधे तु साक्षिणां त्रिपणो दमः।
अन्तरे च तयोर्यः स्यात् तस्याप्यष्टगुणो दमः॥"

[1] पञ्चाशत्पणक—छ, ट.    [2] पितृपुत्रविरोधेषु—ठ.    [3] सान्तरः—ठ.

इति **योगिस्मरणं**, तत् व्यवहारमार्गेणापि साक्ष्यप्रातिभाव्यकरणे अतिप्रसङ्गनिवृत्तये द्रष्टव्यम् । अल्पाभिनिवेशे तु अष्टशतम् । यथाहतुः **शङ्खलिखितौ**—"पितापुत्रयोर्विरोधे साक्षी न तिष्ठेत् । यस्तिष्ठेत् स दण्ड्यस्त्रीन् कार्षापणान् । यश्चान्तरे गच्छेत्, सोऽप्यष्टशतं दाप्यः" इति । अष्टाधिकशतमित्यर्थः । चकारात् दंपत्यादिग्रहणम्;

"गुरोः शिष्ये पितुः पुत्रे दंपत्योः स्वामिभृत्ययोः ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥"

इत्यत्र पित्रादिसाधर्म्याधिगमात् ॥ १२१ ॥

**तुलामानकूटकर्तुश्च ॥ १२२ ॥ [1]तदकूटे कूटवादिनश्च ॥ १२३ ॥ [2]द्रव्याणां प्रतिरूपविक्रयिकस्य च ॥ १२४ ॥**

तुला तोलनदण्डः । मानं कुडवाढकादि । चकारात् द्रम्मादिनाणकस्य कूटव्यवहर्तुश्च ग्रहणम् । एतेषां यः कूटं देशप्रसिद्धपरिहारेण न्यूनाधिकभावकल्पितमुद्रामुद्रितत्वं द्रव्यान्तरगर्भत्वं [3]च करोति, तस्योत्तमसाहसो दण्डः । यथाह **योगीश्वरः**—

"तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥"

इति ॥ १२२ ॥

तस्य तुलादेः अकूटं शुद्धिः; तस्यामपि यः कूटं वदति, चकारात् कूटमप्यकूटं वदति, तस्याप्युत्तमसाहसो दण्डः । यथाह **योगीश्वरः**—

"अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥"

इति ॥ १२३ ॥

द्रव्याणां सुवर्णरजतादीनां यत् प्रतिरूपं रसवेधाद्यापादितस्वर्णादिसादृश्यं ताम्रादि; तद्विक्रयोऽस्यास्तीति विक्रयी । तस्य विक्रयिकस्य विक्रेतुः उत्तमसाहसो दण्डः । चकारात् कर्णनासाच्छेदश्च । यथाह **योगीश्वरः**—

"कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥"

[1] तदकूटवादिनश्च—ट.
[2] द्रव्यग्रहणप्रतिरूपपरिक्रामकस्य च—क; द्रव्याणां omitted in ज.
[3] वा—छ, ट.

इति । यत्तु तेनैव—

“ मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥ ”

इत्युक्तं, तत् परिगणितद्रव्येष्वेवेति ध्येयम् ॥ १२४ ॥

**संभूय वणिजां पण्यमनर्घेणावरुन्धताम् ॥ १२५ ॥ [1]प्रत्येकं विक्रीणतां [2]च ॥ १२६ ॥**

एवं साहसे दण्डोऽभिहितः । सांप्रतं संभूय समुत्थाने दण्डं प्रस्तौति । तल्लक्षणमाह **नारदः**—

“ वणिक्प्रभृतयो यत्र कर्म संभूय कुर्वते ।
तत् संभूय समुत्थानं व्यवहारपदं स्मृतम् ”

इति । तत्र वणिजां दण्डमाह । ये पुनर्वणिजः संभूय मिलित्वा देशान्तरगतं पण्यमनर्घेण हीनमूल्येन प्रार्थयमाना अवरुन्धन्ति निर्बध्नन्ति, तेषां प्रत्येकमुत्तमसाहसो दण्डः; वक्ष्यमाणस्य प्रत्येकपदस्य मध्यस्थतयात्राप्यन्वयात् ॥ १२५ ॥

ये च स्वीयं पण्यमनर्घेणाधिकमूल्येन विक्रीणन्ति, तेषामपि प्रत्येकमुत्तमसाहसो दण्डः । यथाह **योगीश्वरः**—

“ संभूय वणिजां पण्यमनर्घेणोपरुन्धताम् ।
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः ॥ ”

इति । तेषां च लाभालाभव्यवस्थामाह **स एव**—

“ समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥ ”

इति । संविच्च लौकिकी अलौकिकी च । लौकिकी वणिगादिषु । अलौकिकी ऋत्विक्षु । यथाह **मनुः**—

“ ऋत्विजः समवेतास्तु यदा सत्रे निमन्त्रिताः ।
कुर्युर्यथार्हतः कर्म गृह्णीयुर्दक्षिणां तथा ॥ ”

इति । दक्षिणाविभागं चाह **कात्यायनः**—“ द्वादश द्वादशाद्येभ्यः, षट् षट् द्वितीयेभ्यः, चतस्रश्चतस्रस्तृतीयेभ्यः, तिस्रस्तिस्र इतरेभ्यः ” इति । आद्याः होत्रध्वर्युब्रह्मोद्गातारः । द्वितीयाः मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसि-

[1] प्रत्येकं वा—ठ.

[2] च omitted in ठ.

प्रस्तोतारः । तृतीयाः अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तारः । इतरे ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्याः । वृतस्य त्यागे अंशमाह मनुः—

" ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्मानुरूपेण देयोंऽशः सह कर्तृभिः ॥ "

इति । सह कर्तृभिः सहकारिभिरित्यर्थः । अत्र विशेषान्तरमाहतुः शङ्खलिखितौ—" अथ ऋत्विजि वृते यदि पश्चादन्यं वृणुयात् पूर्ववृतस्यैव दक्षिणा । यः पश्चात् वृतः, स किंचिल्लभते । अथ प्रवासश्चेत् कालं निमित्तं चावेक्षमाणस्तं कालमुदीक्षेत । नान्तरा यजेत । स्यादात्ययिको वा, तं क्रतुं संपादयेत् । प्रोष्य प्रत्यागतश्च किंचिल्लभते । स एवादुष्टस्तस्य ऋत्विक् कुलोपाध्यायः । एवं व्याधितपतितोन्मत्तप्रहीणप्रध्वस्तेषु संप्रसादकरणमृत्विक्षु " इति । कालः, पक्षमासादिः । निमित्तम्, विवाहादि । आत्ययिकः, कालान्तरे अशक्यः । प्रहीणः, अभिशापादिना त्यक्तः । प्रध्वस्तः, अतिवृद्धः । संप्रसादकरणम्, तेषां संतोषोत्पादनम् ॥ १२६ ॥

**गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्, तस्यासौ सोदयं दाप्यः ॥ १२७ ॥ राज्ञा च पणशतं दण्ड्यः ॥ १२८ ॥**

एवं संभूय समुत्थाने दण्डोऽभिहितः । इदानीं विक्रीयासंप्रदाने दण्डं प्रस्तौति । तल्लक्षणमाह नारदः—

" विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥
लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा ।
क्रयविक्रयधर्मेषु सर्वं तत् पण्यमुच्यते ॥
षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ॥ "

इति । गणिमम्, आम्रादि । तुलिमम्, धान्यादि । मेयम्, तैलक्षीरादि । क्रियया, दोहनवाहनादिकया गवाश्वादि । रूपतः, पण्याङ्गनादि । श्रिया, संपदा ग्रामारामादि; कान्त्या वा रत्नादि ।

तत्र षड्विधमपि [1]पण्यं विक्रीयासंप्रयच्छन्तं प्रत्याह । गृहीतं मूल्यं विक्रेत्रा यस्य तत् गृहीतमूल्यं पण्यं, क्रेतुः क्रेत्रे स्वदेशवासिने याच्यमानोऽपि यो विक्रेता नैव दद्यात्, तस्यासौ सोदयं दाप्यः । अयमभिसंधिः—यत् शतेन क्रीतं याच्यमानो न प्रयच्छति, तदेव यदि कालान्तरे पञ्चाशता हीनमूल्येन जातं, तत्रोदयेनावशिष्टेन पञ्चाशता सह तत् पण्यं क्रेत्रे विक्रेता दापनीयः । नैवेत्यवधारणात् अर्धपादादौ दत्ते तु

[1] द्रव्यं—ख, ग, छ, ट.

यावदवशिष्टं तस्यैव यावन्मूल्यमवहीयेत, तेनैव सह तावदेवाशिष्टं क्रेत्रे विक्रेता दापनीयः। यथाह **नारदः**—

> " अर्घे चेदवहीयेत सोदयं पण्यमावहेत् ।
> स्थायिनामेष नियमो दिग्लाभं वा दिगागतः ॥ "

इति । यदा तु अर्घह्रासो नास्ति, किंतु क्रयकाले कालान्तरे च तुल्य एवार्घः, तदा तत् पण्यं तस्मिन् देशे क्रयकाले विक्रीणतो यो लाभः, तेनोदयेन सह तत् क्रेत्रे विक्रेता दापनीयः । यदि तु क्रेता देशान्तरादागतः, तदा तत्पण्यमादाय स्वदेशे गत्वा विक्रीणतो यो लाभः, तत्सहितं पण्यं दाप्यः ; " दिग्लाभं वा दिगागतः " इति **स्मरणात्** । यदा तु गृहधेन्वादिकं गृहीतमूल्यं न प्रयच्छति, तदा तदुपभोगरूपेणोदयेन सहितं दाप्यः । यथाह **नारदः**—

> " विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति ।
> स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥ "

इति । क्षयः, उपभोगः । क्रियाफलं, दुग्धादि । इदमपि अननुशये । अनुशये तु **मनुराह**—

> " क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ।
> सोऽन्तर्दशाहात् तद् द्रव्यं दद्याच्चैवाददीत च ॥ "

इति । विशेषान्तरमाह **योगीश्वरः**—

> " दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम् ।
> बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ "

इति ॥ १२७ ॥

तस्य दण्डमाह । गृहीतमूल्यं पण्यं याच्यमानोऽप्यप्रयच्छन् राज्ञा पणशतं दण्ड्यः ॥ १२८ ॥

**क्रीतमक्रीणतो या हानिः सा क्रेतुरेव स्यात् ॥ १२९ ॥**

**राजनिषिद्धं विक्रीणतस्तदपहारः ॥ १३० ॥**

एवं विक्रीतानुशयोऽभिहितः । इदानीं क्रीतानुशयं प्रस्तौति । तल्लक्षणमाह **नारदः**—

> " क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
> क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥ "

इति । तदेतदुभयमेकं विवादपदम्; "क्रयविक्रयानुशयः" इति **मनु**स्मरणात् । तत्र क्रेतृदोषं विविनक्ति । क्रीतं दत्तमूल्यं पण्यं दीयमानमप्यक्रीणतः अगृह्णतः यद्युपहन्येत, तदासौ हानिः क्रेतुरेव स्यात्; न विक्रेतुः, दीयमानाग्रहणरूपोक्तदोषेण नष्टत्वात् । यथाह **नारदः**—

"दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी ।
स एवास्य भवेद्दोषो न क्रीतं यत् प्रतीच्छति ॥"

इति । यदि पुनर्याच्यमानोऽपि विक्रेता न प्रयच्छति, तदा विक्रेतुरेवासौ हानिः । यथाह **स** एव—

"उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः ॥"

इति ॥ १२९ ॥

यत् राज्ञा विशेषतो निषिद्धं 'नेदमन्यत्र विक्रेयम्' इति, तद्विक्रीणतः तस्यैव वस्तुनोऽपहारः कार्यः । निषेधोऽयोग्यतामपि गमयति । यथाह **योगीश्वरः**—"व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत्" इति ॥ १३० ॥

**तरिकः स्थलजं शुल्कं गृह्णन् दशपणान् दण्ड्यः**[1] ॥ १३१ ॥ **ब्रह्मचारिवानप्रस्थभिक्षुगुर्विणीतीर्थानुसारिणां**[2]**नाविकः शौल्किकः शुल्कमाददानश्च** ॥ १३२ ॥ **तच्च तेषां दद्यात्**[3] ॥ १३३ ॥

संभूय समुत्थाने वक्तव्यावशिष्टं शौल्किकं दण्डमाह । तीर्यतेऽनेनेति तरः नौकादिः । तच्छुल्काधिकारी तरिकः । तदाह **मनुः**—

"पणं याने तरे दाप्यः पौरुषेऽर्धपणं तरे ।
पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥
भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किंचित् पुमांसश्चापरिच्छदाः ॥"

इति । स यदि स्थलजं स्थलोद्भवं शुल्कं गृह्णाति, तदा दश पणान् दण्ड्यः । स्थलजं शुल्कमुक्तं तृतीयाध्याये 'स्वदेशपण्याच्च शुल्कांशं दशममादद्यात्' इत्यादिना ॥ १३१ ॥

1 दाप्यः—ठ. 2 तरिणां तारिकः शुल्कमाददानश्च—ठ. 3 जह्यात्—ठ.

तदेवं द्विविधं शुल्कमुक्तं भवति। तदुभयशेषातिक्रमे दण्डमाह। ब्रह्मचारी उपकुर्वाणो नैष्ठिकश्च। वानप्रस्थः तृतीयाश्रमः। भिक्षुः संन्यासी। गुर्विणी गर्भिणी। तीर्थानुसारी निरन्तरं तीर्थसेवी। एतेषां शुल्कमाददानो नाविकः जलशुल्काधिकारी, शौल्किकः स्थलशुल्काधिकारी च दश पणान् दण्ड्यः। अनेनैषां शुल्कं न ग्राह्यमित्युक्तं भवति। तथाच **स्मृत्यन्तरे**—

"न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते।
न भैक्ष्यलब्धे न धृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञे॥"

इति। गर्भिण्यां विशेषमाह **मनुः**—

"गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे॥"

इति॥ १३२॥

तेषां ब्रह्मचारिप्रभृतीनां गृहीतमपि शुल्कं परावर्त्य दद्यात्॥ १३३॥

**द्यूते कूटाक्षदेविनां करच्छेदः॥ १३४॥ उपधिदेविनां संदंशच्छेदः[1]॥ १३५॥ ग्रन्थिभेदकानां च॥ १३६॥ [2]उत्क्षेपकानां च करच्छेदः॥ १३७॥**

एवं संभूय समुत्थाने वक्तव्यावशिष्टो दण्डोऽभिहितः। इदानीं द्यूतसमाह्वये दण्डं प्रस्तौति। तल्लक्षणमाह **नारदः**—

"अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम्।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम्॥"

इति। अक्षाः पाशाः। वध्रः चर्मपट्टिका। शलाकाः दन्तादिमय्यो दीर्घचतुरश्राः। आद्यशब्दात्

"काकिन्यो वर्धकाश्चैव शलाका शोप एव च।
अक्षाः सबीजाः कुरुका द्यूतोपकरणानि षट्॥"

इति **स्मृत्यन्तरोक्तं** ग्राह्यम्। काकिन्यः कपर्दिकाः। शोपः चतुरङ्गं काष्ठादिनिर्मितं सैन्यम्। सबीजाः गुप्तबीजाः, कुरुका मुष्टयः। एतैः पणपूर्विका क्रीडा द्यूतम्। वयोभिः कुक्कुटादिभिः। चकारात् मेषमहिषादिभिश्च देवनं समाह्वय इति। **मनुः**—

"अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते।
प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः॥"

1 मर्मच्छेदः—ठ.

2 This Sūtra omitted in ख, ग.

इति । द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । तत्र कूटाक्षदेविनां दण्डमाह । द्यूते पूर्वोक्तकपटविकटैरक्षादिभिर्ये दीव्यन्ति, तेषां करच्छेदः कार्यः ॥ १३४ ॥

अन्यवञ्चनार्थं द्वित्रिसंप्रतिपत्तिहस्तचातुर्याद्यभिमतपातनं मणिमन्त्रादिना मतिवञ्चनं वा उपधिः; तेन ये दीव्यन्ति, तेषां संदंशच्छेदः । तर्जन्यङ्गुष्ठौ संदंशः; तस्य छेदः कार्यः । यत्तु **योगीश्वरेण** तेषां निर्वासनमुक्तम् "राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिजीविनः" इति, तत् ब्राह्मणविषयम्; तस्य शारीरदण्डनिषेधात् । चिह्नं श्वपदस्य । निर्वासने च विशेषमाह **नारदः**—

"कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् ।
कण्ठेऽक्षमालामासज्ज्य स ह्येषां विनयः स्मृतः ॥"

इति । यत्तु—

"द्यूतं समाह्वयं चैव यः कुर्यात् कारयेत वा ।
तान् सर्वान् घातयेद्राजा शूद्रं च द्विजलिङ्गिनम् ॥"

इति **मनुना** द्यूतं निषिद्धं, तत् कूटद्यूतविषयं राजाविदितद्यूतविषयं वा वेदितव्यम् । यथाह **बृहस्पतिः**—

"द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।
तत् प्रवर्तितमन्यैस्तु राजभागसमन्वितम् ॥"

इति । राजभागो राजसभिकसंप्रतिपत्त्या यावान् कृतो भवति, तावानेव । यथाह **योगीश्वरः**—"स सम्यक् पालितो दद्याद्राज्ञे भागं यथाकृतम्" इति । तद्वृत्तिं त्वाह **स** एव—

"ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥"

इति । ग्लहः पणः, तस्मिन् । शतिका शतपरिमिता अधिका वा वृद्धिः लाभो यस्य, तस्मात् धूर्तकितवात् निपुणदेविनः पञ्चकं शतं शते पञ्चकम् । इतरात् अनिपुणकितवात् पराजितात् दशकं शतं, शते दशकं सभिकः [1]द्यूतसभापतिः राजभागं देविनामुत्तमभागं च वृद्धिं गृह्णीयादित्यर्थः । समाह्वयस्तु द्यूतधर्मक एवेति न पृथग्विधानम् । यथाह **स** एव—"एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये" इति ॥ १३५ ॥

प्रसङ्गात् पुनः स्तेयदण्डमाह । [2]वस्त्रावबद्धं द्रव्यं विस्रस्योत्कृत्य वा ये अपहरन्ति, ते ग्रन्थिभेदकाः; [3]तेषां संदंशच्छेदः ॥ १३६ ॥

ये वस्त्रपात्रादि उत्क्षिप्यापहरन्ति, ते उत्क्षेपकाः । तेषां करच्छेदः कार्यः । प्रस्तुतेऽपि करच्छेदे व्यवायान्नानुषङ्ग इति पुनरुपादानम् । द्वितीयापराधे करं पादं चैकं छिन्द्यात् । यथाह **योगीश्वरः**—

[1] राजसभापतिः—ख, ग, ट.
[2] वस्त्राञ्चलबद्धं—ग, छ.
[3] तेषां संदंश to ते उत्क्षेपकाः omitted in ख, ग, ट.

"उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ ।
कार्यौ द्वितीयापराधे करपादैकहीनकौ ॥"

इति । तृतीयापराधे वध एव । यथाह **मनुः**—

"अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥"

इति ॥ १३७ ॥

**दिवा पशूनां वृकाद्युपघाते पाले त्वनायति पालदोषः ॥ १३८ ॥ विनष्टपशुमूल्यं च स्वामिने दद्यात् ॥ १३९ ॥ अननुज्ञातां दुहन् पञ्चविंशतिं कार्षापणान् ॥ १४० ॥**

एवं प्रासङ्गिकं परिसमाप्येदानीं स्वामिपालविवादे दण्डं प्रस्तौति । तल्लक्षणं त्ववयवार्थप्रसिद्ध्यैव सिद्धमित्यभिप्रेत्याह **मनुः**—

"पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥"

इति । तत्र दोषकार्यं वक्तुं पालदोषं विविनक्ति । पशूनां गवादीनां दिवा दिवसे वृकाद्युपघाते वृकश्वसृगालादिभिरुपघाते कृते, असौ पालस्यैव दोषोऽवगन्तव्यः, यद्यसौ पालो वृकाद्यवरुद्धांस्तान् मोचयितुं न यतेत । यथाह **मनुः**—

"अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात् पाले तत् किल्बिषं भवेत् ॥"

इति । वृकैः संरुद्धे इति वचनात् असंरुद्धानामाकस्मिकवृकाद्युपघाते न [1]पालदोषः । यथाह **स** एव—

"तासां चेदनिरुद्धानां चरन्तीनां मिथो वने ।
यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥"

इति । दिवाग्रहणात् रात्रौ स्वामिगृह उपघाते स्वामिन एव दोषः । दिवारात्रं पालाधीनयोगक्षेमतायां पुनः पालस्यैव । यथाह **मनुः**—

"दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमेऽन्यथा चेत् स्यात् पालो वक्तव्यतामियात् ॥"

[1] पाले—ख, ट.

इति । वृकग्रहणात् व्याघ्रादिभिरनिवार्यैर्हते न दोषः । यथाह **नारदः**—

"व्याघ्रादिभिर्हतो वापि वज्राशनिहतोऽपि वा ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ॥"

इति । अनायतीत्यपि सत्यां शक्तौ । ग्रहणादिना त्वशक्तौ न दोषः । यथाह **व्यासः**—

"पालग्रहे ग्रामघाते तथा राष्ट्रे सविभ्रमे ।
यत् प्रनष्टं हृतं वापि न पालस्तत्र किल्बिषी ॥"

इति । स्वाशक्त्या स्वामिने चेन्निवेदयति, तदापि न दोषः । यथाह **मनुः**—

"विज्ञाप्य तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥"

इति ॥ १३८ ॥

इदानीं दोषनिर्णयकार्यमाह । पालदोषेणोपेक्षादिना विनष्टानां पशूनां मूल्यं पशुस्वामिने पालो दद्यात् । चकारात् राजदण्डमपि । यथाह **नारदः**—

"अव्यायच्छन्नविक्रोशन् स्वामिने वानिवेदयन् ।
वोढुमर्हति गोपस्तां विनयं चैव राजनि ॥"

इति । विनयप्रमाणमाह **योगीश्वरः**—

"पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिनो मूल्यमेव च ॥"

इति । अव्यायच्छन् अयतमानः । अविक्रोशन् गोपान्तरमनाकारयन् । स्वामिने वानिवेदयन्नित्यनेन तन्निवेदने न मूल्यादिदानमित्युक्तं भवति । इदमपि कृतवेतने पाले । यथाह **योगीश्वरः**—

"यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत् तथा ।
प्रमादमृतनष्टांश्च स दाप्यः कृतवेतनः ॥"

इति । वेतनं च द्वेधा—पशुवेतनं क्षीरवेतनं चेति । पशुवेतनमाह **नारदः**—

"गवां शताद्वत्सतरी धेनुः स्याद् द्विशते भृतिः ।
प्रतिसंवत्सरं गोपे संदोहश्चाष्टमेऽहनि ॥"

इति । क्षीरवेतनमाह **मनुः**—

"गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः ॥"

इति । दशानां दोग्ध्रीणां मध्ये उत्कृष्टामेकां प्रत्यहं दुग्ध्वा दुग्धं गृह्णीयादित्यर्थः । क्षीरशून्यानां तु तन्मूल्यं कल्पनीयम् । न्यूनाधिकसंख्यानामप्यनयैव दिशा कल्पना । पालान्तरेऽप्ययमेव विधिरित्याह **नारदः**—

"अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेषु च विशुद्धः स्याद्वालशृङ्गादिदर्शनात् ॥"

इति ॥ १३९ ॥

[1]अननुज्ञातदोहने दण्डमाह । स्वभृत्यर्थमेव स्वाम्यननुज्ञातां दोग्ध्रीं दुहन् पालः पञ्चविंशतिं कार्षापणान् 'दण्ड्यः' इत्यग्रिमस्यानुषङ्गः । स्वामिने दद्यादित्यस्यानुषङ्गे तु न्यायविरोधः; स्वामिनो दण्डानधिकारात्, मूल्यस्य वाधिक्येनायुक्तत्वात् । भृतिं विना त्वननुमतदोहने 'सूत्रकार्पास' इति सूत्रोक्तो मूल्यात् त्रिगुणो दण्डो द्रष्टव्यः ॥ १४० ॥

**महिषी चेत् सस्यनाशं कुर्यात्, तत्पालस्त्वष्टौ माषान् दण्ड्यः ॥ १४१ ॥ अपालायाः स्वामी ॥ १४२ ॥ अश्वस्तूष्ट्रो गर्दभो वा ॥ १४३ ॥ गौश्चेत् तदर्धम् ॥ १४४ ॥ तदर्धमजाविकम्[2] ॥ १४५ ॥**

पशुभिः परसस्यनाशे दण्डमाह । पालानवेक्षणेन महिष्या परसस्ये भक्षणादिना नाशिते, तस्या महिष्याः पालः अष्टौ माषान् दण्ड्यः;

"या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् ।
न तत्र गोमिनां दण्डः पालस्तद्दण्डमर्हति ॥"

इति **स्मरणात्** । महिषीशब्दोऽत्र जातिवचनः । तेन महिषस्याप्येवमेव दण्डः । यत्तु—"गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति" इति **योगिस्मरणं**, तत् गोवारणेन पालदोषाल्पत्वाभिप्रायेणेति मन्तव्यम् । तथाच **बृहस्पतिः**—

"सस्यान्निवारयेद्गास्तु चीर्णे दोषो द्वयोर्भवेत् ।
स्वामी सदशमं दण्ड्यः पालस्ताडनमर्हति ॥"

इति । यद्यपि, "यत्रोक्तो माषकैर्दण्डो राजतं तत्र निर्दिशेत्" इति **कात्यायनीय**परिभाषया रजतमाषाः प्रतीयन्ते, तथापि अल्पापराधे तेषामन्याय्यत्वात् "माषो विंशतिमो भागः पणस्य परिकीर्तितः" इति **नारदीय**लिङ्गाच्च ताम्रिका एव गृह्यन्ते । वस्तुतस्तु पणषोडशोंऽशोऽत्र माषो ग्राह्यः; **मनू**क्तत्वात्; तस्यैव च दण्डोपयोगित्वादित्युक्तं प्राक् ॥ १४१ ॥

1 अननुज्ञात to कार्षापणान् omitted in ख, ग.        2 चेत् added in क, ठ.

पालाभावे त्वाह। यस्याः पुनः महिष्याः पालो नास्ति, तत्स्वाम्येव पूर्वोक्तं दण्डं दाप्यः। न तु ताड्यः; "गोपस्ताड्यः" इति विशेषात् ॥ १४२ ॥

महिषीदण्डविषयानन्यानप्याह। अश्वोष्ट्रगर्दभाश्चेत् परसस्यं नाशयेयुः, तदा तत्पालोऽष्टौ माषान् दण्ड्यः, ताड्यश्च। तदभावे स्वाम्येव दण्ड्यः। यथाह **योगीश्वरः**—"खरोष्ट्रं महिषीसमम्" इति। तुशब्दादश्वतरो गृह्यते; खराश्वप्रकृतिकत्वात्। वाशब्दात् गजश्च; "खराश्वोष्ट्रमृगेभानाम्" इति संकरीकरणसाम्यात्। यत्तु "अश्वतरगजवाजिनश्चादण्ड्याः" इति **शङ्खस्मरणं**, तत् राजकीयाश्वादिविषयम्; "अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः" इति **उशनसा** तेषां प्रजापालत्वेन विशेषणात् ॥ १४३ ॥

गौश्चेत् परसस्यं नाशयति, तदा तत्पालस्तदर्धं महिषीदण्डार्धं चतुरो माषान् दण्डनीयः। तदभावे स्वामी। दिवा भक्षणे चैतत्। रात्रौ तु पञ्च माषान्। यथाहतुः **शङ्खलिखितौ**—"रात्रौ चरन्ती गौः पञ्च माषान्" इति। अनेन महिष्यादीनां रात्रौ चरणे दशमाषिको दण्डः सिध्यति। यथाहतुर**तावेव**—"सर्वेषामेव वत्सानां माषम्। महिषी दश। खरोष्ट्रं षोडश। अजाविकं चतुरः" इति ॥ १४४ ॥

अजाविकं चेत् परसस्यं नाशयति, तदा तत्पालस्तदर्धं गोदण्डार्धं द्वौ माषौ दण्डनीयः। तदभावे स्वामी ॥ १४५ ॥

**भक्षयित्वोपविष्टेषु द्विगुणम् ॥ १४६ ॥ सर्वत्र स्वामिने [1]विनष्टसस्यमूल्यं च ॥ १४७ ॥ पथि [2]ग्रामे विवीतान्ते[3] न दोषः ॥ १४८ ॥ अनावृते च ॥ १४९ ॥ अल्पकालम् ॥ १५० ॥ उत्सृष्ट[4]वृषभसूतिकानां च ॥ १५१ ॥**

अपराधविशेषे दण्डद्वैगुण्यमाह। यदि पुनः परक्षेत्रे सस्यं यथेष्टं भक्षयित्वा उपविष्टाः, तदा यथोक्तद्विगुणो दमः। सवत्सानां पुनः चतुर्गुणः; "वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः" इति **स्मरणात्**। वत्सानां तु माष एव; "सर्वेषामेव वत्सानां माषम्" इति **शङ्खलिखितस्मरणात्**। यत्तु **नारदेनोक्तम्**—

"माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा।
तथाजाविकवत्सानां दण्डः स्यादर्धमाषकः ॥"

इति, तत् पुनःप्ररोहयोग्यमूलावशेषभक्षणविषयम् ॥ १४६ ॥

[1] सस्य omitted in ट.
[2] ग्रामे omitted in ठ.
[3] सीमान्ते—क.
[4] वृषसूति—ठ.

उक्तदण्डविधेः शेषमाह। सर्वत्राप्युक्तविषये यस्य क्षेत्रे यावत् सस्यं पशवो भक्षयन्ति नाशयन्ति वा, तावत्सस्यफलमूल्यं मध्यस्थकल्पितं क्षेत्रस्वामिने पशुस्वामी दद्यात्। न तु पालः; भक्षितसस्यफलस्य गोक्षीरादेः स्वामिगामित्वात्। पशुजग्धावशिष्टं च स्वयं गृह्णीयात्। यथाह **नारदः**—

"गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते।
सामन्तानुमते देयं धान्यं यत् तत्र वापितम्।
गोजग्धं गोमिना देयं धान्यं वै कर्षकस्य तु॥"

इति॥ १४७॥

उक्तदण्डस्य क्षेत्रविशेषे अपवादमाह। पथि मार्गे। ग्रामे ग्राममध्ये। विवीतं तृणाद्यर्थं रक्ष्यमाणो भूभागः। तत्समीपे च यत् क्षेत्रं, तत्राकामतो भक्षितेऽपि सस्ये, स्वामिपालयोर्न दोषः। दोषाभावेन च दण्डमूल्यदानयोर्निवृत्तिः। यथाह **नारदः**—

"ग्रामोपान्तेषु यत् क्षेत्रं विवीतान्ते महापथे।
अनावृतं च तन्नाशे न पालस्य व्यतिक्रमः॥"

इति॥ १४८॥

किंच आवृतिशून्ये क्षेत्रे चाकामतः सस्यभक्षणे न दोषः। यथाह **मनुः**—

"तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्॥"

इति। वृतिं चाह **नारदः**—

"वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत्।
न लङ्घयेत् पशुर्नाश्वो न भिन्द्याद्यां च सूकरः॥"

इति। अनावृत इति वचनात् वृतियुक्तस्य भक्षणे तु दोषोऽस्त्येव। यथाह **नारदः**—

"उत्क्रम्य तु वृतिं यः स्यात् सस्यघातो गवादिभिः।
पालः शास्यो भवेत् तत्र स चेच्छक्त्या न वारयेत॥"

इति॥ १४९॥

किंच अल्पकालं ग्रासमात्रभक्षणे न दोषः। यथाहतुः **शङ्खलिखितौ**—"ग्रासे त्वदण्डः" इति॥ १५०॥

पशुविशेषेष्वपवादमाह। उत्सृष्टाः वृषोत्सर्गादिविधिना देवपित्राद्यर्थम्। वृषभो महोक्षः गवां सेक्ता। सूतिका अनिर्दशाहा प्रसूता पशुस्त्री। एतेषां परसस्यभक्षणेऽपि न दोषः। चकारात् आगन्तुकादीनां च। यथाह **मनुः**—

" अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः ।
अदण्ड्यौ काणकुण्ठौ च ये शश्वत् कृतलक्षणाः ॥
अदण्ड्यागन्तुकी गौश्च सूतिका वाभिसारिणी ।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ॥"

इति । यद्यप्युत्सृष्टानां स्वामिपालरहितत्वात् दण्डो न संभवति, तथापि "विपालं बन्धयेत् पशुम्" इति **मनूक्त**बन्धनरूपपशुदण्डाभावबोधनार्थमुपादानम् । तदेतत् स्पष्टीकृतं **मनुनैव**—

" अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा ।
सपालान् वा विपालान् वा अदण्ड्यान् मनुरब्रवीत् ॥"

इति विपालानामदण्ड्यत्वमभिदधता । एतेन दृष्टान्तार्थमुत्सृष्टोपादानमिति निरस्तम् ॥ १५१ ॥

**यस्तूत्तमवर्णान्[1] दास्ये नियोजयेत्[2] तस्योत्तमसाहसो दण्डः ॥ १५२ ॥ त्यक्तप्रव्रज्यो राज्ञो दास्यं कुर्यात् ॥ १५३ ॥**

एवं स्वामिपालविवादे दण्डोऽभिहितः । इदानीमभ्युपेत्याशुश्रूषायां दण्डं प्रस्तौति । तल्लक्षणमाह **नारदः**—

" अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥"

इति । स्वीकृत्याकरणं सेवाया इत्यर्थः । तत्रैकोनविंशतिप्रकाराः सेवकाः । तेषां चत्वारः शुश्रूषकाः । पञ्चदश दासाः । सर्वेऽप्यस्वतन्त्राः । तत्राद्याः शुभकर्मकराः । इतरे अशुभकर्मकरा इति । तदाह **नारदः**—

" शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः ।
अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् ॥
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥"

[1] उत्तमवर्ण—ठ. [2] नियोजयिष्यति—ज ; नियोजयति—ठ.

इति। वेदविद्यार्थी शिष्यः। शिल्पविद्यार्थी अन्तेवासी। भृत्या कर्मकरो भृतकः। कर्मकराधिष्ठाता अधिकर्मकृत्। भृतकोऽपि त्रिविधः—

"उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः।
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः॥"

दासास्तु,

"गृहजातस्तथा क्रीतो लब्धो दायादुपागतः।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः॥
मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः॥
भक्तदासस्तु विज्ञेयस्तथैव बडबाहृतः।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः॥"

इति। गृहे जातो दास्याम्। क्रीतलब्धौ प्रसिद्धौ। दायादागतः रिक्थलब्धः। अनाकालभृतः दुर्भिक्षपोषितः। आहितः बन्धकीकृतः। ऋणमोचितयुद्धजितपणजिताः प्रसिद्धाः। 'तवाहं दासः' इति वादी। प्रव्रज्याप्रच्युतः। कृतः भृतिदानेन। भक्तेन भोजनेन दासः। बडबा गृहदासी; तदर्थदासः। आत्मविक्रेता प्रसिद्धः। एतैरेव निमित्तैः दास्योऽपि पञ्चदशप्रकारा भवन्ति। तदेवं दास्ये [1]तावत् वर्णव्यवस्थातिक्रमे दण्डमाह। यस्तु [2]औद्धत्येनोत्तमवर्णान् ब्राह्मणादीनधमवर्णः क्षत्रियादिः दास्ये अशुभकर्मकरणे नियोजयेत्, तस्योत्तमसाहसो दण्डः कार्यः। अनेनानुलोम्येनैव दास्यव्यवस्था दर्शिता। यथाह **नारदः**—

"वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम्॥"

इति। स्वातन्त्र्यत्यागो नाम दास्यम्। आनुलोम्यं साजात्यस्याप्युपलक्षणम्। यथाह **कात्यायनः**—

"क्षत्रविट्शूद्रवर्णांस्तु समवर्णः कदाचन।
कारयेद्दासकर्माणि ब्राह्मणं न बृहस्पतिः॥"

इति। ब्राह्मणस्य समवर्णेऽपि दास्यं नेत्याह **नारदः**—"समवर्णोऽपि विप्रं तु दासत्वं नैव कारयेत्" इति। यदि पुनः स्वेच्छया किंचित् हीनं कर्म करोति, तथाप्यशुभं कर्म न कुर्यादित्याह **स एव**—

"शीलाध्ययनसंपन्ने तदूनं कर्म कामतः।
तत्रापि नाशुभं किंचित् प्रकुर्वीत द्विजोत्तमः॥"

[1] तावत् omitted in ग.

[2] उत्तमवर्णान् दास्ये अशुभकर्मणि नियोजयेत्—ग.

इति । आनुलोम्येऽपि बलाद् दास्यकरणे दण्डमाह **मनुः**—

" दास्यं तु कारयेल्लोभाद् ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छातः प्रभुत्वेन राज्ञा दण्ड्यः शतानि षट् ॥ "

इति । संस्कृतत्वविशेषणात् व्रात्यानामनिच्छतामपि दास्यं करणीयं गम्यते । यथाह **नारदः**—

" वर्णानां प्रातिलोम्येन न दासत्वं विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥ "

इति ॥ १५२ ॥

स्वधर्मत्यागिनः प्रातिलोम्येनापि दास्याप्राप्तौ अपवादमाह । त्यक्ता प्रव्रज्या संन्यासो येनासौ । स राज्ञो यावज्जीवं दास्यं कुर्यात्, यदि प्रायश्चित्ते न प्रवर्तते । यथाह **योगीश्वरः**—" प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः " इति । प्रव्रज्यावसित इत्यस्य " वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः " इत्युत्तरार्धेनापवाद इति सिद्धम् । ततश्च प्रव्रज्यावसित इति सामान्योपादानेऽपि दास्यं क्षत्रियवैश्ययोरेव; न ब्राह्मणस्य । यथाह **कात्यायनः**—

" प्रव्रज्यावसिता ये तु त्रयो वर्णा द्विजातयः ।
विवासं कारयेद्विप्रं दासत्वं क्षत्रवैश्ययोः ॥ "

इति । विवासं कारयेत्; अङ्कयित्वा प्रवासयेदित्यर्थः;

" पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥ "

इति **दक्षस्मरणात्** । अनेन प्रव्रज्यावसितस्य यावज्जीवदास्यश्रवणात् अन्येषां दासत्वविमोकोऽस्तीत्युक्तं भवति । तदाह **योगीश्वरः**—

" बलाद् दासीकृतश्चोरैर्विक्रीतश्चापि मुच्यते ।
स्वामिप्राणप्रदो भक्तत्यागात् तन्निष्क्रयादपि ॥ "

इति । स्वामिप्राणरक्षणं सर्वेषां साधारणं दास्यविमोककारणम् । यथाह **नारदः**—

" यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात् ।
दासत्वात् स विमुच्येत पुत्रलाभं लभेत वा ॥ "

इति । दास्यविमोकप्रकारस्तेनैवोक्तः—

" स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात कुम्भं सहाम्भसा ॥

साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमवासृजेत् ॥ ”

इति । दासीत्वविमोके विशेषमाह स एव—

“ स्वां दासीं यस्तु संगच्छेत् प्रसूता च भवेत् ततः ।
अवीक्ष्य बीजं कार्या स्याददासी सान्वया तु सा ॥ ”

इति । बीजमवीक्ष्य ; हेतुमनपेक्ष्यैवेत्यर्थः ।

एवं दासदण्डोऽभिहितः । शिष्यदण्डस्तु—“ शिष्यशिष्टिरवधेन । अशक्तो रज्जुवेणुविदलाभ्यां तनुभ्याम् । अन्येन घ्नन् राज्ञा शास्यः ” इति **गौतमेना**भिहितः । अन्तेवासिनं प्रकृत्याह **नारदः**—

“ स्वं शिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत् कारयेत् कर्म पुत्रवच्चैनमाचरेत् ॥
यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् ।
प्राप्नुयात् साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥
शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥
शिक्षितोऽपि कृतं कालमन्तेवासी समाप्नुयात् ।
तत्र कर्म च यत् कुर्यादाचार्यस्यैव तत्फलम् ॥ ”

इति । वधोऽत्र कशादिताडनम् । कृतं कालम् ; परिभाषितं कालम् । तत्फलं, कर्मफलम् ॥ १५३ ॥

**भृतकश्चापूर्णे काले भृतिं त्यजन् सकलमेव मूल्यं दद्यात् ॥ १५४ ॥ राज्ञे च पणशतं दद्यात् ॥ १५५ ॥ तद्दोषेण यद्विनश्येत् तत् स्वामिने ॥ १५६ ॥ अन्यत्र दैवोपघातात् ॥ १५७ ॥**

इदानीं भृतकदण्डाभिधानेन वेतनादाने दण्डं प्रस्तौति । तल्लक्षणमाह **नारदः**—

“ भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ ”

इति । तत्र दण्डापराधं विवेचयंस्तत्फलमाह । पूर्वोक्तलक्षणस्त्रिविधोऽपि भृतकः अपूर्णे काले यावान् कालो दिनपक्षमासादिः पूर्वमभ्युपेतः, तस्मिन्नपूर्णे भृतिसाधनं कर्म पूर्वाभ्युपगतमारब्धमनारब्धं वा स्वदर्पेण त्यजन्

[1]अकुर्वन्, यावदभ्युपगतं, तावत् सकलमेव मूल्यं वेतनं स्वामिने दद्यात्। इदमभ्युपगतेऽगृहीते च वेतने। गृहीते तु द्विगुणं दद्यात्। यथाह **योगीश्वरः**—

"गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत्।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः॥"

इति। चकारात् विघ्नकृदपि। यथाह **वृद्धमनुः**—

"यः कर्मकाले संप्राप्ते न कुर्याद्विघ्नमाचरेत्।
तद्भृत्यो न्यस्तकार्यः स्यात् प्रदाप्यो द्विगुणं भृतम्॥"

इति। विघ्नः, अन्यस्यापि तत्कर्तुः प्रतिषेधः। इदमपि गृहीतवेतने। स्वामिने दानविधिनैव स्वभृतिहानिरर्थत एवोक्ता। तदाह **नारदः**—

"कालेऽपूर्णे त्यजन् कर्म भृतो नांशमवाप्नुयात्।
स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयात्॥"

इति। अंशः भृतेः। अथवा अभ्युपगतां भृतिं दत्त्वा अनारब्धमारब्धं वा कर्मैव बलात् कारयितव्य इत्याह **स** एव—

"कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा बलाद् भृतिम्।
कर्मारम्भं तु यः कृत्वा सिद्धिं नैव तु कारयेत्।
बलात् कारयितव्यः स्यादकुर्वन् दण्डमर्हति॥"

इति। इदमप्यनार्ते;

"भृतोऽनार्तो न कुर्याद्यो दर्पात् कर्म यथोदितम्।
स दण्ड्यः कृष्णलानष्टौ न देयं तस्य वेतनम्॥"

इति **मनु**स्मरणात्। आर्तस्तु स्वास्थ्यानन्तरं तत कर्म कृत्वैव भृतिं लभेतेत्याह **स** एव

"[2]आर्तस्तु कुर्यात् स्वस्थः सन् यथाभाषितमादितः।
स दीर्घस्यापि कालस्य स्वं लभेतैव वेतनम्॥"

इति॥ १५४॥

दण्डमाह। स्वीकृतं कर्माकुर्वन् भृतको राज्ञे दण्डरूपेण पणशतं दद्यात। यथाह **वृद्धमनुः**—

"प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि।
स चेन्न कुर्यात् तत् कर्म प्राप्नुयाद् द्विशतं दमम्॥"

[1] अकुर्वन् omitted in ख, ग, छ, ट.

[2] श्रान्तस्तु—ख, ग.

इति । यत्तु "स दण्ड्यः कृष्णलानष्टौ" इति **मानवं**, तत् परित्यक्तस्य पुनःकरणविषयमेव । कृष्णलाश्च राजताः ॥ १५५ ॥

अन्यत्रापि दण्डदानमाह । तस्य भृतकस्य दोषेण प्रमादादिना यत् भाण्डं विनश्येत्, तत् मूल्यादिद्वारेण स्वामिने भृतको दद्यात् ॥ १५६ ॥

क्वचिदपवादमाह । दैविकात् राजकाद्वा यो भाण्डोपघातः, तत्र तन्मूल्यादि न दद्यात् । यथाह **योगीश्वरः**—"अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः" इति ॥ १५७ ॥

**स्वामी चेत् भृतकमपूर्णे काले जह्यात्, तस्य सर्वमेव मूल्यं दद्यात् ॥ १५८ ॥ पणशतं च राजनि ॥ १५९ ॥ अन्यत्र भृतकदोषात् ॥ १६० ॥**

यः पुनः स्वामी कर्मात्यजन्तं भृतकमपूर्णे काले त्याजयति, स तस्य परिकल्पितं मूल्यं वेतनं सर्वमेव दद्यात् । इदमर्धकरणे । अन्यत्र तु सप्तमादिभागम् । यथाह **योगीश्वरः**—

"प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि वा"

इति । त्यक्तृत्याजकयोरुभयोरप्येतत् तुल्यमेव, वाशब्दश्रवणात् । ततश्च प्रक्रान्ते कर्मणि यस्त्यजति स भृतिसप्तमांशं दत्त्वा त्यजेत् । यो वा त्याजयति सोऽपि तावद्दत्त्वा त्याजयेत् । एवमग्रेऽपि ॥ १५८ ॥

स्वामिदण्डमाह । अपूर्णे काले भृतकत्याजयिता स्वामी राजनि पणशतं दण्डं दद्यादित्यर्थः ॥१५९॥

अस्यापवादमाह । यदि भृतकस्य चौर्यक्रौर्यादिदोषो न स्यात्, तदा दण्डं दद्यादित्यर्थः ॥ १६० ॥

**[1]यः कन्यां पूर्वदत्तामन्यस्मै दद्यात्, स चौरवच्छास्यः ॥ १६१ ॥ वरदोषं विना ॥ १६२ ॥ निर्दोषां परित्यजन्[2] ॥ १६३ ॥ [3]पत्नीं च ॥ १६४ ॥**

अथ स्त्रीपुंधर्मे वक्तव्यावशिष्टं दण्डमाह । यः पुनः पूर्वमन्यस्मै वाचा दत्तां कन्यामन्यस्मै दद्यात्, स चौरदण्डेन स्त्रीहरणनिमित्तेन वधेन शास्यः । यथाह **मनुः**—

"पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥"

इति ॥ १६१ ॥

[1] यदि—च. [2] परित्यज्य—ठ. [3] यः स्त्रीं च—छ.

अस्यापवादमाह । यदि उन्मादादिदोषा वरे न भवेयुरित्यर्थः । तानाह **नारदः**—

" उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः ।
कन्यादोषाश्च ये पूर्वे चैव दोषगणो वरे ॥ "

इति । दीर्घकुत्सितरोगादयः कन्यादोषाः । दोषं विनेति वचनात् सदोषवरत्यागे न दण्डः ; " दत्तामपि हरेत् पूर्वाच्छ्रेयश्चेद्वर आव्रजेत् " इति **योगिस्मरणात्** । पूर्वात्, दुष्टात् । तथाच **नारदः**—

" दत्त्वा [1]न्यायेन यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यश्चौरदण्डवत् ॥ "

इति ॥ १६२ ॥

वरं प्रत्याह । यो निर्दोषां कन्यां वाचा प्रतिगृह्यापि त्यजति, स चौरवत् शास्यः । यथाह **नारदः**—

" प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेन्नरः ।
विनेयः स त्वकामोऽपि कन्यां तामेव चोद्वहेत् ॥ "

इति । विनयमप्याह **स एव**—" अदुष्टां परिगृह्यापि त्यजन्नुत्तमसाहसम् " इति । निर्दोषामिति वचनात् सदोषापरित्यागे न दण्डः । यथाह **मनुः**—

" विधिवत् परिगृह्यापि त्यजेत् कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥ "

इति । विशेषतो देशकुलादिदोषेण गर्हिताम्, असाध्यव्याध्युपसृष्टां, विप्रदुष्टां प्रतिलोमादिभुक्ताम्; छद्मना, अन्यप्रदर्शनेनान्यदानादिना । तादृशीं पाणिग्रहणादिविधिना प्रतिगृह्यापि धर्मकार्योपभोगयोस्त्यजेत् इति ॥ १६३ ॥

[2]पतिं प्रत्याह । य एवादुष्टकन्यापरित्यागे वरस्य दण्डः, स एवादुष्टां पत्नीं विवाहसंस्कृतामपि परित्यजत इति । यथाह **नारदः**—

" अनुकूलामदुष्टां च दक्षां साध्वीं प्रजावतीम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥ "

इति । भूयसा, उत्तमसाहसेन । अवस्थाप्यः ; तस्यामेव । तदशक्तौ **योगीश्वरः**—

" आज्ञासंपादनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ "

इति । चतुर्थ्यर्थे षष्ठी । तेन तृतीयांशासंभवे भरणमात्रमित्यर्थः ॥ १६४ ॥

[1] कान्ताय—ख, ग, छ.

[2] पत्नीं—ख, ट.

**अजानानः प्रकाशं यः परद्रव्यं क्रीणीयात्, तत्र तस्य न दोषः ॥ १६५ ॥ स्वामी द्रव्यमाप्नुयात् ॥ १६६ ॥ यद्यप्रकाशं हीनमूल्यं च क्रीणीयात्, तदा क्रेता विक्रेता च चौरवच्छास्यौ ॥ १६७ ॥**

अथास्वामिविक्रये दण्डं प्रस्तौति । तल्लक्षणमाह **नारदः**—

"निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य च ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥"

इति । तत्र दण्डाभिधानायापराधं विविनक्ति । यः 'परद्रव्यमयमिदं[1] विक्रीणीते' इत्यजानन् प्रकाशमनेकजनसमक्षं परद्रव्यं परेण विक्रीयमाणमपि क्रीणीयात्, तादृशे क्रये न क्रेतुर्दोषः । प्रकाशो वणिग्वीथ्यादेरुपलक्षणम् । यथाह **मरीचिः**—

"वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
दिवा गृहीतं यत् क्रेता स शुद्धो लभते धनम् ॥"

इति ॥ १६५ ॥

दोषाभावोक्तिर्दण्डाभावाय; न पुनः क्रीतद्रव्यप्राप्तये इत्याह । क्रीतद्रव्यस्वामी परिक्रीतं स्वं द्रव्यं क्रेतुः सकाशात् अवाप्नुयात्, यद्यसौ विक्रेतारं न दर्शयति । दर्शिते तु तस्मिन् न क्रेताभियोज्यः, किंतु तस्मादेव । यथाह **बृहस्पतिः**—

"मूले समाहृते क्रेता नाभियोज्यः कथंचन ।
मूलेन सह वादस्तु नाष्टिकस्य विधीयते ॥"

इति । इदमुपलक्षणम् । क्रेता मूल्यं नृपो दण्डं चाप्नुयात् । यथाह **योगीश्वरः**—

"विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥"

इति । शुद्धिः; क्रेतुरिति शेषः । यत्तु "स शुद्धो लभते धनम्" इति, तत्र धनं मूल्यमित्यर्थः । यदि पुनरसंनिहितो विक्रेता, तदा तदानयनाय कालो देयः;

"प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालश्च देयस्तत्राध्वसंख्यया ॥"

[1] अयं omitted in ख, छ.

इति **कात्यायन**स्मरणात्। यदि पुनस्तमाहर्तुं न शक्नोति, तदा क्रयमेव साक्ष्यादिभिः साधयेत् स्वचौर्यभ्रमनिरासाय; "असमाहार्यमूलस्तु क्रयमेव विशोधयेत्" इति **स्मरणात्**। यदा पुनः क्रयं मूलं चोभयमपि न शोधयति, तदा स एव दण्ड्यः;

"अनुपस्थापयन्मूलं क्रयं चाप्यविशोधयन्।
यथाभियोगं धनिने धनं दाप्यो दमं च सः॥"

इति **कात्यायन**स्मरणात्। यदा त्वपरिचयादेव न मूलं दर्शयति, साक्षिभिस्तत्र क्रयं शोधयति, तदा त्वर्धं मूल्यं क्रेता लभते;

"अविज्ञाताश्रयात् क्रीतं विक्रेता यत्र वा मृतः।
स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम्॥"

इति **बृहस्पति**स्मरणात्॥ १६६॥

प्रकाशादिविशेषणप्रयोजनमाह। यदि पुनरप्रकाशमेकान्ते गृहीतम्; अल्पीकृतं मूल्यं यस्यां क्रियायाम्, बहुमूल्यमल्पमूल्येनेति यावत्; तथा वा यः प्रक्रीणीयात्, असौ क्रेता विक्रेता चोभावपि चौरवत् शास्यौ। चकारात् हीनक्रयादेर्ग्रहणम्। यथाह **योगीश्वरः**—

"स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः॥"

इति। हीनात्, पण्यसंभवहीनात्; न त्वागमहीनात्, प्रकरणलब्धत्वात् तस्यार्थस्य। वेलाहीने; रात्र्यादौ॥१६७॥

**गणद्रव्यापहर्ता विवास्यः॥ १६८॥ तत्संविदं यश्च लङ्घयेत्॥ १६९॥ निक्षेपापहार्यर्थवृद्धिसहितं धनं धनिकस्य दाप्यः॥१७०॥ राज्ञा चौरवच्छास्यः॥ १७१॥ यश्चानिक्षिप्तं निक्षिप्तमिति ब्रूयात्॥ १७२॥**

संविद्व्यतिक्रमे दण्डं प्रस्तौति। तल्लक्षणं व्यतिरेकमुखेनाह **नारदः**—

"पाषण्डनैगमादीनां स्थितिः समय उच्यते।
समयस्यानपाकर्म तद्विवादपदं स्मृतम्॥"

इति। पाषण्डाः प्रव्रज्यावसिताः। नैगमाः नानापौरसमूहाः। आदिशब्दात् श्रेणिपूगादीनां ग्रहणम्। यथाह **कात्यायनः**—

"नानापौरसमूहस्तु नैगमाः संप्रकीर्तिताः।
नानायुधधरा व्राताः समवेतास्तु कीर्तिताः॥

समूहो वणिगादीनां पूगः स परिकीर्तितः ।
प्रव्रज्यावसिता ये तु पाषण्डास्त उदाहृताः ॥
ब्राह्मणानां समूहस्तु गणः स परिकीर्तितः ।
शिल्पोपजीविनो ये तु श्रेणयस्ते प्रकीर्तिताः ॥
आर्हतसौगतानां तु समूहः संघ उच्यते ।
चण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥
गणाः पाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चान्ये वध्यांस्त्वाह बृहस्पतिः ॥
चातुर्वर्ण्यस्य या सूतिः स्वस्वजातिसमुद्भवा ।
यस्या धर्मः सदा रक्ष्यः सा जातिः परिकीर्तिता ॥"

इति । एतेन नैगमादिशब्दानां पाशुपतादिपरत्वेन व्याख्या प्रत्याख्याता । एतेषां समयस्य व्यतिक्रमो विवादपदमित्यर्थः । पाषण्डाद्युपन्यासस्तेषां समयमात्रमूलकत्वेन तत्प्राधान्यात् । वस्तुतस्तु त्रैविद्यवृद्धानामपि सभाप्रपादिनिर्माणैकमत्यस्य व्यतिक्रमो विवादपदं भवत्येव । तत्र गणद्रव्यापहारे दण्डमाह । गणो ब्राह्मण-समूहः; तदर्थं राजादिप्रेषितं द्रव्यं गणद्रव्यम् । तस्याप्यपहर्ता । तथा तत्समानधर्मतया सभाप्रपादिनिर्माणाय ऐकमत्येन प्रवृत्तैः बहुभिरेकीकृतं द्रव्यं गणद्रव्यम् । तस्याप्यपहर्ता स्वराष्ट्रात् [1]राज्ञा विवास्यः ॥ १६८ ॥

संविद्व्यतिक्रमे दण्डमाह । तस्य गणस्य संविदं समयं यो लङ्घयेत् अतिक्रामेत्, सोऽपि विवास्यः । यथाह **मनुः**—

"यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात् तं राष्ट्राद्विप्रवासयेत् ॥"

इति । विवासनं च सर्वस्वमपहृत्य करणीयम् । यथाह **योगीश्वरः**—

"गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥"

इति । संविल्लक्षणं चाह **बृहस्पतिः**—

"ग्रामश्रेणिगणानां च संकेतः समयक्रिया ।
बाधाकाले तु सा कार्या धर्मकार्ये तथैव च ॥
वाटचौरभये बाधाः सर्वसाधारणाः स्मृताः ।
तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित् ॥

[1] राज्यात्—ख, ग.

सभाप्रपादेवगृहतटाकारामसंस्कृतिः ।
तथानाथदरिद्राणां संस्कारो यजनक्रिया ॥
कुलायनं निरोधश्च कार्यमस्माभिरंशतः ।
यत्रैवं लिखितं पत्रे धर्म्या सा समयक्रिया ॥ "

इति । वाटचौरादिभयापनयनार्थमुपायकरणमेका संवित् । अपरा सभाप्रपाद्यर्थमिति । यजनक्रिया यागकरणम् । कुलायनं दुर्भिक्षादिपीडितसमूहपरिपालनम् । निरोधस्तस्यैव यावत्सुभिक्षं धारणमित्यादि । एवं राजादिकृतापि 'अस्मद्राष्ट्रेष्वागन्तुक उपेक्षितो मा भूत्' इत्यादिः । तदुपेक्षिणां दण्डमाह **बृहस्पतिः**—

" तत्र भेदमुपेक्षां वा यः कश्चित् कुरुते नरः ।
चतुःसुवर्णाः षण्निष्कास्तस्य दण्डो विधीयते ॥ "

इति ॥ १६९ ॥

अथ प्रसङ्गात् निक्षेपसंविदतिक्रमे दण्डं प्रस्तौति । तल्लक्षणमाह **नारदः**—

" असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ "

इति । तत्र निक्षेपहारिणं प्रत्याह । रूपसंख्याप्रदर्शनेन परहस्तनिक्षिप्तं द्रव्यं निक्षेपः । तं योऽपहरति याच्यमानो यदि न प्रयच्छति, असावर्थस्य निक्षेपद्रव्यस्य यावती वृद्धिः, तया सहितं निक्षिप्तं धनं धनिकस्य राज्ञा दाप्यः । अपहारो नाशोपभोगयोरुपलक्षणम् । यथाह **बृहस्पतिः**—

" भेदेनोपेक्षया न्यासं गृहीत्वा यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यस्तत् सोदयं भवेत् ॥ "

इति । भेदोऽत्र स्वधनादन्यत्र स्थापनम् । **योगीश्वरोऽपि**—" आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् " इति ।

वृद्धिप्रमाणं चाह **कात्यायनः**—

" निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानं न चेद्दद्याद्वर्धते पञ्चकं शतम् ॥ "

इति । नाशोऽपि दैवराजकृताद्विना । यथाह **कात्यायनः**—

" अराजदैवकेनापि निक्षिप्तं यत्र नाशितम् ।
ग्रहीतुः समभाण्डेन दातुर्नष्टं तदुच्यते ॥ "

इति। यदि ग्रहीतुस्तत्र कौटिल्यं न स्यात्; "न चेत् तज्जिह्मकारितम्" इति **नारद**स्मरणात्। दाने विशेषमाह **व्यासः**—

"भक्षिते सोदयं दाप्यः समं दाप्य उपेक्षिते।
किंचिदूनं प्रदाप्यः स्याद् द्रव्यमज्ञाननाशितम्॥"

इति। अपहृते तु अवृद्धिकमेव दापयेत्। यथाह **बृहस्पतिः**—

"गृहीत्वापहृतो यश्च साक्षिभिः शपथेन वा।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा॥"

इति। न्यासमिति वचनान्न वृद्धिः। तथा याचितन्यासस्य नाशेऽपि मूलमेव देयम्। यथाह **व्यासः**—

"याचनानन्तरं नाशे दैवराजकृतेऽपि सः।
ग्रहीता प्रतिदाप्यः स्यान्मूलमात्रं नृपेण हि॥"

इति। दण्डस्तु तत्समः। "प्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम्" इति **योगि**स्मरणात्। निक्षेपविधिमन्यत्राप्यतिदिशति **नारदः**—

"एष एव विधिर्दृष्टो याचितान्वाहितादिषु।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च॥"

इति। याचितम्; याचित्वा आनीतमलंकारादि। अन्यस्मै दातुमन्यहस्तेऽर्पितमन्वाहितम्। शिल्पिषु स्वर्णकारादिषु अलंकारकरणार्थं यत् दत्तम्। संपुटादिपिहितमदर्शितस्वरूपमुपनिधिः। गृहस्वामिपरोक्षं परगृहे निक्षिप्तं न्यासः। परस्परं निक्षिप्तं द्रव्यं प्रतिन्यासः। आदिशब्दात् क्रयादीनां ग्रहणम्। यथाह **कात्यायनः**—

"क्रयः प्रोषितनिक्षिप्तं बन्धान्वाहितयाचितम्।
वैश्यवृत्त्यर्पितश्चैव योऽर्थस्तूपनिधिः स्मृतः॥"

इति। क्रीत्वा तथैव विक्रेतृहस्ते स्थापितं 'कालान्तरे नेष्यामि' इति क्रयः। प्रोषितनिक्षिप्तं प्रवसता निक्षिप्तम्। बन्धः बन्धकीकृतम्। अन्वाहितम् अन्यहस्तेनान्यस्मै प्रेषितम्। वैश्यवृत्त्यर्पितं वाणिज्यार्थं निहितम्॥ १७०॥

दण्डमाह। निक्षेपाद्यपहर्ता राज्ञा चौरवत् दण्डनीयः। चौरदण्डोऽत्र वधः;

"उपधाभिश्च यः कश्चित् परद्रव्यं हरन्नरः।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः॥"

इति **मानवात्** । याचितादिषु पूर्वसाहसं दण्ड्यः । यथाह **मत्स्यः**—

"यो याचितकमादाय न दद्याद्विनयं ब्रुवन् ।
स निगृह्य तथा दाप्यो दण्ड्यो वा पूर्वसाहसम् ॥"

इति । वा चार्थे ॥ १७१ ॥

दण्डातिदेशमाह । यः पुनरुपनिधिमनिधायैव मिथ्यैव 'निहितम्' इति ब्रूयात्, सोऽपि चौरवत् शास्यः । यथाह **मनुः**—

"यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ दण्डं च तत्समम् ॥"

इति । चकारात् संख्यापरिमाणाद्यनृतवादी च । यथाह **स** एव—

"निक्षेपो यः कृतो येन यावांश्च कुलसंनिधौ ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति ॥"

इति । कुलं साक्षिणः । साक्ष्यभावे तु **बृहस्पतिः**—

"रहो दत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥"

इति । उभयोरपीत्यनेन ऐच्छिको विकल्पो ध्वनितः । उभयोरनृतवादित्वे दण्डमाह **मनुः**—

"निक्षेपस्यापहर्तारमनिक्षेप्तारमेव च ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥"

इति । दण्डश्च पूर्वोक्त एव; "तावुभौ चौरवच्छास्यौ" इत्यनुषङ्गात् ॥ १७२ ॥

**सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां[1] कारयेत् ॥ १७३ ॥**

अथ सीमाविवादे दण्डं प्रस्तौति । सीमा मर्यादा । सा पञ्चविधा—जनपदसीमा, ग्रामसीमा, नगरसीमा, क्षेत्रसीमा, गृहसीमा चेति । तदाह **बृहस्पतिः**—"ग्रामक्षेत्रगृहादीनां सीमावादं निबोधत" इति । आदिशब्दात् देशनगरयोः; "ग्रामसीमासु च तथा तद्वन्नगरदेशयोः" इति **कात्यायनीयात्** । सा च यथासंभवं पञ्चलक्षणा । यथाह **नारदः**—

[1] लिङ्गान्वितां added in ख, ग, ट.

" ध्वजिनी [1]मत्स्यिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥ "

इति । ध्वजिनी वृक्षादिलक्षिता । [1]मत्स्यिनी जललिङ्गान्विता । नैधानी निखाततुषाङ्गारादिमती । भयवर्जिता उभयवादिसंप्रतिपत्तिकृता । पञ्चमी चिह्नाद्यभावे [2]राजाज्ञानिर्मिता । तत्र सीमाभेददण्डमाह । तान्याह **मनुः**—

" सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीसालतालांश्च क्षीरिणश्चैव पादपान् ॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि च ।
सीमासंधिषु कार्याणि देवतायतनानि च ॥
उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥
अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः ।
करीषमिष्टकाङ्गारशर्करावालुकास्तथा ॥
यानि चैवंप्रकाराणि कालाद् भूमिर्न भक्षयेत् ।
तानि संधिषु सीमायामप्रकाशानि कारयेत् ॥ "

अप्रकाशानि; कुम्भेषु निक्षिप्य निखातानि; " प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् " इति **बार्हस्पत्यात्** ।

" एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः ।
यदि संशय एव स्याल्लिङ्गानामपि दर्शने ॥
साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः ।
साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ ॥ "

इति । **कात्यायनः**—

" स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैश्च कर्तव्य उद्धारो नात्र संशयः ॥
संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः ।
तेषामभावे सामन्तमौलवृद्धोद्धृतादयः ॥ "

[1] मत्सिनी—ख, ग.

[2] राजनिर्मिता—ख, छ.

इति । पूर्वं सामन्ताः । पश्चात् देशान्तरगता मौलाः । साक्षात् सीमाकार्यद्रष्टारो वृद्धाः । [1]अलिखिताः साक्षिण इति यावत् । श्रुत्वोद्धरन्ति ये, ते उद्धृताः; श्रुतसाक्षिण इति यावत् । तानाह **बृहस्पतिः**—

" ततः पौगण्डबालानां प्रयत्नेन प्रकाशयेत् ।
वार्द्धके च शिशूनां ते दर्शयेयुस्तथैव च ।
एवं परंपराज्ञाने सीमाभ्रान्तिर्न जायते ॥ "

इति । ते च पूर्वपूर्वापेक्षया द्विगुणाः त्रिगुणाः ज्ञेयाः; " द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः " इति **कात्यायनीयात्** । तेषामप्यभावे **मनुः**—

" इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान् ।
व्याधाञ्छाकुनिकान् गोपान् कैवर्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥ "

इति । तेषां सीमानिर्णयप्रकारमप्याह **स** एव—

" शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥ "

इति । साक्षिणामसत्यवादित्वे दण्डमाह **स** एव —

" [2]यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥ "

इति । सामन्तसंसक्तादीनां दण्डमाह [3]**नारदः**—

" अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये ।
सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥
शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि ।
प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥
मौलवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥ "

इति । अयं च दण्डः अज्ञानविषयः । लोभादिनान्यथावादे तु **कात्यायनः**—

" बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम् ॥ "

[1] आलिखिताः—ख, ग, छ.
[2] This verse omitted in ख, ग, ट.
[3] मनुः—ख, ग, छ, ट.

इति । भेदेऽप्यमुमेवाह—"कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्" इति । [1]मत्स्यिनां विशेषमाह **व्यासः**—

"ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।
कुरुते दानहरणे भाग्याभाग्यवशान्नृणाम् ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम् ।
नदी तीरे प्रकुरुते तस्मात्तां न विचालयेत् ॥"

इति । एवं राजदत्तायामपीत्याह **स** एव—

"अन्यग्रामात् समाच्छिद्य दत्तान्यस्य यदा मही ।
नद्या राज्ञाथवा दैवाद्यस्य तस्यैव सा मही ॥"

इति । मर्यादातिक्रमे दण्डमाह **योगीश्वरः**—

"मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
[2]क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥"

इति । अनेकक्षेत्रव्यवच्छेदिका भूर्मर्यादा । यत्तु—

"स्थापितां चैव मर्यादामुभयोर्ग्रामयोर्यदा ।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम् ॥"

इति वृद्धमनुवचनं, तत् अल्पातिक्रमविषयम् । कूपे विशेषमाह **योगीश्वरः**—

"न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥"

इति । उक्तातिदेशमाह **स** एव—

"आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥"

इति । एषः; सामान्तप्रत्ययः । **बृहस्पतिः**—

"निवेशकालादारभ्य गृहवार्यापणादिकम् ।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥
वातायनाः प्रणाल्यश्च तथा निर्व्यूहवेदिकाः ।
चतुःशालस्यन्दनिकाः प्राग्निविष्टा न चालयेत् ॥"

[1] मत्सिनां—ख, ग, ट.

[2] देशक्षेत्रे तु हरणे—ख, ग, ट.

इति । [1]निर्व्यूहः भित्तिनिर्गतं काष्ठम् । वेदिका द्वारचत्वरः । चतुःशालं चतुर्द्वारम् । स्यन्दनिका पटलप्रान्तः । **कात्यायनः**—"मेखलाभ्रमनिष्काशगवाक्षान्नोपवारयेत्" इति । मेखला कुड्यमूलबन्धः । भ्रमः जलनिर्गमः । निष्काशः वलभिः । नोपवारयेत्; न निरुन्ध्यात् पूर्वस्थितान् । **बृहस्पतिः**—

"वृष्टिपातं प्रणालं च न कुर्यात् परवेश्मसु ।
वर्चःस्थानं वह्निचयं गर्तोच्छिष्टावपातनम् ॥
अत्यारात् परकुड्यस्य न कर्तव्यं कदाचन ।"

किंतु, "अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥"

इति । मार्गादौ **शङ्खलिखितौ**—"राजमार्गे रथस्य परिवर्तनं तोरणगृहरथ्यान्तेषु त्रिपदं देवराजायतनेषु यथेष्टम्" इति । पदं प्रकमः । त्रिप्रक्रमः त्रिपदः ॥ १७३ ॥

**जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः ॥ १७४ ॥**

**अभक्ष्यस्याविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डनीयः ॥ १७५ ॥**

पुनः साहसावशिष्टं दण्डमाह । जातिभ्रंशं यत् भक्षितं सत् करोति विषादि; "ब्राह्मण्यं नश्यति क्षिप्रं हालाहलैः" इति **स्मरणात्** । तस्य कामतो भक्षयिता भोक्ता । न तु भोजयिता; तद्दण्डस्य पूर्वमुक्तत्वात् । सः स्वराष्ट्रात् विवास्यः ॥ १७४ ॥

किंच, अभक्ष्याणि सुरादीनि; "सुरालशुनपलाण्डुगृञ्जनकङ्कमांसादीन्यभक्ष्याणि" इति **शङ्खलिखितस्मरणात्** । अविक्रेयाणि; वैश्यवृत्त्या जीवतो ब्राह्मणस्य फलादीनि ।

"फलोपलक्षौमसोममनुष्यापूपवीरुधः ।
तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम् ॥
शस्त्रासवमधूच्छिष्टमधुलाक्षाश्च बर्हिषः ।
मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ॥
कौशेयनीललवणमांसैकशफसीसकान् ।
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ।
वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन ॥"

[1] निर्व्यूहः to नोपवारयेत् omitted in ख, ग, ट.

इति योगिस्मरणात्। तस्य विक्रयी विक्रेता। यश्च देवप्रतिमां भिनत्ति, असौ उत्तमसाहसं दण्ड्यः। यथाह **मनुः**—

" अविक्रेयाणि विक्रीणन् ब्राह्मणः प्रच्युतः स्वयम्।
भागे पुनरवस्थाप्यो राज्ञा दण्डेन भूयसा॥"

इति। भिन्नप्रतिमासंस्कारे तु मध्यमः साहस एव। तदाह **स एव**—

" संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः।
प्रतिकुर्याच्च तत् सर्वं पञ्च दद्याच्छतानि च॥"

इति। ईषद्भङ्गे **कात्यायनः**—

" हरेच्छिन्द्याद्दहेद्वापि देवानां प्रतिमा यदा।
तद्गृहं चैव यो भिन्द्यात् प्राप्नुयुः पूर्वसाहसम्॥"

इति॥ १७५॥

**भिषङ् [1]मिथ्याचरन्नुत्तमेषु [2]पुरुषेषु॥ १७६॥ मध्यमेषु मध्यमम्॥ १७७॥ तिर्यक्षु प्रथमम्॥ १७८॥**

राजसंबन्धिषु मनुष्येषु यो वैद्यशास्त्रपद्धतिमतिक्रम्य स्वेच्छाकल्पितमार्गेणोपचरति, स उत्तमसाहसं दण्ड्यः। यथाह **बृहस्पतिः**—

" अजानन्नौषधं तन्त्रं यश्च व्याधेरतत्त्ववित्।
रोगिभ्योऽर्थमुपादत्ते स दण्ड्यश्चौरवद्भिषक्॥"

इति। तन्त्रं शास्त्रम्॥ १७६॥

मध्यमेषु अराजसंबन्धिषु मानुषेषु मिथ्योपचरन् मध्यमं साहसं दण्ड्यः॥ १७७॥

तिर्यक्षु गवाश्वादिषु मिथ्योपचरन् प्रथमसाहसं दण्ड्यः। यथाह **योगीश्वरः**—

" भिषङ् मिथ्याचरन् दाप्यस्तिर्यक्षु प्रथमं दमम्।
मानुषे मध्यमं राजमानुषेषूत्तमं दमम्॥"

इति॥ १७८॥

**प्रतिश्रुतस्याप्रदायी तद्दापयित्वा प्रथमसाहसं दण्ड्यः॥ १७९॥**

1 मिथ्याभिचरन्—ख, ग.

2 उत्तमम्—ट.

अथ दत्ताप्रदाने दण्डं प्रस्तौति । तल्लक्षणमाह **नारदः**—

"दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥"

इति । इदमेव सम्यग्दाने दत्तानपाकर्म; पूर्वमसम्यगिति विशेषणात् लौकिकदानभेदेन संज्ञाद्वयव्यवस्थानात् । तन्निर्णयमाह **नारदः**—

"अथ देयमदेयं च दत्तं चादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥
तत्र त्वष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं विद्याददत्तं षोडशात्मकम् ॥
अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति ॥
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥"

चकरात् स्त्रीधनं च, "सामान्यं याचितं न्यासमाधिर्दाराश्च तद्धनम्" इति दक्षस्मरणात् । आपत्स्वपि न देयानीति शेषः ।

"कुटुम्बभरणाद् द्रव्यं यत्किंचिदतिरिच्यते ।
तद्देयमुपहत्यान्यद्ददद्दोषमवाप्नुयात् ॥
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं तु दत्तं दानविदो विदुः ॥
अदत्तं तु भयक्रोधशोकवेगरुजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममेदं कर्मेति प्रतिलाभेच्छया तु यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते ।
यद्दत्तं स्यादविज्ञानात् तददत्तमिति स्मृतम् ॥"

इति । अदेयमस्वतया निषिद्धतया च । तत्रान्वाहितादि निक्षेपान्तमस्वतया । साधारणे स्वत्वसद्भावेऽपि अवर्जनीयतया परस्वत्वस्यापि सद्भावात् अस्वसंसृष्टतयैवादेयत्वम् । पुत्रादिषु प्रतिश्रुते च स्वत्वसद्भावेऽपि

वचनाददेयत्वम्। अन्वये सतीति विशेषणात् अनन्वयस्य सर्वस्वदानमधिगम्यते। तत्र विशेषमाह **कात्यायनः**—

" सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम्।
यद् द्रव्यं तत् स्वकं देयमदेयं स्यादतोऽन्यथा ॥"

इति। सर्वस्वदाने गृहपर्युदासः कुटुम्बिन एव; 'कुटुम्बभरणाधिकम्' इति लिङ्गात्। अन्यथा; कुटुम्बपर्याप्तं ततो न्यूनं वा न देयमित्यर्थः। अत एव **बृहस्पतिः**—

" सप्तारामाद्गृहक्षेत्राद्यद्यत् क्षेत्रं प्रचीयते।
पित्र्यं वापि स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥"

इति। सप्तेति संख्यावाच्यव्ययम्। अन्यथा सप्तभ्य इति स्यात्। समासे तु गृहक्षेत्राभ्यामनन्वयापत्तिः। ततश्च सप्तसंख्यादारामात् गृहात् क्षेत्राद्वा यदतिरिक्तं स्थावरं, तत् देयम्; न समं न्यूनं चेत्यर्थः। सप्तपुत्रकुटुम्ब्यभिप्रायमेतत्। न नियमार्थम्; कुटुम्बभरणाधिक्यस्य विवक्षितत्वात्।

पित्र्यं स्वीयं चेति द्विविधं स्थावरमुक्तम्। तत्र स्वीयमपि त्रिविधम्—पुत्रसमसंख्यं, न्यूनसंख्यम्, अधिकसंख्यं चेति। तत्र समं न्यूनं चादेयमेव। अधिके तु विशेषमाह **स** एव। " स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम्" इति। यत् स्वयमपि प्राप्तं स्थावरं, तदपि स्वेच्छामात्रेण पुत्राद्यनुमतिं विना अदेयं न देयमित्यर्थः ;

" स्थावरं द्विपदं चैव यद्यपि स्वयमार्जितम्।
असंभूय सुतान् सर्वान्न दानं न च विक्रयः ॥"

इति **स्मरणात्**। [1]सुतपदं पौत्राणामप्युपलक्षणम्;

" मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥"

इति **स्मरणान्**। बहुत्वेनैवार्थसिद्धौ सर्वपदमेकस्याप्यननुमतावदेयत्वार्थम्;

" ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।
वृत्तिं समभिकाङ्क्षन्ति न दानं न च विक्रयः ॥"

इति **स्मरणात्**। यत्तु 'स्वयं प्राप्तं धनमविभक्तैर्भ्रातृभिरननुज्ञातमपि देयम्' इति **माधवव्याख्यानम्**, तत्र धनशब्देन यदि स्थावरमुच्यते तदा "स्थावरं द्विपदं च" इत्यादिवचनविरोधः। न च तत्र पुत्रादीनामेव स्वत्वं, न भ्रातृणामिति भाव्यम्; "अविभक्तैस्तु यत् प्राप्तं सर्वे तत्र समांशिनः" इति

1 सुतपदं to इति स्मरणात् omitted in ख, ग, ट.

वचनविरोधात्। तस्मात् तत्र सुतपदमविभक्तोपलक्षणमेव। अथ धनपदं जङ्गमद्रव्यपरं, तदा "सपारामात्" इत्युपक्रम्य "दायादाः स्थावरे समाः" इत्युपसंहारात् मध्यपठितस्यास्य स्थावरविषयता बाध्येत ; "अविभक्तैस्तु यत् प्राप्तम्" इति च विरुध्येत। तस्मात् नञ्प्रश्लेषेणादेयमित्येव व्याख्येयम्। विशेषान्तरमाह—बन्धाचारेणेति। यत् केनचित् कस्माच्चित् बन्धकत्वेन गृहीतं स्थावरं, तदन्यस्मै बन्धाचारेण बन्धकत्वेनैव देयम्; नान्यथा। अयमर्थः—'येन द्रव्येणेदं मया बन्धकीकृतं स्थावरं, तत् द्रव्यं तुभ्यं मया दत्तमिति तवैव बन्धकमस्तु' इत्येवंप्रकारेण देयम्। न बन्धकीकृतं स्थावरमेव दानयोग्यम्, स्वत्वाभावात्। अत एव "आधिः साधारणं च यत्" इत्याधेरदेयत्वमाह **नारदः**।

इदानीं पित्र्ये विशेषमाह—"वैवाहिके क्रमायाते सर्वदानं न विद्यते" इति। वैवाहिकम्; विवाहकाले श्वशुरादिभ्यो लब्धम्। क्रमायातम्; पितृपितामहादिक्रमेणागतम्; वक्ष्यमाणं शौर्यप्राप्तं च यत् स्थावरं, तस्य सर्वस्य निरवशेषस्य दानं नास्ति; किंतु सावशेषस्यैव। कुत इत्यत आह—

"सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत्।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात्॥"

इति। सौदायिकम्; विवाहकाले भार्यया सह लब्धम्; "विवाहे भार्यया सार्धं लब्धं सौदायिकं स्मृतम्" इति **व्यासस्मरणात्**। ततः स्थावरं स्त्र्यनुज्ञातमेव देयं, नान्यथा; तत्र स्त्रीस्वत्वस्यापि सत्त्वात्। तथाच **व्यासः**—

"विवाहकाले यत् किंचिद्वरायोद्दिश्य दीयते।
कन्यायास्तद्धनं सर्वमविभाज्यं तु बन्धुभिः॥"

इति। सर्वम्; स्थावरं जङ्गमं च। **स्मृत्यन्तरेऽपि**—

"यद्दत्तं दुहितुः पत्ये स्त्रियमेव तदन्वियात्।
मृते जीवति वा पत्यौ तदपत्यमृते स्त्रियम्॥"

इति। स्त्रियमृते; स्त्रियं विना। तत् धनमित्यर्थः।

दानं विक्रयाधमनयोरुपलक्षणम्; "दानाधमनविक्रये" इति सर्ववाक्यशेषात्। क्रमायातमुक्तार्थम्। तत् ज्ञातिभिर्दायादैः पुत्रपौत्रप्रपौत्रैरनुमतमेव देयं, नान्यथा; तत्र तेषामपि स्वत्वसाम्यात्। यथाह **व्यासः**—"क्रमागते गृहक्षेत्रे पितृपुत्राः समांशिनः" इति। **योगीश्वरोऽपि**—

"भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि॥"

इति। चकारात् पौत्रप्रपौत्रयोरपि; "सवर्णायाः पुत्रः पौत्रः प्रपौत्रः" इति वक्ष्यमाण**बोधायनस्मरणात्**। शौर्येण परसैन्यजयेन यत् प्राप्तं स्थावरादि धनं, तत् भृत्यैः स्वाम्यनुज्ञयैव देयम्; नान्यथा; तत्र

स्वामिनोऽपि स्वत्वात्। यथाह **गौतमः**—"जेता लभेत सांग्रामिकं वित्तम्। वाहनं तु राज्ञः। उद्धारश्चापृथग्जये" इति। अपृथक् संभूय जये राज्ञेऽप्युद्धारांशो देयः। तेन तत्र स्वामिनोऽपि स्वत्वात् तदनुमतिरावश्यकीति। तस्मात् सौदायिकादि त्रिविधमपि धनं स्थावरं स्त्र्यादीनामनुमत्यैव सर्वं देयम्। अन्यथा तत्तदंशमवशेष्य स्वांशमात्रं देयमिति वाक्यद्वयार्थः।

नन्विदमंशावशेषणमविभक्ते संगच्छते; साधारणस्वत्वात्। विभक्ते तु स्वमात्रस्वत्वात् अनर्थकं तदित्यत आह—

"विभक्ता वाविभक्ता वा दायादाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये॥"

इति। सर्वत्र क्रमागते स्वार्जिते च स्थावरे विभक्तानामविभक्तानां च दायादानां पुत्रपौत्रप्रपौत्राणां तुल्यं स्वत्वम्। अतो दानाधमनविक्रयेषु एको नाधिक्रियत इति। यथाह **व्यासः**—

"स्थावरस्य समस्तस्य गोत्रसाधारणस्य च।
नैकः कुर्यात् क्रयं दानं परस्परमतं विना॥
विभक्ता वाविभक्ता वा सपिण्डाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये॥"

इति। समस्तं क्रमागतं स्वार्जितं च। गोत्रसाधारणम् अविभक्तम्। नेदं समस्तस्य विशेषणम्; विशेषणविशेषणत्वापत्तेः; चकारानुपपत्तेश्च। किंतु स्थावरस्यैव। ततश्चाविभक्तस्य पृथक् निर्देशात् समस्तपदोपात्तं स्थावरं विभक्तमिति गम्यते। अन्यथा विभक्ताविभक्तयोरनुवादेन दानादिनिषेधे हेतुतया तुल्यस्वाम्यप्रतिपादनं न संगच्छेत; पूर्वानुक्तस्यानुवादासंभवात्।

ननु विभक्ताविभक्तयोस्तुल्यस्वत्वमनुपपन्नम्; विभागानर्थक्यापत्तेः;

"यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः।
पृथक्कर्मगुणोपेता न चेत् कार्येषु संमताः॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा।
कुर्युर्यथेष्टं तत् सर्वमीशास्ते स्वधनस्य हि॥"

इति **नारद**वचनविरोधाच्च। अस्यार्थः—एकजाताः सोदराः पृथग्धर्माः पृथक्श्राद्धादिकारिणः, पृथक्क्रियाः पृथक्कृष्यादिकारिणः, पृथक्कर्मगुणैः कण्डनादिसाधनैः मुसलोलूखलादिभिः उपेताः दानविक्रयादिकार्येषु अन्योन्यमसंमताः सन्तः यदि स्वस्वभागान् दद्युः विक्रीणीयुर्वा, तत् सर्वं यथेष्टं कुर्युः, स्वस्वांशस्वामित्वादिति चेत्—अत्रोच्यते—यथा दत्तास्वपि कन्यासु पित्रादीनां स्वत्वमनुमन्यते,

अन्यथा पुनर्दानविधानानुपपत्तेः; तथा विभक्तेऽपि क्रमागते स्वार्जिते च स्थावरे दायादानां स्वत्वमनुमन्यते; अन्यथा सर्वदानविक्रयादिनिषेधानुपपत्तेः। न चाविभक्तक्रमागतस्थावरविषय एवायं निषेध इति वाच्यम्,

"सामान्यं पुत्रदारादिसर्वस्वन्यासयाचितम्।
प्रतिश्रुतं तथान्यस्य न देयं त्वष्टधा स्मृतम्॥"

इति बार्हस्पत्येनाविभक्तदाननिषेधेन पौनरुक्त्यापातात्। न च—दानाद्युत्तरकालं विभक्तसंदेहव्युदासेन व्यवहारसौकर्यार्थमनुमतिविधानं दानादिनिषेधश्च; न तु व्यवहारसिद्धिबोधनायेति मन्तव्यम्; "स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात्" इत्यन्यानुमतिमन्तरेण दानाद्यसिद्ध्यवगमात्। वस्तुतस्तु विभक्तानामपि पुत्रभ्रात्रादीनां परस्परधने स्वत्वसंबन्धोऽस्तीत्यवश्यमभ्युपगन्तव्यम्; स्वत्वहेतुभूतस्वामिसंबन्धस्यानपायात्। अन्यथा पुत्रेभ्यो विभक्तस्य पितुर्मरणानन्तरं पुत्राणां तद्धनग्रहणानधिकारापत्तेः; पूर्वस्वत्वस्य विभागेन नष्टत्वात्; स्वत्वान्तरस्य च क्रयप्रतिग्रहाद्युत्पादकहेत्वभावेनानुत्पत्तेः[1]। न च स्वामिनाशादेव स्वत्वसिद्धिरिति भाव्यम्; तस्य रिक्थक्रयादिषु स्वत्वहेतुषु परिगणनात्; असंबन्धिसाधारण्येनातिप्रसङ्गाच्च। ततश्च विभागस्य रिक्थपदाभिधेयाप्रतिबन्धदायस्वरूपाभिभवेन संविभागपदाभिधेयसप्रतिबन्धदायस्वरूपाभिव्यञ्जनेनार्थवत्त्वं सिध्यति। तस्मादस्त्येव विभक्तानामपि परस्परधने स्वत्वसंबन्ध इति सिद्धम्। स च यत्र विभक्तानामपि स्थावरादौ दानादिनिषेधः स्मर्यते, तत्र तमुपोद्बलयति। अत्र तु स्वामिमरणानन्तरं विभक्तानामपि तद्धनग्रहणाधिकारं साधयतीति सर्वमनवद्यम्; "तद्दातव्यं विवक्षितम्" "सर्वदानं न विद्यते" इत्युत्सर्गापवादयोरेकविषयताकल्पनावश्यंभावाच्च।

न च विभागेन स्वत्वसाधारण्यमुपमर्द्यैव स्वत्वासाधारण्यं जन्यत इत्यपि नियमः; एकस्यां देवप्रतिमायां दास्यां वा द्वयोर्भ्रात्रोः स्वरूपविभागासंभवात् मूल्यद्वारा च निषेधात् पर्यायार्चनरूपे पर्यायकर्मकारणरूपे वा विभागेऽपि स्वत्वसाधारण्यानपायात्। न च पर्यायकर्मकारणादिविभाग एव नेति वाच्यम्; पर्यायातिक्रमितुरनभियोज्यतापातात्। नित्यदातुर्याज्यस्य वचनेनान्यपर्यायेऽन्येन दानग्रहणे दोषाभावप्रसङ्गात्;

"एकां स्त्रीं कारयेत् कर्म यथांशेन गृहे गृही।
बह्वयः समांशतो देया दासीनामप्ययं विधिः॥"

इति बृहस्पतिस्मरणाच्च। न च विभागानर्थक्यम्; यथेष्टभोगार्हतापादकत्वेनार्थवत्त्वात्। न च यथेष्टविनियोगार्हत्वमेव विभागप्रयोजनमित्युक्तम्। किंच अविभक्तायां भूमावनुष्ठितस्य धर्मस्यान्येऽप्यंशभागिनो भवन्ति, न विभक्तायामित्यतोऽपि विभागस्यार्थवत्त्वात्। नारदवचनं तु क्रमागतस्वार्जितस्थावरातिरिक्तधनविषयम्; "ईशास्ते स्वधनस्य हि" इत्यनेनासाधारणस्वत्वस्य धनविषयत्वाविष्करणादेवेति सर्वं सुस्थम्।

[1] अनुपपत्तेः—ग, ट.

नन्वेवम्,

"स्वज्ञातिग्रामसामन्तदायाद . . . . . . ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ॥"

इति दायादानामिव ग्रामादीनामपि स्वत्वापत्तिः, तेषामपि स्थावरेऽनुमतिश्रवणादिति चेत्; मैवम्; । दायादानां जन्मनैव स्वत्वाभ्युपगमात्। ग्रामादीनां तु न कथंचिदपीति वैलक्षण्यात्। [1]न चानुमतिकर्तव्यताश्रवणमात्रेण स्वत्वमभ्युपगम्यते; किंतु क्रमागते स्थावरे सर्वदाननिषेधेनेत्युक्तमेव। तस्मात् ग्रामाद्यनुमतिर्दृष्टार्थैव। दायादानुमतिस्तु क्रमागते स्थावरे विभक्तेऽपि स्वत्वानपायात्। साधारणदानादौ च परस्वदानदोषादनुमतिरदृष्टार्थैव। अत एव **दक्षः**—

"सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्।
अन्वाहितं च निक्षेपः सर्वस्वं बान्धवे सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥"

इति। प्रायश्चित्तं च भूम्यपहारे वक्ष्यते। न चैवमदृष्टदोषेऽपि दानादि निष्पद्यत एव, निषिद्धप्रतिग्रहीतुः स्वत्ववदिति वाच्यम्; "स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात्" इत्यननुज्ञातस्यासिद्ध्यभिधानात्। साधारणे एकस्यास्वतन्त्रत्वेन तद्दत्तस्य प्रत्याहरणीयत्वाच्च। यथाह **कात्यायनः**—

"कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः।
व्यत्यासात् परिहासाच्च यद्दत्तं तत् पुनर्हरेत् ॥"

इति। किंच साधारणस्यादेयत्वात् अदेयदानप्रतिग्रहयोर्दण्डश्रवणाच्च दानाद्यसिद्धिः;

"अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥"

इति **मनु**स्मरणात्। एवं विक्रयाधामनयोश्चासिद्धिः; अस्वतन्त्रकृतत्वसाम्यात्; "अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत्" इति **व्यास**स्मरणाच्च। यथा स्वग्रामस्थे क्रेतरि संभवति नान्यग्रामस्थाय विक्रेतव्यम्, एवं ज्ञातिसामन्तादिषु प्रत्यासत्तितारतम्येन योज्यम्। हिरण्योदकदानं तु विक्रयेऽपि कार्यम्; "स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया" इति विक्रयनिषेधात्;

"भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥"

[1] न चानुमति to क्रमागते स्वार्जिते च (P. 152. L. 11) omitted in ख, ग, ट.

इति दाने फलश्रवणाच्च; स्थावरविक्रयस्य हिरण्योदकदानसंवलितत्वेन नरसिंहाकारत्वात्। यथा आसुर-विवाहस्य;

" ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः।
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥"

इति **नारदेन** तत्रापि दानप्रतिपादनात्। गुणः ब्राह्मण्यम्। वरस्य तदपेक्ष्यासुरादिष्वपि त्रिषु दानं भवत्येव। न क्षत्रियादौ वरे। तच्चाग्रे वक्ष्यामः। हिरण्योदकदानमपि ब्राह्मण एव कर्तरि युक्तम्; तस्यैव प्रतिग्रहाधिकारादिति।

एवं स्थावरदानादिनिषेधस्यापवादः **स्मृत्यन्तरे**—

" एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयान्।
आपत्काले कुटुम्बार्थे धर्मार्थे चाविशेषतः ॥"

इति। एकः प्रधानभूतः पित्रादिः दायादाद्यननुमतोऽपि क्रमागते स्वार्जिते च स्थावरे आपत्कालादौ दानादि कुर्यात्। धर्मो महापातकादिप्रायश्चित्तम्। न तु पितृश्राद्धादि, तस्यानुकल्पेनापि सिद्धेरित्यलं प्रसक्तानुप्रसक्त्या।

देयम् अदृष्टार्थदानार्हं, दत्तं लौकिकदानार्हं पण्यमूल्यादि, अदत्तं भयादिना दत्तमपि स्वत्वानिवृत्त्या प्रत्यावर्तनीयत्वेन;

" कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः।
व्यत्यासात् परिहासाच्च यद्दत्तं तत् पुनर्हरेत् ॥"

इति **कात्यायनस्मरणात्**। षोडशविधस्याप्यदत्तस्येदमुपलक्षणम्। तत्र भयादीनि प्रसिद्धानि। उत्कोचो लञ्चः। परिहासो हास्यम्। व्यत्यासोऽन्योन्यदानम्। छलयोगः शताभिसंधिना सहस्रप्रयोगः। बाला-दिभिरपवर्जितं पातितम्। मूढः अनभिज्ञः। अस्वतन्त्रो भार्यादिः। मत्तो मदेन। उन्मत्तो वातादिना। मदुपकारं करिष्यतीति प्रतिलाभेच्छा। अपात्रे वेदशून्ये विद्वानित्युक्ते। यज्ञार्थं प्रतिगृह्य द्यूतादि-करणमधर्मसंहितमिति।

तत्र प्रतिश्रुत्याप्रदाने निर्णयपूर्वकं दण्डमाह। यत् अदृष्टार्थिना 'तुभ्यमिदमहं दास्यामि' इति वाचा प्रतिज्ञातं, तत् प्रतिश्रुतम्। अन्तर्भावितण्यर्थतया प्रतिश्रावितमिति यावत्। तस्याप्रदायी यस्मै प्रतिश्रुतं, तस्मै तत् दापयित्वा राज्ञा प्रथमसाहसं दण्ड्यः। यथाह **कात्यायनः**—

" स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
न दद्याद्दणवद्दाप्यः प्राप्नुयात् पूर्वसाहसम् ॥"

इति । प्रतिग्रहपदेन धर्माभिसंधिर्ध्वनितः । तदाह **हारीतः**—

" वाचैव यत् प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च ॥ "

इति । अत एव तत्र नरकमाह **स** एव—

" प्रतिश्रुतार्थादानेन दत्तस्य छेदनेन च ।
विविधान् नरकान् याति तिर्यग्योनौ च जायते ॥ "

इति । एतेन स्नेहादिना प्रतिश्रुतस्यादाने न दोष इति सिध्यति; धर्मार्थत्वाभावात् । दत्तस्य तु न प्रत्याहरणम्; स्वत्वस्य निवृत्तत्वात्; परस्वत्वस्य चोत्पत्तेः । अत एव धर्मार्थं प्रतिश्रुतमेव पुत्रादिर्दापनीयः; नान्यदित्याह **कात्यायनः**—

" स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥ "

इति । क्वचित् तदपवादमाह **गौतमः**—" प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् " इति । षोडशविधस्याप्यदत्तस्य प्रत्याहरणीयत्वेनैव प्रतिश्रुतदानं दूरापास्तम् । अत एव **कात्यायनः**—

" प्राणसंशयमापन्नो यो मां संतारयेदितः ।
सर्वस्वं ते प्रदास्यामीत्युक्तोऽपि न तथा भवेत् ॥
यस्तु कार्यस्य सिद्ध्यर्थमुत्कोचः स्यात् प्रतिश्रुतः ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देयं स्यात् कथंचन ॥
अथ प्रागेव दत्तं स्यात् प्रतिदाप्यः शतं बलात् ।
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः ॥ "

इति । तथैवादेयस्याष्टविधस्य दानं प्रतिश्रवणं वा न सिध्यति, क्वचित् स्वत्वाभावात्[1], क्वचिच्च निषेधादिति । यथाह **मनुः**—

" अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥ "

इति ॥ १७९ ॥

**कूटसाक्षिणां सर्वस्वापहारः कार्यः ॥ १८० ॥ [2]उत्कोचोपजीविनां सभ्यानां च ॥ १८१ ॥**

[1] स्वत्वासत्त्वात्—ट.

[2] उत्कोचजीविनां—ज, ठ.

कूटसाक्षिणां दण्डमाह। साक्षिणो वक्ष्यमाणलक्षणाः। ते लोभादिना कूटेन कपटेन यदि साक्ष्यं कुर्वन्ति, तदा तेषां सर्वस्वापहारो राज्ञा कार्यः। तथाच **मनुः**—

"लोभान्मोहाद्भयान्मैत्र्यात् कामात् क्रोधात् तथैव च।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते॥"

इति। तत्र प्रतिनिमित्तं दण्डमाह **स** एव—

"लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्वं तु साहसम्
भयाद् द्वौ मध्यमौ दण्डौ मैत्र्या पूर्वं चतुर्गुणम्॥
कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्।
अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु॥"

इति। मोहो विपरीतज्ञानम्। कामः स्त्र्यभिलाषः। अज्ञानम् असम्यग्ज्ञानम्। बालिश्यं बाल्यम्; ज्ञानानुत्पाद इति यावत्। शेषं प्रसिद्धम्। द्वौ मध्यमौ; एक उत्तमसाहसः। प्रथमसाहसं चतुर्गुणमुत्तमसाहस एव। तदेव दशगुणं सार्धसहस्रद्वयम्। परमुत्तमसाहसम्। त्रिगुणं सहस्रत्रयमिति। तत्र मूलोक्तं भूम्यनृतविषयम्; "सर्वं भूम्यनृते हन्ति" इति दोषाधिक्यश्रवणात्। **मानवं** तु हिरण्यादिविषयम्। अभ्यासे तु **स** एव—

"कूटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत्॥"

इति। प्रवासनं मरणम्। विवासनं तु प्राक् व्याख्यातम्। सकृदल्पापराधे तु **योगीश्वरः**—

"पृथक् पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा।
विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः॥"

इति। विवादात्; विवादपराजयनिमित्तात्[1]। अयं च सर्वोऽपि दण्डः लौकिकप्रमाणेन दोषनिर्णये। तदभावे तु आसप्ताहं राजदैविकव्यसनोद्भवेन। यथाह **मनुः**—

"यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥"

इति॥ १८०॥

[1] निर्मितात्—छ.

सभ्यदोषे दण्डमाह। सभ्याः उक्तलक्षणाः। ते यद्युत्कोचमुपजीवन्ति, तदा तेषामपि सर्वस्वापहारः कार्यः। चकारादन्यायवादिनां निर्वासनं च। यथाह **बृहस्पतिः**—

"अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते॥"

इति। निर्वासनं च सर्वस्वापहारानन्तरं कार्यम्; "उत्कोचजीविनो द्रव्यहीनान् कृत्वा प्रवासयेत्" इति **योगि**स्मरणात्। सभ्यपदं प्राड्विवाकस्याप्युपलक्षणम्,

"अनिर्णीते तु यद्यर्थे संभाषेत रहोऽर्थिना।
प्राड्विवाकोऽपि दण्ड्यः स्यात् सभ्याश्चैव विशेषतः॥"

इति **कात्यायन**स्मरणात्। इदमपि महापराधेऽभ्यासे वा वेदितव्यम्। अल्पविषये तु **योगीश्वरः**—

"रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः।
सभ्याः पृथक् पृथग्दण्ड्या विवादाद् द्विगुणं दमम्॥"

इति॥ १८१॥

**गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छेत् स वध्यः॥ १८२॥ ऊनां चेत् षोडश सुवर्णान् दण्ड्यः॥ १८३॥**

अथाधिविवादे दण्डं प्रस्तौति। तत्स्वरूपं चोपरिष्टाद्वक्ष्यति। तत्रैकस्योभयत्राधीकरणे दण्डमाह। गोचर्म वक्ष्यमाणलक्षणम्। तत् मात्रा प्रमाणं यस्य सा गोचर्ममात्रा। ततो या अधिका भूः, तामेकस्य पूर्वमाधीकृतां कृतकालाकृतकालगोप्यभोग्यान्यतमाधित्वं नीतां, तस्मात् पूर्वोत्तमर्णात् आधिनिमित्तद्रव्यदानेनामोचयित्वैवान्यस्यापि यो द्रव्यातिशयलोभेनाधीकुर्यात् स वध्यः। आधीकरणेन सोपाधिकपरस्वत्वोत्पत्त्या स्वस्वत्वप्रतिबन्धेनाधातुः अस्वामितुल्यतया प्रयोगान्तरानधिकारात्। यथाह **कात्यायनः**—

"आधिमेकं द्वयोर्यस्तु कुर्यात् का प्रतिपद्भवेत्।
तयोः पूर्वकृतं ग्राह्यं तत्कर्ता चौरदण्डभाक्॥"

इति। प्रतिपत् व्यवस्थेति यावत्[1]। अयमेव दण्डः आहितस्यान्यदानविक्रययोः, [2]दत्तस्यान्यत्राधामनविक्रययोः, विक्रीतस्यान्यत्र [2]दानाधामनयोश्च द्रष्टव्यः, तुल्यन्यायत्वात्; प्रयच्छेदिति सामान्यपदोपादानाच्च। अन्यथाधीकुर्यादित्येवावक्ष्यत। एवमग्रेऽपि द्रष्टव्यम्॥ १८२॥

1 भावः—ख ग, छ, ट.
2 आधान for आधामन—ख, ग, छ, ट.

गोचर्ममात्राधिकामिति विशेषणस्य व्यावर्त्यमाह। यः पुनः गोचर्मन्यूनपरिमाणां भुवमेकत्राधीकृतां ततोऽनिर्मोच्यैवान्यत्राधीकरोति ददाति विक्रीणीते वा, स षोडश सुवर्णान् दण्ड्यः ॥ १८३ ॥

**एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम्।**
**गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहु ॥ १८४ ॥**
**ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ।**
**यस्य भुक्तिः फलं तस्य बलात्कारं विना कृता ॥ १८५ ॥**

गोचर्मलक्षणमाह। यस्यामुत्पन्नं व्रीह्यादि फलं संवत्सरं यावदेको यथेष्टमश्नीयात्, सा अल्पाधिका वा भूमिर्गोचर्ममात्रा ज्ञेया ॥ १८४ ॥

एकस्योभयत्राधीकरणे कस्यासावित्यत आह। यदा कश्चित् एकमेव क्षेत्रादिकमेककालमेव लोभातिशयात् द्वयोराधीकरोति, तदा ययोः स आधिर्निक्षिप्तः, तयोः परस्परमाधित्वविषये विवादे यस्य भुक्तिः येन पूर्वं भुक्तः, तस्य फलं तस्यैव संभवति; न पुनरभोक्तुः। एतेन तुल्यकालसिद्धौ भोग एव प्रयोजकः, न क्रियामात्रमित्युक्तं भवति। यथाह **बृहस्पतिः**—

"क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत् समकालिकम्।
येन भुक्तं भवेत् पूर्वं तस्य तत् सिद्धिमाप्नुयात् ॥"

इति। बन्धो दानविक्रययोरप्युपलक्षणम्; "प्रदाने विक्रये चैवं विधिः संपरिकीर्तितः" इति तस्यैव शेषात्। अन्यत्र विशेषं वक्ष्यामः। कालभेदेनैकस्याधानादौ तु भुक्तिरहितापि पूर्वैव क्रिया बलवती; "आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा" इति **योगिस्मरणात्**। यत्तु—

"आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा[1] ॥"

इति **नारदवचनं**, तत् तुल्यकालाधानद्वयविषयम्; **बार्हस्पत्ये**नैकवाक्यत्वात्; अन्यथा आधिसामान्यस्य भुक्त्या प्राबल्ये तुल्यकालाधौ विशेषवचनानर्थक्यात्। एवं च "आधेः स्वीकरणात् सिद्धिः" इति; "अस्य च फलम् 'आधौ प्रतिग्रहे क्रीते' इत्युक्ता या स्वीकारान्ता क्रिया, सा पूर्वा बलवती। स्वीकाररहिता तु पूर्वापि न बलवती" इति यद्विवृतमाचार्यैः, तत् पूर्वापरविरोधाच्चिन्त्यम्। तथाहि—उत्तरक्रिया-प्राबल्यापवादाय आध्यादौ पूर्वा तु बलवत्तरेत्युक्तम्। तस्याश्च भुक्तिमत्त्वेन प्राबल्ये उत्तरस्यामति-प्रसङ्गेनापवादत्वासंभव इति पूर्वग्रन्थविरोधः। "आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो" इति;

[1] नाशयेत्—ख, ग.

" एतत् पूर्वापरकालापरिज्ञाने । तत्परिज्ञाने तु त्रिगुणोऽपि पूर्वकालागम एव बलवान् " इत्युत्तरग्रन्थविरोधश्चेत्यास्तां वृद्धविरोधेन । भुक्तिर्लेख्याद्युपलक्षणम् ;

" आधानं विक्रयो दानं लेख्यसाक्ष्यकृतं तु यत् ।
एकक्रियानिवेशेन लेख्यं तत्रापहारकम् ॥ "

इति कात्यायनस्मरणात् । अयमर्थः—एकस्याधौ साक्षिणः सन्ति । अन्यस्य लेख्यं समकालं भिन्नकालं वा । तत्र लेख्यं बलवदिति । लेख्यसिद्धताविशेषेऽपि स एव—

" अनिर्दिष्टाच्च निर्दिष्टमेकत्र च विलेखितम् ।
विशेषलिखितं [1]ज्याय इति कात्यायनोऽब्रवीत् ॥ "

इति । यदेकस्मै नाममात्रेण श्रावितं न प्रदर्शितम्, अन्यस्मै तत् प्रदर्शितम्; तत्र प्रदर्शितमेव बलवत् । यत्तु एकस्मै प्रदर्शितम्, अन्यस्मै लिखित्वा दत्तम्; तत्र लिखितं बलवदिति । यत्र तु यो ' ग्रामो मया स्वो लब्धव्यः, तत्र बन्धकः ' इत्युक्तः, तत्रासौ न बन्धक इत्याह स एव—

" यद्यत्तदास्य विद्येत तदादिष्टं विनिर्दिशेत् ।
आकाशभूतमादध्यादादिष्टं नैव तद्भवेत् ॥ "

इति । इदं च समकाले भिन्नकाले वा आधानादिद्वये समानम् । एवं भुक्तिमात्रस्य प्राबल्यप्राप्तावपवादमाह—बलात्कारं विनेति । यद्यसौ भुक्तिर्बलात्कारकृता न भवति, तदा प्रमाणम् । अन्यथा त्वप्रमाणमेव ।

भोगाविशेषे तु विशेषमाह तु वसिष्ठः—

" यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।
विभज्याधिं समं तेन भोक्तव्य इति निश्चयः ॥ "

इति । तेनापरेण धनिना; समं सहेत्यर्थः । आधानविक्रययोः समवायेऽप्याह स एव—

" यं पूर्वतरमाधाय विक्रीणीतेऽथ तं पुनः ।
किमेतयोर्बलीयः स्यात् प्राक्तनं बलवत्तरम् ॥ "

इति । अयमर्थः—यस्य पूर्वमाहितं गृहादि, तद्धनमदत्त्वैव यदि स्वामी तदन्यस्य विक्रीणीते, तदा तदाधातैव लभते; न क्रेता; यावद्धनलाभमाधातुरेव स्वत्वात्; विक्रेतुश्च यावदाधातृधनदानं स्वत्वालाभात् अस्वामिविक्रयतुल्यत्वात् । आधानविक्रयदानानां यौगपद्येऽप्याह स एव—

" कृतं यत्रैकदिवसे दानमाधानविक्रयम् ।
त्रयाणामिति संदेहे कथं तत्र विचिन्तयेत् ॥

[1] न्याय—ग, ट.

त्रयोऽपि तद्धनं धर्म्यं विभजेयुरथांशतः ।
उभौ चार्थानुसारेण त्रिभागेन प्रतिग्रही ॥"

इति । उभौ धनिकक्रेतारौ । अर्थानुसारेण दत्तधनानुसारेण भागद्वयं गृह्णीयाताम् । प्रतिग्रही तृतीयं भागमित्यर्थः; भोगस्य क्रियाबलहेतोरभावेन तिसृणामपि क्रियाणां तुल्यबलतया अन्यतरस्या अपि बाधायोगात्; पूर्वकालतामात्रस्याप्यसत्त्वात् । तदेतदप्यृणाधिकमूल्याधिविषयम् । ऋणसममूल्यत्वे त्वधमर्णादन्यतरो धनं गृह्णीयात् । अन्यतरश्चाधिम् । प्रतिग्रहीता तु न किंचित्, देयद्रव्यस्य ऋणपर्याप्तत्वेनादेयत्वादिति ॥ १८५ ॥

**सागमेन तु भोगेन भुक्तं सम्यग्यदा तु यत् ।**
**आहर्ता लभते तत्र नापहार्यं तु तत् क्वचित् ॥ १८६ ॥**
**पित्रा भुक्तं तु यद् द्रव्यं भुक्त्याचारेण धर्मतः ।**
**तस्मिन् प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत् ॥ १८७ ॥**

आगमसिद्धो भोगो हेतुरित्युक्तम् । भोगः पुनः कीदृशः प्रमाणमित्यत आह । स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः । तेन सह वर्तमानः सागमः । तादृशेन भोगेन सम्यक् प्रत्यर्थिसंनिधाने निष्प्रतिरमविच्छेदेन दीर्घकालं यत् क्षेत्रादिकं भुङ्क्ते, तत् आहर्ता भोक्तैव लभते । न केवलभोक्त्रा तदपहर्तुं शक्यते । अयमर्थः—यदा एकस्मिन्नेव क्षेत्रे कश्चित् भोगमात्रं प्रदर्शयति, अन्यस्तु विशिष्टं भोगम्; तत्र विशिष्टभोगस्यैव प्रामाण्यं, न केवलभोगस्य; बलप्रीत्यादिनापि तत्संभवात् । अत एव,

"भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥"

इति स्मरन्ति । अतश्च सागमः, दीर्घकालः, निरन्तरः, निराक्रोशः, प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणविशिष्टो भोगः प्रमाणमित्युक्तं भवति । यदाह **व्यासः**—

"सागमो दीर्घकालश्चाविच्छेदोऽन्यैरसेधितः ।
प्रत्यर्थिसंनिधानश्च पञ्चाङ्गो भोग इष्यते ॥"

इति । सागम इति विशिष्योपादानं दीर्घकालत्वादिविशेषणान्तरसद्भावेऽप्यागमहीनस्य भोगस्य न प्रामाण्यमिति दर्शयितुम् । यथाह **नारदः**—

"आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥"

इति । अत एव,

" विनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥ "

इत्यनागमभोगे दण्डोऽपि स्मर्यते । यत्तु,

" यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाहर्तुं क्रमात् त्रिपुरुषागतम् ॥ "

इति, तदपि शतवर्षाधिककालात्ययेनागमोपलब्ध्यसंभवात् अत्यन्तमनुपलभ्यमानमागमं विनेति व्याख्येयम्, आगमं विना भोगसहस्रेणापि स्वत्वानुपपत्तेः[1] ॥ १८६ ॥

योऽयं विशिष्टो भोग उपपादितः, स कुत्र प्रमाणमित्यत आह । यत् द्रव्यं गृहक्षेत्रादि पित्रा भुक्तं, तस्मिन् पितरि प्रेते असौ पुत्रः 'कुतस्त्वयेदं क्षेत्रादि लब्धम्' इति न वाच्यः नाभियोज्यः । हि यतः भुक्तिराचर्यते क्रियते येनासौ भुक्त्याचारः आगमः; तेन पितृकृतेन भुक्त्या च पित्रसाधारण्यात् धर्मतः बलच्छलादिराहित्येन तस्य पुत्रस्य तत् प्राप्तम् । पितृग्रहणं पितामहस्याप्युपलक्षणम्; तुल्यन्यायत्वात् । अयमभिसंधिः—पितृपितामहभुक्तं क्षेत्रादिकं भुञ्जानः 'कुतस्तवेदं क्षेत्रादिकम्' इत्यभियुक्तश्चेत् 'अमुकस्माल्लब्ध्वास्मत्पित्रा पितामहेन वा भुक्तम्; तथा मयापि भुज्यते' इत्यागमं निर्दिशेत् । तत्रागमाभावनिश्चये सति दण्ड्यः । तदभावे आगमानुद्धरणेऽपि न दण्ड्यः । किंतु विशिष्टभोगानुद्धरणे । यथाह **योगीश्वरः**—

" आगमस्तु कृतो येन सोऽभियुक्तः समुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ "

इति । प्रथमे आगमः । द्वितीये तृतीये च पुरुषे भुक्तिरेव दर्शनीया । परं तु सागमा ;

" आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका संतता या चिरंतनी ॥ "

इति **नारदस्मरणात्** । आदौ प्रथमे मध्ये द्वितीये च पुरुषे सागमा आगमज्ञानसहिता । आगमज्ञापकनाशे तु **कात्यायनः**—

" प्रनष्टागमलेख्येन भोगारूढेन वादिना ।
कालः प्रमाणं दानं च कीर्तनीयानि संसदि ॥ "

इति । प्रनष्टमागमस्य क्रयादेर्लेख्यं पत्रं यस्य तेन भोगमात्रं प्रमाणेन 'अमुकस्माल्लब्ध्वा एतावत्कालममुकसमक्षं मत्पित्रादिभिः मया च भुक्तम्' इति वक्तव्यमित्यर्थः । चतुर्थे पुनः पुरुषत्रयागता

[1] स्वत्वानुत्पत्तेः—ग, छ, ट.

भुक्तिरेव प्रमाणमागमज्ञानाभावेऽपि। परं त्वनागमत्वानिश्चये; "चिरंतनमविज्ञातं भोगं भोगान्न चालयेत्" इति **कात्यायन**स्मरणात्। अविज्ञातम् अनागमत्वेनेति शेषः। सागमेति दीर्घकालत्वादीनां चतुर्णामपि विशेषाणामुपलक्षणम्; तादृशस्यैव स्वत्वाव्यभिचारित्वेन प्रामाण्यात्॥ १८७॥

**त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि।**
**लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात्॥ १८८॥**

आगमज्ञानस्य क्वचिदपवादमाह। या भूः त्रिभिः पुरुषैः पितृपितामहप्रपितामहैः यथाविधि प्रतिग्रहाद्यागमपूर्वकं दीर्घकालमविच्छिन्नमप्रतिरवं समक्षतया भुक्ता, तां भुवमागमलेख्याद्यभावेऽपि चतुर्थः पुरुषो विशिष्टभोगमात्रेणैव प्राप्नुयात्। यथाह **बृहस्पतिः**—

"स्थावरेषु विवादेषु भुक्तिस्त्रैपुरुषी च या।
स्वतन्त्रैव हि सा ज्ञेया प्रमाणं स्वार्थनिर्णये॥"

इति। स्वतन्त्रा मूलभूतागमनिश्चयानपेक्षेत्यर्थः। यच्चाह **कात्यायनः**—

"भुक्तिस्तु द्विविधा प्रोक्ता सागमानागमा तथा।
त्रिपुरुषी या स्वतन्त्रा भवेदल्पा तु सागमा॥"

इति। एतेन त्रिपुरुषपर्यन्तमागमज्ञानापेक्षा। चतुर्थे तु न सेत्युक्तं भवति। त्रिपुरुषीति स्मार्तकालोपलक्षणम्। अन्यथा एकवर्षाभ्यन्तरेऽपि पुरुषत्रयापगमसंभवात् द्वितीये निरागमाया भुक्तेः प्रामाण्यं प्रसज्येत। अत एव **व्यासः**—

"वर्षाणि विंशतिं भुक्ता स्वामिनाव्याहता सती।
सा ज्ञेया पौरुषी भुक्तिर्द्विगुणा च द्विपौरुषी।
त्रिपौरुषी तु त्रिगुणा न तत्रान्वेष्य आगमः॥"

इति। त्रिंशद्वार्षिकी पौरुषीत्याह **बृहस्पतिः**—

"पिता पितामहो यस्य जीवेच्च प्रपितामहः।
त्रिंशत्समा या भुक्ता तु भूमिरव्याहता परैः॥
भुक्तिः सा पौरुषी ज्ञेया द्विगुणा च द्विपौरुषी।
त्रिपौरुषी च त्रिगुणा परतः स्याच्चिरंतनी॥"

इति। पञ्चत्रिंशत्समा पौरुषीति वा; "वर्षाणि पञ्चत्रिंशत्तु पौरुषो भोग उच्यते" इति **स्मृत्यन्तरात्**। एषां च पक्षाणामुत्तममध्यमाधमत्वेन व्यवस्था। तत्र षष्टिवार्षिकभुक्तिपक्ष उत्तमः, ससत्यादिवार्षिकाणां

साक्षिणां बहूपलब्धेः । नवतिवार्षिकभुक्तिपक्षो मध्यमः, शतवार्षिकसाक्षिणां कष्टेनोपलब्धेः । पञ्चोत्तरशतवार्षिकभुक्तिपक्षस्त्वधमः । पञ्चदशोत्तरशतवार्षिकसाक्षिणां कष्टेनाप्यनुपलब्धेरिति । अत्रापवादमाह **बृहस्पतिः**—

"भुक्तिस्त्रैपुरुषी सिध्येत् परेषां नात्र संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥"

इति । असपिण्डानां त्रिपौरुषी भुक्तिः स्वत्वगमिका भवति । सपिण्डानां त्रिपौरुष्यपि भुक्तिः न स्वत्वगमिकेत्यर्थः ; तत्र पुनर्विभागस्य वक्ष्यमाणत्वात् ॥ १८८ ॥

**नखिनां शृङ्गिणां चैव दंष्ट्रिणामाततायिनाम् ।**
**हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् ॥ १८९ ॥**
**गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।**
**आततायिनमायान्तं हन्यादेवाविचारयन् ॥ १९० ॥**
**नाततायिवधे दोषो हन्तुर्भवति कश्चन ।**
**प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥ १९१ ॥**

उक्तस्य पशुघातदण्डस्य क्वचिदपवादमाह । नखिनो व्याघ्रादयः । शृङ्गिणो गोव्यतिरिक्ता अजादयः । दंष्ट्रिणो वराहादयः । एतेषां, हस्त्यश्वानाम् , अन्येषां च मेषमहिषादीनाम् । आततायिनाम् आततमायान्तीत्याततायिनः ; तेषां मारणाभिसंधिनाभिधावतां वधे हन्तुर्न दोष इति । दोषाभावकीर्तनं च दण्डाभावार्थम् ॥ १८९ ॥

मनुष्यमारणदण्डस्यापि क्वचिदपवादमाह । गुरुः आचार्यो वक्ष्यमाणलक्षणः । बालः आ षोडशात् । वृद्धः अशीतिकावरः । बहुश्रुतः "स एष बहुश्रुतो भवति लोकवेदवेदाङ्गवित् वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिरष्टाचत्वारिंशता संस्कारैः संस्कृतः त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीतः" इति **गौतमोक्तलक्षणो** ब्राह्मणः । यद्यपि बहुश्रुत इत्यनेनैव ब्राह्मणोपलब्धिः, तथापि अतीन्द्रियत्वेन ब्राह्मण्यस्य निर्णीतब्राह्मण्य इति वक्तुं पुनरुपादानम् । एषामन्यतमम् आततायिनं वक्ष्यमाणलक्षणं मारणाभिसंधिना आयान्तम् 'अयं हन्तव्यो न वा' इत्यविचारयन् हन्यादेव ।

नायं विधिः ; रागप्राप्तत्वात् । नाप्याततायिन्यागते पलायनपक्षे हननं चाप्राप्तमिति नियमः ; अहनने दोषाश्रवणात् ; "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति हनने दोषश्रवणाच्च ।

"आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद् बुधः प्राप्तं सोऽश्वमेधफलं लभेत् ॥"

इति **बार्हस्पत्ये** अहनने फलश्रवणाच्च। अनेनात्मरक्षणविध्यतिक्रमदोष एवास्य नियमस्य फलमिति निरस्तम्; फलदोषयोः परस्परविरोधात्। नापि परिसंख्या; तदर्थस्यानाततायिहननिषेधस्य हिंसानिषेधकसामान्यशास्त्रेणैव प्राप्तत्वात्। किंच,

"आचार्यं च प्रवक्तारं पितरं मातरं गुरुम्।
न हिंस्याद् ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥"

इति **मनु**वचनमाततायिहिंसानिषेधं विनानर्थकमेव; हिंसामात्रस्य सामान्यशास्त्रेणैव निषिद्धत्वात्। अथ प्रत्यवायातिशयबोधनार्थमिदम्, तदपि न; तस्यापि प्रायश्चित्तगौरवेणैव सिद्धत्वात्। नापि प्रतिप्रसवः; "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्" इति **सुमन्तुना** तत्रापि पर्युदासात्।

अथ 'नाततायिवधे' इत्येकम्; 'दोषोऽन्यत्र' इत्यपरम्; 'गोब्राह्मणवधात् स्नातः प्रायश्चित्तं कुर्यात्' इत्यग्रेतनसूत्रानुप्रविष्टं तृतीयम्; एवं सूत्रत्रयकरणेनाद्यस्य पूर्वोक्तब्रह्मवधप्रायश्चित्तापवादार्थत्वम्; द्वितीयस्यानाततायिवधे दोषप्रतिपादकत्वम्; तृतीयस्य गोब्राह्मणवधहेतुकप्रायश्चित्ताङ्गस्नानप्रतिपादकत्वमिति **भवदेव**व्याख्यानुसरणं कार्यमिति चेत्—न; एवं सति 'दोषोऽन्यत्र गोब्राह्मणवधात्' इति भागे 'दोषोऽन्यत्र' इति द्वितीयसूत्रानर्थक्यं दुष्परिहरमेव; पूर्वमनाततायिवधे प्रायश्चित्तविधानादेव दोषसिद्धेः। किंच 'नाततायिवधे' इति पूर्वोक्तब्राह्मणवधप्रायश्चित्तापवादोऽपि न घटते;

"क्षिण्वन्तमपि गोविप्रं न हन्याद्वै कदाचन।
हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम्।
कामतोऽपि चरेद्धीर द्वादशाब्दं व्रतं शुभम्॥"

इति **भविष्यपुराण**वचनविरोधात्; "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति **गीता**वाक्यविरोधाच्च। न च मरणान्तिकप्रायश्चित्तापवादोऽयमित्यपि सम्यक्[1]; द्वादशवार्षिकस्यैवोपक्रमात्। तस्मादिदमेकमेव सूत्रं मन्तव्यम्। तेन गोब्राह्मणातिरिक्ताततायिवधे दोषाभावस्तदर्थ इति सर्ववचनानामविरोधः।

गुर्वादिपदं तु कैमुतिकन्यायेन व्याख्येयम्। अत एव **कात्यायनः**—

"आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः॥
उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते।
निवृत्तानां यथारम्भाद् ग्रहणं न वधः स्मृतः॥"

इति। उत्कृष्टे वधनिषेधात् दोषो भवति; परं स्वल्पः, कामकृतेऽपि तत्र द्वादशवार्षिकव्रतस्याम्नानात्। पापादौ तु सर्वथैव दोषाभावः। तत्र हेतुरुद्यतानामिति। तत्र दृष्टान्तः—यथा हननारम्भान्निवृत्तानामिति। तत्र हेतुः

[1] सभ्यम्—ट.

आततायिवधार्थशस्त्रग्रहणं वधो नेति। तेन च ब्राह्मणवधे अहत्वापीति वचनमनाततायिविषयम्। तस्मात् दण्डप्रायश्चित्ताभावायाभ्यनुज्ञानमात्रमेतत्। इदमपि पलायनाद्यसंभवे वेदितव्यम्; "सर्वत एवात्मानं गोपायेत्" इति श्रुतेरित्यलं विस्तरेण ॥ १९० ॥

उक्ताभ्यनुज्ञानस्य प्रयोजनमाह। गोब्राह्मणातिरिक्ताततायिनां वधेऽपि हन्तुः कश्चन दण्डस्य प्रायश्चित्तस्य वा प्रयोजको दोषो न भवति। यतः प्रकाशं शस्त्रप्रयोगादि निमित्तम्, अप्रकाशम् अभिचारादि निमित्तं वा तस्याततायिनो मन्युं हन्तुर्मन्युरेव ऋच्छति नाशयति; न पुनः पुरुषो हन्ति हन्यते इत्यर्थवादः। यथाह **बृहस्पतिः**—

"नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित्।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात् ॥"

इति ॥ १९१ ॥

**उद्यतासिविषाग्निं च शापोद्यतकरं तथा।**
**आथर्वणेन हन्तारं पिशुनं चैव राजसु ॥ १९२ ॥**
**भार्यातिक्रमिणं चैव विद्यात् सप्ताततायिनः।**
**यशोवित्तहरानन्यानाहुर्धर्मार्थहारकान् ॥ १९३ ॥**

आततायिषु दण्डमाह। परवधार्थमुद्यताः असिविषाग्नयो येनासौ तथा। द्वन्द्वनिर्दिष्टानामप्येषाम् [1]एकैकोद्यमनेनाततायिता। शापः अनिष्टाशंसकं वाक्यम्; तदभिधानायोद्यतः उद्यमितः करो येनासौ तथा। शापार्थं हि मुनयः सजलं पाणिमुद्यच्छन्ति। अथर्वणे विहितमाथर्वणम्; अभिचारादि। तेन हन्ता हनन-प्रवृत्तः। नातीतक्रियः, नापि भाविक्रियः; उद्यतास्यादिसमभिव्याहारात्। एवमन्यत्राप्यनुसंधेयम्। राजसु पिशुनं परदोषनिवेदकम्; विवादमन्तरेण ॥ १९२ ॥

भार्यां परकीयामननुरक्तामतिक्रमितुं बलाद्भोक्तुं शीलमस्यासौ तथा। एतानाततायिनो विद्यात्। सप्तेति सप्तत्वविशिष्टसंख्यानुवादः; न परिसंख्या। यतः यशोहरः; परकृतग्रन्थादेः स्वकृतत्वेन ख्यापकः; वित्तं धनम्; तद्धरः; धर्महरः; तडागादिभेदकः; । अर्थः गृहक्षेत्रादिः; तद्धरश्चेत्यादीनन्यानप्याततायिनो धर्मज्ञाः प्राहुः। यथाह **वसिष्ठः**—

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥"

[1] This sentence corrupt in ख.

इति । **मत्स्यपुराणे**—

"गृहक्षेत्रापहर्तारं तथा पत्न्यभिगामिनम् ।
अग्निदं गरदं चैव तथा चाभ्युद्यतायुधम् ॥
अभिचारं च कुर्वाणं राजगामि च पैशुनम् ।
एते हि कथिता लोके धर्मज्ञैराततायिनः ॥"

इति । **वृद्धवसिष्ठोऽपि**—

"उद्यतासिः प्रियाधर्षी धनहर्ता गरप्रदः ।
अथर्वहन्ता तेजोघ्नः षडेते आततायिनः ॥"

इति । तेजोघ्नः; मद्यादिपानेन ब्रह्मतेजोनाशकः । एतानि निमित्तान्यनपाकृतपूर्वस्यान्ते आततायितां विदधति । यथाह **कात्यायनः**—

"अनाक्षारितपूर्वो यस्त्वपराधे प्रवर्तते ।
प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता ॥"

इति । एतेन प्रत्यपकारकवधे दोष एव । परं तु स्वल्पः,

"पूर्वमाक्षारयेद्यस्तु नियतं स्यात् स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः"

इति **स्मरणात्** ॥ १९३ ॥

**उद्देशतस्ते कथितो धरे दण्डविधिर्मया ।**
**सर्वेषामपराधानां विस्तरादतिविस्तरः ॥ १९४ ॥**
**अपराधेषु चान्येषु ज्ञात्वा जातिं धनं वयः ।**
**दण्डं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मणैः सह ॥ १९५ ॥**

उक्तमध्यायार्थमुपसंहरति । हे धरे; उक्तार्थधारणक्षमे, मया भगवता विष्णुना ते तुभ्यं सर्वेषां व्यवहारपदप्रयोजकानामपराधानामुद्देशतो नामग्रहणपूर्वकं विस्तरात् कार्त्स्न्येन अतिविस्तरः विस्तर-मतिक्रान्तोऽतिसंक्षिप्तः स्वल्पैः शब्दैः दण्डविधिः कथितः ॥ १९४ ॥

अनुक्तदण्डेष्वपराधेषु कथमित्यत आह । येष्वपराधेषु ऋणादानादिषु मया दण्डो नाभिहितः, तेष्वन्येषु च जनसंस्थितिवैचित्र्यादुत्पद्यमानेषु जातिं ब्राह्मणत्वादिकं, धनं बहु अल्पं वा, वयः बाल्यवार्धकादि,

चकारात् देशकालबलसकृदसकृत्कामाकामाद्यनुबन्धमपि ज्ञात्वा, ब्राह्मणैः नियुक्तैरनियुक्तैश्च सह सम्यक् मन्त्रयित्वा, दण्डम् अपराधिदमनक्षमं प्रकल्पयेत् । यथाह **योगीश्वरः**—

"ज्ञात्वापराधं देशं च कालं बलमथापि वा ।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥"

इति ॥ १९५ ॥

**दण्ड्यं प्रमोचयन् दण्ड्याद् द्विगुणं दण्डमावहेत् ।**
**नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥ १९६ ॥**
**यस्य चौरः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।**
**न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥ १९७ ॥**

इति [1]श्रीविष्णुस्मृतौ पञ्चमोऽध्यायः

उक्तदण्डविधेर्विशेषमाह । यो दण्डाधिकारे राज्ञा नियुक्तः, स चेत् दण्ड्यमदण्डयित्वैव मुञ्चति, अदण्ड्यानां दण्डानर्हाणां च दण्डं करोति, तदासौ दण्ड्यस्य यावान् दण्डः तद्द्विगुणं दण्डं दण्ड्यः । बन्धने तु विशेषमाह **योगीश्वरः**—

"अबन्ध्यं यश्च बध्नाति बन्ध्यं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥"

इति । राज्ञोऽप्यत्र प्रत्यवायमाह **मनुः**—

"यावानवध्यस्य वधे तावान् वध्यस्य मोक्षणे ।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥"

इति । प्रायश्चित्तमप्याह **वसिष्ठः**—"दण्ड्योत्सर्गे राजा एकरात्रमुपवसेत् । त्रिरात्रं पुरोहितः । कृच्छ्रमदण्ड्यदण्डने पुरोहितः । त्रिरात्रं राजा" इति । अन्यायगृहीतस्य दण्डस्य प्रतिपत्तिमाह **योगीश्वरः**—

"राज्ञान्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥"

1 श्रीवैष्णवे धर्मशास्त्रे दण्डप्रकरणं पञ्चमम्—ठ, ज ; श्रीवैष्णवे पञ्चमोऽध्यायः—क, झ.

इति । दुर्दृष्टो व्यवहारोऽपि पुनर्द्रष्टव्य इत्याह स एव—

"दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान् नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद् द्विगुणं दमम् ॥"

इति ॥ १९६ ॥

यथोक्तदण्डानुष्ठातुः फलोक्तिव्याजेनोक्तमुपसंहरति । यस्य राज्ञः पुरे राष्ट्रे चौरपारदारिकवाक्परुषाग्निदादिसाहसिकदण्डनाशकाः तद्दण्डभयेन न सन्ति, स राजा शक्रलोकभाक् भवतीत्युक्तदण्डविधेरुपसंहारः ॥ १९७ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[1]श्रीरामपण्डितात्मज[1]श्रीनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ [2]श्रीमत्यां वैजयन्त्यां पञ्चमोऽध्यायः

[1] श्री omitted in ग, छ.

[2] श्रीमत्यां वैजयन्त्यां omitted in घ.

## षष्ठोऽध्यायः

**अथोत्तमर्णोऽधमर्णाद्यथादत्तमर्थं गृह्णीयात् ॥ १ ॥ द्विकं त्रिकं चतुष्कं पञ्चकं च[1] शतं वर्णानुक्रमेण प्रतिमासम् ॥ २ ॥**

एवं पञ्चमे ऋणादानातिरिक्तानि पदानि दण्डाभिधानमुखेन व्याख्यायेदानीं षष्ठाध्याये ऋणादानं निरूपयति । तत्स्वरूपमाह **नारदः**—

" ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माभ्यामृणादानमिति स्मृतम् ॥ "

इति । तत्राधमर्णे देयादेयाधिकारकालप्रकाराः पञ्चविधाः । उत्तमर्णे दानादाने द्विविधे । तत्रोत्तमर्णस्यादानविधिमाह; तदाक्षेपादितरेषाम् । अथेत्यधिकारः । उत्तमर्णः ऋणप्रयोक्ता अधमर्णात् ऋणग्रहीतुः यथादत्तम् ; यया संख्यया, यया वृद्ध्या, यया परिभाषया, यत् द्रव्यं दत्तं तत् तथैव गृह्णीयात् ॥ १ ॥

वृद्धिपरिमाणमाह । द्वौ वृद्धिर्दीयते यस्मिन् शते तत् द्विकं शतम् । एवं त्रिकादिशब्देषु । " तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते " इति कन् । शते द्वौ त्रीन् चतुरः पञ्च च ब्राह्मणादिवर्णादधमर्णात् प्रतिमासमुत्तमर्णो वृद्धिं गृह्णीयात् । [2]इयं चाबन्धकालम्बके प्रयोगे वृद्धिः । सबन्धकादौ तु विशेषमाह **व्यासः**—

" सबन्धे भाग आशीतः षाष्ठो भागः सलम्बके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥ "

इति । सेयं वृद्धिः प्रतिमासं गृह्यते इति कालिका । अन्या अपि तिस्रः **नारदेनोक्ताः**—

" कायिका कालिका चैव कारिता च तथापरा ।
चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥ "

इति । तल्लक्षणमाह **स एव** ।

" कायाविरोधिनी शश्वत् पणपादादि कायिका ।
प्रतिमासं स्रवन्ती च वृद्धिः सा कालिका मता ॥

[1] च omitted in ख, ज, ट.

[2] इदं—ग.

वृद्धिः सा कारिता नाम यर्णिकेन स्वयंकृता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥ ”

इति । अत्र विशेषमाह **बृहस्पतिः**—

“ वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्तिता ।
षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत ॥
कायिका कालिका चैव चक्रवृद्धिस्तथापरा ।
कारिता च शिखावृद्धिर्भोगलाभस्तथैव च ॥ ”

कायिका कर्मसंयुक्ता ” इति । [1]अन्यदुक्तसमानम् ।

“ प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता ।
गृहात् तोषः शदं क्षेत्राद्भोगलाभः प्रकीर्तितः ॥ ”

इति । यदा तु शिखावृद्धिः कायिकैव, “ पणपादादि कायिका ” इति लक्षणात् , तदा पञ्चधा । यदा तु कर्मकरणं कायिकालक्षणं तदा षोढेत्यर्थः । तोषो भोगः । शदो धान्यमिति ॥ २ ॥

**सर्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः ॥ ३ ॥ अकृतामपि वत्सरातिक्रमेण यथाविहितम्**[2] ॥ ४ ॥

कारितावृद्धिमाह । सर्वे ब्राह्मणादयोऽधमर्णाः स्वप्रतिपन्नां स्वेच्छयाङ्गीकृतां वृद्धिं सर्वेषु वर्णेषु दद्युः । अनुवृत्तावपि वर्णग्रहणमनुलोमजप्रतिलोमजप्राप्त्यर्थम् । यथाह **योगीश्वरः**—“ दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ” इति । अधमर्णविशेषेण वृद्धिविशेषमाह **स** एव— “ कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ” इति ॥ ३ ॥

अकृतामपि वृद्धिमाह । सर्वे सर्वेषु याचितादावकृतामपि वृद्धिं संवत्सरातिक्रमे यथाविहितं द्विकशतादिक्रमेण दद्युः । यथाह **कात्यायनः**—

“ यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् ।
ऊर्ध्वं संवत्सरात् तस्य तद्धनं वृद्धिमाप्नुयात् ॥ ”

इति । एतच्चाप्रतियाचिते । प्रतियाचिते तु **स** एवाह—

“ कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात् तस्य तद्धनं वृद्धिमाप्नुयात् ॥ ”

1 अन्यदुक्तेन—ग.

2 विहिताम्—ङ.

इति । कृतोद्धारं याचितकम् । देशान्तरगमनाभावे तु याचनकालादेव वृद्धिमाह **स** एव—

" स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् ।
तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥ "

इति । ततः याचनकालात् । प्रीतिदत्ते तु वत्सरार्धवृद्धिमाह **नारदः**—

" न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्धि वर्धते ॥ "

इति । याचिते तु तस्मिन् अर्वागपि वृद्धिविशेषमाह **स** एव—

" प्रीतिदत्तं तु यत् किंचिन्न च वर्धत्ययाचितम् ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥ "

इति । अत्रापि याचनकालादेव वृद्धिः । अयाचिते तु **स** एव—

" पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥ "

इति । पण्यमूल्ये वृद्ध्यभावः प्रवासप्रतियाचिताभावे । न्यासे यथावस्थाने प्रतियाचनाभावे च ज्ञेयः । **संवर्तो**ऽपि—

" न वृद्धिः स्त्रीधने लाभे निक्षिप्ते च यथास्थिते ।
संदिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयं कृता ॥ "

इति । स्त्रीधने ऋणत्वेन गृहीते ; लाभे क्रीतस्य वस्तुनः ; देयत्वेन स्वीकृते ; यथास्थिते अपरावर्तिते ; संदिग्धे अनिर्णीते ऋणादौ ; प्रातिभाव्ये प्रतिभुवा देये ॥ ४ ॥

**आध्युपभोगे वृद्ध्यभावः ॥ ५ ॥ दैवराजोपघाताहृते विनष्टमाधिमुत्तमर्णो दद्यात् ॥ ६ ॥**

क्वचित् वृद्ध्यपवादमाह । गृहीते धने विश्वासार्थमधमर्णेनोत्तमर्णस्य यत् वस्तु आधीयते स आधिः । तल्लक्षणमाह **नारदः**—

" अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
जङ्गमः स्थावरश्चैव स पुनर्द्विविधः स्मृतः ॥
विश्वासार्थर्णशोध्यश्च स पुनर्द्विविधः स्मृतः ।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ।
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च ॥ "

इति। ऋणं शोध्यं यस्यासौ ऋणशोध्यः; ऋणशोधनार्थ इति यावत्। कृते परिभाषिते काले उपनीयते मोच्यत इति कृतकालोपनेयः। यावद्देयं यावदृणदानं स्थापितो यावद्देयोद्यतः। गोप्यो गोपनीयः। भोग्यो भोगार्हः। तत्र गोप्यस्याधेर्भोगे उत्तमर्णो वृद्धिं न लभेतेत्यर्थः। यथाह **योगीश्वरः**—"गोप्याधिभोगे नो वृद्धिः" इति। महति भोगे इदम्। स्वल्पभोगे तु अर्धवृद्धिहानिः। यथाह **मनुः**—

"यः स्वामिनाननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः॥"

इति। यत्तु "अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या, समयातिक्रमात्" इति **विज्ञानेश्वर**व्याख्यानं, तन्**मनु**वचनविरोधादुपेक्ष्यम्। भोगस्यापि सवृद्धिकस्यात्यन्तभोगेन व्यवहारक्षमत्वे वृद्ध्यभावः; "सोपकारेऽप्यहापितः" इति **बृहस्पति**स्मरणात्। क्वचित् धनदानेन सह वृद्धिनाशस्य विकल्पमाह **कात्यायनः**—

"अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं च न लभेत सः॥"

इति। कर्मफलं वेतनम्। दासाद्याधिविषयमेतत्॥ ५॥

आत्यन्तिकाधिविनाशे त्वाह। विविधमप्याधिं स्वदोषेण विनष्टमुत्तमर्णो मूल्यकल्पनयाधमर्णाय दद्यात्। यथाह **व्यासः**—

"ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत्।
ऋणं सलाभं संशोध्य तन्मूल्यं दाप्यते धनी॥"

इति। विकृतश्चेत् पूर्ववत् कृत्वा देयः; "नष्टो देयो विनष्टश्च" इति **योगि**स्मरणात्। विनष्टोऽत्र विकृतिगतः। परं तु दैवराजोपघातं विना; "विनष्टे मूलनाशः स्याद् दैवराजकृतादृते" इति **नारद**स्मरणात्। मूलनाशस्त्वाधिमूल्यसाम्ये। मूल्यं वृद्धेरप्युपलक्षणम्; दण्डापूपिकान्यायात्। न्यूनाधिकमूल्ये त्वाधौ सवृद्धिकमृणं दत्त्वा मूल्यं गृह्णीयात्; "बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत्" इति **बार्हस्पत्यात्**। दैवराजोपघाते तु आध्यन्तरमृणं वा सवृद्धिकमधमर्णो दद्यात्;

"स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते।
आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम्॥"

इति **स्मरणात्**। स्रोतसेति दैविकमात्रोपलक्षणम्। रक्ष्यमाणस्यासारत्वे आध्यन्तरं वा देयम्; "रक्ष्यमाणोऽप्यसारताम्। यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्" इति **योगि**स्मरणात्। क्वचिदविनष्टमप्याधिमुत्तमर्णो न दद्यादित्याह **योगीश्वरः**—"आधिः प्रणश्येद् द्विगुणे धने यदि न मोक्ष्यते। काले कालकृतो नश्येत्" इति। वृद्ध्या द्विगुणीभूते मूले यद्याधिर्न मोच्यते, स चाधिर्नश्येत्;

उत्तमर्णस्यैव स्वं भवतीत्यर्थः। द्वैगुण्यं चेदं हिरण्याभिप्रायेण। वस्त्रधान्यादौ चतुस्त्रैगुण्यादि द्रष्टव्यम्। तथैव कृतकालावधिराधिः काले न मोच्यते चेत्, नश्यतीति। अत्र विशेषमाह **व्यासः**—

"हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च।
तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्॥"

इति। द्वैगुण्ये अवधौ चातीते चतुर्दशदिनानन्तरमाधौ अधमर्णस्य स्वत्वं निवर्तते; उत्तमर्णस्य स्वत्वमुत्पद्यत इत्यर्थः। इदं च हिरण्यादिविषयम्; हिरण्योपादानात्। वस्त्रादौ तु **बृहस्पतिः**—

"पूर्णेऽवधौ शान्तलाभे बन्धस्वामी धनी भवेत्।
अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति॥"

इति। शान्तलाभे; त्रैगुण्यादिना वृद्ध्यनुत्पत्तौ। अयं चाधिनाशः ऋणसमानाधिविषयः। न्यूनाधिकमूल्ये त्वाधौ द्विगुणं द्रव्यमेव देयम्; न नाशः; "चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम्" इति **योगिस्मरणात्**। चरित्रं श्रद्धाश्रयः; तेन यत् न्यूनाधिकमूल्यं बन्धकीकृतं तत्रेत्यर्थः। ऋणिकासंनिधौ तु **बृहस्पतिः**—

"हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके।
आधिं राज्ञो निवेद्याथ विक्रीणीत ससाक्षिकम्।
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत्॥"

इति। भोग्याधेस्तु न नाशः; "फलभोग्यो न नश्यति" इति **योगिस्मरणात्**। अकृतकालविषयं चैतत्॥ ६॥

**अन्तवृद्धौ प्रविष्टायामपि॥ ७॥ [1]न स्थावरमाधिमृते वचनात्॥ ८॥**

आधिविशेषे मोचनकालमाह। आधिर्द्विविधः—विश्वासार्थः, ऋणापाकरणार्थश्च। ऋणापाकरणार्थोऽपि त्रिविधः—वृद्धिमात्रापाकरणार्थः, मूलमात्रापाकरणार्थः, सवृद्धिकर्णापाकरणार्थश्च। यथा—'एतद्गोमहिष्याद्युत्पन्नेन द्रव्येण वृद्धिर्मूलं सवृद्धिकमृणं वा त्वया ग्राह्यम्' इति परिभाष्य अधमर्णेनोत्तमर्णायादौ मध्ये अन्ते वा गवादि दीयते इति। तमेनं क्षयाधिमाचक्षते लौकिकाः। तत्र वृद्धिमात्रा-

[1] न omitted in ज.

पाकरणार्थं यदाधीकृतं गवादि, तदुत्पन्नेन द्रव्येणान्तवृद्धौ; वृद्धेरन्तमन्तवृद्धिः, वृद्ध्यन्तं नाश इति यावत्। तस्मिन् प्रविष्टे प्राप्ते, मूलद्रव्यं गृहीत्वा आधिमुत्तमर्णोऽधमर्णाय दद्यात्। यथाह **व्यासः**—

"फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं च सामकम्।
अतोऽन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्॥"

इति। फलभोग्यं फलभोगार्थं दत्तम्। वृद्धिसमदानेन पूर्णकालमाधिं, सामकं सममेव सामकम्, मूलद्रव्यं दत्त्वा प्राप्नुयात् ऋणी। यदि पुनरन्तरा मध्य एव सवृद्धिकं धनं ददाति, तदा तु अपूर्णेऽपि काले बन्धं प्राप्नुयादिति। अस्यापवादमाह **बृहस्पतिः**—

"यदि प्रकर्षितं तत् स्यात् तदा न धनभाग्धनी।
ऋणी च न लभेद्बन्धं परस्परमतं विना॥"

इति। यदि तत् बन्धकं प्रकर्षितं वृद्धेरप्यधिकफलं स्यात्, तदा न धनभाक् धनी; परिभाषितादधिकस्य प्राप्तत्वात्। तत्रापि यावदधिकं प्राप्तं, तावत् मूलं न्यूनं कार्यम्। यावत् न प्राप्तं, तावत् देयमेव। अथ वृद्धेरप्यपर्याप्तं, तदा मूलं दत्त्वापि न लभेत् बन्धम्; किंतु वृद्धिशेषमपि दत्त्वैवेत्यर्थः। पुनरुभयापवादमाह—परस्परमतं विनेति। परस्परमतं विना; परस्परमते तु उत्कृष्टमपि यावन्मूलदानं भुङ्क्ते; निकृष्टमपि मूलदानेन लभतेऽधमर्ण इति॥ ७॥

अस्यापवादमाह। 'यावद्वृद्धिलाभमेव त्वयेदमाम्रवणादि उपभोक्तव्यम्' इति वचनव्यक्तिं विना यत्र वृद्ध्यपाकरणायाम्रवणादि स्थावरमाधीकृतं, तत्रान्त्यवृद्धिप्रवेशेऽपि न तदुत्तमर्णो दद्यात्। किंतु तदनन्तरमपि भुञ्जीतैव यावन्मूललाभम्; "आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते" इति **योगिस्मरणात्**। स्थावरमिति वचनात् जङ्गमे गवादौ विनापि परिभाषावचनं वृद्धिलाभे मोक्षो गम्यते; भोगाधिक्ये फलप्रत्यावृत्तिस्मरणात्। यथाह **कात्यायनः**—

"अकाममननुज्ञातमाधिं यत् कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः॥"

इति। अकामं बलात्कारेण, अननुज्ञातम् अपरिभाषितमाधिं गवादि यत् कर्म कारयेत्, तत्फलं दुग्धादिद्रव्यं भोक्ता उत्तमर्ण एवाधमर्णस्य दाप्यः। वृद्धिर्वा न हार्य इति। 'ऋते वचनात्' इत्यनेन तादृशपरिभाषावचने तावदेव भोगः। अधिके भोगे मूलनाशोऽपीत्यवगम्यते; "यदि प्रकर्षितम्" इत्यादिपूर्वोक्तबृहस्पतिवचनात्॥८॥

**गृहीतधनप्रवेशार्थमेव यत् स्थावरं दत्तं तत् गृहीतधनप्रवेशे दद्यात्॥ ९॥ [1]दीयमानं प्रयुक्तमर्थमुत्तमर्णस्यागृह्णतस्ततः परं न वर्धते॥ १०॥**

[1] दीयमानं omitted in ख, ग, ज, झ, ठ.

मूलापनयनार्थस्याधेर्मोचनकालमाह। गृहीतं धनं मूलम्। तत्प्रवेशार्थं तत्प्रतिपादनार्थं यत् स्थावरं क्षेत्रादि बन्धकत्वेन दत्तमधमर्णेन, तत् बन्धकं गृहीतधनस्य मूलस्य प्रवेशे प्रत्यागमे सत्युत्तमर्णो दद्यात्। गृहीतधनेति सवृद्धिकस्याप्युपलक्षणम्। तेन सवृद्धिकमूलापाकरणार्थोऽपि आधिः उत्पन्ने तावति द्रव्ये प्रविष्टे सति मोच्य इति। यथाह **बृहस्पतिः**

"क्षेत्रादिकं यदा भुक्तमत्यन्तमधिकं ततः।
मूलोदयं प्रविष्टं चेत् तदाधिं प्राप्नुयादृणी॥
परिभाष्य यदा क्षेत्रं दद्यात्तु धनिके ऋणी।
प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम॥"

इति। उक्तपरिभाषया ततो मूलात् अत्यन्तमधिकं वृद्धेरपि पर्याप्तं यदा भुक्तं, तेन मूलोदये प्रविष्टे सति आधिं प्राप्नुयादित्यर्थः। आधिमोचने कालान्तरमप्याह **योगीश्वरः**—

"उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात्॥"

इति। उत्तमर्णे असति तद्बन्धुहस्ते द्रव्यं दत्त्वापि गृह्णीयादित्यर्थः। पक्षान्तरमप्याह **स** एव—"तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः" इति॥ ९॥

पुनरपि कंचिदपवादमाह। अधमर्णेन दीयमानमर्थं यद्युत्तमर्णः वृद्धिलोभेन न गृह्णाति, तदा ततः परं न वर्धते, मध्यस्थहस्ते स्थापितं चेत्। यथाह **योगीश्वरः**—

"दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
मध्यस्थस्थापितं तत् स्याद्वर्धते न ततः परम्"

इति॥ १०॥

**हिरण्यस्य परा वृद्धिर्द्विगुणा॥ ११॥ धान्यस्य त्रिगुणा॥ १२॥ वस्त्रस्य चतुर्गुणा॥ १३॥ रसस्याष्टगुणा॥ १४॥**

वृद्धेः परमावधिमाह। वृद्ध्यर्थं प्रयुक्तस्य हिरण्यस्य सुवर्णरजतमुद्रादेः स्वस्वकालाग्रहणेनैकीभूता वृद्धिरेकदैव गृह्यमाणा द्विगुणैव परा; नातोऽधिका ग्राह्येति। यथाह **मनुः**—"कुसीदवृद्धिर्द्विगुणं नात्येति सकृदाहृता" इति। यद्यपि मूलाद् द्विगुणेति मूलेन सह त्रैगुण्यं प्रतीयते, तथापि "ग्राह्यं स्याद् द्विगुणं द्रव्यं प्रयुक्तं धनिना सदा" इति **कात्यायनेन** प्रयुक्तस्यैव द्वैगुण्याभिधानात् मूलेन सह द्वैगुण्यं सिध्यति। एवमुत्तरत्रापि ज्ञेयम्॥ ११॥

प्रयुक्तं धान्यं चिरमगृहीतवृद्धिकं त्रिगुणमेव ग्राह्यम्; नाधिकम्॥ १२॥

प्रयुक्तं वस्त्रं चिरमगृहीतवृद्धिकं चतुर्गुणमेव ग्राह्यम्; नाधिकम्॥ १३॥

रसस्य तैलघृतादेः अगृहीतवृद्धिकस्याष्टगुणैव वृद्धिः; नाधिका। **बृहस्पतिस्तु** वृद्धिवैलक्षण्यमाह—

"हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके।
धान्ये चतुर्गुणा प्रोक्ता शदे वाह्ये लवेषु च॥"

इति। कुप्यं त्रपुसीसादि। शदः क्षेत्रफलम्। वाह्यः बलीवर्दादिः। लवः ऊर्णाचामरादिः।

"उक्ता पञ्चगुणा शाके बीजस्था षड्गुणा स्मृता।
लवणस्वेदमद्येषु वृद्धिरष्टगुणा स्मृता।
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके॥"

इति। बीजानि पूगपनसादीनाम्। चकारात् तैलादेरपि; "तैलानां चैव सर्वेषां मद्यानां चैव सर्पिषाम्," इति **कात्यायन**स्मरणात्। तत देशकालादिवशेन व्यवस्थाप्यम्। एवं स्मृत्यन्तराण्यपि॥ १४॥

**संततिः स्त्रीपशूनाम्॥ १५॥ किण्वकार्पाससूत्रचर्मायुधेष्टकाङ्गाराणामक्षया॥ १६॥ अनुक्तानां द्विगुणा॥ १७॥**

यदा पुनः कश्चित् स्वयं पोषणासमर्थः तत्पुष्टिसंततिकामनया स्त्रीः दासीः पशून् गवादीन् वा प्रयुङ्क्ते, क्षीरपरिचर्यार्थी च गृह्णाति, तदासां वृद्धिः संततिरेव भवति; नान्या। अधमर्णगृहे यान्यपत्यानि जनयन्ति, तावद्भिरपत्यैः सहिताः प्रत्यर्पणीया इत्यर्थः। यदि ता न प्रसूयन्ते, तदा स्वगृहस्थाः प्रसूता एकापत्यसहिताः तत्स्थाने देया इति; वृद्धिभूतायां संततौ संख्यान्तरप्रापकाभावेन प्रथमोपस्थितैकत्वपरित्यागे कारणाभावात्॥ १५॥

अक्षयां वृद्धिमाह। किण्वं सुरोपादानकारणं मधूकपुष्पादि; "सुराबीजं तु किण्वकम्" इति [1]**शार्ङ्गधर**स्मरणात्। कार्पासः तूलम्। सूत्रं प्रसिद्धम्। चर्म दृतिः। वर्मेति पाठे कवचम्। आयुधं शस्त्रम्। इष्टकाङ्गारौ प्रसिद्धौ। एषामक्षया वृद्धिः; कदापि न निवर्तत इत्यर्थः। यथाह **बृहस्पतिः**—

"तृणकाष्ठेष्टकासूत्रकिण्ववर्मास्थिचर्मणाम्।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते॥"

इति॥ १६॥

प्रतिद्रव्यं वक्तुमशक्तेर्लाघवार्थमाह। पूर्वत्रानुक्तानां द्रव्याणां मणिमुक्ताप्रबालादीनां द्विगुणा परा वृद्धिः। यथाह **कात्यायनः**—

"मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फालकैटाविकस्य च॥"

इति। तिष्ठति अवर्धमाना। फालं फलभवम्। कैटं कीटभवं त्रसरादि। आविकं कम्बलादि॥ १७॥

[1] शार्ङ्गस्मरणात्—ट.

**प्रयुक्तमर्थं यथाकथंचित् साधयन्[1] न राज्ञो वाच्यः स्यात् ॥ १८ ॥ साध्यमानश्चेद्राजानमभिगच्छेत् तत्समं दण्ड्यः ॥ १९ ॥ उत्तमर्णश्चेद्राजानमियात्[2], तद्विभावितोऽधमर्णो[3] राज्ञे धनदशभागसंमितं[4] दण्डं दद्यात् ॥ २० ॥**

यदुक्तं यथादत्तमर्थं गृह्णीयादिति, तत्र विशेषमाह। वृद्ध्यर्थं प्रयुक्तमर्थमधमर्णेनाभ्युपगतमुत्तमर्णो यथाकथंचित धर्मादिभिरुपायैः साधयन् न राज्ञो वाच्यः, अभिवारणीयः स्यात्। यथाह **योगीश्वरः**—"प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्" इति। अप्रतिपन्नं साधयतो दण्डमाह **कात्यायनः**—

"पीडयेद्यो धनी कश्चिद्दणिकं न्यायवादिनम्।
तस्मादर्थात् स हीयेत तत्समं चाप्नुयाद्दमम् ॥"

इति। धर्मादीनुपायानाह **मनुः**—

"धर्मेण व्यवहारेण छलेनाचरितेन च।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥"

इति। धर्मः सत्यवाक्यम्। व्यवहारः साक्ष्याद्युपन्यासः। छलम् उत्सवादिव्याजेनाहरणम्। अचरितमुपवासः। बलं बन्धनादि ॥ १८ ॥

अधमर्णं प्रत्याह। अभ्युपगतमर्थं साध्यमानः याच्यमानः यदि राजानमभिगच्छेत् राज्ञे निवेदयति, तदासौ तत्समं दण्ड्यः; तद्धनं च दाप्यः। यथाह **योगीश्वरः**—"साध्यमानो नृपं गच्छन् दण्ड्यो दाप्यश्च तद्धनम्" इति। दापनप्रकारमाह **कात्यायनः**—

"राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत्।
देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत्।
रिक्थिन सुहृदं वापि [5]छलेनैव प्रदापयेत् ॥"

इति ॥ १९ ॥

अशक्तस्योत्तमर्णस्य राज्ञा अर्थसाधने अधमर्णस्य दण्डमाह। विप्रतिपन्नमर्थं साधयितुमुत्तमर्णो यदि राज्ञे निवेदयति, तदा तद्विभावितः तेन राज्ञा अङ्गीकारितः अधमर्णः राज्ञे साधितस्य धनस्य दशमांशसमानमृणातिरिक्तं दण्डं दद्यात्। यत्तु,

[1] साधयानः—ठ.
[2] अभीयात्—ख, ग, ट.
[3] धर्मेण—ठ.
[4] समं—ठ.
[5] शतेनैव—ख, ग, ट.

" ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रच्छति ।
राज्ञा दापयितव्यः स्याद् गृहीत्वांशं तु विंशकम् ॥ "

इति **नारद**वचनं, तदल्पधनविषयम् । उत्तमर्णात् गृहीत्वांशं तु विंशकमिति व्याख्येयम् ॥ २० ॥

**प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम्[1] ॥ २१ ॥ सर्वापलाप्येकदेशविभावितोऽपि सर्वं दद्यात् ॥ २२ ॥**

तत्रैवोत्तमर्णं प्रत्याह । राजविभावनाप्राप्तस्यार्थस्य विंशतितममंशमुत्तमर्णो राज्ञे भृतित्वेन दद्यात् ॥ २१ ॥

यदुक्तं विभावितात् दशमविंशांशौ राजा गृह्णीयादिति, तस्यापवादमाह । यस्तु अनेकवस्त्वभियोगे सर्वमेवापलपति 'नाहमेतेषु किमपि धारयामि' इति, स यदि एकदेशमपि विभावितः अङ्गीकारितः, तदा सर्वमेवाभियुक्तमर्थमभियोक्त्रे दद्यात् । अपिशब्दात् राज्ञे तत्समं दण्डं च । यथाह **योगीश्वरः**—" निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् " इति । इदं च 'यद्येषामर्थानां मध्ये एकमप्यर्थमर्थी भावयति, तदा सर्वानप्यर्थानहं दास्यामि' इति सावष्टम्भे प्रतिवचने द्रष्टव्यम् ;

" अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥ "

इति **नारदे**नापलापे वैशिष्ट्याभिधानात् । [2]अयथार्थत्वे

" अनेकार्थाभियोगे तु यावत् संसाधयेद्धनम् ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥ "

इति **कात्यायनीयं** द्रष्टव्यम् । पुत्रादिदेयपित्राद्यृणविषयमिति **प्राञ्चः** । यत्तु,

" साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं लभेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत् साध्यं परिकीर्तितम् ॥ "

इति, तत् साहसादिविषयम् ; तावतैव साहसादिसिद्धेः ॥ २२ ॥

**तस्य च भावनास्तिस्रो भवन्ति लिखितं साक्षिणः समयक्रिया च ॥ २३ ॥ ससाक्षिकमाप्तं ससाक्षिकमेव दद्यात् ॥ २४ ॥ [3]लिखितार्थे प्रविष्टे लिखितं पाटयेत् ॥ २५ ॥ असमग्रदाने लेख्यासंनिधाने चोत्तमर्णः [4]स्वलिखितं दद्यात् ॥ २६ ॥**

[1] अर्थम्—ज.
[2] अयथार्थे—ख, ग, ट.
[3] लिखितान्ते—ज.
[4] स्वहस्त—ज, झ ; स्व omitted in ख.

विभावनासाधनान्याह । भाव्यते साध्यते विप्रतिपन्नोऽर्थोऽनयेति भावना ; प्रमाणपद्धतिः । तस्य ऋणस्य लिखिताद्यास्तिस्रो भवन्ति । तत्र लिखितं त्रिविधम् । साक्षिण एकादशविधाः । समयक्रिया शपथकरणं पञ्चविधम् । वक्ष्यमाणलक्षणैरेतैस्त्रिभिः प्रमाणैर्विप्रतिपन्नमृणं साधयेदित्यर्थः । चकारात् दानक्रयादीनां संग्रहः । यद्यपि सर्वत्रैतानि प्रमाणानि, तथापि ऋणविवादे एषामेव त्रयाणां साक्षात् गमकत्वमित्यवगमयितुं तस्येति विशेषनिर्देशः । भुक्तेस्तु लिखितादिद्वारैव सिद्धाया गमकत्वेन साक्षात् गमकत्वाभावात् न पृथगुपादानम्, किंतु चकारेणैवेति । एषां च बलाबलमाह **बृहस्पतिः**—

अनुमानाद् गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिरेव गरीयसी ॥
अनुमानं साध्य एव साक्षी चामरणाद्भवेत् ।
अव्याहतं लेख्यभोग्यं प्रमाणं च त्रिपूरुषम् ॥"

इति । दुष्टलिङ्गैरनुमानं व्यवहारकाल एव प्रवर्तते, न सर्वदेति दुर्बलम् । साक्षी स्वजीवनावधीति ततो बलवान् । लिखितभोगौ तु त्रिपूरुषमिति ततोऽपि बलवत्तराविति । एषां च समवाये बलाबलमाह **कात्यायनः**—

"क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ।
अव्याहते त्रिपुरुषे भोगे लेख्यं न साक्षिणः ॥"

इति । तत्र दिव्यमप्येषामन्यतमाभावे वेदितव्यम् ; "एषामन्यतमाभावे दिव्यान्यतममुच्यते" इति **स्मरणात्** । तथैतेषां विषयविशेषे बलवत्तामप्याह **स** एव—

"वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ।
दत्तादत्ते च भृत्यानां स्वामिनां निर्णये सति ॥
विक्रयादानसंबन्धे क्रीत्वा धनमनिच्छति ।
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं[1] न दिव्यं न च लेख्यकम् ।
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥
प्रक्रान्तसाहसे वाचि पारुष्ये दण्डवाचके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च ॥"

इति । एतेन वाक्पारुष्ये दिव्यनिषेधः साक्षिसद्भावविषय इति सिद्धम् ॥ २३ ॥

[1] लेख्यं—ट.

अथाधमर्णस्य प्रतिदानविधिमाह। यत् ऋणं साक्षिसमक्षं प्राप्तं गृहीतं, तत् ससाक्षिकमेव दद्यात्॥ २४॥

ऋणपत्रप्रतिपत्तिमाह। लिखितश्चासावर्थश्चेति लिखितार्थः; गृहीतमृणम्। तस्मिन् उत्तमर्णे प्रविष्टे सति, तत् लिखितमृणपत्रं पाटयेत् छिन्द्यात्॥ २५॥

भागशः ऋणदाने पत्रासंनिधाने च कथमित्यत आह। यदि पत्रलिखितमृणमेकदा दातुमशक्तेन भागशो दीयते, पत्रं च देशान्तरस्थित्या असंनिहितं, तदा उत्तमर्ण एव यावानधिगतः ऋणभागः तत्समर्पकं स्वलिखितं पत्रमधमर्णाय दद्यात्। लेख्यासंनिधानोक्त्या तत्संनिधाने तस्यैव पृष्ठे लिखेदित्युक्तं भवति। यथाह **योगीश्वरः**—

"लेख्यस्य पृष्ठेऽभिलिखेद् दत्त्वा तत्त्वर्णिको धनम्।
धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम्॥"

इति। दौरात्म्यात् उत्तमर्णेन तदलेखने तु **नारदः**—

"यदि वा नोपरि लिखेद्दणिना चोदितोऽपि सन्।
धनिकस्येव वर्धेत तथैव ऋणिकस्य यत्॥"

इति। चकारात् समप्रदानेऽपि लेख्यासंनिधाने पत्रान्तरमेवोत्तमर्णो दद्यात्। यथाह **योगीश्वरः**— "दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यं तु कारयेत्" इति॥ २६॥

**धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रवसिते वा [1]तत्पुत्रपौत्रैर्धनं देयम्॥ २७॥ नातः परमनिच्छुभिः[2]॥ २८॥ सपुत्रस्य वाप्यपुत्रस्य वा रिक्थग्राही ऋणं दद्यात्[3]॥ २९॥**

[1] तत् omitted in ज.

[2] अनीप्सुभिः—झ; ईप्सुभिः—ट.

[3] The following notes are found in छ below this Sūtra—रिक्थग्राही ऋणं दद्यादिति। अत्र पुत्रो विशेष्यः। तस्यैतानि त्रीणि विशेषणानि—रिक्थग्राहः, योषिद्ग्राहः, अनन्याश्रितद्रव्यश्चेति। तत्रानेकपुत्रसमवाये रिक्थग्राहः पुत्र। तदभावे कृतदारः। कृतदाराणां समवाये योषिद्ग्राहो नाम कृतदारः पुत्रो दाप्यः। तदभावे अनन्याश्रितद्रव्यः; न विद्यन्ते अन्ये पुत्रदारादयो यस्यासौ अनन्यः पुत्रदारादिरहितः। न श्रितं द्रव्यं येनासौ अश्रितद्रव्यः, अगृहीतपित्रंशः; अनीहमानादिरिति यावत्; निर्धनो वा। अनन्यसहितः अश्रितद्रव्यः अनन्याश्रितद्रव्यः। मध्यमपदलोपी समासः। तादृशः पुत्रः ऋणं दाप्यः। तादृशपुत्रत्रयाभावे रिक्थिनः "पत्नी दुहितरश्चैव" इत्याद्युक्ताः ऋणं दाप्याः। तथाच **कात्यायनः**—

"पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम्।
योषिद्ग्राहः सुतोऽभावे पुत्रश्चात्यन्तनिर्धनः॥"

ऋणापाकरणे कर्तृकालौ दर्शयति। धनम् ऋणम्। तद्ग्राहिणि पितरि पितामहे वा प्रेते मृते, प्रव्रजिते संन्यस्ते, द्विदशाः द्विर्दश यासु ताः द्विदशाः विंशतिः समाः वर्षाणि प्रवसिते देशान्तरगते वा तस्य धनग्राहिणः ये पुत्राः पौत्राश्च, तैः तत् धनं देयम् , पुत्रत्वेन पौत्रत्वेन निमित्तेन। प्रेतत्वेऽक्त्या जीवतो धनग्राहिण एव प्रथममृणापाकरणाधिकारो दर्शितः। तदभावे पुत्रपौत्रयोः। तत्रापि प्रथमं पुत्रस्य ; तदभावे पौत्रस्येति क्रमः। प्रेतत्वादिकं चासामर्थ्योपलक्षणम्। यथाह **कात्यायनः**—

" व्याधितोन्मत्तवृत्तानां तथा दीर्घप्रवासिनाम्।
ऋणमेवंविधं पुत्रान् जीवतामपि दापयेत्॥ "

इति। दीर्घप्रवासः चिरप्रस्थानम्। पृथक् परिगणनं तु कालविशेषविधिमभिप्रेत्य। तत्र प्रेते कालविशेषमाह **कात्यायनः**—

" नाप्राप्तव्यवहारेण पितर्युपरते क्वचित्।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा॥ "

इति। व्यवहारज्ञानकालमाह **नारदः**—

" गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः।
बाल आ षोडशाद्वर्षात् पौगण्डश्चेति कथ्यते।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते॥ "

इति। प्रव्रजितेऽप्ययमेव कालः ; उक्तन्यायात्। प्रोषिते च विंशतिवर्षाणीति। धनग्राहिणीति सामान्योपादानेन पितृव्यज्येष्ठभ्रात्रोरपि ग्रहणम्। यथाह **नारदः**—

" नार्वाक् संवत्सराद्विंशात् पितरि प्रोषिते सुतः।
ऋणं दद्यात् पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा॥ "

इति। वाशब्दात् जात्यन्धादिग्रहणम्। यथाह **बृहस्पतिः**—

" सांनिध्येऽपि पितुः पुत्रैः ऋणं देयं विभावितम्।
जात्यन्धपतितोन्मत्तक्षयश्वित्रादिरोगिणः॥ "

इति। अस्यार्थः—पूर्वं धनग्राहः पुत्रो दद्यात्। तस्मादनन्तरं योषिद्ग्राहः पुत्रो दद्यात्। तादृशद्विविधपुत्राभावेऽत्यन्तनिर्धनः पुत्रो दद्यात्। चकारात् निरन्वय इति सकलमकलङ्कम्। यत्तु "धनस्त्रीहारिपुत्राणाम्" इति **नारदवाक्यं**, तस्याप्ययमर्थः—धनहारिणो ये पुत्राः स्त्रीहारिणश्च ये पुत्राः, तेषां समवाये यः पुत्रो धनं वहेत् स ऋणभागित्यन्वयः। स्त्रीधनिनोः; स्त्री च धनं च स्त्रीधने; ते विद्येते ययोस्तौ; कृतविवाहः धनवांश्च तादृशौ। धनिपुत्रौ स्वामिनः पुत्रौ। तयोरसतोः स्त्रीहारी स्त्रियमाहर्तुं शीलमस्य विवाहकाम इति यावत्। स दद्यादित्यर्थः।

इति । पुत्रपौत्रैरिति द्वन्द्वबहुवचनाभ्यां सर्वैर्विभक्तैर्वा यथांशं संभूय वा प्रधानभूतेन वा देयमिति गम्यते । तच्चाग्रे वक्ष्यति । पुत्रपौत्रैरिति सामान्यनिर्देशात् सर्वेषां मुख्यगौणपुत्रपौत्राणां ग्रहणम् । तथाच **नारदः**—

"इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णेभ्यो मामयं मोक्षयिष्यति ॥"

इति । यतस्ततः; स्वतः परतः संभूतान् । उत्तमानां देवर्षिपितॄणामृणानि; अधमानां मनुष्याणामृणानि । सामान्यनिर्देशेऽपि क्लीबादिव्यतिरिक्तानामेवेति ध्येयम् ।

"ऋणं तु दापयेत् पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत् सुधीः ॥"

इति **कात्यायन**स्मरणात् । निरुपद्रवः; क्लैब्याद्यष्टदोषरहितः । द्रविणार्हः; संन्यासाद्याश्रमान्तररहितः । धुर्यः; कुटुम्बभरणक्षमः । एवं पुत्रपौत्रयोरधिकाराविशेषेऽपि प्रकारविशेषमाह **बृहस्पतिः**—

"ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयमदेयं तत्सुतस्य तु ॥"

इति । समम्; वृद्धिरहितम् । तत्सुतस्य; प्रपौत्रस्य । ऋणत्रयसमवाये क्रममाह **स एव**—

"पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥"

इति ॥ २७ ॥

पुत्रपौत्रैरिति बहुवचनात् प्रपौत्रादिष्वतिप्रसङ्गे अपवादमाह । अतः पुत्रपौत्रयोः परं प्रपौत्रादिभिः प्रपितामहादिकृतमृणम् अनिच्छुभिर्न देयम् । अनिच्छुवचनात् इच्छायां देयम्; न नियमेन । यथाह **नारदः**—

"क्रमादव्याहतं प्राप्तं पुत्रैर्यद्दृणमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥"

इति ॥ २८ ॥

ननु प्रपौत्रः ऋणं न दद्यादित्युक्तम्; तर्हि पुत्रपौत्राभावे को दद्यादित्यत आह । दायानर्हपुत्रसद्भावे पुत्राभावे वा रिक्थग्राही । स्वामिसंबन्धेनैव यत् स्वीभवति तत् रिक्थम् । तत् गृह्णातीति रिक्थग्राही । स तदीयमृणं दद्यात् । [1]वाशब्दात् तदीयपौत्रयोर्ग्रहणम् । ततश्चायमर्थः—दायानर्हपुत्रपौत्रसद्भावे पुत्रपौत्राभावे वा "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति न्यायेन यो यः प्रत्यासन्नतया तदीयं रिक्थं गृह्णीयात्, स तदीयमृणं दद्यादिति । एवं प्रत्यासन्नाभावे यदि प्रपौत्रोऽपि रिक्थं गृह्णीयात्, तदा रिक्थग्राहित्वेनैव ऋणं दद्यात्; न तु प्रपौत्रत्वेनेति सिद्धम् ॥ २९ ॥

[1] वाशब्दाभ्यां—क, ट.

**निर्धनस्य [1]स्त्रीग्राही ॥ ३० ॥ न स्त्री पतिपुत्रकृतम् ॥ ३१ ॥ न स्त्रीकृतं पतिपुत्रौ ॥ ३२ ॥ न पिता पुत्रकृतम् ॥ ३३ ॥**

तर्हि रिक्थग्राहाभावे को दद्यादित्यत आह । यदि धनाभावे रिक्थग्राही नास्ति, तदा यो यदीयां स्त्रियं भार्यात्वेन स्वीकरोति, स तदीयमृणं दद्यात् । 'सपुत्रस्य वाप्यपुत्रस्य' इति अत्राप्यनुवर्तते । यथाह **नारदः**—

"अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते सैव चास्य धनं स्मृतम् ॥"

इति । निर्धननिरपत्यस्त्रीमात्रग्राहिणः ऋणदाने सिद्धे, सधनसापत्यस्त्रीग्राहिणस्तु दण्डापूपिकान्यायेनैव तत् सिद्धम् । यथाह **स एव**—

"या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥"

इति । **स** एवान्यमपि स्त्रीग्राहिणमाह—

"अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते ॥"

इति । अन्तिमा प्राप्ता क्रीता 'तवाहम्' इत्युपगता वा । प्रथमा अक्षतयोनिः । पुनर्भूग्रहणं शौण्डिकादिविषयम् । यथाह **कात्यायनः**—

"निर्धनैरनपत्यैस्तु कृतं यच्छौण्डिकादिभिः ।
तत्स्त्रीणामुपभोक्ता तु दद्यात् तद्दणमेव हि ॥"

इति । आदिशब्दात् गोपशैलूषरजकव्याधानां ग्रहणम्; स्त्र्यधीनवृत्तिकत्वात् । यद्यपि "न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते" इति निषेधात् ब्राह्मणादिष्विदं न संभवति, तथापि अतिरिक्ततन्निषेधेषु तेष्वपि न्यायसाम्यादिदमेवावधेयम् ॥ ३० ॥

अविभक्तैः कृतमृणमविभक्तेन देयमिति वक्ष्यति । तस्यापवादमाह । पत्या कृतमृणं स्त्री भार्या न दद्यात्; पुत्रेण कृतमृणं स्त्री माता न दद्यात्; अगृहीतधना चेत् । गृहीतधना तु दद्यादेव । यथाह **नारदः**—

"दद्यादपुत्रा विधवा नियुक्ता वा मुमूर्षुणा ।
या सा तद्रिक्थमादद्याद् यतो रिक्थमृणं ततः ॥"

[1] ग्राही omitted in कं.

इति । अत्र रिक्थऋणयोरविनाभावप्रदर्शनात् वक्ष्यमाणे स्त्रीपुत्रकृतऋणदानप्रतिषेधेऽपि पतिपित्रादीनामगृहीतधनत्वमेवेति मतं गमयति । तथा अप्रतिपन्नमपि स्त्री न दद्यात्; "प्रतिपन्नं स्त्रिया देयं नान्यत् स्त्री दातुमर्हति" इति योगिस्मरणात् । अन्यत् प्रतिपन्नाद्यतिरिक्तम् । अस्यापवादमाह **कात्यायनः**—

"मर्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥"

इति ॥ ३१ ॥

स्त्रिया भार्यया मात्रा च कृतमृणं पतिपुत्रौ न दद्याताम्, भक्तार्थकृतं विना । यथाह **कात्यायनः**—

"देयं भार्याकृतमृणं भर्त्रा पुत्रेण मातृकम् ।
भक्तार्थेन कृतं यत् स्यादभिधाय गते दिशम् ॥"

इति ॥ ३२ ॥

पिता जनकः पुत्रकृतमृणं न दद्यात्, अनुमोदितं विना । यथाह **बृहस्पतिः**—

"ऋणं पुत्रकृतं पित्रा साध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥"

इति । **नारदोऽपि**—

"पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।
कृतं वा यदृणं कृच्छ्रे दद्यात् पुत्रस्य तत्पिता ॥"

इति । अत्र वाक्यत्रयेऽपि कुटुम्बार्थादृते इति वक्तव्यम्; 'कुटुम्बार्थे कृतं च' इत्यस्य सर्वशेषत्वात् । अत एव **योगीश्वरः**—

"न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥"

इति ॥ ३३ ॥

**अविभक्तैः कृतमृणं यस्तिष्ठेत् स दद्यात् ॥ ३४ ॥ पैतृकमृणमविभक्तानां भ्रातॄणां च ॥ ३५ ॥ [1]विभक्ताश्च [2]दायानुरूपमंशम् ॥ ३६ ॥**

[1] विभक्ताश्च omitted in क.

[2] स्वदायानुरूपम्—ठ.

पुनरपि ऋणापाकरणे कर्तृकालौ दर्शयति । अविभक्तैः पितृव्यभ्रात्रादिभिः कुटुम्बार्थे यत् ऋणं कृतं, तत् तेषां मध्ये यस्तिष्ठेत् स दद्यात् । यथाह **नारदः**—

" पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वा यत् कुटुम्बार्थे दद्युस्तत् सर्वमृक्थिनः ॥ "

इति । अत्रापि धनग्राहिणि प्रेते प्रव्रजिते प्रोषिते वेति द्रष्टव्यम् । यथाह **योगीश्वरः**—

" अविभक्तैः कुटुम्बार्थे यदृणं च कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ "

इति । यद्यप्येतदविभक्तेष्वपि पुत्रेषु संभवतीत्यग्रेतनेन पौनरुक्त्यम्; तथापि तेषामुत्तरसूत्र एव विभागाविभागयोः प्रकारविशेषाम्नानादिदं पितृव्यादिष्वेवावतिष्ठत इति मन्तव्यम् ॥ ३४ ॥

यदुक्तम् 'पुत्रपौत्रै ऋणं देयम्' इति, तत्र विभागाविभागयोः प्रकारविशेषमाह । विभागात् प्राक् पित्रा कृतमृणमविभक्तानां पुत्राणां भ्रातॄणां, चकारात् पौत्राणां च संभूय देयं भवति । गुणप्रधानभावे तु प्रधानभूत एव दद्यात् । अविभागः संसर्गस्याप्युपलक्षणम् । तेनाविभक्ते संसृष्टिनि तत्पुत्रादौ विद्यमाने स पूर्वविभक्तः संसृष्टी वा पुत्रादिरिति; विभागे पित्रर्णधनयोः पुत्रस्य स्वत्वापगमात् ॥ ३५ ॥

तर्हि अविभक्तसंसृष्टपुत्राद्यभावे को दद्यादित्यत आह । विभक्ताः पुत्राः पौत्राश्च विभागानन्तरं पित्रा पितामहेन वा कृते ऋणे अपाकरणीये दायानुरूपमंशं दद्युः । अयमभिसंधिः—समानजातीयानां समं, विजातीयानां च विषममंशं वक्ष्यति—'ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात्' इत्यादिना । तदनुसारेण ऋणांशमपि दद्युः । यथाह **नारदः**—

"अत ऊर्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः ।
अविभक्ता विभक्ता वा यस्तां चोद्वहते धुरम् ॥ "

इति । इदं च विभक्तपितृधनाभावे । तत्सद्भावे तु तत एव तदृणापाकरणं कुर्यात् । यथाह **कात्यायनः**—

" पित्रर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिके द्रव्यं मृते गृह्णंस्तु दाप्यते ॥ "

इति । 'मृते गृह्णंस्तु दाप्यते' इत्यस्यायमर्थः—विभक्तस्य पितुर्यदा विभागानन्तरोत्पन्नः संसृष्टी वा पुत्रोऽस्ति, तदा स एव तद्धनं गृहीत्वा तदृणं दद्यात् । तदुभयाभावे विभक्तेषु यः तद्धनं गृह्णीयात्, स तद्धनात् ऋणं दद्यात् । धनाभावे तु [1]पुत्रत्वेनैव दद्यादिति । पुत्रपौत्रसमवाये तु पुत्रा एव दद्युः, न पौत्राः;

[1] पौत्रत्वेनैव—ग, ट.

" पित्रभावे तु दातव्यमृणं पुत्रेण यत्नतः " इति कात्यायनीयात् । अविभक्ताश्चेत् " पितृतोंऽशकल्पना " इति न्यायेनैव दद्युः ॥ ३६ ॥

**गोपशौण्डिकशैलूषरजकव्याधस्त्रीणां पतिर्दद्यात् ॥ ३७ ॥**
**वाक्प्रतिपन्नं नादेयं कस्यचित् ॥ ३८ ॥ [1]कुटुम्बार्थे कृतं च ॥ ३९ ॥**

न स्त्रीकृतं पतिपुत्राविस्यस्यापवादमाह । गोप आभीरः । शौण्डिकः सुराकारः । शैलूषो नटः । रजको वस्त्राणां रञ्जकः । व्याधो मृगयुः । एतेषां स्त्रीभिः यत्कृतमृणं तत् आसां पतिः पुत्रो वा दद्यात्; तदधीनवृत्तित्वात् । यथाह **योगीश्वरः**—

" गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात् पतिस्तासां यस्माद् वृत्तिस्तदाश्रया ॥ "

इति । 'यस्माद् वृत्तिस्तदाश्रया' इति हेतुव्यपदेशात् अन्येऽपि ये तौलिकादयः स्त्र्यधीनवृत्तिकाः, तेऽपि स्त्रीकृतमृणं दद्युः कुटुम्बार्थं विनापि; तस्य 'कुटुम्बार्थे कृतं च' इत्यनेनैव देयत्वस्य पृथग्वक्ष्यमाणत्वात् । अत एव " न च भार्याकृतं पतिः " इत्यनुवृत्तौ **नारदः**—

" अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम् ।
तेषां हि तत्परा वृत्तिः कुटुम्बं च तदाश्रयम् ॥ "

इति कुटुम्बार्थातिरेकेण वृत्त्यर्थमृणं पृथगेवाह । वृत्तिर्जीवनोपायो वाणिज्यादिः ॥ ३७ ॥

'न स्त्री पतिपुत्रकृतम्' इत्यादिप्रतिषेधत्रयस्य प्रतिप्रसवमाह । येषां स्त्र्यादीनामृणदानं निषिद्धं, तेषां सर्वेषामपि स्वयं वाचा प्रतिपन्नम् अङ्गीकृतं चेत् 'अहमिदमृणं दास्यामि' इति, तदा अदेयं न; किंतु देयमेवेत्यर्थः । यथाह **योगीश्वरः**—

" प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम् ।
स्वयं कृतमृणं वापि नान्यत् स्त्री दातुमर्हति ॥ "

इति । स्त्रियेत्युपलक्षणम्; 'नादेयं कस्यचित्' इति सामान्याभिधानात् । तथाच **कात्यायनः**—

" ऋणं पुत्रकृतं पित्रा नादेयमिति धर्मवित् ।
देयं प्रतिश्रुतं यत् स्याद्यच्च स्यादनुवर्णितम् ॥ "

इति । प्रतिश्रुतम्; प्रतिपन्नम् । अनुवर्णितम्; अनुमोदितम् । अनेनासंबन्धिनापि प्रतिपन्नमृणं देयमिति सिध्यति ॥ ३८ ॥

[1] From here up to the end of the first-half of verse 40 omitted in क, ज, झ.

प्रतिप्रसवान्तरमाह । यदृणं कुटुम्बभरणार्थं कृतं, तदप्यदेयं न कस्यचित्; सर्वस्यापि देयमित्यर्थः । अत एवाह **योगीश्वरः**—

"न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥"

इति । **बृहस्पतिरपि**—

"पितृव्यभ्रातृपुत्रस्त्रीदारशिष्यानुजीविभिः ।
यद् गृहीतं कुटुम्बार्थे तद् गृही दातुमर्हति ॥"

इति । अत्रैव विशेषान्तरमाह **मनुः**—

"ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः ।
दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः ॥"

इति । बान्धवैः पुत्रादिभिः । चकारात् कन्याविवाहाद्यर्थे कृतं च । तथाच **कात्यायनः**—

"कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत् ॥
कन्यावैवाहिकं चैव प्रेतकार्येषु यत् कृतम् ।
एतत् सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥
प्रोषितस्य मतेनापि कुटुम्बार्थमृणीकृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात् पुत्रेण वा भृगुः ॥"

इति ॥ ३९ ॥

**यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम् ।**
**न दद्याल्लोभतः पश्चात् तथा वृद्धिमवाप्नुयात् ॥ ४० ॥**
**दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।**
**आद्यौ तु वितथे दाप्याावितरस्य सुता अपि ॥ ४१ ॥**

कृतावधिकामकृतां वृद्धिमाह । यः सर्वमृणं हिरण्यं धान्यादि वा गृहीत्वा, श्वः परश्वो वेत्यादिकृते अवधौ सामकं सममेव दास्यामीति प्रतिज्ञापयंश्च लोभादिना कृतेऽवधौ न दद्यात्, स तदवध्येव यथा विहिता द्विकशतादिक्रमेण तथा वृद्धिमवाप्नुयात् दद्यात् । अनेन कृतावध्यपगमे यथाविहितवृद्धिर्भवतीति बोधितम् ॥ ४० ॥

धनप्रयोगे द्वौ विश्वासहेतू—प्रतिभूः आधिश्च ; "विश्वासहेतू द्वावत्र प्रतिभूराधिरेव च" इति **नारद**स्मरणात् । तत्राधिर्निरूपितः । संप्रति प्रतिभूर्निरूप्यते । प्रतिभवति तत्कार्ये तद्वद्भवतीति प्रतिभूः । तस्य भावः प्रातिभाव्यम् । विश्वासार्थं पुरुषान्तरेण सह समय इति यावत् । पुरुषविशेषं चाह **कात्यायनः**— "स्वामिशत्रुस्वाम्यधिकृतनिरुद्धदण्डिताभिशस्तरिक्थिरिक्तनैष्ठिकब्रह्मचारिराजकार्यव्यापृतवानप्रस्थसंन्यासिदण्डधनदानाशक्ताविज्ञाताविभक्ताश्च न प्रतिभुवो ग्राह्याः" इति । तत् त्रिषु विषयेषु विधीयते—दर्शने प्रत्यये दाने चेति । यथा 'दर्शनापेक्षायामहमेतं दर्शयिष्यामि' इति, 'मद्विश्वासेनास्मै धनं दीयताम् ; नायं मां वञ्चयिष्यति' इति, 'यदायं न ददाति, तदाहमेव दास्यामि' इति । तुशब्दात् ऋणिद्रव्यार्पणेऽपि । यथाह **बृहस्पतिः**—

"दर्शने प्रत्यये दाने ऋणद्रव्यार्पणे तथा ।
चतुष्प्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥
आहैको दर्शयामीति साधुरेषोऽपरोऽब्रवीत् ।
दाताहमेतद् द्रविणमर्पयाम्यपरो वदेत् ॥"

इति । 'ऋणिना दत्तं द्रव्यं बन्धकं वा अहं त्वां प्रापयिष्यामि' इति यो वदेत् स चतुर्थः प्रतिभूरित्यर्थः । दानस्य स्वद्रव्यविषयत्वात् अर्पणस्य ऋणिदत्तद्रव्यादिविषयत्वात् भेदेनोपन्यासः । **व्यासोऽपि**—

"लेख्ये कृते वा दिव्ये वा दानप्रत्ययदर्शने ।
गृहीतबन्धोपस्थाने ऋणद्रव्यार्पणे तथा ॥"

इति । लेख्यम् ऋणादिपत्रम् । कृतं कार्यं गृहमित्यादि । दिव्यं विप्रतिपन्नार्थसाधनम् । एतानि पत्रादीनि 'मया कारयित्वा देयानि' इति योऽभ्युपगच्छति, सोऽपि प्रतिभूर्ग्राह्य इति शेषः । तत्राद्यौ दर्शनप्रत्ययप्रतिभुवौ, वितथे दर्शने प्रत्यये वान्यथाभूते, प्रस्तुतमर्थं राज्ञा दाप्यौ । तथाच **नारदः**—

"ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वार्थहापिते ।
प्रतिभूस्तु ऋणं दद्यादनुपस्थापयंस्तदा ॥"

इति । अप्रतिकरणं वञ्चनया दारिद्र्येण मरणेन वा । यथाह **कात्यायनः**—

"काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत् ।
स तमर्थं प्रदाप्यः स्यान्मृते चैवं विधीयते ॥"

इति । इतरस्य दानप्रतिभुवोऽपराधे स्वामिनो दानवैतथ्ये सुता अपि दाप्याः । आद्याविल्युपक्रम्य अन्त्य इति वक्तव्ये यदितरशब्दोपादानं, तदर्पणवादिप्रतिभुवोऽपि सुता दाप्या इत्येवमर्थम् । तथाच **बृहस्पतिः**—

"आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा ॥"

इति । उत्तरौ दानार्पणप्रतिभुवौ । **व्यासोऽपि**—"दानवादिप्रतिभुवौ दाप्यौ तत्पुत्रकौ तथा" इति । नष्टस्यान्वेषणाय कालमाह **कात्यायनः**—

"नष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम् ।
यद्यसौ दर्शयेत् तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥"

इति । पक्षत्रयमिति तद्देशकालानुरूपकालोपलक्षणम् । तथा च **बृहस्पतिः**—

"नष्टस्यान्वेषणे कालं दद्यात् प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥"

इति । अथापि वेत्यनेन त्रिपक्ष एकोऽपि कालोऽभिहितः । 'इतरस्य सुता अपि' इत्यनेन पूर्वयोः सुता न दाप्या इत्युक्तम् । यथाह **योगीश्वरः**—

"दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्सुता ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥"

इति । **व्यासोऽपि**—

"विप्रत्यये लेख्यदिव्यदर्शने वा कृते सति ।
ऋणं दाप्याः प्रतिभुवः पुत्र तेषां न दापयेत् ॥"

इति । गृहीतबन्धकयोस्तु तयोरपि सुता दाप्याः । यथाह **कात्यायनः**—

"गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् ।
विना पित्रा धनात् तस्माद्दाप्यस्तस्मादृणं सुतः ॥"

इति । दर्शनं प्रत्ययाद्युपलक्षणम् । विना पित्रा; प्रेते प्रोषिते वेत्यर्थः । सुता इत्यनेन पौत्रा न दाप्याः । यथाह **व्यासः**—

"ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दद्यात् तत्सुतौ तु न दाप्याविति निश्चयः ॥"

इति । समं सुतः; वृद्धिरहितमित्यर्थः । तयोः पौत्रप्रतिभूपुत्रयोः सुतौ प्रपौत्रपौत्रौ कुटुम्बार्थप्रातिभाव्यायातमृणं यथाक्रममगृहीतधनौ न दाप्यौ । प्रतिभूसुतस्यावृद्धिकदानविधानात् प्रतिभुवः सवृद्धिकदानं गम्यते । तथा च **कात्यायनः**—

"एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते समम् ॥"

इति । सर्वं सवृद्धिकम् । समं मूलमात्रकम् । अस्यापवादमाह **कात्यायनः**—

“ खादको वित्तहीनः स्याल्लग्नकोऽवित्तवान् यदि ।
मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥ ”

इति । खादकः अधमर्णः । लग्नकः प्रतिभूः । अवित्तवानिति पदच्छेदः । उभयोर्निर्धनत्वे मूलमेव देयमित्यर्थः ॥ ४१ ॥

**बहवश्चेत् प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम् ।**
**अर्थेऽविशेषिते त्वेषु धनिकच्छन्दतः क्रिया ॥ ४२ ॥**
**यमर्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।**
**ऋणिकस्तं प्रतिभुवे द्विगुणं दातुमर्हति ॥ ४३ ॥**

इति [1]श्रीविष्णुस्मृतौ षष्ठोऽध्यायः

यदा त्वनेके प्रतिभुवः, तदा कथमित्यत्राह । यद्येकस्मिन् [2]प्रयोगे बहवः प्रतिभुवो भवन्ति, तदा ते यथाकृतम् ‘ अहमेतावत्, अहमेतावदर्थं दास्यामि ’ इति स्वस्वाभ्युपगतमर्थं दद्युः, “ समं स्यादश्रुतत्वात् ” इति न्यायात् । यदा तु समांशतया विषमांशतया वा अर्थो न विशेषितः, संपूर्णो वापि प्रत्येकमभ्युपगतः, तदा तेषु प्रतिभूषु धनिकच्छन्दतः धनिकेच्छया क्रिया अर्थादानं भवति ; यस्मादिच्छेत् तस्मात् गृह्णीयादित्यर्थः । तदभावे तत्सुतादपीत्यर्थः । यथाह **कात्यायनः**—

“ एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते समम् ॥ ”

इति ॥ ४२ ॥

एवं प्रातिभाव्यं निर्णीय प्रतिभूदत्तस्य प्रतिविधानमाह । यमर्थं धनिकेनोपपीडितः प्रतिभूर्दद्यात्, तत् द्रव्यम् ऋणिकः अधमर्णः, तस्मै प्रतिभुवे त्रिपक्षानन्तरं द्विगुणं दद्यात् । यथाह **कात्यायनः**—

“ प्रातिभाव्यं तु यो दद्यात् पीडितः प्रतिभावितः ।
त्रिपक्षात् परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥ ”

इति । पीडित इति वचनात् अपीडिताय सममेव देयम् । यथाह स एव—

“ यस्यार्थे येन यद्दत्तं विधिनाभ्यर्थितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत् समाप्नुयात् ॥ ”

[1] श्रीवैष्णवे धर्मशास्त्रे—क, ख, ट; श्रीवैष्णवे धर्मशास्त्रे ऋणप्रकरणं षष्ठम्—ज.  [2] योगे—ग.

इति । 'त्रिपक्षात् परतः' इति वचनात् अर्वाक् तत्सममेवेति [1]चन्द्रिकाचमत्कृतम् । इदमपि जनराजसमक्षं दत्ते ;

" प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्धनम् ॥ "

इति **योगिस्मरणात्** । दापितः राज्ञा । प्रकाशं जनसमक्षम् । द्वैगुण्यं परवृद्धेरुपलक्षणम् । यथाह **योगीश्वरः**—

" संततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ "

इति । प्रतिदानापलापे दण्डमाह **पितामहः**—

" यो यस्य प्रतिभूर्भूत्वा मिथ्या चैवानुगच्छति ।
धनिकस्य धनं दाप्यो राज्ञा दण्डेन तत्समम् ॥
कुर्याच्चेत् प्रतिभूर्वादमृणिकार्थेऽर्थिना सह ।
सोपसर्गस्तदा दण्ड्यो विवादे द्विगुणं दमम् ॥ "

इति । सोपसर्गः सकुटुम्बः ॥ ४३ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायकात्मज**श्री**तम्मणनायका**परनामधेयश्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डितात्मज**श्री**नन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** षष्ठोऽध्यायः

1 चन्द्रिकाचमत्कृते—घ.

2 श्रीविष्णुस्मृतिविवृतौ षष्ठोऽध्यायः—च.

## सप्तमोऽध्यायः

**अथ लेख्यं त्रिविधम् ॥ १ ॥ राजसाक्षिकं ससाक्षिकमसाक्षिकं च ॥ २ ॥**

षष्ठाध्याये प्रतिपन्नार्थसाधनाय प्रमाणत्रयमुपन्यस्तम्—लिखितं साक्षिणः समयक्रिया चेति। तद्व्याख्यानायाध्यायत्रयं क्रमेणारभते। तत्र सप्तमे लेख्य निरूपयति। अथेत्यधिकारः; यदुक्तं लिखितं प्रमाणमिति, तत् त्रिविधमित्यर्थः। यद्यप्यनेकविधमिदम्, विषयभेदात्; तथापि संग्राहकोपाधित्रैविध्यात् त्रिविधम्। यथाह **बृहस्पतिः**—

"राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद् बहुधा कृतम् ॥
भागदानक्रयैराधिसंविद्दासऋणादिभिः।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥"

इति। सप्तधेत्युपलक्षणम्; "राजपत्रं चतुर्भेदमष्टभेदं तु लौकिकम्" इति **स्मरणात्**। तेनादिशब्देन जयपत्रशुद्धपत्रादीन्यपि गृह्यन्ते। त्रिविधम्; शासनपत्रपरिहारेण। अत एव तेन सह चतुर्विधमाह **वसिष्ठः**—

"शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम्।
आज्ञाप्रज्ञापनापत्रं राजपत्रं चतुर्विधम् ॥"

इति ॥ १ ॥

ता विधा आह। राजा साक्षी वक्ष्यमाणप्रकारेण यस्मिन्, तत् राजसाक्षिकम्। राजसाक्षिकस्य प्रथममुपन्यासः प्रमाणातिशयद्योतनाय। यथाह **व्यासः**—

"स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम्।
प्रमाणोत्तरमिष्टं हि व्यवहारार्थमागतम् ॥"

इति। प्रमाणोत्तरम्; उत्तरोत्तरमतिशयितं प्रमाणमित्यर्थः। नृपकृतं शासनं चेत्यर्थो वक्तव्यः; शासनस्य पृथगभिधानात्। स्वहस्तकृतात् जानपदं बलवत्। तस्माद्राजकीयम्। तस्माच्छासनमिति ॥ २ ॥

**राजाधिकरणे तन्नियुक्तकायस्थकृतं[1] तदध्यक्षकरचिह्नितं[2] राजसाक्षिकम् ॥ ३ ॥ यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः [3]स्वहस्तचिह्नितं ससाक्षिकम् ॥ ४ ॥ स्वहस्तलिखितमसाक्षिकम् ॥ ५ ॥**

तत्राद्यं व्याचष्टे। राज्ञोऽधिकरणं राजसभा। तस्यां तेन राज्ञा नियुक्तो यः कायस्थः, तेन कृतम्। तस्यां सभायां योऽध्यक्षः प्राड्विवाकः, तस्य करचिह्नेन युक्तं तत् राजसाक्षिकम्। यथाह **नारदः**—

"राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥"

इति ॥ ३ ॥

द्वितीयं व्याचष्टे। यत्र क्वचनेत्यनेन राजसभाया अनियमः; तेन गृहस्थादीनां गृहादिष्वपि तत् भवति। येन केनचिदित्यनेन राजनियुक्तकायस्थस्यानियमः; तेन तदन्येनापि कृतं भवति। साक्षिभिः स्वहस्तेन 'अहममुकः साक्षी' इत्यनेन चिह्नितं तत् ससाक्षिकम्। तद्विधिमाह **याज्ञवल्क्यः**—

"यः कश्चिदर्थो विज्ञातः स्वरुच्या तु परस्परम्।
लेख्यं तु साक्षिमत् कार्यं तस्मिन् धनिकपूर्वकम् ॥
समामासतदर्धाहर्नामजातिस्वगोत्रकैः।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥
समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते निवेशयेत् ॥"

इति ॥ ४ ॥

तृतीयं व्याचष्टे। यदधमर्णेन स्वहस्तेनैव लिखितं, तत् असाक्षिकमपि प्रमाणम्; "विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु तत्। तत् प्रमाणं स्मृतं सर्वम्" इति योगिस्मरणात् ॥ ५ ॥

[1] कार्यस्थकृतं—ख, ग, ट. [2] कराक्षरचिह्नितं—ठ. [3] स्वहस्तेन—ज, ठ.

**[1]तत् बलात्कारितमप्रमाणम् ॥ ६ ॥ उपधिकृतानि[2] सर्वाण्येव ॥ ७ ॥ दूषितकर्मदुष्टसाक्ष्यङ्कितं ससाक्षिकमपि[3] ॥ ८ ॥ तादृग्विधेन लेखकेन लिखितं च[4] ॥ ९ ॥ स्त्रीबालास्वतन्त्रमत्तोन्मत्तभीतताडितकृतं च[5] ॥ १० ॥ देशाचाराविरुद्धं व्यक्ताधिकृतलक्षणमलुप्तप्रक्रमाक्षरं प्रमाणम्[6] ॥ ११ ॥**

तस्याप्रामाण्ये बीजमाह । तच्चेत् बलेनोपधिना वा कारितं, तदा अप्रमाणम्; "बलोपधिकृतादृते" इति योगिस्मरणात् ॥ ६ ॥

द्विविधस्थाप्यप्रामाण्ये बीजमाह । उपधिना छलेन कृतानि सर्वाण्येव लेख्यान्यप्रमाणम् । चकारात् मत्तादिकृतं च । यदाह **नारदः**—

"मत्ताभियुक्तस्त्रीबालबलात्कारकृतं तु यत् ।
तदप्रमाणं लिखितं भयोपधिकृतं तथा ॥"

इति ॥ ७ ॥

ससाक्षिकस्याप्यप्रामाण्ये बीजमाह । दूषिताः; लोभादिहेतुभिर्वादिना । कर्मदुष्टाः; चौर्यादिकर्मभिर्ये स्वयमेव दुष्टाः । तादृशैः साक्षिभिः यदङ्कितं, तत् ससाक्षिकमप्यप्रमाणम् । यथाह **बृहस्पतिः**—

"दूषितो गर्हितः साक्षी यत्रैको विनिवेशितः ।
कूटलेख्यं तु तत् प्राहुर्लेखके चापि तादृशे ॥"

इति ॥ ८ ॥

किंच तादृग्विधेन वादिना दूषितेन स्वयं दुष्टेन वा लेखकेन यल्लिखितं, तदप्यप्रमाणम् । चकारात् धनिकादिदोषेणाप्यप्रामाण्यम् । यथाह **कात्यायनः**—

"साक्षिदोषाद्भवेद् दुष्टं पत्रं वै लेखकस्य च ।
धनिकस्यापि वा दोषात् तथा धारणिकस्य च ॥"

इति । धनिकदोषः दुष्टाशयत्वम् ॥ ९ ॥

किंच, स्त्री जातिमात्रम्; गोपशौण्डिकादिस्त्रीव्यतिरेकेण वा । बालः आ षोडशाद्वर्षात् । अस्वतन्त्रः जीवतोः पित्रोः[7] सुतः, दासादिश्च । मत्तः मदनीयद्रव्येण । उन्मत्तः ग्रहादिना । भीतः राजादिभ्यः । ताडितः

[1] From here to Sūtra 8 omitted in क.
[2] कृताश्च सर्वे एव—ज, ठ.
[3] दुष्टसाक्षिकमपि—ठ.
[4] च omitted in ज.
[5] भीरु for भीत—ज, ठ; पीडित for ताडित.
[6] प्रमाणमेव—ज, ठ.
[7] पुंस:—ख, ग, ट.

कशादिना। पीडित इति पाठे निग्रहादिनेत्यर्थः। एतैः कृतं लिखितमप्रमाणम्। तत्र स्त्रीबालदासानामस्वातन्त्र्यात् स्वातन्त्र्येण कृतमप्रमाणम्; स्वामिसंमत्या कृतं प्रमाणमेव। चकारात् प्रवासस्थितानां च। यथाह **बृहस्पतिः**—

"उन्मत्तजडबालानां राजभीतप्रवासिनाम्।
अप्रगल्भभयार्तानां लेख्यं हानिमवाप्नुयात्॥"

इति॥ १०॥

तर्हि कीदृशं तत् प्रमाणमित्यत आह। यस्मिन् देशे येन प्रकारेण स्वहस्तेन परहस्तेन वा लेख्यं क्रियते, तत् तथा कृतं देशाचाराविरुद्धम्। यथाह **नारदः**—

"लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा।
असाक्षिमत् साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः॥"

इति। व्यक्तं स्पष्टम्। अधिकृतस्य प्रक्रान्तस्य क्रयविक्रयाधानदानादेः लक्षणमुद्धारो यस्मिन् तत् व्यक्ताधिकृतलक्षणम्। व्यक्ताधिविधिलक्षणमिति पाठे व्यक्तं स्पष्टम्; आधिविधेराधीकरणस्य लक्षणं गोप्यभोग्यकृतकालाकृतकालादि यस्मिन्नित्यर्थः। क्रमः अर्थानां पदानां च पौर्वापर्यम्। अक्षराणि वर्णाः। क्रमश्चाक्षराणि च क्रमाक्षराणि; न लुप्तानि क्रमाक्षराणि यस्मिंस्तत् अलुप्तक्रमाक्षरम्। तदेवंभूतं लिखितं प्रमाणम्। नात्र राजशासनवत् साधुशब्दनियमः। तेन प्रातिस्विकदेशभाषयापि तत्सिद्धिः; देशाचाराविरोधात्। यत् अनेवंविधं तत् अप्रमाणमित्यर्थात् सिद्धम्। यथाह **कात्यायनः**—

"देशाचारविरुद्धं यत् संदिग्धं क्रमवर्जितम्।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति॥"

इति॥ ११॥

**वर्णैश्च तत्कृतैश्चिह्नैः [1]पत्रैरेव च युक्तिभिः।**
**संदिग्धं साधयेल्लेख्यं तद्युक्तिप्रतिरूपितैः[2]॥ १२॥**
**यत्रर्णी धनिको वापि साक्षी वा लेखकोऽपि वा।**
**म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत्॥ १३॥**

इति [3]श्रीविष्णुस्मृतौ सप्तमोऽध्यायः

[1] पाठैरेव—ज, झ, ठ.
[2] प्रतिरूपकैः—क, ख, ग.
[3] श्रीवैष्णवे—क, झ; श्रीवैष्णवे धर्मशास्त्रे सप्तमं प्रकरणम्—ज.

संदिग्धे लेख्ये निर्णयोपायमाह । यत्तु कूटमकूटं वेति लेख्यं संदिह्यते, तत् तत्कृतैर्वर्णैः तल्लिखितैः पदाक्षरैः, तत्कृतैः चिह्नैः श्रीकारादिभिः, तत्कृतैः पत्रैः पत्रान्तरैश्चाक्षरसादृश्यनिरूपणेन, युक्तिभिः तर्कैः 'अनयोरेवंविधो व्यवहारोऽस्मिन् देशेऽस्मिन् काले संभाव्यते' इत्यादिभिः, तथा तस्मिन् पत्रे या युक्तयः लिखनपरिपाटयः, तासां प्रतिरूपितानि सदृशलिखितानि, तैश्च साधयेत् । एतच्च साक्षिरहितस्वहस्तलिखित-पत्रसंदेहे द्रष्टव्यम् ।

"साधयेद्धस्तसंदेहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥"

इति **स्मरणात्** ॥ १२ ॥

इदानीमन्यकृतससाक्षिकपत्रसंदेहे निर्णयमाह । यत्र तु ऋणी अधमर्णः, धनिकः उत्तमर्णः, साक्षी वक्ष्यमाणः, लेखकः पूर्वोक्तो वा म्रियते, तत्र तेषां स्वहस्तैः 'मतं मेऽमुकपुत्रस्य' 'अत्राहममुकः साक्षी' 'लिखितं मयामुकेन' इति तत्तत्स्वहस्तलिखितैः पत्रान्तरैर्वा तत्कृतैः तल्लेख्यं प्रसाधयेत् शोधयेत् । यद्यपि उत्तमर्णाधमर्णयोः एकस्मिन् पत्रे न स्वहस्ताक्षरसंभवः, तथापि "धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम्" इति धनिनोऽपि लिखनसंभवात् तन्निर्णयायोपादानमिति न दोषः । यथाह **कात्यायनः**—

"अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुध्येत्तु न संशयः ॥"

इति ॥ १३ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[1]**रामपण्डि**तात्मजश्री**नन्द-पण्डित**कृतौ [1]**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** सप्तमोऽध्यायः

[1] श्री added in ग, ट.

## अष्टमोऽध्यायः

**अथासाक्षिणः ॥ १ ॥ न राजश्रोत्रियप्रव्रजितकितवतस्करपराधीनस्त्रीबालसाहसिकातिवृद्धमत्तोन्मताभिशस्तपतितक्षुत्तृष्णार्तव्यसनिरागान्धाः ॥ २ ॥**

लेख्यं निरूपितं सप्तमे। अष्टमे साक्षिणो निरूपयति। तत्र विहितासंभवे प्रतिषिद्धवर्जोपादानायासाक्षिणः प्रतिजानीते। अथेति धरावधानदानाय प्रतिज्ञा। तत्र पुनर्वक्ष्यमाणेषु राजादिषु साक्षिविरुद्धत्वाभिधानेन साक्षिधर्माणां कर्मण्यतानिर्देश्यताप्रष्टव्यतानां तत्र तत्रासिद्धेः प्रत्येकनिषेध उह्यते। स च तत्र तत्र वचनैः स्पष्टयिष्यते। असाक्षिताप्रयोजकनिमित्तबहुत्वेन बहुवचनम्। यथाह **नारदः**—

"असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः।
वचनाद्दोषतो भेदात् स्वयमुक्तिर्मृतान्तरः॥
श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात्।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम्॥
स्वयमुक्तिस्त्वनिर्दिष्टः स्वयमेवैत्य यो वदेत्।
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताद्दते॥
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः॥
स्तेनाः साहसिकाश्चण्डाः कितवा वधकास्तथा।
असाक्षिणस्ते दुष्टत्वात् तेषु सत्यं न विद्यते॥
साक्षिणां लिखितानां च निर्दिष्टानां च वादिना।
तेषामेकोऽन्यथा वादी भेदात् सर्वे न साक्षिणः॥
स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत्।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति॥
योऽर्थः श्रावयितव्यः स्यात् तस्मिन्नसति चार्थिनि।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः॥"

इति। यस्मिन्नर्थे यस्य साक्षित्वमुद्भावनीयं, तस्मिन्नर्थे स्वाश्रावित एवार्थिनि मृते कुत्रार्थे साक्षित्वं वदत्वित्यसाक्षी स इत्यर्थः। परं तु "मुमूर्षुश्रावितादृते"; मुमूर्षुणापि पित्रादिना ये श्राविताः पुत्रादीनाम् 'अस्मिन्नर्थे अमी साक्षिणः' इति, तत्र तु तेऽपि भवन्ति ॥ १ ॥

तानेतानसाक्षिणः संक्षिप्याह। राजा महीपतिः। राजग्रहणं तत्पुरुषस्याप्युपलक्षणम्; "कुहकः प्रत्यवसितस्तस्करो राजपूरुषः" इति **नारद**स्मरणात्। ननु,

"ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्।
नृपे पश्यति तत्कार्ये साक्षिणः समुदाहृताः ॥"

इति **नारदेन** राजपुरुषयोरपि साक्षित्ववचनात् कथं राज्ञोऽसाक्षित्वमनेनोच्यते? सत्यम्; "न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः" इति तदेवानुपदं स्पष्टयिष्यते। तस्माद्यत्र साक्षिणः कर्तव्याः, तत्र राजपुरुषव्यतिरिक्ता इति निर्गलितोऽर्थः। इदमप्यराजगामिनि कार्ये। राजगामिनि तु राजादयोऽपि साक्षिण इति न क्वापि विरोधः। श्रोत्रियाः अध्यापनैकवृत्तयः। प्रव्रजिताः संन्यासिनः। कितवाः द्यूतकारिणः। तस्कराः चौराः। पराधीनाः दासाद्याः। स्त्री जातिमात्रेण। बाल आ षोडशात्। साहसिकः त्रिविधसाहसकारी। अतिवृद्धः अशीत्यूर्ध्ववयस्कः; लुप्तस्मृतिश्चेत्। अलुप्तस्मृतिश्चेत् साक्ष्येव;

"स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः।
यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रे च नित्यशः।
सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति ॥"

इति **नारद**स्मरणात्। मत्तः मदनीयद्रव्येण। उन्मत्तः वातादिना। अभिशस्तः महापातकादिना। पतितः ब्रह्महत्यादिना। क्षुत् बुभुक्षा; तृष्णा पिपासा; ताभ्यामार्तः पीडितः। व्यसनी पितृमरणादिव्यसनवान्; मृगयाद्यष्टादशव्यसनवान् वा। रागः विषयाभिलाषः; तेनान्धाः विस्मृतान्यकरणीयाः। इत्येते असाक्षिणः। बहुवचनात् पित्रा विवदमानादीनां ग्रहणम्। यथाह **शङ्खः**—"पित्रा विवदमानो गुरुकुलवासी परिव्राजकवानप्रस्थनिर्ग्रन्था असाक्षिणः" इति। नन्वसाक्षित्वं प्रक्रम्य निषेधवचनं राजादीनां साक्षित्वमेव गमयतीति चेत्; न; संनिहितराजादिसाक्षित्वनिषेधोपपत्तौ व्यवहितासाक्षित्वनिषेधानौचित्यात्; तथात्वे साक्षिवचनप्रतिज्ञान्तरानुपपत्तेः ॥ २ ॥

**रिपुमित्रार्थसंबन्धिविकर्मदृष्टदोषसहायाश्च ॥ ३ ॥ [1]अनिर्दिष्टस्तु साक्षित्वे यश्चोपेत्य ब्रूयात् ॥ ४ ॥ एकश्चासाक्षी ॥ ५ ॥ स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो न परीक्ष्याः ॥ ६ ॥**

1 अनिर्दिष्टसाक्षित्वे—ज.

किंच, रिपुः अमित्रः। मित्रं सुहृत्। अर्थसंबन्धी विवादविषयार्थसंबन्धी। विकर्मा लोकवेद-विरुद्धकर्मासक्तः। दृष्टदोषः दृष्टमिथ्यावचनः। सहायः भृत्यादिः। चकारादन्येऽपि। यथाह **कात्यायनः**—

" तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः।
तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिणः॥ "

इति। एते न साक्षिणः॥ ३॥

किंच, यः पुनः साक्षित्वेनानिर्दिष्ट एव 'अहं साक्षी' इत्युपेत्य ब्रूयात्, सोऽपि न साक्षी। चकारात् अनाहूतादिग्रहणम्। यथाह **कात्यायनः**—

" यः साक्षी नैव निर्दिष्टो नाहूतो नापि चोदितः।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः॥ "

इति॥ ४॥

विवक्षितसंख्याज्ञानाय परिशेषमाह। एकः; चकारात् द्वौ वा असाक्षिणौ। यथाहासाक्षित्वाधिकारे **नारदः**—" युग्मैकश्रोत्रियाचारहीनक्लीबकुशीलवाः " इति। युग्मं द्वौ। एकः प्रसिद्धः। प्रतिज्ञावाक्यात् निषेधवचनाच्च तत्रानुवृत्त्या अनिर्देश्याकर्तव्यसाक्षित्वसिद्धावपि पुनरसाक्षित्ववचनं प्रष्टव्यतानिषेधाय। अनेन च एकद्विनिषेधेन त्रिप्रभृतयः साक्षिणो भवन्तीत्युक्तं भवति। यथाह **बृहस्पतिः**—

" नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा।
उभौ वा श्रोत्रियौ ज्ञातौ नैकं पृच्छेत् कदाचन॥ "

इति॥ ५॥

उक्तवक्ष्यमाणदोषगुणयोः क्वचिदपवादमाह। स्तेयादीन्युक्तलक्षणानि। तेषु साक्षिणो गुणदोषैर्न परीक्षणीयाः। यथातथाभूताः साक्षिणो भवन्त्येव। परं तु बालादीनुपलभ्यमानदृष्टदोषान् वर्जयेत्। यथाह **नारदः**—

" असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः॥
तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत्।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा॥
बालेऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत्।
विब्रूयुर्बान्धवाः स्नेहाद्वैरनिर्यातनादरिः॥ "

इति॥ ६॥

**अथ साक्षिणः ॥ ७ ॥ कुलजा [1]वृत्तवित्तसंपन्ना यज्वानस्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यवृद्धाश्च ॥ ८ ॥ [2]अभिहितगुणसंपन्न उभयानुमत एकोऽपि ॥ ९ ॥**

साक्षिवचनाय प्रतिजानीते । बहुवचनमेकादशत्वाभिप्रायेण । तथाच **नारदः**—

" एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते ॥
लिखितः सारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च ज्ञेयः पञ्चविधः कृतः ॥
अकृतः षड्विधस्तेषां मुनिभिः परिकीर्तितः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः ॥ "

इति । ते च यथाजाति यथावर्णं च कार्याः । यथाह **योगीश्वरः**—" यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः " इति । **मनुरपि**—" स्त्रीणां साक्ष्यं स्त्रियः कुर्युरन्त्यानामन्त्ययोनयः " इति ॥ ७ ॥

साक्षिगुणानाह । कुलजाः; ऊढायां वोढुरुत्पन्नाः । वृत्तमाचारः; वित्तं धनम् । ताभ्यां संपन्नाः । यज्वानः; महाक्रतुप्रयोक्तारः । तपस्विनः; कृच्छ्रचान्द्रायणादितत्पराः । पुत्रिणः; पुत्रपौत्राद्यन्विताः । धर्मज्ञाः; धर्मशास्त्रज्ञाः । अधीयानाः; अनुच्छिन्नवेदाध्ययनाः । सत्यवन्तः; सत्यवचनशीलाः । त्रैविद्यवृद्धाः; त्रयीवित्सु निपुणमतयः । चकारात् दानशीलादीनां ग्रहणम्; " तपस्विनो दानशीलाः " इति **योगिस्मरणात्** ॥ ८ ॥

' एकश्चासाक्षी ' इत्यस्यापवादमाह । अभिहितैः कुलजन्मादिभिर्गुणैः संपन्नः, यद्युभाभ्यामर्थिप्रत्यर्थिभ्यामभ्युपगम्यते, तदा एकोऽपि । अपिशब्दात् द्वावपि साक्षिणौ भवतः । अनेनैकद्विनिषेधस्याभिहितगुणोभयानुमतिहीनविषयत्वमाविष्कृतम् । अस्यापवादमाह **बृहस्पतिः**—

" दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यादथाध्यक्षस्तथैव च ।
लिखितौ द्वौ तथा गूढौ त्रिचतुष्पञ्च लेखिताः ॥ "

इति । **कात्यायनोऽपि**—

" संस्कृतं येन यत्पण्यं तत् तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥ "

[1] वृत्त omitted in ज.

[2] अभिमत—ख, ग, ट.

इति । खटिकाग्राही लेख्यकर्ता । पत्रारूढौ द्वावपि साक्षिणौ भवतः । अन्ये तु त्र्यवरा एव । येन स्वर्णकारादिना यत्कुण्डलादि घटितं, तद्विवादे स एव साक्षीत्यर्थः ॥ ९ ॥

**द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः ॥ १० ॥ आधर्यं कार्यवशाद्यत्र पूर्वपक्षस्य भवेत् तत्र प्रतिवादिनोऽपि ॥ ११ ॥ उद्दिष्टसाक्षिणि मृते देशान्तरगते च तदभिहितश्रोतारः प्रमाणम् ॥ १२ ॥**

तानेव साक्षिणः को निर्दिशेदित्यत आह । ऋणादानादिषु यौ द्वौ विवदेते 'मदीयमृणं धारयसि' इत्येकः; 'नाहं धारयामि' इत्यपरः । तत्र यः 'मदीयं धारयसि' इति ब्रूते, स पूर्ववादी । तस्य साक्षिणः प्रष्टव्याः । अयमभिसंधिः—'मदीयमृणं धारयसि' इत्युक्ते चतुर्विधमुत्तरं संभवतीत्युक्तम् । तत्रानेन मिथ्योत्तरे पूर्ववादिनः साक्षिणः प्रष्टव्या इत्युच्यते ॥ १० ॥

इदानीं प्राङ्न्यायकारणोक्तौ तन्निर्देष्टारमाह । यत्र पूर्वपक्षस्य ऋणाद्यभियोगस्य कार्यवशात् प्रतिदानादिवशात् प्राङ्न्यायकारणवशाद्वा आधर्यम् अधरीभावः असाध्यता भवति, तत्र प्रतिवादिनोऽपि साक्षिणः प्रष्टव्याः । अयमर्थः—यत्र प्रतिवादी 'सत्यं मया गृहीतम्; परं तु प्रतिदत्तम् । अस्मिन्नर्थेऽयं मया पूर्वं पराजितः' इति चोत्तरं ददाति, तत्र पूर्वपक्षो धारणाभियोगः अधरीभवति । तत्र प्रतिवादिन एव प्रमाणोपन्यासः; अभावप्रतिज्ञावादित्वात् । यद्यपि पूर्ववादिनोऽपि धारणाभियोक्तृत्वेन भाववादित्वम्, तथापि प्राङ्न्यायकारणोक्तिभ्यां तस्यासाध्यतापादनेन प्रमाणानपेक्षणात् तदनुपन्यासः । अथवा इदं वाक्यमेवं व्याख्येयम् । तद्यथा—यत्रोभाभ्यामेकमेव क्षेत्रं प्रतिग्रहेण लब्ध्वा युगपदागत्य परस्परं विप्रतिपद्येते —'ममेदम्, ममेदम्' इति, तत्र कार्यः प्रमाणोपन्यास इत्याह—द्वयोर्विवदमानयोरिति । यस्य पूर्ववादिनः 'मयेदं पूर्वं लब्धम्' इति प्रतिज्ञा, तस्य साक्षिणः प्रष्टव्याः, न पुनः यः पूर्वं निवेदयतीति । यदा पुनरन्य एवं ब्रूयात्—'सत्यमनेन पूर्वं लब्धम्; परंतु अस्मादेव क्रीत्वान्येन मह्यं दत्तम्' इति, तत्र कार्यवशात् मध्ये क्रयवशात् पूर्वपक्षस्याधर्यं विक्रयेण स्वत्वापगमात् असाध्यता भवति, तदा प्रतिवादिनः क्रीत्वा दत्तस्य प्रतिग्रहवादिनः साक्षिणः प्रष्टव्याः । अपिरवधारणे; तस्यैवेति । यथाह योगीश्वरः—

"साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥"

इति । यत्तु मिताक्षरायामस्य वाक्यस्येदमेव व्याख्यानं युक्ततरमिति, तत् "आधौ प्रतिग्रहे क्रीते" इत्यनेन गतार्थत्वात् पुनरुक्तमिति चिन्त्यम् ॥ ११ ॥

साक्ष्यनुकल्पं तद्विषयं चाह । यो यस्मिन् विवादे सभ्यसमक्षं साक्षित्वेनोद्दिष्टः 'अयमत्रार्थे साक्षी' इति, स चेत् सभ्यपत्रात् प्रागेव मृतो देशान्तरगतो वा, तदानेन साक्षिणाभिहितं प्रकृतार्थानुबन्धि

यद्वाक्यं तस्य श्रोतारः प्रमाणं प्रमाणत्वेन निर्देश्याः। एते चोत्तरसाक्षिण इति व्यवह्रियन्ते। यथाह **बृहस्पतिः**—

" यत्र साक्षी दिशं गच्छेन्मुमूर्षुर्वा यथाक्रमम्।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम्॥ "

इति॥ १२॥

**समक्षदर्शनात् साक्षी श्रवणाद्वा॥ १३॥ साक्षिणश्च सत्येन पूयन्ते॥ १४॥ [1]वर्णिनां यत्र वधस्तत्रानृतेन[2]॥ १५॥ तत्पावनाय कूश्माण्डीभिर्द्विजोऽग्निं घृतेन[3] जुहुयात्॥ १६॥**

साक्षित्वनिमित्तं किमित्यत आह। यो निष्पद्यमानां क्रियां दानविक्रयादिकां समक्षं पश्यति, यो वा क्रियाकर्तृभ्यः क्रियां 'मयेदं दत्तम्; विक्रीतं च' इत्यादिकां शृणोति, स साक्षी, " समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति " इति **मनु**स्मरणात्। वाशब्दः प्रमाणान्तरेणाप्यनुभवं गमयति। यथाह **नारदः**—

" संदिग्धेषु च कार्येषु द्वयोर्विवदमानयोः।
दृष्टश्रुतानुभूतार्थात् साक्षिभ्यो व्यक्तिदर्शनम्॥ "

इति। दृष्टं प्रत्यक्षेण। श्रुतमर्थिप्रत्यर्थिसाक्ष्यादिवाक्यैः। अनुभूतमनुमानोपमाभ्याम्॥ १३॥

साक्षिभिः साक्ष्यं कथं देयमित्यत आह। साक्षिणः सत्यवचनेन दोषभाजो न भवन्ति; " सत्येन शुध्यते वाक्यम् " इति **स्मरणात्**। यत्तु " स्वर्गः सत्यवचने, विपर्यये नरकः " इति **गौतमवाक्यं**, तदसत्यवचननिमित्तपूर्वोपार्जितसुकृतनाशाभावे तज्जन्यस्वर्गप्रतिपादनपरम्; न तु साक्ष्ये सत्यवचनजन्यस्वर्गप्रतिपादकम्; तथा सति तस्य काम्यतया अवचने दोषश्रवणानुपपत्तेः। यथाह **स** एव—" अवचनेऽन्यथावचने च दोषिणः स्युः " इति। यद्यपि " सत्यं ब्रूयात् " इति सामान्यवाक्यात् पृथग्भूतं " साक्ष्यं सत्यं ब्रूयात् " इति वचनं प्रयोजनान्तरं विना न पर्यवस्यति, तथापि सामान्यप्रयोजनस्यैव विषयविशेषेणातिशयः कल्प्यः; न स्वर्गः; गौरवात् काम्यत्वापत्तेश्चेत्यास्तां तावत्॥ १४॥

सत्यवचनस्य क्वचिदपवादमाह। वर्णाः श्वेतारुणपीतश्यामाः; ते विद्यन्ते येषां ते वर्णिनः ब्राह्मणक्षत्रियविट्शूद्राः। तेषां यत्र सत्यवचनेन वधो भवति, तत्र साक्षिणः अनृतवचनेन पूयन्ते दोषभाजो न भवन्ति। परं तु पापीयसो वधं विना। यथाह **गौतमः**—" नानृतवचने दोषो जीवनं च तदधीनं, न तु पापीयसो जीवनम् " इति। पापीयसः पापवत्तरस्य वधे तु अनृतवचने न दोष इति न; किंतु दोष एव। तस्मात्तत्र सत्यमेव वक्तव्यमित्यर्थः;

[1] वर्णानां—ग. [2] अनृतं वदन्न दुष्यति—ख, ग, ट. [3] घृतेन omitted in ख, ग, ट.

" बहवः सुखमेधन्ते हते यस्मिन् वसुंधरे ।
तस्मिन् हते न दोषोऽस्ति पातकं नोपपातकम् ॥ "

इति **महाभारतात्** । वर्णिपदं प्राणिमात्रोपलक्षणम् । वधपदं च संकष्टान्तरोपलक्षणम् । तथाच **तत्रैव**—

" प्राणात्यये विवाहे च सर्वज्ञातिवधात्यये ।
कर्मण्यभिप्रवृत्ते च प्रयोक्तव्यं मृषा भवेत् ॥ "

इति । सर्वेषां प्राणिनां वधे ज्ञातीनां चात्यये विप्लवे जातिभ्रंशादौ वा मृषा वदेदिति योज्यम् ; अन्यथा गोवधादावनृतभाषणाप्रसङ्गेन गोवधापत्तेः । कर्मणि ; कुकर्मादौ । अभिप्रवृत्ते ; उत्पाद्यमाने ॥ १५ ॥

इह " नानृतं वदेत् " इत्येकं सामान्यवचनम् ; " साक्ष्यं नानृतं वदेत् " इत्यपरं विशेषवचनम् । तत्र विशेषवचननिषिद्धमनृतवचनमत्राभ्यनुज्ञातम् । सामान्यनिषेधातिक्रमजन्यप्रत्यवायस्तु कथं नश्येदित्यत आह । तस्यानृतवचनजन्यप्रत्यवायस्य पावनाय परिहाराय कूश्माण्डीभिः " यद्देवा देवहेडनम् " इत्यादिभिः ऋग्भिः **बोधायनो**क्तरीत्या आज्यमग्नौ जुहुयात् । कूश्माण्डीग्रहणं वरुणदैवत्यसारस्वतचरूणामप्युपलक्षणम् । यथाह **मनुः**—

" कूश्माण्डैर्वापि जुहुयाद् घृतमग्नौ यथाविधि ।
उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन च ॥ "

इति । " उदुत्तमं वरुण पाशम् " " आपो हि ष्ठा मयोभुवः " इति । **योगीश्वरोऽपि**—

" वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ "

इति । द्विजग्रहणेन द्विजानुलोमा अपि गृह्यन्ते ॥ १६ ॥

**[1]शूद्र एकाहिकं गोदशकस्य ग्रासं दद्यात् ॥ १७ ॥ स्वभाव-विकृतौ मुखवर्णविनाशेऽसंबद्धप्रलापे च कूटसाक्षिणं विद्यात् ॥१८॥**

शूद्रस्य प्रायश्चित्तान्तरमाह । शूद्रश्चेदुक्तविषयेऽनृतं वदेत्, तदा दशभ्यो गोभ्यः एकस्मिन्नहनि तृप्तिजनकं घासादिग्रासं दद्यात् । शूद्रग्रहणं प्रतिलोमजानामप्युपलक्षणम् ; " शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः " इति **स्मरणात्** ॥ १७ ॥

कूटसाक्षिलक्षणमाह । स्वभावेन, न भयादिना, या विकृतिः, तस्यां सत्यां कूटसाक्षिणं विद्यात् । सा च त्रिविधा—कायिकी वाचिकी मानसिकी चेति । तत्र कायिकी विकृतिः मुखवर्णस्य स्वाभाविकस्य विनाशः, अन्यथाभावः श्यामता श्वेतता वा । वाचिकी विकृतिः असंबद्धप्रलापः ; असंबद्धस्य प्रकृतानुपयुक्तस्य प्रलापः

[1] शूद्रश्च—ठ.

मुहुर्भाषणम् । चकारात् मानसिकी च विकृतिः प्रतिवाक्यादानं परवाक्यानाकर्णनं चेत्यादि । साक्षीत्युपलक्षणम् । तेनार्थिप्रत्यर्थिनोरप्यन्यतरो यद्येवं विकारवान्, तदा दुष्टो ज्ञेयः । यथाह **योगीश्वरः**—

" देशाद्देशान्तरं याति सृक्कणी परिलेढि वा ।
ललाटं स्विद्यते यस्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽथ साक्ष्ये वा स दुष्टः परिकीर्तितः ॥ "

इति । विद्यादित्यनेन चैतेषां लक्षणानां दुष्टताज्ञापकत्वम्, न प्रमापकत्वमित्युक्तम्; स्वाभाविकनैमित्तिकयोर्विशेषस्य दुर्ज्ञेयत्वात् । ततश्च तद्वचनान्निर्णयाभावमात्रम्; न दण्डादिकमपीति ज्ञेयम् ॥ १८ ॥

**साक्षिणश्चाहूयादित्योदये कृतशपथान् पृच्छेत् ॥ १९ ॥ ब्रूहीति ब्राह्मणं पृच्छेत् ॥ २० ॥ सत्यं ब्रूहीति राजन्यम् ॥ २१ ॥ गोबीजकाञ्चनैर्वैश्यम् ॥ २२ ॥ [1]सर्वमहापातकैस्तु शूद्रम् ॥ २३ ॥**

साक्षिणश्च कदा कथं पृच्छेदित्यत आह । पूर्वोक्तान् साक्षिणः सभान्तः समाहूय आदित्योदये सति पूर्वाह्ण एव कृतवक्ष्यमाणशपथान् प्रकृतमर्थं प्राड्विवाकः पृच्छेत् । यथाह **नारदः**—

" सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ।
उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वै शुचिः शुचीन् ॥ "

इति ॥ १९ ॥

प्रश्नप्रकारमाह । 'अस्मिन् विषये यत् त्वं जानासि, तत् ब्रूहि' इति ब्राह्मणं पृच्छेत् । प्रश्नानुवृत्तौ पुनर्वचनमपृष्टस्य वचननिषेधार्थम् ॥ २० ॥

'अस्मिन् विषये सत्यं ब्रूहि' इति राजन्यं पृच्छेत् ॥ २१ ॥

'गोबीजकाञ्चनानि ते निष्फलानि' इति शापितं वैश्यं पृच्छेत् ॥ २२ ॥

सर्वैः पञ्चभिर्महापातकैः; ब्रह्महत्यादीनि पञ्चापि महापातकानीति शापितं शूद्रं पृच्छेत् । सर्वशब्दात् त्रित्वव्युदासः । तुशब्दात् वक्ष्यमाणानां पातकान्तराणां शूद्रसमब्राह्मणानां च संग्रहः ।

[1] सर्वपातकैस्तु—ज ; तु omitted in ट,

अनेन कृतशपथानिति वैश्यशूद्रशूद्रसमब्राह्मणविषयमेवावतिष्ठते; "शपथेनैके सत्यकर्म। तद्देवराज-ब्राह्मणसंसदि स्यादब्राह्मणानाम्" इति **गौतमस्मरणात्**। शूद्रसमान् विप्रानाह **मनुः**—

"गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्॥"

इति॥ २३॥

**साक्षिणश्च श्रावयेत्॥ २४॥ ये महापातकिनां लोका ये चोपपातकिनां[1] ते कूटसाक्षिणामपि॥ २५॥ जननमरणान्तरे कृतसुकृतहानिश्च॥ २६॥ सत्येनादित्यस्तपति॥ २७॥ [2]सत्येन [3]भाति चन्द्रमाः॥ २८॥ सत्येन वाति पवनः॥ २९॥ सत्येन भूर्धारयति॥ ३०॥ सन्येनापस्तिष्ठन्ति॥ ३१॥ [4]सत्येनाग्निः॥ ३२॥ खं च सत्येन॥ ३३॥ सत्येन देवाः[5]॥ ३४॥ सत्येन यज्ञाः॥ ३५॥**

शपथस्वरूपमाह। वक्ष्यमाणं वाक्यमुक्तलक्षणान् साक्षिणः श्रावयेदित्येष एव शपथः॥ २४॥ किं श्रावयेदित्यत आह। महापातकिनो ब्रह्महादयः। उपपातकिनो गोघ्नादयः। तेषां ये लोकास्ते मिथ्यासाक्षिणामपि भवन्ति॥ २५॥ किंच जन्मारभ्य आमरणं कृतस्य सुकृतस्य नाशश्च मिथ्यासाक्षिणाम्॥ २६॥ साक्षिणां सत्यानुसरणाय तत् प्रशंसति। योऽयमादित्ये तेजः प्रभावः, स सत्यफलमित्यर्थः॥ २७॥ भानं शोभातिशयः॥ २८॥ वानं वहनशक्तिः॥ २९॥ धारणं धारणशक्तिः॥ ३०॥ अपां सरित्समुद्र-भुवां स्थानं प्रखरतरार्ककरनिकरसंस्पर्शेऽप्यशोषणम्॥ ३१॥ तिष्ठति; स्थानमत्र दाहशक्तिः॥ ३२॥ आकाशस्य स्थितिः निश्चलमवस्थानशक्तिः॥ ३३॥ देवानां देवनशक्तिः॥ ३४॥ यज्ञानामग्निष्टोमादीनां परलोके फलजननशक्तिः॥ ३५॥

**अश्वमेधसहस्रं च[6] सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥ ३६॥
जानन्तोऽपि हि ये साक्ष्ये[7] तूष्णींभूता उदासते।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चाप्यथ॥ ३७॥**

1 घातकिनां—ख, ग, ट.
2 This Sūtra comes after the next Sūtra in ख, ग, ट.
3 आभाति—ठ.
4 This Sūtra omitted in क.
5 वेदाः—ठ.
6 तु सत्येन—ज.
7 साक्ष्यं—ठ.

**एवं हि साक्षिणः पृच्छेद्वर्णानुक्रमतो नृपः ॥ ३८ ॥**

**यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।**

**अन्यथा वादिनो यस्य [1]ध्रुवस्तस्य पराजयः ॥ ३९ ॥**

सत्याधिक्ये हेतुमाह । सहस्राश्वमेधजन्यसुकृतेन तोल्यमानं सत्यमेवातिरिच्यते ; तेषामनेकाङ्गोपसंहारसाध्यत्वेन साद्गुण्यस्याशक्यानुष्ठानत्वात् ॥ ३६ ॥

ये पुनर्विप्रतिपन्नमर्थं विशेषतो जानन्तोऽपि साक्ष्ये नियुक्ताः तूष्णींभूतास्तिष्ठन्ति, न किंचित् साधु असाधु वा वदन्ति, ते कूटसाक्षिणां पापैरनन्तरोक्तैर्दण्डेन च पूर्वोक्तेन सर्वस्वापहारलक्षणेन तुल्या वेदितव्याः ॥३७॥

सर्ववर्णेषु साक्षिषु सत्सु वर्णक्रममाह । एवं पूर्वोक्तशपथश्रावणपूर्वकं वर्णानुक्रमतः ब्राह्मणं पृष्ट्वा क्षत्रियमित्यादिक्रमेण नृपो राजा प्राड्विवाको वा साक्षिणः पृच्छेत् ॥ ३८ ॥

साक्षिवचनेन च कथं जयपराजयावधारणमित्यत आह । यस्यार्थिनः प्रतिज्ञां देशकालद्रव्यसंख्यादिविशिष्टां साक्षिणः सत्यां ब्रूयुः, 'सत्यमिदं जानीमो वयम्' इति, स जयी भवति । यस्य पुनरन्यथा वदन्ति 'मिथ्यैतदाह ; न मत्समक्षमनेन किमपि कृतम्' इति, तस्य पराजयः ध्रुवो निश्चितः । यथाह **बृहस्पतिः**—

"यस्याशेषः प्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥"

इति । अन्यथाशब्दसामर्थ्यादेकदेशस्याप्यन्यथात्वे पराजय एव । यथाह **स** एव—

"देशं कालं धनं संख्यां रूपं जात्याकृती वयः ।
विसंवदेद्यत्र साक्षी तदनुक्तं विदुर्बुधाः ॥"

इति । क्वचिदस्यापवादमाह **स** एव—

"साध्यैकांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत् साध्यं परिकल्पितम् ॥"

इति ॥ ३९ ॥

**बहुत्वं प्रतिगृह्णीयात् साक्षिद्वैधे नराधिपः ।**

**समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥ ४० ॥**

**यस्मिन् यस्मिन् विवादे तु कूटसाक्ष्यनृतं वदेत् ।**

**तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥ ४१ ॥**

**इति [2]श्रीविष्णुस्मृतौ अष्टमोऽध्यायः**

[1] ध्रुवं—ठ.

[2] वैष्णवे अष्टमोऽध्यायः—क, झ ; श्री omitted in च ; वैष्णवे धर्मशास्त्रे साक्षिप्रकरणमष्टमम्—ज, ठ.

साक्षिविप्रतिपत्तौ निर्णयप्रकारमाह । नराधिपः राजा प्राड्विवाको वा साक्षिणां द्वैधे विप्रतिपत्तौ बहुत्वं प्रतिगृह्णीयात्; बहूनां वचनं प्रमाणीकुर्यात् । समेषु समसंख्याकेषु पुनः साक्षिगुणैः अध्ययनादिभिः उत्कृष्टान् प्रमाणीकुर्यात् । यदा पुनः गुणिनां चैव द्वैधं, तदा द्विजोत्तमान् ब्राह्मणानेव प्रमाणीकुर्यात्; न बहुगुणिनोऽपि क्षत्रियादीन् । ब्राह्मणानां साम्येन विप्रतिपत्तौ गुणवत्तमत्वेन निर्णयः; "गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः" इति **योगिस्मरणात्** । यत्तु भेदादसाक्षित्वम्, तत् जातिगुणसंख्यासाम्येनागृह्यमाणविशेषविषयम् ॥ ४० ॥

कूटसाक्षिलक्षणाभिधानस्य प्रयोजनमाह । यस्मिन् यस्मिन् ऋणादानादौ विवादे विप्रतिपन्नेऽर्थे कूटसाक्षी मिथ्यां वदेत्, तत्तत् कार्यं निवर्तेत न साध्येत । कृतमप्यकृतमसिद्धं स्यात् । कूटसाक्षी च तावद्वारं दण्डनीयः ॥ ४१ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेयश्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[1]**रामपण्डिता**त्मज[1]**नन्दपण्डित**कृतौ **विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्या**मष्टमोऽध्यायः

[1] श्री added in ग, ट.

# नवमोऽध्यायः

**अथ समयक्रिया ॥ १ ॥ राजद्रोहसाहसेषु यथाकामम् ॥ २ ॥**
**[1]निक्षेपस्तेयेष्वर्थप्रमाणम् ॥ ३ ॥**

अष्टमे साक्षिणो निरूपिताः। नवमे समयक्रियां निरूपयितुं दिव्यमातृकां निरूपयति। अथ; लौकिकत्रिविधप्रमाणनिरूपणानन्तरम्। अनेन चानन्तर्याभिधानेन लौकिकप्रमाणाभाव एव समयक्रियायाः प्रामाण्यं गम्यते। यथाह **योगीश्वरः**—

"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥"

इति। इदं च स्थावरविवाद एव। तथाच **बृहस्पतिः**—

"स्थावरस्यैतदाख्यातं लाभभोगप्रसाधनम्।
प्रमाणहीने वादे तु निर्दोषा दैविकी क्रिया ॥"

इति। अस्यार्थः—लाभो दानादिपत्रम्। भोग उक्तलक्षणः। प्रसाधनं साक्षिरूपम्। स्थावरस्यैतदेव साधकत्वेन ज्ञातम्; न तु दिव्यम्। सर्वथा तदसंभवे तु दिव्यमपि न दोषाय; अन्यथा लौकिकप्रमाणाभावे दिव्यस्य च निषेधे अनिर्णयप्रसङ्गात्। एतेन

"स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्।
साक्षिभिर्लिखितेनापि भुक्त्या चैतत् प्रसाधयेत् ॥"

इति **पितामहवचनमपि** व्याख्यातम्। विवादादेत्य परिदृश्यमानदोषेषु अयुक्तसाक्ष्येषु साक्षिषु[2] तत्सपत्नादौ वा यद्यन्तरात्मा साक्षिकार्यविसंवादेन दोषं कल्पयति, तदा भवत्येव दिव्यम्; साक्ष्यादीनामाशयदोषसंभवात्, दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वावेदकतया धर्मतत्त्वविषयत्वात्। यथाह **नारदः**—

"तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥"

[1] निक्षेपसुवर्णस्तेयेषु—ठ.

[2] साक्षिषु र१८ पुत्रादौ—ट.

इति। पौरुषेयी साक्ष्यादिः। अलौकिकं प्रमाणं समयः। तच्च द्विविधम्—दिव्यं शपथश्च। तत्र तात्कालिकनिर्णयहेतुर्दिव्यम्। तदाह **बृहस्पतिः**—

" घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः।
षष्ठं तु तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकम्॥
अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम्।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा॥"

इति। यद्यपि कोशस्य दिव्यलक्षणाभावान्नात्र परिगणनं युक्तम्; तथापि तुलादिचतुष्टयवत् महाभियोगेषु सावष्टम्भाभियोगेषु च प्राप्त्यर्थं तदिति न विरोधः। तच्चाग्रे स्पष्टयिष्यते। एवं काञ्चनमपि तप्तमाषावान्तरभेद इति न पृथग्गणितम्। शपथस्तु कालान्तरनिर्णयहेतुः दूर्वास्पर्शादिर्वक्ष्यमाणः। तस्य क्रिया अनुष्ठानम्॥ १॥

तत्र विषयविशेषे दिव्यानां वक्ष्यमाणद्रव्यसंख्यादिनियमानां पुरस्तादपवादमाह। राजद्रोहः तदनिष्टकरणम्। साहसम् उक्तलक्षणम्। तच्छुद्ध्यर्थं दिव्यकरणे यथाकामम्, द्रव्यसंख्यादिनियमापेक्षा नास्ति। साहसेष्वेव दिव्यानि। यथाह **कात्यायनः**—

" उत्तमेषु च सर्वेषु साहसेषु विचारयेत्।
सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै भृगुः॥"

इति। प्रथममध्यमयोरल्पविषयत्वात् शपथैरेव निर्णयः; शपथानामपि समयशब्देनैवोपादानात्। यथाह **बृहस्पतिः**—

" एते च शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा।
साहसेष्वभिशापे च दिव्यान्याहुर्विशोधनम्॥"

इति। बहुवचनात् पातकाद्यभियोगग्रहणम्;

" परदाराभिशापे च चौर्यागम्यागमेषु वा।
महापातकशस्तेषु स्याद्दिव्यं नृपसाहसे॥"

इति **कालिकापुराणात्**॥ २॥

दिव्यव्यवस्थापकद्रव्यसंख्याविषयमाह। निक्षेपेऽपहृते चौर्याभियोगे; बहुवचनात् साहसे च विप्रतिपन्नस्यार्थस्य प्रमाणं कल्पयित्वा दिव्यं व्यवस्थापयेत्। यथाह **कात्यायनः**—

" दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत्।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत्॥"

इति। दत्तस्य निक्षिप्तस्य। प्रमाणं परिमाणमित्यर्थः। सत्येऽपि प्रमाणवत्यपि। यदाह **बृहस्पतिः**—

"महापापाभिशापेषु निक्षेपहरणे तथा।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु॥"

इति॥ ३॥

**सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्॥ ४॥ तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत्॥ ५॥ द्विकृष्णलोने तिलकरम्॥ ६॥ त्रिकृष्णलोने रजतकरम्॥ ७॥ चतुःकृष्णलोने सुवर्णकरम्॥ ८॥ पञ्चकृष्णलोने [1]सीरोद्धृतमहीकरम्॥ ९॥ सुवर्णार्धोने कोशो देयः शूद्रस्य॥ १०॥ ततः परं यथार्हं धटाग्न्युदकविषाणामन्यतमम्॥ ११॥**

कस्यार्थस्य प्रमाणं कल्पनीयमित्यत आह। निक्षेपापह्नवादिविषयेषु सर्वेष्वप्यर्थजातेषु परिमाणं कल्पयित्वा तन्मूल्यत्वेन सुवर्णं कल्पयेत्। तत्प्रमाणेन दिव्यव्यवस्थेति। यथाह **कात्यायनः**—

"सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्।
हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत्॥
ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम्।
अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम्॥
षष्ट्या नाशे जलं देयं चत्वारिंशति वै धटम्।
विंशद्दशविनाशे तु कोशपानं विधीयते॥
पञ्चाधिकस्य वा नाशे तदर्धार्धस्य तण्डुलाः।
ततोऽर्धार्धविनाशे तु स्पृशेत् पुत्रादिमस्तकम्॥
ततोऽर्धार्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः।
एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते॥"

इति। सुवर्णः षोडशमाषः। विंशन्नाशे दशनाशे चेत्यर्थः। न तु त्रिंशतो नाशे; अर्धार्धेति पञ्चानां लिङ्गदर्शनात्। 'पञ्चाधिकस्य वा नाशे' इत्यत्रापि कोशपानं विधीयत इति शेषः। पञ्च वाधिकं वेति पञ्चाधिकम्। अन्यथा पञ्चमेन दिव्याभावप्रसङ्गः। अनेनाधिकपदेन दशाधिकविंशत्यधिकानामप्युत्तरसंख्याधिकानां संख्यानां निर्णयः सिध्यति। ततोऽर्धार्धस्य; पञ्चार्धं सार्धद्वयम्; तदर्धं सपादसुवर्णः।

[1] सीतोद्धृत—क, ज.

तदन्यतरनाशे तण्डुलाः । ततोऽर्धार्धेति । सपादसुवर्णार्धं दश माषाः । तस्याप्यर्धं पञ्च माषाः । तदन्यतरनाशे पुत्रादिमस्तकस्पर्शः । ततोऽर्धार्धेति; पञ्चार्धं सार्धमाषद्वयम् । तदर्धं सपादो माषः सार्धषट्कृष्णलाः; तन्नाशे लौकिक्यः शास्त्रान्तरदृष्टाः क्रिया भवन्ति । तत्र बृहस्पतिः—

" सत्यवाहनशस्त्राणि गोबीजरजतानि च ।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ।
एते तु शपथाः प्रोक्ता मनुना स्वल्पकारणे ॥ "

इति ॥ ४ ॥

ता एव क्रिया वर्णव्यवस्थया दर्शयति । त्रियवः कृष्णलः । तस्मादूनं कृष्णलोनम् । तादृशे हेम्नि विवादे, शूद्रं दूर्वां करे दत्त्वा ' नमय हस्तम् ' इति शापयेत् । एवमग्रेऽपि ज्ञेयम् ॥ ५ ॥

कृष्णलाधिके द्वाभ्यां कृष्णलाभ्यां चोने हेम्नि, तिलान् करे दत्त्वा शूद्रम् ॥ ६ ॥

किंच द्वाभ्यामधिके त्रिभ्यः कृष्णलेभ्यश्चोने हेम्नि, रजतं करे दत्त्वा ॥ ७ ॥

किंच त्रिभ्योऽधिके चतुर्भ्यः कृष्णलेभ्य ऊने हेम्नि, सुवर्णं करे दत्त्वा ॥ ८ ॥

[1]चतुर्भ्योऽधिके पञ्चभ्यः कृष्णलेभ्यो माषादूने हेम्नि, सीरेण लाङ्गलेनोद्धृतां महीं मृत्खण्डं करे दत्त्वा शूद्रं शापयेत् ॥ ९ ॥

एवं शपथे द्रव्यसंख्यां निर्णीय, दिव्ये तन्निर्णयमाह । सुवर्णार्धात् अष्टभ्यो माषेभ्योऽर्वाक् माषादूर्ध्वं शूद्रस्य कोशपानं कारयेत् । पुनः शूद्रग्रहणमस्मिन्नेव विषये वैश्यादीनां पूर्वोक्तपुत्रादिमस्तकस्पर्शप्राप्त्यर्थम् । तथाच स्मृत्यन्तरे—

" निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
त्रिकादर्वाक् तु पुष्पं स्यात् कोशपानमतः परम् ॥ "

इति । अत्र च निष्कशब्देन दीनारोऽभिधीयते; तस्यैव सुवर्णादूनत्वात् ॥ १० ॥

किंच, ततः सुवर्णार्धोनात् परं सुवर्णार्धपादोनसुवर्णादौ यथार्हं तत्तत्कालोचितं तत्तत्संख्योचितं च धटादि ज्ञेयम् । धटः तुला, अग्निः फालस्तप्तमाषश्च, उदकविषे वक्ष्यमाणे । एतेषामन्यतमं दिव्यं शूद्रस्य कारयेत् ॥११॥

**द्विगुणेऽर्थे यथाभिहिताः समयक्रिया वैश्यस्य[2] ॥ १२ ॥ त्रिगुणे राजन्यस्य ॥ १३ ॥ [3]कोशवर्जं चतुर्गुणे ब्राह्मणस्य ॥ १४ ॥ न ब्राह्मणस्य कोशं दद्यात् ॥ १५ ॥ अन्यत्रागामिकालसमयनिबन्धनक्रियातः ॥ १६ ॥**

[1] The Commentary on Sūtra 9 omitted in ख.

[2] वैश्यस्य omitted in ज.

[3] कोशवर्जं omitted in ज.

वैश्यादीनां दिव्यशपथये द्रव्यसंख्याव्यवस्थामाह । य एव दूर्वातिलरजतसुवर्णलोष्टस्पर्शकोशपानरूपाः शपथाः शूद्रस्योक्ताः, त एव तत्तत्परिमाणात् द्विगुणपरिमाणे च द्विचतुःषडष्टदशकृष्णलसुवर्णोनहेम्नि क्रमात् वैश्यस्य भवन्ति ॥ १२ ॥

किंच, शूद्रोक्तपरिमाणात् त्रिगुणे हेम्नि त्रिषण्नवद्वादशपञ्चदशकृष्णलसार्धसुवर्णोने क्रमात् दूर्वातिल-रजतसुवर्णलोष्टस्पर्शकोशपानानि क्षत्रियस्य भवन्ति ॥ १३ ॥

ब्राह्मणस्य विशेषमाह । चतुरष्टद्वादशषोडशविंशतिकृष्णलोने हेम्नि, क्रमात् ब्राह्मणस्य दूर्वातिल-रजतसुवर्णलोष्टस्पर्शा भवन्ति । यथाह **बृहस्पतिः**—

“ एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ ”

इति । एषा कृष्णलादिः । निकृष्टाः शूद्राः । मध्याः वैश्याः । अनेनैव न्यायेन क्षत्रियाणां त्रिगुणेति ज्ञेयम्; स्थानप्रमाणात् ॥ १४ ॥

कोशवर्जमित्यत्र हेतुमाह । ब्राह्मणस्य कोशपानं न कारयेत् राजा प्राड्विवाको वा । कोशो विषोपलक्षणम्; “ ब्राह्मणस्य विषं विना ” इति **स्मरणात्**; ‘ न ब्राह्मणानां विषम् ’ इति वक्ष्यमाणत्वाच्च ।

नन्वयं कोशनिषेधो विप्रस्य प्रकृत एवाभियोगे? उताभियोगमात्रे? नाद्यः, प्रकृतमात्रविषयतेत्यत्र प्राप्त्यभावात् वक्ष्यमाणपर्युदासानुपपत्तेः । नापरः;

“ साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना ।
आदित्यस्य तु यत् तोयं ब्राह्मणं तत्तु पाययेत् ॥ ”

इत्यादिवचनैरभियोगसाधारण्येन विप्रस्य कोशप्रापणविरोधादिति चेत्—बाढम्; उक्तवाक्यानां पर्युदस्त-विषयमात्रे विप्रस्य कोशप्रापकत्वेनापि चारितार्थ्यात् नाभियोगमात्रविषयत्वम् । ततश्च पर्युदासविषयपरिहारेण सर्वत्र निषेधप्रवृत्तेः प्रकृतविषयेऽपि प्रवृत्तिरित्यविरोधः ॥ १५ ॥

अत्र पर्युदासमाह । आगामिकालः भावी समयः । तत्र यः समयो विश्वासः, तन्निबन्धना तद्धेतुः क्रिया प्रमाणम्; ततोऽन्यत्रेत्यर्थः । भाविविश्वासार्थे ब्राह्मणस्यापि कोशो भवतीति तात्पर्यम् । यथाह **पितामहः**—

“ शङ्काविश्वाससंधाने विभागे रिक्थिनां तथा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥ ”

इति । समूहस्य क्रिया क्रियासमूहः; तस्मिन् कर्तृत्वं संवित्; संभूय समुत्थानं वा । तथा,

“ विस्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च ।
एवं कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥ ”

इति ॥ १६ ॥

**कोशस्थाने ब्राह्मणं सीतोद्धृतमहीकरमेव शापयेत् ॥ १७ ॥**

**प्रागृदृष्टदोषे [1]स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत्[2] ॥ १८ ॥**

कथं तर्हि प्रकृतविषये ब्राह्मणस्य शुद्धिभावनेत्यत आह। यत्रार्धसुवर्णोनचतुर्गुणे सुवर्णद्वयोने कोशः प्राप्तो ब्राह्मणस्य, तत्र सीतया लाङ्गलपद्धत्या उद्धृता या मही लोष्टं, तत्करमेव तं शापयेत्। अनेनोक्तविषयकोशस्थानापत्तिवचनेन विषयान्तरे कोशस्थानापत्तिरपि न ब्राह्मणस्येति गम्यते; विश्वासादिव्यतिरेकेण विप्रस्य कोशस्यैवाप्राप्तेः ॥ १७ ॥

क्वचित् स्थानापत्तेरप्यपवादमाह। यस्य ब्राह्मणस्य पूर्वं चौर्यादिदोषो मिथ्याशपथकरणदोषो वा दृष्टो भवति, तस्य स्वल्पेऽप्यर्थे सुवर्णद्वयादावपि उक्तानां दिव्यानां धटादीनां चतुर्णामन्यतममेव कारयेत्; न कोशम्। अपिशब्दादन्येष्वपि;

" महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते।
नास्तिके दृष्टदोषे च कोशपानं विवर्जयेत् ॥ "

इति **नारदस्मरणात्**। कोशाप्राप्त्यैव च न तत्स्थानापन्नस्यापि प्राप्तिः। यद्यपि संनिधानात् ब्राह्मणमात्रविषयमिदमिति प्रतीयते; तथापि क्षत्रियादिष्वपि प्रागृदृष्टदोषत्वसंभवात् तेषामपीदमित्यवसीयते। तेषामपि सार्धसुवर्णादौ धटाद्यन्यतममेव भवति। यद्यपि तादृशे विषये कोशः क्षत्रियादीनां प्राप्त एवास्ति, तथापि तद्बाधेन धटादिविधानाय वचनमर्थवदेव। तत्र संख्याविशेषेण दिव्यविशेषमाह **बृहस्पतिः**—

" संख्या रश्मिरजोमूला मनुना समुदाहृता।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥
विषं सहस्रेऽपहृते पादोने च हुताशनः।
त्रिपादोने च सलिलमर्धे देयो धटः सदा ॥
चतुःशताभियोगे च दातव्यस्तप्तमाषकः।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके ॥
शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्।
गोचोरस्य प्रदातव्यः सभ्यैः फालः प्रयत्नतः ॥
एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ "

1 अल्पेऽप्यर्थे—ज, झ, ठ.

2 अन्यतमं कुर्यात्—ज, ठ.

इति । द्वैगुण्यादिकल्पनमदृष्टदोषविषयम् । दृष्टदोषे तु उक्तसंख्या एव भवन्ति । अस्यार्थिकपणविषयत्वेनार्ध-सुवर्णादिसमानत्वात् । यत्तु पितामहेनोक्तम्—

" सहस्रे तु धटं दद्यात् सहस्रार्धे तथायसम् ।
अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम् ॥ "

इति, तदस्मिन्नेव विषये पातित्यावहद्रव्यस्तेयादिविषयविवादे योज्यम् । द्रव्यान्तरविषयविवादे तु " नासह-स्राद्धरेत् फालं न विषं न तुलां तथा " इति योगीश्वरीयं ज्ञेयमिति प्राञ्चः । वस्तुतस्तु दृष्टादृष्टदोषपुरुष-विषयत्वेन वाक्यत्रयेऽप्यल्पाधिकसंख्याव्यवस्था साधीयसी, मूलवाक्यानुरोधादिति ॥ १८ ॥

**सत्सु विदितं सच्चरितं न महत्यर्थेऽपि ॥ १९ ॥ अभियोक्ता वर्तयेच्छीर्षम् ॥ २० ॥ अभियुक्तश्च दिव्यं कुर्यात् ॥ २१ ॥**

पुरुषविशेषे दिव्यापवादमाह । सत्सु शिष्टेषु " शिष्टः पुनरकामात्मा " इत्यादिवसिष्ठाद्युक्तलक्षणेषु शिष्टत्वेन विदितं प्रसिद्धम् । सत् श्रुतिस्मृत्युदितं चरितम् आचरणं यस्येति स तथा । तादृशम्; बहुश्रुतमिति यावत् । बहुश्रुतलक्षणमाह गौतमः—" स एष बहुश्रुतो भवति लोकवेदवेदाङ्गवित् वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीतः " इति । तस्य दण्डाभावमप्याह स एव—" षड्भिः परिहार्यो राज्ञा अवन्ध्यश्चावध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च " इति । न चैवमनिर्णयप्रसङ्गः; बहुश्रुतस्याभियोक्तृत्वे अभियुक्तस्यैव दिव्यम्; अस्याभियुक्तत्वे अभियोक्तुरेव दिव्यमिति संभवात् । परस्पराभियोगे तु यथारुचि; " रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः " इति योगिस्मरणात् । न चैवमभियुक्तदिव्यविधिविरोधः; तदपवादरूपत्वादस्यार्थस्य । तथा पापविशेषेष्वपि दिव्यं निषेधति कात्यायनः—

" मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रसवानां च मन्त्रयोगक्रियाविदाम् ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु संदिग्धेष्वपि यत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव वियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरैः ॥ "

इति। लिङ्गिनः वेदबाह्यलिङ्गधारिणः। प्रसवाः प्रतिलोमजाः। वर्णसंकरजाताः संकराः। पूर्वं कृतमहापातकादेः पुनः महापातकाद्यभियोगेऽयं दिव्यनिषेध इति केचित्। महापातकाद्यभियुक्तानामित्यपरे।

"येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः।
कारयेत् स्वजनैस्तानि नाभिशस्तं त्यजेन्मनुः॥"

इति भृगुस्मरणात्। जातिविशेषेऽपि दिव्यं निषेधति **कात्यायनः**—

"अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम्।
प्रातिलोम्यप्रसूतानां निश्चये न तु राजनि।
तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत्॥"

इति॥ १९॥

यत्पुनः **स्मृत्यन्तरे** "सपणश्चेद्विवादः स्यात्" इत्यनेन पणस्य पाक्षिकत्वमुक्तं तदपवादमाह। अभियोक्ता 'मदीयं धारयसि' इत्यादिवादी शीर्षं विवादपराजयनिमित्तं पणं वर्तयेत् अङ्गीकुर्यात्। तत्र शीर्षशब्दस्य दण्डपरत्वे "कोश एकोऽशिराः स्मृतः" इत्यनेन कोशे दण्डाभावप्रसङ्गः। न चैतद्युक्तम्; **कात्यायनेन** कोशे त्रिशतदण्डस्याभिधानात्। तच्चाग्रे स्पष्टयिष्यते। किंच 'राजद्रोहसाहसेषु विनापि शीर्षवर्तनात्' इत्यत्र दण्डस्यैवापवादप्रसङ्गः। तदपि न युक्तम्;

"स्वल्पेऽपराधे वाग्दण्डो धिग्दण्डः पूर्वसाहसे।
मध्यमोत्तमयोर्दण्डो राज्ञां द्रोहे च बन्धनम्।
निर्वासनं वधो वापि कार्यमात्महितैषिणा॥"

इति **बृहस्पतिना** तत्रापि दण्डविधानात्। अथैतमेव प्रतिपदोक्तं दण्डं यद्यभियोक्ताङ्गीकरोति, तदाभियुक्तो दिव्यं कुर्यात्, नान्यथेति; तदपि न। दण्डेषु पराजयो निमित्तम्; न त्वङ्गीकारः; अङ्गीकारस्यैच्छिकतयानित्यत्वेन दण्डस्य नित्यवच्छ्रवणविरोधात्; अङ्गीकारेऽपराजितस्यापि दण्डप्रसङ्गात्; अनङ्गीकारे पराजितस्यापि दण्डाभावप्रसङ्गात्। तथाच "दण्डयोत्सर्गे राजैकरात्रमुपवसेत्" इति प्रायश्चित्तविरोधः। तस्मात् शीर्षशब्देन पण एवात्राभिधीयत इत्यवश्यं मन्तव्यम्; तस्यैच्छिकत्वसंभवात्। ततश्च शीर्षं 'यद्यहमत्र पराजीयेय, तदेदं दण्ड्यः' इति पणादीत्यर्थपर्यवसानात् सामान्यदण्डात् प्रतिपदोक्तात् स्वस्वाङ्गीकृतपणापरपर्यायमेवेदं दण्डान्तरं दिव्येषु नियम्यते। तेन च

"सपणश्चेद्विवादः स्यात् तत्र हीनं तु दापयेत्।
दण्डं च स्वपणं चैव धनिने धनमेव च॥"

इति **याज्ञवल्कीयो** दण्डपणसमुच्चयो दिव्येषु नित्यवदवतिष्ठते। अत एव **नारदः**—"शिरोवर्ती यदा न स्यात् तदा दिव्यं न दीयते" इति। अयं च नियमो धटादिषु चतुर्ष्वेव। कोशस्त्वशीर्षकोऽपि भवति। यथाह **पितामहः**—

"शिरःस्थायिविहीनानि दिव्यानि परिवर्जयेत्।
धटादीनि विषान्तानि कोश एकोऽशिराः स्मृतः॥"

इति। कोशस्याप्यशिरस्त्वं शङ्काभियोगे। यथाह **कात्यायनः**—"न शङ्कासु शिरः कोशे कल्पयेत्तु कदाचन" इति। सावष्टम्भाभियोगे तु सशिरस्त्वमेव। यथाह **योगीश्वरः**—

"तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥"

इति॥ २०॥

भावप्रतिज्ञावादिनः प्रमाणोपन्यास इति स्थितम्। तदपवादमाह। अभियुक्तः 'नाहं धारयामि' इत्यादिवादी; स दिव्यं कुर्यात्। तदाह **पितामहः**—

"अभियोक्ता शिरःस्थाने दिव्येषु परिकल्पते।
अभियुक्ताय दातव्यं [1]श्रुतिस्मृतिनिदर्शनात्॥"

इति। **कात्यायनोऽपि**—

"न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः॥"

इति। अस्यापवादमाह **योगीश्वरः**—"रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः" इति। रुचिः परस्परसंप्रतिपत्तिः। सा च दिव्यानधिकारस्याप्युपलक्षणम्। तेन चाभियुक्तस्य कथंचिदनधिकारेऽभियोक्तुरेव दिव्यमिति ज्ञेयम्;

"कालदेशविरोधे तु यथायुक्तं विशेषयेत्।
अन्येन कारयेद्दिव्यं विधिरेष विपर्यये॥"

इति **कात्यायनस्मरणात्**। यथायुक्तं यस्मिन् काले यस्य कर्तुः दिव्यः प्राप्तः; तदसंभवे अन्येन कारयेदित्यर्थः॥ २१॥

[1] दिव्यं श्रुति—ग, ट.

**राजद्रोहसाहसेषु विनापि शीर्षवर्तनात् ॥ २२ ॥ स्त्रीब्राह्मण-विकलासमर्थरोगिणां तुला देया ॥ २३ ॥ सा च न वाति वायौ ॥ २४ ॥ न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः ॥ २५ ॥ शरद्ग्रीष्मयोश्च ॥ २६ ॥ न कुष्ठिपैत्तिकब्राह्मणानां[1] विषं देयम् ॥ २७ ॥ [2]प्रावृषि च ॥ २८ ॥ न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकम् ॥ २९ ॥ हेमन्तशिशिरयोश्च ॥ ३० ॥ न नास्तिकेभ्यः कोशो देयः[3] ॥ ३१ ॥ न देशे व्याधिमरकोपसृष्टे च ॥ ३२ ॥**

'अभियोक्ता वर्तयेच्छीर्षम्' इत्यस्यापवादमाह। राजद्रोहः राजानिष्टाचरणम्। साहसं यथोक्तम्। बहुवचनात् चौरनिर्देशात्मशुद्ध्योर्ग्रहणम्। यथाह **पितामहः**—

"राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥"

इति ॥ २२ ॥

अधिकारिभेदेन दिव्यव्यवस्थामाह। स्त्रीब्राह्मणौ जातिमात्रेण। विकलः अन्धपङ्ग्वादिः। असमर्थोऽतिवार्धकेन। रोगी व्याधितः तत्र तत्र वक्ष्यमाणः कुष्ठ्यादिः। एतेषां शोधनार्थं तुलैवेति नियम्यते। बहुवचनात् बालादयोऽपि गृह्यन्ते। यथाह **योगीश्वरः**—"तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्" इति। **नारदोऽपि**—

"क्लीबातुरान् सत्त्वहीनान् पतितांश्चोज्झितान् नरान्।
बालं वृद्धं स्त्रियं चैव परीक्षेत धटे सदा॥"

इति। सत्ताहीनेति वा पाठः। 'उद्गतान्तरान्' इति पाठे विकलान्तःकरणानित्यर्थोऽवधेयः। एतेन पतितानां दिव्यनिषेधः तुलाव्यतिरिक्तदिव्यविषय इति ध्येयम् ॥ २३ ॥

उक्तव्यवस्थाया नैमित्तिकमपवादमाह। सा तुला वायौ अतिवाति सति न कार्या; "प्रवाते न तुलां तथा" इति **नारदस्मरणात्**। अनेन च निषेधेन निमित्ताभावे सार्वकालिकत्वं तुलाया उक्तं भवति। यथाह **पितामहः**—"धटः सर्वर्तुकः प्रोक्तो वाति वाते विवर्जयेत्" इति ॥ २४ ॥

1 ब्राह्मणनास्तिकेभ्यः—ग, ज.
3 देयः omitted in ज, ठ.

2 Sūtras 28 to 31 omitted in ज.

अग्निव्यवस्थामाह। कुष्ठी त्वग्दोषवान्। असमर्थो दुर्बलः। लोहकारो लोहशिल्पी। एतेषामग्निः अग्निदिव्यं न देयम्। यथाह **पितामहः**—"कुष्ठिनां वर्जयेदग्निम्" इति। **कात्यायनोऽपि**—"न लोहशिल्पिनामग्निम्" इति। **पितामहः**—"तोयमग्निं विषं चैव दातव्यं बलिनां नृणाम्" इति। बहुवचनात् स्त्रीबालरोगिवृद्धानां ग्रहणम्। यथाह **नारदः**—

"न मज्जनीयं स्त्रीबालं धर्मशास्त्रविचक्षणैः।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः॥
निरुत्साहान् व्याधिक्लिष्टान् नार्तांस्तोये निमज्जयेत्।
न चापि हारयेदग्निं न विषेण विशोधयेत्॥"

इति। अत्र स्त्री अप्रगल्भा; बालादिसाहचर्यात्। प्रगल्भायास्तु अग्निरपि भवति।

"स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं भवेत्।
धटकोशादिभिस्तासामन्तस्तत्त्वं विशोधयेत्॥"

इति। अत्रादिशब्देनाग्नेर्ग्रहणम्। यस्तु "स्त्रीणां तु न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते" इति दिव्यसामान्यनिषेधः, स जलविषपरः॥ २५॥

तत्रैव कालव्यवस्थामाह। शरद्ग्रीष्मयोश्चाग्निर्न देयः। अत्र विशेषाश्रवणात् चान्द्रसौरयोरुभयोरप्युपादानम्। द्वयोः पर्युदासादितराभ्यनुज्ञा दर्शिता। यथाह **पितामहः**—"अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः" इति। तथा,

"चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च।
एते साधारणा मासा दिव्यानामविरोधिनः॥"

इति। यत्तु,

"अनेन विधिना कार्यो हुताशसमयः सदा।
ऋते ग्रीष्मादसौ युक्तः कालेऽन्यस्मिन् सुशीतले॥"

इति **नारदस्मरणं**, तत् 'कालेऽन्यस्मिन् सुशीतले' इति विशेषणसामर्थ्यात् वृष्ट्यादिना शीतलां शरदमप्युपादत्ते। तेन निषेधस्तूष्णाया एव; ग्रीष्मसाहचर्यात्; "नोष्णकालेऽग्निशोधनम्" इति **स्मरणाच्च** ॥ २६॥

विषव्यवस्थामाह। कुष्ठी त्वग्दोषी। पैत्तिकः पित्तरोगवान्। ब्राह्मणो जातिमात्रम्। एतेषां विषदिव्यं न देयम्। यथाह **पितामहः**—"पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्" इति। **कात्यायनः**—"ब्राह्मणस्य विषं विना" इति। बहुवचनात् स्त्रीबालरोगिवृद्धदुर्बलानां ग्रहणम्॥ २७॥

तत्रैव कालव्यवस्थामाह। प्रावृषि वर्षासु विषं न देयम्। प्रावृट्पर्युदासात इतराभ्यनुज्ञा दर्शिता। यथाह **पितामहः**—"हेमन्ते शिशिरे विषम्" इति। चैत्रवैशाखयोः सर्वदिव्यसाधारणत्वात् वसन्तोऽभ्यनुज्ञातः। ग्रीष्मशरदोस्तु विषमात्रापरिमाणाल्पत्वलिङ्गादभ्यनुज्ञा गम्यते। यदाह **नारदः**—

"वर्षासु षड्यवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः।
हेमन्ते तु यवाः सप्त शरद्यल्पा ततोऽपि हि॥"

इति। 'वर्षे चतुर्यवा मात्रा' इत्यपि पाठः। हेमन्तग्रहणात् शिशिरस्यापि ग्रहणम्; "हेमन्तशिशिरयोः समासेन" इति लिङ्गात्। नन्वेवं वर्षास्वपि मात्राविशेषाभिधानेन तदभ्यनुज्ञानात् अत्र 'प्रावृषि' इति विरुद्धम्। सत्यम्। सप्तयवमात्राभिप्रायोऽयं प्रावृण्निषेधः; न सर्वथेति ध्येयम्। अनेन "शरद्ग्रीष्मवसन्तेषु वर्षासु च विवर्जयेत्" इत्यपि **नारद**वाक्यं व्याख्यातम्॥ २८॥

जलव्यवस्थामाह। श्लेष्मनिमित्ता व्याधयः शिरोऽक्षिकर्णदन्तरुजः; तैरर्दिताः पीडिताः, सर्वदा तत्काले वा भीरवः, ये जलं दृष्ट्वा मूर्छन्ति तरणानभिज्ञा वा। श्वासः; प्रतिलोमवायुवेगः। कासस्तस्यैव कफेन व्याघातः। तौ विद्येते येषाम्। अम्बुनि जले जीवनं येषां कैवर्तकादीनाम्; षां च उदकदिव्यं न देयम्; "सलिलं श्वासकासानाम्" इति **पितामह**स्मरणात्। बहुवचनात् स्त्रीबालवृद्धदुर्बलानां ग्रहणम्। यथाह **नारदः**—

"न मज्जनीयं स्त्रीबालं धर्मशास्त्रविचक्षणैः।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः।
साहसेऽप्यागतानेतान् नैव तोये निमज्जयेत्॥"

इति। कथं तर्हि तेषां निर्णय इत्यत आह **स एव**—

"क्लीबातुरान् सत्त्वहीनान् पतितांश्चोज्झितान् नरान्।
बालं वृद्धं स्त्रियं चैव परीक्षेत धटे सदा॥"

इति। सदेत्यनेन

"अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः।
शरद्ग्रीष्मे च सलिलं हेमन्ते शिशिरे विषम्॥"

इत्येतेषामसाधारणेऽपि काले चैत्रादौ च तुला स्थितैव। तुलेति कोशस्यापि ग्रहणम्; "कोशस्तु सर्वदा देयस्तुला स्यात सार्वकालिकी" इति स्मरणात्॥ २९॥

तत्रैव कालव्यवस्थामाह। हेमन्तशिशिरयोश्च जलदिव्यं न देयम्। द्वयोः पर्युदासात् इतराभ्यनुज्ञा दर्शिता। यथाह **पितामहः**—"शरद्ग्रीष्मेषु सलिलम्" इति। चैत्रवैशाखयोः सर्वदिव्यसाधारणत्वात् वसन्ताभ्यनुज्ञा। वर्षाणां तु **नारदेन** "शरद्ग्रीष्मेषु सलिलम्" इति विधायापि,

" न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां तथा ॥ "

इति पुनर्निषेधात शीतनिमित्त एव वर्षापरिहारोऽभिहितः, न तु तदभाव इत्यभ्यनुज्ञा सिध्यति । एवंच " नोष्णकालेऽग्निशोधनम् " इत्यत्राप्युष्णनिमित्त एवाग्निनिषेधः ; कालविशेषस्य विधानादेवेतरनिषेधसिद्धौ पुनर्निषेधानुपपत्तेः " प्रवाते न तुलां तथा " इत्यत्रानियतप्रवातवत् अनियतयोरेवौत्पातिकयोः शीतोष्णयोरभिप्रेतत्वात् । तस्मात् तत्तद्दिव्योक्तकालस्यैव तत्तन्निमित्तवशात् तत्तद्दिव्यनिषेधः ; न कालान्तरस्य । एतेन शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणमिति निरस्तम् ॥ ३० ॥

कोशव्यवस्थामाह । नास्तिकाः वेदशास्त्रविश्वासहीनाः । तेभ्यः कोशपानं न देयम् । बहुवचनात् मद्यपादीनां ग्रहणम् । यथाह **पितामहः**—

" मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥ "

इति । **नारदोऽपि**—

" महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशपानं विवर्जयेत ॥ "

इति । महापराधः महापातकी । निर्धर्मः वर्णाश्रमधर्मरहितः पाषण्डी । कुत्सितः प्रतिलोमजः । दृष्टदोषः पूर्वोक्तः । ' व्रात्यदाशेषु ' इति पाठे दाशः कैवर्तः । अत्र च कर्तृकालविशेषविधिनिषेधश्रवणात् सर्वकर्तृकत्वं सार्वकालिकत्वं च सिध्यति । यथाह **पितामहः**—" साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः " इति । **नारदश्च**—" कोशस्तु सर्वदा देयस्तुला स्यात् सार्वकालिकी " इति । तथा निमित्तविशेषाश्रवणात् सर्वनिमित्तत्वं चास्य सिध्यति । यथाह **योगीश्वरः**—

" तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ "

इति । **नारदः**—" कोशमल्पेऽपि दापयेत् " इति । **पितामहः**—" कोशः शङ्कासु क्षमः " इति । एतैर्वाक्यैः महाभियोगे अल्पाभियोगे शङ्कातत्त्वाभियोगयोश्चाविशेषात् कोशो भवतीति सिद्धम् । ब्राह्मणस्य तु कोशविषये विशेषोऽभिहित एव प्राक् । एषां तुलादीनां पञ्चानां मध्ये ब्राह्मणेषु तुलानियमात् कोशस्य सर्वसाधारण्यात् अग्न्यादीनि त्रीणि क्षत्रियादित्रयविषयाणीति मन्तव्यम् । यथाह **नारदः**—

" ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत् ॥ "

इति । अथ च नियमः—साधारणे चैत्रादिकाले तत्तत्कालेषु तत्तदेव दिव्यं सर्वेषाम्; "सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना" इति **पितामह**स्मरणात् । स्त्र्यादीनां तत्तत्कालेऽपि तुलैवेति । यस्तु "घटकोशादिभिस्तासामन्तस्तत्त्वं विशोधयेत्" इत्यनेन स्त्रीणां कोशविधिः, यश्च "मद्यपस्त्रीव्यसनिनाम्" इत्युपक्रम्य "कोशः प्राज्ञैर्न दातव्यः" इति निषेधः, तदुभयमपि आस्तिकनास्तिकभेदेन व्यवस्थापनीयमित्यलम् ॥ ३१ ॥

कोशस्य क्वचिदपवादमाह । व्याधिः; ज्वरादिः । मरकः; जनमारी । ताभ्यामुपसृष्टे अभिभूते देशे कोशो न देयः । चकारात् अग्निवायुशुकशलभादीनां ग्रहणम्; तुल्यन्यायात् औत्पातिककोशनिमित्तयोरनिष्टयोर्विवेक्तुमशक्यत्वात् । निमित्तविशेषेण देशविशेषमाह **कात्यायनः**—

"इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु च कार्येषु सतां मध्ये विदुर्बुधाः ॥"

इति । इन्द्रस्थानम् इन्द्रध्वजयूपस्थानं प्रसिद्धदेवायतनं वा; "सभाराजकुलद्वारदेवायतनचत्वरे" इति **नारद**स्मरणात् ॥ ३२ ॥

**सचैलस्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत् सर्वदिव्यानि देवब्राह्मणसंनिधौ ॥ ३३ ॥**

**इति [1]श्रीविष्णुस्मृतौ नवमोऽध्यायः**

साधारणं दिव्यविधिमाह । पूर्वेद्युः कृतोपवासं परेद्युरुदिते सूर्ये सचैलस्नातं दिव्यकारिणमाहूय देवस्य विष्णुशिवसूर्यादेः नृपस्य ब्राह्मणानां सभ्यानामन्येषां च संनिधौ प्राड्विवाकः सर्वाणि दिव्यानि कारयेत् । यद्यप्युपोषितमिति सामान्येनोक्तम्, तथापि एकरात्रं त्रिरात्रं वा अभियोगतारतम्येन व्यवस्थाप्यम्;

"त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा ।
नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥"

इति **पितामह**वचनात् । कारयेदिति कर्तृसामान्येऽपि नृपेणानुज्ञातः सोपवासः प्राड्विवाक इति ज्ञेयम् । यथाह **स एव**—

"दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञया ॥"

[1] श्री omitted in घ, च; वैष्णवे—क, झ; वैष्णवे समयप्रकरणं नवमम्—ज, ठ.

इते। दिनसामान्येऽपि आदित्यवासर इति ज्ञेयम्; शिष्टाचारात्। भौमवासरेऽपीति केचित्; तन्न; "न परीक्षाधिवासश्च शनिभौमदिने भवेत्" इति निषेधात्। तत्रापि,

"पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च धटो भवेत्।
मध्याह्ने तु जलं देयं मध्याह्नात् परतो विषम्॥
दिवसस्यैव पूर्वाह्णे कोशशुद्धिर्विधीयते।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतले॥"

इति **पैतामहो** विशेषो ज्ञेयः। हेमन्तशिशिरयोर्मध्याह्नात् परतः; अन्यदा रात्रिपश्चिमयाम इति व्यवस्था। अनुक्तकालविशेषाणां तु पूर्वाह्ण एव; "पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम्" इति **नारदस्मरणात्**। देवसंनिधिरभिशापविषयः। नृपसंनिधिस्तु सर्वविषयः; "नृपब्राह्मणसंनिधौ" इति **योगिस्मरणात्**॥ ३३॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डिता**त्मजश्री**नन्द-पण्डितकृतौ विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** नवमोऽध्यायः

# दशमोऽध्यायः

## अथ धटः ॥ १ ॥ चतुर्हस्तोच्छ्रितो द्विहस्तायतः[1] ॥ २ ॥
## तत्र सारवृक्षोद्भवा पञ्चहस्तायतोभयतःशिक्या तुला ॥ ३ ॥

एवं नवमे दिव्यमातृकामभिधाय दशमे धटप्रयोगमाह । धटः पादाक्षतुलादीनां समुदायः । तद्विधिरभिधीयत इति ॥ १ ॥

धटनिर्माणप्रकारमाह । स च चतुर्हस्तैर्यथोच्छ्रितः द्वाभ्यां हस्ताभ्यामायतो भवति, तथा कार्यः । धटोच्छ्रायायामौ स्तम्भोच्छ्रायायामोभ्यां भवत इति तावनेनोक्तौ । उच्छ्रायवचनात् निखननीयभागातिरिक्तमिदं परिमाणमित्युक्तम् । निखेयभागश्च हस्तद्वयमित्येवं षड्हस्तौ पादस्तम्भौ । तौ चोपरि भूमेश्चतुरश्रौ । अधस्तात्तु अनियमः । तयोश्च दक्षिणोत्तरभावेन पूर्वपश्चिमभावेन वा निखातयोरन्तरालं हस्तद्वयं सार्धहस्तमात्रं वा स्यात् । तदुत्तरकाष्ठमपि स्तम्भान्तरालपरिमाणाभिधानेनैवोक्तमिति न पृथगुक्तम् । अन्तिमपादस्तम्भमस्तकदेशात् बहिरनिःसृतो हस्तद्वयात् सार्धहस्ताद्वा किंचिदधिको बिलद्वयोपेतोऽक्षः कार्य इत्यवगन्तव्यम् । हस्तस्तु चतुर्विंशत्यङ्गुल एवेति ॥ २ ॥

तुलानिर्माणप्रकारमाह । तत्र धटे । साराः दृढाः खदिरतिन्दुकसालशिंशपाद्या ये वृक्षाः, तदुद्भवा तच्छाखाजन्या पञ्चहस्ता चतुर्हस्ता वायता चतुरश्रा मध्ये प्रान्तयोश्च लोहमयवलयकर्कटोपेता उभयतोऽवलम्बितशिक्या तुला अक्षमध्यावलम्बिकर्कटेऽवलम्बनीया । तदेतत् सर्वं सपरिकरं नारदपितामहाभ्यां स्पष्टीकृतम्—

"छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥
मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च ।
अर्जुनस्तिन्दुकः सारस्तिनिशो रक्तचन्दनः ॥
एवंविधानि काष्ठानि धटार्थे परिकल्पयेत् ।
ऋज्वी धटे तुला कार्या खादिरी तैन्दुकी तथा ॥
शैंशपी तदलाभे तु सालाद्वा कोटरैर्विना ।
चतुरश्रा त्रिभिः स्थानैर्धटकर्कटकादिभिः ॥"

[1] द्विहस्तायामः—ज.

घटो मध्याङ्कुशः। कर्कटकस्तुलाप्रान्तद्वयलम्बी लोहाङ्कुशः। तैर्युक्ता कार्या।

"कटकानि च देयानि त्रिषु स्थानेषु चार्थवत्।
चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ॥
हस्तद्वयं निखेयं स्यात् पादयोरुभयोरपि।
षड्हस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः॥
अन्तरं च तयोर्हस्तौ भवेदध्यर्धमेव वा।
अक्षस्य परिमाणं स्यादन्तरालाधिकं तथा॥
तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि।
घटादुच्चतरे तन्तौ नित्यं दशभिरङ्गुलैः॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ।
मृन्मयौ सूत्रसंबद्धौ घटमस्तकचुम्बिनौ॥
प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटस्तथा।
शिक्यद्वयं समासज्ज्य पार्श्वयोरुभयोरपि।
प्राङ्मुखान् कल्पयेद्दर्भान् शिक्ययोरुभयोरपि॥"

इति॥ ३॥

**तां च सुवर्णकारकांस्यकाराणामन्यतमो बिभृयात्॥ ४॥ तत्र चैकस्मिन् शिक्ये पुरुषं [1]दिव्यकारिणमारोपयेत्, द्वितीये प्रतिमानं शिलादि॥ ५॥ [2]प्रतिमानपुरुषौ समधृतौ सुचिह्नितौ कृत्वा पुरुषमवतारयेत्॥ ६॥ घटं च समयेन गृह्णीयात्॥ ७॥ तुलाधारं च॥ ८॥**

ततः किमित्यत आह। तां तुलां सुवर्णकारकांस्यकाराणां, बहुवचनात् वणिजां चान्यतमो बिभृयात्। परीक्षाफलं च समां कुर्यात्। अन्यतमधृतायास्तस्याः साम्यपरीक्षार्थं सर्व एव ते राज्ञा नियोक्तव्याः। यथाहतुः **नारदपितामहौ**—

"परीक्षका नियोक्तव्यास्तुलामानविशारदाः।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च॥
कार्यः परीक्षकैर्नित्यमवलम्बसमो घटः।

[1] दिव्यकारिणम् omitted in क, ज, ढ.

[2] This Sūtra missing in ख.

उदकं च प्रदातव्यं घटस्योपरि पण्डितैः ।
यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः ॥ ''

इति ॥ ४ ॥

ततः किमित्यत आह। तत्र तुलाप्रान्तावलम्बिन्येकस्मिन् शिक्ये, प्राङ्मुखत्वे घटस्य पश्चिमे, उदङ्मुखत्वे चोत्तरे पुरुषं दिव्यकारिणमारोपयेत् उपवेशयेत् । द्वितीये पूर्वस्मिन् दक्षिणे वा शिक्ये, प्रतिमानं प्रतिमीयते समीक्रियते दिव्यकार्ये तत् प्रतिमानं शिलादि शिलेष्टकामृदादि आरोपयेत् । यथाह **नारदः**—

'' पश्चिमे तोलयेत् कर्तॄनन्यस्मिन् मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ।
मृत्पिण्डमभिशस्तं च तुलया धारयेदपि ॥ ''

इति । **पितामह**स्त्वन्यथाह—

'' धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।
पिटकां पूरयेत् तस्मिन्निष्टकाग्रावपांसुभिः ॥ ''

इति । शिक्यसंनिवेशयोर्विकल्पात् घटस्य प्राङ्मुखोदङ्मुखत्वयोरपि विकल्पः सिध्यति । स च स्तम्भनिवेशो पूर्वापरयोर्दक्षिणोत्तरयोश्चेति फलति । इष्टकाग्रावपांसूनां संभवति विकल्पः । न तु समुच्चयः; निषेधश्रवणात् । माषैर्वा पिटकं पूरयेत्; '' माषराशिमथापि वा '' इति **स्मृत्यन्तरात्** इति **चन्द्रिकाकारः** । यद्यपि घटपरीक्षा पूर्वमभिहिता, तथापि अर्थात् प्रतिमानपुरुषयोरारोपणानन्तरमपि सेति द्रष्टव्यम् ॥ ५ ॥

ततः किमित्यत आह । प्रतिमानतया निर्णीतौ, सुचिह्नितौ प्रतिमाने द्रव्यान्तरागमापगमशङ्कानिवृत्त्यै, पुरुषे च वस्त्रालङ्कारादिन्यूनाधिकशङ्कानिवृत्त्यै राजमुद्रादिना सम्यक् चिह्नितौ कृत्वा, पुरुषं तुलाफलकादवतारयेत् । अन्ये तुलाप्रान्तयोरवलम्बपृष्ठभागेऽप्यङ्ककरणं व्याचक्षते। अवतारणानन्तरकृत्यमाह **पितामहः**—

'' तोलयित्वा नरं पूर्वं पश्चात् तमवतार्य तु ।
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥ ''

इति ॥ ६ ॥

ततः किं कार्यमित्यत आह । दिव्यकर्तुरवतारणानन्तरं चशब्दोपात्तधर्मावाहनादिशिरःपत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणं कृत्वा, घटं तुलां समयेन शपथेन वक्ष्यमाणेन गृह्णीयात् नियमयेत् । तं च विधिमाह **पितामहः**—

'' तत आवाहयेद्देवान् विधिनानेन मन्त्रवित् ।
वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ॥
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ।

एह्येहि भगवन् धर्म दिव्येऽस्मिंस्त्वं समाविश ॥
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ।
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ॥
इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त एवं ध्यायेत् क्रमादिमान् ।
इन्द्रस्य दक्षिणे भागे वसूनाराधयेद् बुधः ॥
ध्रुवो धरस्तथा सोम आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥
देवेशेशानयोर्मध्य आदित्यानां तथार्चनम् ।
धातार्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा ॥
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमस्तथा ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥
इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ।
अग्नेः पश्चिमदिग्भागे रुद्राणामयनं विदुः ॥
वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशां पतिः ।
स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः ॥
प्रेतेशरक्षोमध्ये तु मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं तथा ॥
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
गगनः स्पर्शनो वायुरनिलो मारुतस्तथा ॥

प्राणः प्राणेश्वरो जीवो मरुतोऽष्टौ प्रकीर्तिताः ।
घटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः ॥
एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ।
रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ॥
अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव कारयेत् ।
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत् ॥
यं चार्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके ।
मन्त्रेणानेन सहितं तत् कार्यं तु शिरोगतम् ॥
आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥
इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकल्पयेत् ॥ ”

इति ॥ ७ ॥

अनन्तरकृत्यमाह । यः सुवर्णकाराद्यन्यतमस्तुलां धारयति, तमपि शपथेन नियमयेत् । यथाह **नारदः**—“ समयैः परिगृह्याथ पुनरारोपयेन्नरम् ” इति ॥ ८ ॥

**[1]ब्रह्मघ्नां ये स्मृता लोका ये लोकाः कूटसाक्षिणाम्[2] ।**
**तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ ९ ॥**
**धर्मपर्यायवचनैर्घट इत्यभिधीयसे ।**
**त्वमेव घट जानीषे न विदुर्यानि मानुषाः ॥ १० ॥**
**व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वयि ।**
**तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ ११ ॥**

1 ब्रह्मघ्नो—क, ठ.

2 साक्षिणः—क, ठ.

शपथमाह। ब्रह्मघ्नां ब्रह्महन्तॄणां कूटसाक्षिणां मिथ्यासाक्षिणां च ये लोकाः, ते तुलाधारस्यापि भवन्ति, यद्यसौ मृषा कपटेन तुलां धारयति। तुलाधारणस्य प्रवृत्तिनिमित्तस्य धटसुवर्णकारयोस्तुल्यरूपतया ऊहेनैव मन्त्रयोगो द्वयोरप्यभिमन्त्रणे। 'तुलां विवदतो मृषा' इति पाठे तु तुलापरीक्षार्थं ये नियुक्ताः स्वर्णकारादयः, ये च शुद्ध्यशुद्धिपरीक्षार्थं नियुक्ता ब्राह्मणाः, तेभ्योऽप्ययं शपथो देय इति सिध्यति॥ ९॥

अनन्तरं प्राड्विवाको धटमामन्त्रयेत्, "धटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्" इति **पितामह**-स्मरणात्। धटाभिमन्त्रणमन्त्रमाह। धटशब्दो धर्मपर्यायः; तेनाभिधीयमानत्वात्। धर्ममूर्तितया मानुषैः दुर्विज्ञेयानि अप्रत्यक्षतया धर्माधर्मादीनि प्रत्यक्षतया त्वं जानीषे। ततः व्यवहारे लौकिके प्रवादे अभिशस्तः संदिग्धोऽयं मानुषः त्वयि तोल्यते। तदेनं मानुषात संशयात्[1] धर्मतः धर्मपुरस्कारेण त्रातुं पालयितुमर्हसीति। **पितामहस्तु** मन्त्रान्तरमप्याह—

"त्वं धट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम्।
धकाराद्धर्ममूर्तिस्त्वं टकारात् कुटिलं नरम्।
धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे॥"

इति। **नारदोऽपि**—

"धर्मपर्यायशब्देन धट इत्यभिधीयसे।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च॥"

'त्वमेव' इत्यादिः मूलवत् सार्धश्लोकः। अनन्तरम्,

"देवासुरमनुष्याणां सत्ये त्वमतिरिच्यसे।
सत्यसंधोऽसि भगवन् शुभाशुभविभावित॥"

'आदित्यचन्द्रौ' इत्यादि पूर्ववत्। एषां च मन्त्राणां विकल्प एव; स्मृतीनां कल्पान्तरप्राप्यत्वात्॥ १०, ११॥

**ततस्त्वारोपयेच्छिक्ये भूय एवाथ तं नरम्।**
**तुलितो यदि वर्धेत ततः [2]शुद्धः स धर्मतः॥ १२॥**
**शिक्यच्छेदाक्षभङ्गेषु भूयस्त्वारोपयेन्नरम्।**
**एवं निःसंशयं ज्ञानं [3]यतो भवति निर्णयः॥ १३॥**

**इति [4]श्रीविष्णुस्मृतौ [5]दशमोऽध्यायः**

[1] अस्मात् संशयात्—ग. [2] स धर्मतः शुचिः—झ, ठ. [3] ततो—ज.
[4] वैष्णवे धर्मशास्त्रे—क, झ, ठ. [5] धटप्रकरणं दशमम्—ज.

अनन्तरकृत्यमाह । ततः प्राड्विवाकः स्वधटप्रार्थनानन्तरम्; तुशब्दात् कर्तारमपि तुलाभिमन्त्रणं कारयित्वानन्तरं दिव्यकर्तारं, यस्मिन् शिक्ये पूर्वं निवेशितः, तस्मिन्नेव शिक्ये पुनरप्यारोपयेत् । कर्तुस्तुलाभिमन्त्रणमन्त्रमाह **याज्ञवल्क्यः**—

"त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत् सत्यं वद कल्याणि संशयान्मां विमोचय ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥"

इति । तमिति पुनः कर्तृपरामर्शः तेनैव संनिवेशेन तदारोपणप्राप्त्यर्थः; "तेनैव संनिवेशेन पुनरारोपयेच्च तम्" इति **स्मरणात्** । तेनैव पूर्वेणैव । आरोपितस्यावस्थानकालपरिमाणं तन्निर्णेतारं चाह **पितामहः**—

"ज्योतिर्विद्ब्राह्मणः कश्चित् कुर्यात् कालपरीक्षणम् ।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥"

इति । विनाड्यः षट् प्राणाः । यथोक्तम्—"दशगुर्वक्षरः प्राणः षट् प्राणाः स्याद्विनाडिका" इति । तस्मिन् काले राजनियुक्तैः ब्राह्मणैः तस्य शुद्ध्यशुद्धिनिर्णयो राज्ञे कथनीयः । यथाह **पितामहः**—

"साक्षिणो ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥
तेषां वचनतो गम्यः शुद्ध्यशुद्धिविनिर्णयः ।
शंसन्ति साक्षिणः सर्वे शुद्ध्यशुद्धी नृपे तदा ॥"

इति । शुद्ध्यशुद्धिनिर्णयकारणमाह । स दिव्यकर्ता तुलितो यदि धर्मतः धर्मेण, न तु कुहकविद्यादिना वर्धेत ततः स धर्मतः शुद्धो भवेत् । अनेन समहीयमानयोः अर्थादशुद्धिरुक्ता । यथाह **नारदः**—

"तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥"

इति । यत्तु **पितामहेन** "हीयमानो न शुद्धः स्यादेकेषां तु समोऽशुचिः" इत्येकीयमतेन समस्याशुचित्वमुपन्यस्तं, तत् द्रव्यव्यवहारदोषमहत्त्वाल्पत्वनिर्णयानुपयोगात् पुनरारोपणाभिप्रायेण । यथाह **बृहस्पतिः**—

"घटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तोल्यो वर्धितो विजयी भवेत् ॥"

इति । पापाभियोगे तु समस्याल्पदोषत्वमाह **पितामहः**—"अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते" इति । कामाकामकृतत्वादिना साक्षात् प्रयोजकत्वादिना वा महत्त्वाल्पत्वे ज्ञेये । ते च दण्डप्रायश्चित्तयोस्तारतम्ये उपयुज्येते । क्वचित् शुद्धिनिर्णयायोभयम् ॥ १२ ॥

शिक्यं तुलाप्रान्तद्वयावलम्बिफलकसंलग्नो रज्जुसमूहः; तस्य छेदे। अक्षः स्तम्भोत्तरकाष्ठम्; तस्य भङ्गे। बहुवचनात् [1]कक्षकर्कटकादिभङ्गेषु च नरं दिव्यकर्तारं पुनरारोपयेत्। तुशब्देन धर्मावाहनाद्यानन्तर्यं बोधितम्। यथाह **कात्यायनः**—

" शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य च।
शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥ "

इति। इदं तु दृष्टकारणके भङ्गादौ ज्ञेयम्। अदृष्टकारणके तु पराजय एव;

" कक्षच्छेदे तुलाभङ्गे धटकर्कटकयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥ "

इति **नारद**स्मरणात्। **अपरार्क**स्तु "मूर्च्छितः शुद्धिमाप्नुयात्" इति पाठमवलम्ब्य तत्रापि जयमेवाह। **चन्द्रिकाकारो**ऽपि अमुमेव पाठमनुमेने। व्याचख्यौ च—" दृश्यमानकारणकशिक्यच्छेदादिविषयमेतत्; दैविकस्यैव शिक्यच्छेदादेरशुद्धिकारणत्वात्[2] " इति। कक्षम्; शिक्यतलम्। धटः; तुलादिसमुदायः। कर्कटौ; सर्वाङ्गवक्रौ लोहकीलौ तुलाप्रान्तावलम्बिनौ। **पितामह**स्तु यथोक्तधटस्थापनेच्छायां राज्ञा शाला कार्येत्याह।

" विशालामुच्छ्रितां शुभ्रां धटशालां तु कारयेत्।
यत्रस्थो नोपहन्येत श्वभिश्चण्डालवायसैः ॥
तत्रैव लोकपालादीन् सर्वदिक्षु निवेशयेत्।
त्रिसंध्यं पूजयेच्चैतान् गन्धमाल्यानुलेपनैः ॥
कपाटबीजसंयुक्तां परिवारकरक्षिताम्।
मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपः ॥ "

इति। उक्तार्थं हेतुवचनेनोपसंहरति। एवं शिक्यच्छेदादौ पुनरारोपणे कृते निर्णेतॄणां शुद्ध्यशुद्धिविषयं ज्ञानं निःसंशयं निश्चयरूपं भवति; येन राज्ञो दण्डादिविषयो निर्णयो भवति, तेनैव च ऐहिकामुष्मिकफलसिद्धिरिति। यथाह **पितामहः**—

" एवं कारयिता राजा भुक्त्वा भोगान् मनोरमान्।
महतीं कीर्तिमाप्नोति ब्रह्मरूपाय कल्पते ॥ "

इति ॥ १३ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेयश्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डिता**त्मज[3]**नन्दपण्डित**कृतौ **विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** दशमोऽध्यायः

[1] तुलाकक्ष—ग. ट.    [2] निर्णयकारणत्वात्—क. ग.    [3] श्री added in ख, ज, ट.

## एकादशोऽध्यायः

**अथाग्निः ॥ १ ॥ षोडशाङ्गुलं तावदन्तरं मण्डलसप्तकं कुर्यात् ॥ २ ॥**

अथैकादशेऽध्याये अग्निविधिमाह । अथ घटदिव्यानन्तरम्, अग्निदिव्यं निरूप्यत इत्यर्थः ॥ १ ॥

तत्र वक्ष्यमाणगन्तव्यमण्डलपरिमाणमाह । "तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः" इत्युक्तप्रमाणोऽङ्गुलः । तत्प्रमाणषोडशाङ्गुलमेकैकं मण्डलं तावदन्तरं षोडशाङ्गुलान्तरालम् । एवं सप्त मण्डलानि सान्तरालानि आद्यन्तयोरवस्थाननिक्षेपमण्डलाभ्यां सहितानि प्रागपवर्गाणि गोमयेन कुर्यात् । यथाह **पितामहः**—

"अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम् ।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा ॥
आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं तथा ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यमष्टमं सर्वदैवतम् ।
पुरस्तान्नवमं यत्तु तन्महत् पार्थिवं विदुः ॥"

यद्वा—

"सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ।
नवमं सर्वदैवत्यमिति दिव्यविदो विदुः ॥
गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च ।
द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम् ॥
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।
कर्तुः समपदं कार्यं मण्डलं तु प्रमाणतः ॥"

इति । पूर्वं षोडशाङ्गुलत्वं पदस्योक्त्वा यत् पुनः कर्तृपदसमत्वमुच्यते, तत् पदस्य न्यूनाधिकभावेन षोडशाङ्गुलत्वासंभवात् पक्षान्तरमभिप्रेत्येत्यवधेयम् । यथाह **नारदः**—मण्डलस्य प्रमाणं तु कुर्यात्

तत्पदसंमितम्" इति। "मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः" इति। यथा—"प्रैतु होतुश्चमसः" इत्यादिहोतृचमसादिसमाख्यया तत्र तत्र चमसे होत्रादीनां भक्षणप्राप्तिः, तथात्रापि आग्नेयादिसमाख्यया अग्न्यादीनां तत्र तत्र मण्डले पूजासिद्धिः। तथा,

"मण्डलेभ्यो दक्षिणतः कृत्वाग्निस्थापनं द्विजः।
शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्॥
अग्नये पावकायेति स्वाहान्तं प्रणवादिकम्।
अग्निहीनं समं तस्मिन्नष्टाङ्गुलमयोमयम्।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलकं समम्॥"

द्विजः प्राड्विवाकः। समं सुलक्षणम्। समं समतया तापयेत्।

"जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ तु तापयेत्॥
तापिते तु ततः पश्चादग्निमावाहयेच्छुचिः।
तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः॥
रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च।
आवाहनं तु देवानां कृत्वा पूर्वविधानवत्॥"

इति। पूर्वविधानवत् तुलादिव्योक्तविधिना धर्मावाहनादि शिरःपत्रारोपणान्तं कृत्वेत्यर्थः। एतदनन्तरं व्रीहिमर्दनं करक्षताङ्ककरणं च कर्तव्यम्। तच्च वक्ष्यति—'करौ' इत्यादिना॥ २॥

**ततः प्राङ्मुखस्य प्रसारितभुजद्वयस्य सप्ताश्वत्थपत्राणि[1] करयोर्दद्यात्॥ ३॥ तानि च करद्वयसहितानि सूत्रेण वेष्टयेत्॥ ४॥ ततस्तत्राग्निवर्णं लोहपिण्डं [2]पञ्चाशत्पलिकं समं न्यसेत्॥ ५॥**

ततः वक्ष्यमाणव्रीहिमर्दनहस्ताङ्ककरणानन्तरं पश्चिमे मण्डले स्थितस्य प्राङ्मुखस्य दिव्यकर्तुः प्रसारितभुजद्वयस्याञ्जलीकृतयोर्हस्तयोः सप्ताश्वत्थपत्राणि सप्तार्कपत्राणि वा दद्यात्॥ ३॥

[1] अश्वत्थस्य पत्राणि—क, ज; अश्वत्थपर्णानि—घ.

[2] पञ्चाशत्पलकं—झ.

ततः किमित्यत आह। तान्यश्वत्थपत्राण्यर्कपत्राणि वा द्वाभ्यां कराभ्यामञ्जलीकृताभ्यां सह श्वेतसूत्रेण सप्तवारं वेष्टयेत्। चकारात् तदुपरि सप्त शमीपत्राणि अक्षतान् सप्त दूर्वापत्राणि दध्यक्तानक्षतान् पुष्पाणि च दद्यात्। यथाहतुः **नारदपितामहौ**—

"पश्चिमे मण्डले तिष्ठेत् प्राङ्मुखः प्राञ्जलिः शुचिः।
लक्षयेत् तस्य चिह्नानि हस्तयोरुभयोरपि॥
प्राकृतानि च गूढानि सव्रणान्यव्रणानि च।
तिलव्रणकिणस्थाने कालकेऽलक्तवारिणा॥
कृत्वैवमभियुक्तस्य प्रथमं हस्तलक्षणम्।
पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः॥
तदभावेऽर्कपत्रैर्वा समैः श्लक्ष्णैः प्रपूरयेत्।
वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः॥
तेषु पिप्पलपत्रेषु शमीपत्राण्यथाक्षतान्।
दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतांस्तथा।
हस्तयोर्निक्षिपेत् तस्य कुसुमानि तथैव च॥"

इति॥ ४॥

तदनन्तरकृत्यमाह। ततः प्राड्विवाकीयाज्यहोमान्तेऽग्नौ तृतीयतापेन ताप्यमानस्यायःपिण्डस्य 'त्वमग्ने' इत्यादिवक्ष्यमाणमन्त्रेणामन्त्रणानन्तरं संदंशेन पुनरानीतस्यायःपिण्डस्य स्फुरतः सस्फुलिङ्गस्य 'त्वमग्ने सर्वभूतानाम्' इति मन्त्रेण कर्त्राप्यभिमन्त्रणे कृते पत्रान्तर्हिते अञ्जलावग्निवर्णं रूपस्पर्शाभ्यामग्निसमं लोहपिण्डमष्टाङ्गुलायामं पञ्चाशत्पलपरिमितं सममश्रिरहितं न्यसेत्। यथाहतुः **नारदपितामहौ**—

"अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरञ्जितम्।
तापे तृतीये संतप्तं ब्रूयात् सत्यपुरस्कृतम्॥"

वारद्वयमग्नौ संतापितस्य जले निर्वापितस्य च पुनः संतापः तृतीयस्तापः।

"त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्॥
जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्।
पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे॥
पापेषु दर्शयात्मानमर्चिष्मान् भव पावक।
अथवा शुद्धभावेषु शीतो भव हुताशन॥

ततस्तं समुपादाय राजा धर्मपरायणः ।
संदंशेन नियुक्तो वा कर्ता समभिमन्त्रयेत् ॥
त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
हव्यं वहसि देवानां हुतः शान्तिं प्रयच्छसि ॥
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च ।
त्वं देव तानि जानासि न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽहं वह्ने तिष्ठामि संशये ।
तस्मान्मां संशयारूढं धर्मतस्त्रातुमर्हसि ॥"

यद्वा,

"त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं वचो मम ॥
तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि ॥"

इति ॥ ५ ॥

**तमादाय नातिद्रुतं नातिविलम्बितं मण्डलेषु [1]पादन्यासं कुर्वन् व्रजेत् ॥ ६ ॥ ततः सप्तमं मण्डलमतीत्य भूमौ लोहपिण्डं जह्यात् ॥ ७ ॥**

ततः किमित्यत आह । तमयःपिण्डमञ्जलिनादाय नातिद्रुतविलम्बितं मध्यमया गत्या मण्डलेष्वेव पादन्यासं कुर्वन् गच्छेत् ॥ ६ ॥

ततः किमित्यत आह । ततः अवस्थानमण्डलात् यत् सप्तमं मण्डलं तदतीत्य अष्टमं मण्डलं प्राप्येति यावत् । भूमावपरिमिताङ्गुले नवमे मण्डले पृथुतृणपूर्णे तं लोहपिण्डं जह्यात् । यथाहतुः **योगिपितामहौ**—

"स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत् पदम् ॥
अष्टमं मण्डलं गत्वा नवमे निक्षिपेद् बुधः ।
तृणैः शुष्कैस्तु संपूर्णे महत्यग्निपरीक्षणे ॥"

इति ॥ ७ ॥

[1] पदन्यासं—क, ज, झ.

**[1]यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।**
**न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥ ८ ॥**
**भयाद्वा पातयेद्यस्तु दग्धो वा न विभाव्यते ।**
**पुनस्तं [2]हारयेल्लोहं समयस्याविशोधनात् ॥ ९ ॥**

शुद्ध्यशुद्धिनिर्णयोपायमाह । यो दिव्यकर्ता हस्तयोः क्वचित् पूर्वकृतेषु चिह्नेषु ततोऽन्यत्र वा दग्धः विस्फोटरक्तमण्डलादिमान् भवति, तमशुद्धं विनिर्दिशेत् । यः पुनः सर्वथा न दग्धः विस्फोटादिमान् न भवति, स नरो विशुद्धो भवेत् । यथाह **नारदः**—

"तस्यैवं मुक्तपिण्डस्य कुर्यात् करपरीक्षणम् ।
पूर्वदृष्टेषु चिह्नेषु ततोऽन्यत्रापि लक्षयेत् ॥
मण्डलं रक्तसंकाशं यद्यन्यद्वाग्निसंभवम् ।
सोऽविशुद्धस्तु विज्ञेयोऽसत्यधर्मव्यवस्थितः ॥
यदा तु न विभाव्येते दग्धाविति करौ तदा ।
मोच्यः शुद्धस्तु सत्कृत्य दग्धो दण्ड्यो यथाक्रमम् ॥"

इति । शुद्धिकालमाह **पितामहः**—

"निर्विशङ्केन व्रीहीणां हस्ताभ्यां मर्दने कृते ।
निर्विकारो दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ॥"

इति । यत्तु "मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्" इति, तत् "प्रहृत्य परिधीन् हारियोजनं जुहोति" इतिवत् आनन्तर्याभावेऽपि क्त्वानिर्देशादुपपन्नम् ॥ ८ ॥

दग्धादग्धसंदेहादौ तु कथमित्यत आह । यः पुनः तप्तायःपिण्डदर्शनजात् भयात् अयःपिण्डमष्टम-मण्डलाभ्यन्तरे पातयेत्, यश्च व्रीहिमर्दने कृतेऽपि दग्धादग्धत्वेन न निश्चीयते, किंतु संदिह्यते, तं लोहमयःपिण्डमुक्तरीत्या पुनरपि हारयेत् । कुतः? समयस्य कृतस्य दिव्यस्य, बहुलानुशासनात् कृतेन दिव्येन अविशोधनात् विशुद्ध्यनिश्चयादित्यर्थः । यथाह **नारदः**—

"यस्त्वन्तरा पातयति दग्धश्च न विभाव्यते ।
पुनस्तं हारयेदग्निं स्थितिरेषा दृढीकृता ॥"

[1] यदि स स्यात्—ढ.

[2] धारयेत्—क.

इति । दाहसंदेहोऽपि करयोरेव । अन्यत्र तन्निश्चयेऽपि नाशुद्धिः । किंतु संदेह इव पुनर्हरणमेव । यथाह **कात्यायनः**—

" प्रस्खलन्नभियुक्तश्चेद्धस्तादन्यत्र दह्यते ।
अदग्धं तं विदुर्देवास्तत्र भूयोऽपि दापयेत् ॥ "

इति ॥ ९ ॥

**करौ [1]विमृदितव्रीहेस्तस्यादावेव लक्षयेत् ।**
**अभिमन्त्र्यास्य करयोर्लोहपिण्डं [2]ततो न्यसेत् ॥ १० ॥**
**त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।**
**त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ॥ ११ ॥**
**व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।**
**तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ १२ ॥**

इति [3]श्रीविष्णुस्मृतौ एकादशोऽध्यायः

' ततः प्राङ्मुखस्य ' इत्यत्र ततःशब्दोक्तानन्तर्यपूर्वविधिमाह । विमृदिताः व्रीहयो येनासौ विमृदितव्रीहिः ; तस्य करौ आदावेव पिप्पलपत्रन्यासात् प्रागेव व्रणकिणतिलकादिस्थानेषु अलक्तकरसादिना लक्षयेत् अङ्कयेत् । अग्निधारणात प्राक्तनान्येतानीति ज्ञापयितुमादावेवेत्युक्तम् । विमृदितव्रीही इति पाठे तु स्पष्टमेव । यथाह **योगीश्वरः**—

" करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत् सूत्रेण वेष्टयेत् ॥ "

इति । स्वस्थानप्रच्यावनेनात्राभिधानमेकयोक्त्या आद्यन्तयोः व्रीहिमर्दनस्य प्राप्त्यर्थम् ; " मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् " इति **स्मरणात्** । मृदितव्रीहेरिति सामान्याभिधानेऽपि सप्तवारमिति ज्ञेयम् ; " व्रीहीन् प्रगृह्य यत्नेन सप्त वारांस्तु मर्दयेत् " इति **नारदस्मरणात्** । ' ततस्तत्राग्निवर्णम् ' इत्यत्र ततःशब्दोक्तानन्तर्यपूर्वविधिमाह । ततः शिरस्यारोपितपत्रस्य हस्तवेष्टनाद्यनन्तरं तृतीये तापे तप्यमानमयःपिण्डं वक्ष्यमाणैर्मन्त्रैः प्राड्विवाकः स्वयमभिमन्त्र्य ' त्वमग्ने ' इत्यादिमन्त्रैः कर्तारं चाभिमन्त्र्यास्य करयोर्लोहपिण्डं न्यसेत् । पुनः निष्परिमाणलोहपिण्डपरामर्शः परिमाणान्तरप्राप्त्यर्थम् । यथाहतुः **शङ्खलिखितौ**—" अथ सप्ताश्वत्थपर्णा-

[1] विमृदितव्रीही तस्य—ठ. [2] तदा—ज.
[3] वैष्णवे—क ; वैष्णवे धर्मशास्त्रे शुद्धिप्रकरणम्—ज, ट.

न्तरितं षोडशपलमग्निवर्णं लोहपिण्डमञ्जलिनादाय सप्तपदं गच्छेत्" इति। परिमाणयोर्व्यवस्था च कर्तुर्बलाबलतारतम्येन कार्या। पुनर्न्यासोपन्यासः पूर्वोक्तराजप्राड्विवाकरूपकर्तृविकल्पप्राप्त्यर्थः। स्वस्थानच्यावनेनाभिमन्त्रणाभिधानं स्मृत्यन्तरोक्तहोमचतुष्टयस्यानित्यताज्ञापनाय। तेन चायःपिण्डसंतापकाग्निसंनिपत्योपकारकस्य प्राड्विवाकहोममात्रस्यैवानुष्ठानम्; नारादुपकारकस्य होमचतुष्टयस्य। अत एव वाक्यद्वयेऽपि क्रमबोधकततःशब्दोपादानमन्याव्यवधानबोधनायेति **चन्द्रिका**स्वारस्यम्॥ १०॥

प्राड्विवाकीयाभिमन्त्रणमन्त्रमाह। हे अग्ने, त्वं सर्वेषां जरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां प्राणिनामुक्ताकृत्यादिपावकत्वेन अन्तर्मध्येजठरं चरसि। तेन यान्यतीन्द्रियत्वेन धर्मादीनि मानवाः न विदुः, तान्यपि साक्षिवत् साक्षाद् द्रष्टृत्वेन त्वमेव, भो अग्ने, विजानीषे। पुनः संबोधनं झटिति सांमुख्याय। 'देव जानीषे' इति पाठे, देव, द्युतिमन्नित्यर्थः। व्यवहारे ऋणादिप्रयोगे पातकाद्यभियोगे वा अभिशस्तः मिथ्यावादित्वेन पतितोऽयं मानुषः शुद्धिमात्मनः सत्यवादित्वमिच्छति। तस्मात् कारणात् एनमस्मात् संशयात् धर्मतः, न तु कुहकादिविद्याविलासात् त्रातुं योग्योऽसि। कर्त्रभिमन्त्रणमन्त्रस्तु **नारदयोगीश्वरो**क्तयोरन्यतरो वेदितव्यः॥ ११, १२॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासि[1]श्रीधर्माधिकारिश्री**रामपण्डिता**त्मज[1]श्री**नन्दपण्डित**कृतौ [2]**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्या**मेकादशोऽध्यायः

[1] श्री omitted in ग, ट.

[2] श्रीविष्णु—ट.

## द्वादशोऽध्यायः

**अथोदकम् ॥ १ ॥ पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्जिते-[1] ऽम्भसि ॥ २ ॥ तत्रानाभि मग्नस्यारागद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वाभिमन्त्रितमम्भः प्रविशेत् ॥ ३ ॥**

अथ द्वादशेऽध्याये जलदिव्यप्रयोगमाह । अथ अग्निदिव्यानन्तरम् उदकदिव्यमुच्यत इत्यर्थः ॥ १ ॥

तत्रोदकस्वरूपमाह । पङ्कः कर्दमः । शैवालं जलजनितवितानम् । दुष्टाः कर्कटादयः । ग्राहाः शिशुमारादयः । मत्स्याः पाठीनाद्याः । जलौकाः रक्तपाः । आदिशब्दात् तृणोर्म्यादीनां ग्रहणम् । तद्वर्जिते-ऽम्भसि प्रविशेदित्यग्रेतनेन संबन्धः । यथाह **पितामहः**—

"स्थिरतोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।
तृणशैवालरहिते जलौकामत्स्यवर्जिते ॥
देवखातेषु यत् तोयं तस्मिन् कुर्याद्विशोधनम् ।
आहार्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च ।
आविशेत् सलिले नित्यमूर्मिपङ्कविवर्जिते ॥"

इति । आहार्यं तटाकादिभ्य आनीय ताम्रकटाहादिक्षिप्तम् । शीघ्रगास्विति विशेषणात् तनुवेगासु नदीष्वपि भवति । यथाह **नारदः**—

"नदीषु तनुवेगासु सागरेषु वहेषु च ।
ह्रदेषु देवखातेषु तडागेषु सरःसु च ॥"

इति । तत्रत्यकृत्यमाह **स एव**—

"गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम् ।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ ॥"

[1] विवर्जिते—ज.

इति । **पितामहः**—

" शरान् संपूजयेत् तत्र वैणवं च धनुस्तथा ।
मङ्गलैर्धूपपुष्पैश्च ततः कर्म समाचरेत् ॥ "

इति । कर्म ; वरुणपूजादि वक्ष्यमाणम् ॥ २ ॥

ततः किमित्यत आह । तत्र ; नद्यादिजलाशये । नाभिप्रमाणोदकस्थस्य रागद्वेषरहितस्यान्यस्य कस्यचित् पुरुषस्य त्रैवर्णिकस्य यज्ञवृक्षोद्भवां धर्मस्थूणामवलम्ब्य प्राङ्मुखतयावस्थितस्य जानुनी शोध्यो हस्तद्वयेन धृत्वा वक्ष्यमाणमन्त्राभ्यां प्राड्विवाकेन स्वयं च स्मृत्यन्तरोक्तमन्त्रेणाभिमन्त्रितमम्भः प्रविशेत् । अम्भसि निमज्जेदित्यर्थः । यथाहतुः **नारदपितामहौ**—

" नाभिमात्रे जले स्थाप्यः स्तम्भवत् पुरुषो दृढम् ।
मुष्टिभ्यां प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य सः ॥
यज्ञवृक्षोद्भवामृज्वीं कीटकोटरवर्जिताम् ।
ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
तस्योरू प्रतिसंगृह्य निमज्जेदभिशापवान् ॥ "

इति । एतच्च वरुणपूजानन्तरम् । यथाह **नारदः**—

" गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ।
ततस्त्वावाहयेद्देवान् सलिलं चाभिमन्त्रयेत् ॥ "

इति । आदिशब्दात् दधिशर्करयोर्ग्रहणम् । आदौ ; धर्मावाहनादिभ्यः । देवान् ; धर्मादीन् । शिरःपत्रारोपणान्तकर्मकाण्डोपलक्षणमेतत् । तदनन्तरं जलाभिमन्त्रणं प्राड्विवाकस्य । अनन्तरं कर्तुः ॥ ३ ॥

**तत्समकालं च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः [1]शरक्षेपं कुर्यात् ॥ ४ ॥ तं चापरः पुरुषो जवेन शरमानयेत् ॥ ५ ॥**

ततः किमित्यत आह । तस्य मज्जनस्य समकालं नातिक्रूरेण नातिमृदुना च धनुषा वैणवेनापरः स्थूणाग्राहादन्यः पुरुषः क्षत्रियः तद्वृत्तिर्ब्राह्मणो वा, तोरणमूले स्थित्वा शराणां त्रयाणां वैणवानाम् अनायसाग्राणाम् अप्रतिकूले वायौ समे भूभागे सार्धशतहस्तोपरि स्थापितं लक्ष्यमुद्दिश्य क्षेपमसनं कुर्यात् ॥ ४ ॥

[1] शरमोक्षं—ज. ठ.

ततः किमित्यत आह। त्रयाणां मध्यमं शरं शरपातस्थानादेव, न तु सर्पणस्थानात्, अपरः क्षेप्तुरन्यः पुरुषः जवेन पञ्चाशद्धावकपुरुषातिशयितेन वेगेन तोरणस्थानस्थितपुरुषान्तरागमनसमकालमेवानयेत्। यथाहतुः **नारदपितामहौ**—

"क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम्।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः॥
मध्यमेन च चापेन प्रक्षिपेच्च शरत्रयम्।
हस्तानां च शते सार्धे लक्ष्यं कृत्वा विचक्षणः॥
न्यूनाधिके तु दोषः स्यात् क्षिपतः सायकांस्तथा।
शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये॥
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत्।
क्षेप्ता च क्षत्रियः प्रोक्तस्तद्वृत्तिर्ब्राह्मणोऽपि वा॥
अक्रूरहृदयः शान्तः सोपवासो नृपाज्ञया।
तेषां च प्रेषितानां च शराणां शास्त्रचोदनात्॥
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा।
शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत्॥
सर्पन् सर्पन् शरो यायाद् दूराद् दूरतरं यतः।
इषुं न प्रक्षिपेद्विद्वान् मारुते चातिवाति वै॥
विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले।
तृणगुल्मलतावल्लीवृक्षपाषाणसंयुते॥
गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम्।
करतालत्रये दत्ते प्राड्विवाकेन बन्तिमे॥
गच्छेत् तोरणमूलात्तु लक्ष्यस्थानं जवी नरः।
तस्मिन् गते द्वितीयोऽपि वेगादादाय सायकम्॥
गच्छेत् तोरणमूलं तु यतः स पुरुषो गतः।
पञ्चाशतां धावकानां यौ स्यातामधिकौ जवे।
तौ च तत्र नियोक्तव्यौ शरानयनकारणात्॥"

इति॥ ५॥

**तन्मध्ये यो न दृश्येत स शुद्धः परिकीर्तितः।**
**अन्यथा ह्यविशुद्धः स्यादेकाङ्गस्यापि दर्शने॥ ६॥**

**त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।**
**त्वमेवाम्भो विजानीषे न विदुर्यानि मानुषाः[1] ॥ ७ ॥**
**व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।**
**तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ ८ ॥**

इति [2]श्रीविष्णुस्मृतौ द्वादशोऽध्यायः

ततः किमित्यत आह । तन्मध्ये तोरणमूललक्ष्यस्थानस्थितयोः पुरुषयोः गमनागमनकालमध्ये यो जलान्निर्गतो न दृश्येत, किंतु निमग्न एवास्ते, स शुद्धः परिकीर्तितो धर्मज्ञैः । अन्यथा तावत्कालमध्ये यो जलात् उत्थितो दृश्यते, सः अशुद्ध इत्यर्थसिद्धमेवोत्तरविवक्षयाभिहितम् । तदेवाह । नोत्थित एवाशुद्धः, किंतु एकाङ्गकर्णनासादेरपि दर्शने स्थानान्तरगमने वा अशुद्ध एव । यथाहतुः **नारदपितामहौ**—

"आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धं विनिर्दिशेत् ॥
अन्यथा ह्यविशुद्धः स्यादेकाङ्गस्यापि दर्शने ।
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः ॥
शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥
निमज्ज्य प्लवते यस्तु दृष्टश्चेत् प्राणिभिर्नरः ।
पुनस्तत्र निमज्जेत् स शरचिह्नविभावितः ॥"

इति ॥ ६ ॥

प्राड्विवाकस्य जलानुमन्त्रणमन्त्रानाह । अत्राम्भःसंबोधनम् । श्लोकार्थस्तु व्याख्यात एव । **पितामहस्तु** मन्त्रान्तरमाह—

"तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ।
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥"

[1] मानवाः—ज.

[2] वैष्णवे—क, झ; वैष्णवे धर्मशास्त्रे जलदिव्यप्रकरणं द्वादशम्—ज.

इति । शोध्यस्य जलानुमन्त्रणमन्त्रमाह **योगीश्वरः**—

" सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ "

इति ॥ ७, ८ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[1]श्री**रामपण्डिता**त्मज[1]श्री**नन्द-पण्डित**कृतौ **विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** द्वादशोऽध्यायः

[1] श्री omitted in ग.

# त्रयोदशोऽध्यायः

**अथ विषम् ॥ १ ॥ विषाण्यदेयानि [1]सर्वाणि ॥ २ ॥ ऋते हिमाचलोद्भवात् [2]शार्ङ्गात् ॥ ३ ॥ तस्य च [3]यवसप्तकं घृतप्लुतमभिशस्ताय दद्यात् ॥ ४ ॥**

अथ त्रयोदशोऽध्याये विषविधिमाह । विषम् ; विषविधिरित्यर्थः ॥ १ ॥

तत्र वर्ज्यानि विषाण्याह । सर्वाणि वारिजादीनि विषाण्यदेयानि । यथाह **पितामहः**—

" वारिजानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥ "

इति । **नारदोऽपि**—

" भृष्टं च वारिजं चैव भूमिजं मिश्रितं तथा ।
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥ "

इति ॥ २ ॥

तर्हि किं विषं देयमित्यत आह । हिमगिरावपि यत् शृङ्गोद्भवं तद्भिना ; " एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् " इति **योगिस्मरणात्** । तच्च शृङ्गाकृति वत्सनाभसंज्ञकम् ; " शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य च " इति **पितामहस्मरणात्** ॥ ३ ॥

तच्च कियत्, कथं च देयमित्यत आह । तस्य विषस्य यवसप्तकं सप्तयवपरिमितं भागं, चकारात् पूर्वोक्तचतुर्यवादिपरिमितं वा पिष्टीकृतं ततः त्रिंशद्गुणेन घृतेन प्लुतं योजितं दक्षिणाभिमुखाय सोपवासायाभिशस्ताय वक्ष्यमाणमन्त्राभ्यां प्राड्विवाकेन कर्त्रा च स्मृत्यन्तरोक्तमन्त्रेणाभिमन्त्रितं देवब्राह्मणसंनिधौ महेश्वरं संपूज्य सोपवासः प्राड्विवाको दद्यात् । यथाह **नारदः**—

" अतः परं प्रवक्ष्यामि विषस्य विधिमुत्तमम् ।
यवाः सप्त प्रदातव्याः शुद्धिहेतोरसंशयम् ॥

1 सर्वाणि omitted in ज.   2 शृङ्गात्—ज.   3 घृताप्लुतं यवसप्तकम्—ज.

शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य च ।
पूर्वाह्णे शीतले देशे विषं दद्यात्तु देहिनाम् ॥
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणेन तु ।
दद्याद्धि सोपवासाय देवब्राह्मणसंनिधौ ॥
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ।
ततस्त्वावाहयेद्देवान् धर्मादीनुक्तधर्मतः ॥
हवनादि शिरःपत्रारोपणान्तं विधाय च ।
द्विजानां संनिधाने च दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः ॥ "

इति । विप्रः प्राड्विवाकः । समाहितः सोपवासः ॥ ४ ॥

**विषं वेगक्रमापेतं सुखेन यदि जीर्यते ।**
**विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्जयेत्[1] ॥ ५ ॥**
**विषत्वाद्विषमत्वाच्च क्रूरं त्वं सर्वदेहिनाम् ।**
**त्वमेव विष जानीषे न विदुर्यानि मानुषाः[2] ॥ ६ ॥**
**व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।**
**तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ ७ ॥**

**इति [3]श्रीविष्णुस्मृतौ त्रयोदशोऽध्यायः**

शुद्धिनिर्णयमाह । तत् भक्षितं विषं विषवेगानां सप्तानां धातोः धात्वन्तरप्राप्तिरूपा ये क्रमाः रोमाञ्चादयः, तैरपेतं रहितं यदि जीर्यते, तदा तं विशुद्धमिति ज्ञात्वा दिवसान्ते संध्यायां विसर्जयेत् । यथाह पितामहः—

" त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः ॥ "

इति । तल्लक्षणानि विषतन्त्रे—

" वेगो रोमाञ्चमाद्यो जनयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।

[1] विमोचयेत्—ज. [2] मानवाः—ज.
[3] वैष्णवे—क, झ ; वैष्णवे धर्मशास्त्रे विषदिव्यं त्रयोदशम्—ज.

यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥ "

इति । दिनान्तावधिः स्वल्पमात्राविषयः । सप्तयवमात्रायां तु पञ्चतालशतपरिमित एव कालः । यथाह **नारदः**—

" पञ्चतालशतं कालं निर्विकारो यदा भवेत् ।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥ "

इति । शोध्यश्च कुहकादिभ्यो रक्षणीयः । यथाह **पितामहः**—

" त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।
कुहकादिभयाद्राजा धारयेद्दिव्यकारिणम् ॥
ओषधीर्मन्त्रयोगांश्च मणीनथ विषापहान् ।
कर्तुः शरीरसंस्थांश्च गूढोत्पन्नान् परीक्षयेत् ॥
भर्जनाच्च्यावनान्मन्त्राद्धूपनान्मिश्रणात् तथा ।
राजा यत्नेन संरक्षेद्विषं शोध्याय कल्पितम् ॥ "

इति ॥ ५ ॥

प्राड्विवाकस्यानुमन्त्रणमन्त्रावाह । भो विष त्वं विषत्वात् विशेषेण सिनोति मारयतीति, विषमत्वात् स्वभावेनान्यनिरपेक्षेणैव हिमगिरिशृङ्गादिप्ररोहित्वेनातिविषमत्वाच्च सर्वेषां चतुर्विधानामपि देहिनां क्रूरं कालखण्डादिकर्तनशीलम् । शिष्टं व्याख्यातम् । **पितामहस्तु** मन्त्रान्तराण्याह—

" त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।
पापानां दर्शयात्मानं शुद्धानाममृतं भव ॥
मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम् ।
त्रायस्वैनं नरं पापात् सत्येनास्यामृतं भव ॥ "

इति । शोध्यस्यानुमन्त्रणमन्त्रमाह **योगीश्वरः**—

" त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम् ॥ "

इति ॥ ६, ७ ॥

**इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[1]श्रीरामपण्डितात्मजश्रीनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां त्रयोदशोऽध्यायः**

[1] श्री omitted in ग, ङ.

## चतुर्दशोऽध्यायः

**अथ कोशः ॥ १ ॥ उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबेत् ॥ २ ॥ इदं मया न कृतमिति [1]वदन् स्थापितदेवताभिमुखः ॥ ३ ॥**

अथ चतुर्दशोऽध्याये कोशविधिमाह । कोशः ; कोशविधिरित्यर्थः ॥ १ ॥

कोशोत्पत्तिप्रकारमाह । उग्रान् दुर्गादित्यादीन् सम्यक् षोडशोपचारपूर्वकम् अभ्यर्च्य तेषां स्नानोदकात् प्रसृतित्रयमेकस्मिन् पात्रान्तरे निधाय, अनन्तरं धर्मावाहनादिशिरःपत्रारोपणान्तविधिमनुष्ठाय 'त्वमम्भः सर्वभूतानाम्' इति जलदिव्योक्तमन्त्रेण प्राड्विवाकाभिमन्त्रितं 'सत्येन मां रक्ष त्वं वरुण' इति मन्त्रेण स्वयमभिमन्त्र्य गोमयमण्डले स्थितः सोपवासः आर्द्रवासाः सूर्याभिमुखीभूय तज्जलं पिबेत् । यथाह **नारदः**—

"अतः परं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधि यत् ॥
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याव्यसनिनः[2] कोशकार्यं विधीयते ॥
इच्छतः श्रद्दधानस्य देवब्राह्मणसंनिधौ ।
भक्तो यो यस्य देवस्य पाययेत् तस्य तज्जलम् ॥
समभावे तु देवानामादित्यस्य तु पाययेत् ।
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः ॥
भास्करस्य तु यत् तोयं ब्राह्मणं तन्न पाययेत् ।
दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ॥
इतरेषां तु देवानां स्नापयेदायुधानि तु ।
यथाविधि समभ्यर्च्य तज्जलं प्रसृतित्रयम् ॥

[1] व्याहरन् देवताभिमुखः—क, ज, ठ.

[2] व्यसनिनः—ख, ग.

पात्रान्तरे समादाय धर्मादीन् पूजयेत् ततः ।
सोपवासः प्राड्विवाको यथोक्तेनाभिमन्त्र्य तत् ॥
तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयम् ॥ ”

आदित्याभिमुखम्; पूर्वाभिमुखम्, “प्राङ्मुखं कारिणं कृत्वा” इति **पितामह**स्मरणात्। यद्यपि आदित्याभिमुखीकरणानन्तरमेव पानं प्रतीयते, क्त्वानिर्देशात्, तथापि पानात् प्रागेव श्रावणं द्रष्टव्यम्; “एनः संश्रावयित्वा तु पाययेत् प्रसृतित्रयम्” इति **नारद**स्मरणात्। तत्प्रकारमप्याह **स** एव—

“स्वेच्छया यः पिबेत् कोशं कश्चिच्चेत् दूषितो नरः ।
विसंवदेन्नरो लोभात् श्वित्री भवति दुर्मतिः ॥
आत्मनः कामकारेण कोशं पीत्वा विसंवदेत् ।
दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायते ॥ ”

इत्यभियुक्तं प्रति। अभियोक्तारं प्रत्यप्याह—

“बलात् कोशं हि यो दत्त्वा हितमिच्छेत चात्मनः ।
सर्वनाशो भवेत् तस्य तच्च कार्यं न सिध्यति ॥ ”

इति। इदं च पराजयलिङ्गाद्रोगादेरधिकं मिथ्याकोशपानफलं द्रष्टव्यम् ॥ २ ॥

कर्तुरेनःश्रवणानन्तरवक्तव्यमाह। इदमिति विवादास्पदीभूतमृणग्रहणादिकर्म पातकं वा मया न कृतमिति वदन् स्थापितदेवताभिमुखः पिबेत्। न कृतमिति वचनव्यक्तिरभावसाधने। भावसाधने तु कृतमित्येव ॥ ३ ॥

**यस्य पश्येद् द्विसप्ताहात् त्रिसप्ताहादथापि वा ।**
**रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ॥ ४ ॥**
**तमशुद्धं विजानीयात् तथा शुद्धं विपर्यये ।**
**दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ॥ ५ ॥**

इति [1]विष्णुस्मृतौ चतुर्दशोऽध्यायः

[1] वैष्णवे—क, झ; वैष्णवे धर्मशास्त्रे कोशप्रकरणं चतुर्दशम्—ज, ठ.

शुद्ध्यशुद्धिविभावनोपायमाह । यस्य कर्तुः कोशपानदिनादारभ्य द्विसप्ताहात् चतुर्दशाहं यावत्, त्रिसप्ताहात् एकविंशतिदिनं यावत्; अथापि वेत्यनास्थया त्रिरात्रसप्तरात्रयोरपि ग्रहणम्; रोगः क्षयातिसारादिः । अग्निः गृहक्षेत्रखलादिदाहः । बहुलानुशासनात् द्वितीयार्थे प्रथमा । ज्ञातीनां पुत्रदारादीनां मरणम् । राजातङ्कं राजभयं वा पश्येत्, तमशुद्धं विजानीयात् । तथा विपर्यये पूर्वोक्तनिमित्ताभावे शुद्धं विजानीयात् । यथाह **पितामहः**—

"त्रिरात्रात् सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्य दृश्येत पापकृत् स तु मानवः ॥"

इति । **कात्यायनोऽपि**—

"अथ दैवविसंवादस्त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं तु यत्नेन तमर्थं दण्डमेव च ॥"

इति । दैवविसंवादः रोगज्ञातिमरणादिः । अत्रेयं चतुर्णामप्यवधिपक्षाणां व्यवस्था । यदुक्तम्—"त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके" इत्यनेन सार्धशतकार्षापणविवादे कोश इति, तत्र त्रिरात्रम् । यच्चोक्तम्—'सुवर्णार्धोने कोशो देयः शूद्रस्य, द्विगुणेऽर्थे वैश्यस्य, त्रिगुणे राजन्यस्य' इति, तत्र सप्तरात्रम् । यच्चोक्तम्—"विंशद्दशविनाशे तु कोशपानं विधीयते" इति दशसुवर्णविवादे विंशतिसुवर्णविवादे च कोश इति, तत्र क्रमात् चदुर्दशैकविंशतिदिनानीति । रोगाश्च व्याख्याताः **कात्यायनेन**—

"ज्वरातिसारविस्फोटाः शूलास्थिपरिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्भुजभङ्गश्च व्याधयो दैविका नृणाम् ॥"

इति । ज्ञातिपदार्थमाह **बृहस्पतिः**—

"शोध्यस्य जननी तातः पुत्रो भ्राता सहोदरः ।
भार्या पुत्रवती धर्म्या ज्ञातयः परिकीर्तिताः ॥"

इति । जननीग्रहणात् सपत्नमातुर्व्युदासः, सहोदरग्रहणात् असहोदरस्य, पुत्रवतीग्रहणात् अपुत्रवत्याः, धर्म्यग्रहणात् भोगपत्न्या इति । पुत्रो मुख्यो गौणश्च, सामान्यश्रवणात् । **पितामहोऽपि**—

"तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना ॥"

तस्यैकस्यैव न; किंतु सर्वस्य पुत्रादेरपि । "रोगोऽग्निर्ज्ञातिमरणम्" इत्यादि वदता पौत्रस्नुषादेरपि मरणे पराजय इत्युक्तं भवति । तदपि प्रातिस्विक तेषामेव; न देशभङ्गमरणादि ।

" रोगोऽग्निर्ज्ञातिमरणमर्थभ्रंशो धनक्षयः ।
प्रत्यात्मिकं भवेद्यस्य तस्य विद्यात् पराजयम् ॥ "

अर्थः कार्यं विवाहादि । अवध्यनन्तरं तु न दोषः ।

" ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥ "

इति । अवधिमात्रोपलक्षणमेतत्; " कृतकालव्यतिक्रमात् " इत्युपसंहारात् । दूर्वादिस्पर्शे त्वहोरात्रमेवावधिः; " न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः " इति **मनुस्मरणात्** । नन्वत्राशुद्धिरेव वक्तव्या दण्डाभिधानाय; न शुद्धिः, प्रयोजनाभावादित्यत आह । कोशप्रक्रमेऽपि दिव्यपदोपादानं धटादिसर्वदिव्यप्राप्त्यर्थम् । तेन सर्वेष्वपि दिव्येषु शुद्धं पुरुषं नृपो वस्त्रालंकारादिभिः सत्कुर्यात्; यतोऽसौ धार्मिकः, धर्मनिर्णयकारीति । शुद्धस्य सत्कारविधानात् अशुद्धस्य दण्डो गम्यते । तदाह **कात्यायनः**—

" शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ।
विषे तोये हुताशे च तुलाकोशे च तण्डुले ॥
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ।
सहस्रं षट्शतं चैव तथा पञ्च शतानि च ।
चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत् ॥ "

इति ॥ ४, ५ ॥

इति कोशविधिः

अथ तण्डुलविधिः

एवं पञ्चापि महादिव्यानि भगवता स्वयमेवोक्तानि । स्मृत्यन्तरोक्तान्यपि अल्पाभियोगविषयाणि अत्राभिधीयन्ते । तत्र **पितामहः**—

" तण्डुलानां प्रवक्ष्यामि विधिं भक्षणवर्जने ।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥ "

चौर्यं धनविवादोपलक्षणम्; अपह्नवोपक्रमेण " तदर्धार्धे तु तण्डुलाः " इति **स्मरणात्** ।

" तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादिपूर्वं तु कृत्वा रात्रौ विधानतः ॥

प्रभाते कारिणे देयास्त्रिकृत्वः प्राङ्मुखस्य तु ।
सोपवासः सूर्यगृहे तण्डुलान् भक्षयेच्छुचिः ॥
प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत् ततः ॥ "

भक्षयित्वेति ण्यन्ताण्णिचि रूपम् ।

" भूर्जस्यैव तु नान्यस्य अलाभे पिप्पलस्य तु ।
शोणितं दृश्यते यस्य हनुस्तालु च शीर्यति ॥
गात्रं तु कम्पते यस्य तमशुद्धं विनिर्दिशेत् ।
रक्तास्ते तण्डुला यस्य यस्य न स्युः सुचर्विताः ॥
विकृतं ष्ठीवनं यस्य तमशुद्धं विनिर्दिशेत् ।
उपजिह्वातालुपाती मुखरोगी तथैव च ।
तेषां न तण्डुला देयाः शङ्कया शोणितस्य तु ॥ "

इति ।

इति तण्डुलविधिः

अथ तप्तमाषविधिः

तत्र पितामहः—

" तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलतोर्ध्वं वा मृन्मयं वापि वर्तुलम् ।
पूरयेद् घृततैलाभ्यां विंशत्या तु पलैस्तु तत् ।
सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत् ततः ॥ "

सुवर्णमाषकः सुवर्णषोडशभागः । सुवर्णग्रहणं रजतादिमाषनिवृत्त्यर्थम् । ततश्च हैमं पञ्चकृष्णलकं माषं निक्षिपेदित्यर्थः ।

" अङ्गुष्ठाङ्गुलियोगेन चोद्धरेत् तप्तमाषकम् ।
कराग्रं यो न धुनुयाद् विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ॥ "

इति । अङ्गुष्ठस्याङ्गुल्योस्तर्जनीमध्यमयोश्च योगेनेति प्राञ्चः । उद्धरेदित्यनेनोद्धारमात्रं विवक्षितम्; न बहिः प्रक्षेपः । अत्रापि धर्मावहनादि शिरःपत्रारोपणान्तं साधारणमिति द्रष्टव्यम् ।

" समुद्धरेत् तैलघृतात् सुतप्तात् तप्तमाषकम् ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥ "

इति बृहस्पतिस्मरणात् । सत्यमामन्त्र्य; "एह्येहि भगवन् धर्म" इत्यादिनावाह्येत्यर्थः । प्रार्थनामन्त्रास्तु अग्निदिव्योक्ता एवोभयोरिति ।

इति तप्तमाषविधिः

अथ घृतकाञ्चनविधिः

तत्र **पितामहः**—

" अथातः संप्रवक्ष्यामि विधानं घृतकाञ्चने ।
सौवर्णे राजते ताम्र आयसे वापि मृन्मये ॥
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ।
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम् ॥
सलिलेन सकृद्धौतां प्रक्षिपेत् तत्र मुद्रिकाम् ।
भ्रमद्वीचीतरङ्गाढ्ये सनखस्पर्शगोचरे ॥
परीक्षेतार्द्रपत्रेण चुरुकारं सघोषकम् ।
ततश्चानेन मन्त्रेण सकृत् तदभिमन्त्रयेत् ॥
परं पवित्रममृतं घृत त्वं सर्वकर्मसु[1] ।
दह पावक पापं त्वं हिमशीतं शुचौ भव ॥
उपोषितं ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ॥
प्रादेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ।
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाशुचिः ॥ "

इति । धर्मावाहनाद्यत्राप्यनुसंधेयम् । घृतानुमन्त्रणमिदं प्राड्विवाकस्य । शोध्यस्य तु "त्वमग्ने" इत्यादिः पूर्वोक्त एव मन्त्रः । प्रादेशिनीपरीक्षोक्त्या तथैवोद्धरणं सिध्यति ।

इति घृतकाञ्चनविधिः

[1] यज्ञकर्मसु—ग.

अथ फालविधिः

तत्र **बृहस्पतिः**—

" आयसं द्वादशपलघटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं ततश्चौरो जिह्वया लेहयेत् सकृत् ।
मुखं मृदा समालिप्य प्राड्विवाकप्रचोदितः ।
अदग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥ "

इति । अत्रापि धर्मावाहनादि पत्रारोपणान्तं प्रार्थनामन्त्रश्चाग्निदिव्योक्तमेव ज्ञेयम् ।

इति फालविधिः

अथ धर्माधर्मविधिः

तत्र **पितामहः**—

" अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥ "

हन्तॄणामित्यादिना साहसार्थपातकाभियोगा अभिदर्शिताः ।

" राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।
लिखेद् भूर्जे पटे वापि धर्माधर्मौ सितासितौ ॥
अभ्युक्ष्य पञ्चगव्येन [1]गन्धमाल्यैः समर्चयेत् ।
जीवदानादिभिर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद् गन्धैः कुसुमैश्च सितासितैः ।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥
गोमयेन मृदा वापि पिण्डौ कार्यौ समौ ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ ।
आवाहयेत् ततो देवान् लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ॥ "

[1] ञ begins from here.

अनेन शोध्य एवाभिमन्त्रयीत ।

" अभियुक्तस्तयोश्चैवं प्रगृह्णीताविलम्बितः ।
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ।
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥ "

इति ।

इति धर्माधर्मविधिः

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मजश्रीनन्द-पण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां चतुर्दशोऽध्यायः

## पञ्चदशोऽध्यायः

**अथ द्वादश पुत्रा भवन्ति ॥ १ ॥ [1]स्वक्षेत्रे संस्कृताया-मुत्पादितः [2]स्वयमौरसः प्रथमः ॥ २ ॥**

एवमुक्तवक्ष्यमाणव्यवहारपदापेक्षिते मानुषदैविके प्रमाणे निर्णीय, सांप्रतं पञ्चमषष्ठयोरुक्तावशिष्ट-मष्टादशं दायभागपदं व्याचिख्यासुः पञ्चदशेऽध्याये मुख्यगौणपुत्रान् विभज्य प्रतिजानीते। विभाजको-पाधिसंख्यया पुत्राणां द्वादशत्वम्। यत्तु **बृहस्पतिना** "पुत्रास्त्रयोदश प्रोक्ता मनुना येन पूर्वशः" इति त्रयोदशत्वम्, **देवलेन** च "पुत्राख्या दश पञ्च च" इति पञ्चदशत्वमुक्तं, तदवान्तरीयभेदमादाय, नात्यन्तभेदेनेति न विरोधः; तेषामप्यत्रैवान्तर्भावात् ॥ १ ॥

तत्र मुख्यं लक्षयति। उत्पादितत्वमौरसत्वम्[3]। दत्तक्रीतादिष्वतिप्रसङ्गवारणाय स्वयमिति विशेषणम्, 'अहमस्योत्पादयिता' इति स्वात्मानुसंधानवतेत्यर्थः; "अहं गर्भमदधाम्" इति "एवं ते गर्भं दधाम्यसौ" इति च मन्त्रयोगात्[4]; अन्यथा प्रमत्तोत्पन्ने अविज्ञातोत्पन्ने चातिप्रसङ्गात्। तस्य च कानीनेऽतिप्रसङ्गनिवृत्त्यै संस्कृतायामिति। तस्यापि कुण्डगोलकयोरतिप्रसङ्गनिवृत्त्यै स्वयमिति संस्कृताया अपि विशेषणम्। तदपि अक्षतयोनिपौनर्भवेऽतिप्रसक्तम्; तस्या अपि स्वयं संस्कृतत्वात्। तद्वारणाय स्वमात्रसंस्कृतेति वक्तव्यम्। एतेन द्रौपदीपुत्रेष्वपि उक्तौरसत्वं सिद्धम्। न च वक्ष्यमाणेन स्वक्षेत्रपदेनैव तद्वारणम्, पुनर्भ्वाः परक्षेत्रत्वादिति वाच्यम्; तस्या अपि स्वयं संस्कृतत्वेन स्वक्षेत्रत्वात्; अन्यथा तद्भर्तुः पारदार्यप्रायश्चित्तप्रसङ्गात्। तस्यापि देवरसंस्कृतभ्रातृक्षेत्रोत्पन्ने देवरौरसत्ववारणाय स्वक्षेत्र इति; तस्या भ्रात्रे वाग्दानेन भ्रातृक्षेत्रत्वात्; अन्यथा तस्यामुत्पन्नस्य भ्रातृक्षेत्रजत्वानुपपत्तेः। सर्वस्य चास्य पुत्रिका-पुत्रेऽतिप्रसक्तिवारणाय पुंस्त्वनिर्देशः। न च 'स्वक्षेत्रे स्वयमुत्पादितः' इत्येतावतैवार्थसिद्धिः; वाग्दत्ताया-मसंस्कृतायां स्वयमुत्पादितेऽतिप्रसङ्गात्। सर्वं चेदं या उदकपूर्वकमेकस्मै दत्ता, तस्मिन् संस्कारात् प्रागेव मृते तत आच्छिद्यैवान्यस्मै दत्ता, तेन च संस्कृता, तदुत्पन्ने पौनर्भवेऽतिप्रसक्तम्; स्वक्षेत्रे स्वमात्रसंस्कृते स्वयमुत्पादितत्वात्। तद्वारणाय स्वमात्रक्षेत्र इति वक्तव्यम्; तस्याः पूर्वं प्रतिग्रहीतुः

[1] स्वे क्षेत्रे—झ, ठ.

[2] स्वयं omitted in ज, ठ.

[3] उत्पादितत्वाभावस्य—ग.

[4] प्रयोगात्—ख, ग, छ.

प्रतिग्रहेण, पश्चात् संस्कर्तुः संस्कारेण गान्धर्वादिविवाहेष्विव स्वत्वोत्पत्त्या उभयक्षेत्रत्वात्। पुनश्चेदं क्षतस्वसंस्कृतोत्पन्ने पौनर्भवेऽतिप्रसक्तम्। तद्वारणाय धर्मपत्नीत्वं क्षेत्रविशेषणं कार्यम्। न चैतावतैवालम्, "औरसो धर्मपत्नीजः" इति **योगिस्मरणा**दिति वाच्यम्; क्षेत्रजादावतिप्रसङ्गात्। तद्वारणाय यत् किंचित् धर्मपत्नीत्वनिर्वाहकमनन्यपूर्विकात्वादि, तत् सर्वमत्र विवक्षितम्; तत्र तत्रोपयोगात्। ततश्च स्वमात्रक्षेत्रे धर्मपत्न्यां स्वमात्रसंस्कृतायां स्वयमुत्पादित औरस इति सिद्धम्।

यत्तु "सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं जानीयात्" इति **बौधायनीयं** सवर्णात्वविशेषणं, तदौरसेषु प्रकृष्टौरसप्रतिपादनाय; नान्येषां निराकरणायेति मन्तव्यम्। न चैवं शूद्रापुत्रस्यापि औरसत्वापत्तिः। भवतु; किं बाधकमिति चेत्, पुत्रप्रतिनिधित्वेन तस्य परिगणनमेव बाधकमित्युच्यते। यथाह **मनुः**—

"कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।
स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः॥"

इति। मैवम्; नायमूढोत्पन्नः शौद्रः प्रतिनिधीक्रियते; "अंशं शूद्रासुतो हरेत्" इत्येकांशदानविधिविरोधात्। किंतु अनूढायां शूद्रायामुत्पन्न एव। अत एव तस्यानंशत्वं स एवाह—"ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न दायभाक्" इति। तस्मादूढायां शूद्रायामुत्पन्नस्यौरसत्वे न किंचिद्बाधकम्। न च—"औरसो धर्मपत्नीजः" इति **योगिस्मरणं** बाधकम्; शूद्राया धर्मपत्नीत्वाभावात्; "कृष्णवर्णा वै रामा रमणायैव, न धर्माय" इति **वसिष्ठस्मरणात्**—इति वाच्यम्। धर्मोऽत्र श्रौतस्मार्तादिः; न गृहस्थाश्रममात्रधर्म इति व्याख्येयम्; अन्यथा परिणयनविधिविरोधात्। ततश्च दारानुकल्पत्वेन शूद्राया विधानेन गृहस्थाश्रमविहितातिथिपूजनादिसहकारित्वेन धर्मपत्नीत्वं न विरुद्धम्। तस्मात् यथोक्तमेव साधीय इति। प्रथमः; मुख्य इत्यर्थः;

"स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेत् सुतम्[1]।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पिकम्॥"

इति **मनुस्मरणात्**॥ २॥

**नियुक्तायां सपिण्डेनोत्तमवर्णेन[2] वोत्पादितः क्षेत्रजो द्वितीयः॥ ३॥**

अथ गौणान् लक्षयति। वाग्दानानन्तरमेव मृतपतिकायां क्लीबभार्यायां व्याधितभार्यायां वा पुत्रोत्पत्त्यर्थं गुरुभिर्नियुक्तायां गुर्वनुज्ञातेनैव देवरेण कनिष्ठेन ज्येष्ठेन वा भर्तुर्भ्रात्रा, तदभावे सपिण्डेन, तस्याप्यभावे सगोत्रेण, तस्याप्यभावे समानप्रवरेण, तस्याप्यभावे उत्तमवर्णेन ब्राह्मणेन वा य उत्पादितः, स

1 उत्पादयेत्तु यम्—ग.

2 वर्णेनैव—ठ.

मृतस्य क्लीबादेर्वा पत्युः क्षेत्रजः पुत्रो भवति । स द्वितीयः; स्वक्षेत्रे स्वयं संस्कृतायामपि स्वयमनुत्पादात् कक्ष्यान्तरितत्वेन विप्रकर्षात् द्वितीयः क्लीबादिक्षेत्रजः; "तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः" इति **वसिष्ठ**स्मरणात् । वाग्दत्तोत्पन्नस्तु स्वयमसंस्कृतायां स्वयमनुत्पादनेन च कक्ष्याद्वयान्तरितत्वात् [1]तृतीयो युक्तः । अत एव **याज्ञवल्क्येन** तदभिप्राय एव क्षेत्रजस्य तृतीयत्वोपन्यासः । अत्र **मनुः**—

"यस्त्वन्यजः प्रमीतस्य क्लीबस्य व्याधितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥"

इति । प्रमीतस्य; वाग्दानानन्तरं विवाहात् प्राक्;

"नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥"

इति विधवानियोजनं विनिन्द्य,

"यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजां विन्देत देवरः ॥"

इति **मनु**नैवाभिधानात् । देवराभावे सपिण्डाद्या नियोज्याः । यथाह **गौतमः**—"अपतिरपत्यलिप्सुर्देवरात् पिण्डगोत्रर्षिसंबन्धेभ्यो योनिमात्राद्वा" इति । देवराभावविषयत्वं चैतेषां **तेनैव** स्पष्टीकृतम् "देवरवत्यामन्यजातमभागम्" इति वदता । योनिमात्रात् ब्राह्मणजातिमात्रात्; "सर्वाभावे ब्राह्मणजातिमात्रात्" इति **शङ्ख**स्मरणात् । गमनं च घृताभ्यक्ताया: घृताभ्यक्तेन कार्यम्; "नियुक्तां सर्वाङ्गघृताभ्यक्तां घृतेन सर्वाङ्गमात्मानमभ्यज्य गच्छेत्" इति **उशनः**स्मरणात् । अयमेवापुत्रेण बीजिना 'अत्रोत्पन्नमपत्यमावयोर्भविष्यति' इति संविदा जनितो बीजिनोऽपि बीजजः पुत्र इत्युच्यते । यथाह **मनुः**—

"क्रियाभ्युपगमात् क्षेत्रं [2]बीजार्थं यत् प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रक एव च ॥"

इति । क्रिया संवित् । स चोभयोः रिक्थहरः पिण्डदश्च;

"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥"

इति **योगि**स्मरणात् । यत्तु—"औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः" इति **योगिना** पुत्रिकासुतस्य द्वितीयस्थाने परिगणनं कृतं, तत् पुत्रिकैव सुतः पुत्रिकासुत इत्यर्थमभिप्रेत्य; तस्याः स्वोत्पन्नत्वेन

[1] द्वितीयः—ख, ग.

[2] बीजार्थे—ट.

परोत्पन्नक्षेत्रजात् संनिकृष्टत्वात् । यत्तु "तृतीयः पुत्रिका विज्ञायते" इति **वसिष्ठेन** तस्यास्तृतीयत्वमुक्तं, तत् पित्रा असपिण्डासगोत्रभर्तृसापेक्षतया[1] संततिजनकत्वेन फलतो विप्रकर्षात् ॥ ३ ॥

**पुत्रिकापुत्रस्तृतीयः ॥ ४ ॥ यस्त्वस्याः पुत्रः स मे पुत्रो भवेदिति या पित्रा दत्ता सा पुत्रिका ॥ ५ ॥ [2]पुत्रिकाविधिं विनापि प्रतिपादिता भ्रातृविहीना[3] पुत्रिकैव[4] ॥ ६ ॥**

तृतीयं लक्षयति । वक्ष्यमाणविधिना परिभाषिता कन्या पुत्रिका । तस्याः पुत्रः पुत्रिकापुत्रः । स तृतीयः ; स्वक्षेत्रजत्वस्वोत्पादितत्वयोरभावेन कक्ष्याद्वयान्तरितत्वात् ॥ ४ ॥

पुत्रिकां लक्षयति । 'अभ्रातृकामिमां कन्यां तुभ्यं दास्यामि । अस्यां त्वत्तो यः पुत्रो भवेत् स मे भवेत्' इति वरेण सह संविदं कृत्वा या पित्रा दत्ता सा पुत्रिका । यथाह **वसिष्ठः**—

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥"

इति । संवित्करणं चाग्निं प्रजापतिं चेष्ट्वा भवति । यथाह **गौतमः**—"पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवाद्य" इति । होमश्चाज्येनेति **हरदत्तः** ; तन्न ;

"पुत्रिकायाः प्रदाने तु स्थालीपाकेन धर्मवित् ।
अग्निं प्रजापतिं चेष्ट्वा पुत्रदाने तथैव च ॥"

इति **जाबालिस्मरणात्** ॥ ५ ॥

प्रकारान्तरेणापि तां लक्षयति । पूर्वोक्ता या परिभाषिता पुत्रिका, तद्विधिं विनापि अभिसन्धिमात्रेणैव तद्विशेषेण प्रतिपादिता दत्ता भ्रातृविहीना सोदरभ्रातृरहिता पुत्रिकैव भवति । तेन तत्पुत्रोऽपि पुत्रिकापुत्रः । यथाह **गौतमः**—"अभिसंधिमात्रात् पुत्रिकेत्येकेषाम्" इति । 'पितृभ्रातृविहीना' इति पाठे तु पितृमरणानन्तरमभ्रातृपितृकाभिसंधिभावेन पितामहाद्यभिसंधिनापि पुत्रिकैव ; "मृते पितरि या दत्ता सा विज्ञेया तु पुत्रिका" इति **ब्रह्मपुराणात्** । तेन च तत्पुत्र एव तस्य रिक्थपिण्डाधिकारीति । ननु—षष्ठीतत्पुरुषात् कर्मधारयस्य लघुत्वात् पुत्रिकैव पुत्र इति कुतो न व्याख्यायते? "तृतीयः पुत्रिका विज्ञायते" इति **वसिष्ठ-**

1 सापेक्षत्वेन—छ.

2 All the MSS. and printed editions read 'पुत्रिकाविधिना अप्रतिपादिता'; however, according to the commentary, the reading 'पुत्रिकाविधिं विनापि प्रतिपादिता' seems to be appropriate.

3 भ्रातृहीना—ग, ज.

4 पुत्रिकैव omitted in ज.

वाक्यानुग्रहात्। न च 'यस्त्वस्याः पुत्रः स मे पुत्रः' इति पुत्रिकालक्षणकरणात् तदादर इति वाच्यम्; तस्य प्रकारान्तरेण पुत्रिकापुत्रप्रतिपादनार्थत्वात्; अत एव **वसिष्ठेन** "तृतीयः पुत्रिका" इति पुत्रिकामभिधाय पुत्रिकापुत्रोऽपि पृथगभिहितः "अभ्रातृकां प्रदास्यामि" इत्यनेन। तस्मात् तथैव व्याख्येयमिति चेत्—मैवम्; श्रुतिस्मृतिभ्यां तस्य पक्षस्य दूषितत्वात्। तत्र श्रुतिः—"अभ्रातेव पुंस एति प्रतीची" इति। अस्यार्थः—अभ्रातेव पुंसः; यथा अभ्रातृका कन्या दत्तापि सती पित्रा, ऊढापि भर्त्रा पुनः पुंसः प्रतीची पितॄनेव पितृवंशमेवाभिमुखी एति संतानकर्मणे पिण्डदानार्थं, न पतिवंशमिति। सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्धयति, न भर्तृवंशमिति। स्मृतिरपि **वसिष्ठस्य**—"अभ्रातृका पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वम्" इति। अत्रोभयत्रापि दत्तप्रत्यावृत्तिलक्षणदोषसंकीर्तनात् पुत्रिकैव पुत्र इति पक्ष एवासभ्य इति [1]एनमुपेक्षितवान् श्रीभगवान्॥ ६॥

**पौनर्भवश्चतुर्थः॥ ७॥ अक्षता [2]भूयः संस्कृता पुनर्भूः॥ ८॥ भूयस्त्वसंस्कृतापि परपूर्वा॥ ९॥**

चतुर्थं लक्षयति। वक्ष्यमाणलक्षणायां पुनर्भ्वां जातः पौनर्भवः। स [3]तुर्यः; अक्षतायामन्यसंस्कृतायां स्वमात्रक्षेत्रत्वस्वमात्रसंस्कृतत्वधर्मपत्नीत्वानां त्रयाणामभावात् कक्ष्यात्रयान्तरितत्वात्। क्षतायां तु धर्मपत्नीत्वाभावेऽपि स्वमात्रक्षेत्रत्वं स्वमात्रसंस्कृतत्वं चास्त्येवेति न त्रितयाभावो यद्यपि, तथापि पुनर्भूत्वनिमित्तमेवैतदुभयमपि, न भार्यात्वनिमित्तमित्यस्त्येव कक्ष्यात्रयान्तरितत्वं तदुत्पन्नस्यापि। न चैवं स्वसंस्कृतायां मात्रपदं न देयम्; पुनर्भ्वां भार्यात्वनिमित्तपुनःसंस्काराभावेनातिप्रसङ्गाभावादिति वाच्यम्; संस्कारसामान्यविवक्षायामतिप्रसङ्गवारणार्थत्वात्; विशेषविवक्षायां तु तद्वैयर्थ्यस्येष्टत्वात्। स्वैरिण्यां तु संस्काराविधानादेव न स्वसंस्कृतत्वम्। तदभावाच्च न स्वक्षेत्रत्वम्। धर्मपत्नीत्वं तु दूरापास्तमेवेति त्रितयान्तरितत्वात् चतुर्थत्वं तत्पुत्रस्यापि स्पष्टमेव। यत्तु **योगीश्वरेण** अस्य षष्ठत्वमुक्तं, तत् दानश्राद्धाद्यनर्हत्वेनातिविप्रकर्षमभिप्रेत्येति न विरोधः॥ ७॥

पुनर्भूलक्षणमाह। अक्षता संस्कारमात्रदूषिता पुनः संस्कृता चेत् पुनर्भूः। ननु—अनन्यपूर्विकापरिणयनविधानात् पुनः संस्कार एवानुपपन्नः; क्रियमाणोऽपि वा कथमुत्पद्येत? सकृत्प्रवृत्तिकविध्यवगमितसजातीयसंस्कारान्तरावरुद्धत्वादिति चेत्—बाढम्;

"सा चेदक्षतयोनिः स्याद् गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति॥"

इति **मनुना** पूर्वसंस्कारवत् संस्कारान्तरस्याभिधानान्न दोषः॥ ८॥

[1] एतम्—ट. [2] पुनः—ज, ठ. [3] चतुर्थः—छ, ट.

द्विविधा पुनर्भूः—अक्षता क्षता चेति; "अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः" इति **योगिस्मरणात्**। तत्राक्षता लक्षिता। क्षतां लक्षयति। या तु संस्कारात् प्रागेव परपूर्वा परोपभुक्ता, सा यद्यपि भूयो न संस्क्रियते, क्रियमाणसंस्कारस्यैव प्रथमत्वात्, तथापि पुनर्भूर्भवति; पुनर्मिथुनीभवनात्। अत एव **मनुना**—

"या पत्या वा परित्यक्ता विधवा स्वेच्छयापि वा।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते॥"

इत्यनेन सधवाविधवात्वाद्यनादृत्य पुनर्मिथुनीभवनमेव पौनर्भवत्वे निमित्तमित्युपन्यस्तम्। यद्वा पूर्वसूत्र एव क्षतोपलक्षणीया; अक्षतायाः द्विःसंस्कारेण पुनर्भूत्वे क्षतायाः सकृत्संस्कारेणैव पुनर्भूत्वसिद्धेः। अत्र तु स्वैरिण्या अपि पुनर्भूत्वं प्रतिपाद्यते। या परपूर्वा परं पूर्वं पतिमुत्सृज्यान्यमाश्रिता, सा भूयः संस्काराभावेऽपि पुनर्भूर्भवति। अनेन च पुनर्भूत्वे पुनः संस्कारः पुनर्मिथुनीभावश्चेति द्वयं निमित्तं दर्शितम्। यथाह **वसिष्ठः**—"या वा क्लीबं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते, मृते वा सा पुनर्भूर्भवति" इति। स्वैरिण्याः पुनः संस्काराभाव उपपादितोऽस्माभिः सविस्तरं **मिताक्षरटीकायां प्रमिताक्षरायामि**ति नेहोच्यते॥ ९॥

**कानीनः पञ्चमः॥ १०॥ पितृगृहे असंस्कृतयैवोत्पादितः॥ ११॥ स च पाणिग्राहस्य॥ १२॥**

पञ्चमं लक्षयति। कन्या वक्ष्यमाणलक्षणा। तस्यां यो जायते स कानीनः पञ्चमः; स्वक्षेत्रत्वादिविशेषणचतुष्टयाभावेन कक्ष्याचतुष्टयान्तरितत्वात्॥ १०॥

कन्यालक्षणाय पुनस्तमेव लक्षयति। वाचा दत्तापि या वरेणासंस्कृता, तस्यां पितृगृहस्थितायामेव यो जायते, स कानीनः। अनेनेदृशी कन्येत्युक्तं भवति। अत्रासंस्कृतयेति वचनात् वाग्दानानन्तर्यं गम्यते। अन्यथा अप्रत्तयेत्येवावक्ष्यत्। तथाच **बोधायनः**—"असंस्कृतामनतिसृष्टां यामुपगच्छेत्, तस्यां यो जातः स कानीनो मातामहसुतः" इति। अत्रासंस्कृतामनतिसृष्टामिति विशेषणद्वयोपादानात् वाग्दत्तायामसंस्कृतायां जातो वोढुः पुत्रो भवति। अवाग्दत्तायां जातो मातामहपुत्र इति सिध्यति; "कानीनः कन्यकाजातो मातामहसुतो मतः" इति **योगिस्मरणात्**॥ ११॥

वाग्दत्तायां पितृपत्योः संबन्धसाम्यात् कस्यासावित्यत आह। सः वाङ्मात्रदत्तायामसंस्कृतायामुत्पन्नः पुत्रः पाणिग्राहस्य, यस्तस्याः पाणिं ग्रहीष्यति तस्यासौ पुत्रः; वाग्दानादेव पतिस्वत्वोत्पत्तेः। यथाह **मनुः**—

"पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्॥"

इति। कन्या; वाग्दत्ता असंस्कृतेति ध्येयम्। अनेन वाग्दानाभावे यो जायते, स मातामहस्य पुत्र इत्युक्तं भवति। तच्चोपपादितमधस्तात्। यदा तु पितृसंस्कृतयेत्येव पाठः, तदा त्वयमर्थः सुलभ एव। ननु पितृपतिसंबन्धवत् बीजिसंबन्धोऽपि विद्यते; तत्कथं तस्याप्यसौ न स्यादिति चेत्; सत्यम्; "बीजाद्योनिर्बलीयसी" इति न्यायेन तस्य दौर्बल्यात्॥ १२॥

**गृहे च गूढोत्पन्नः षष्ठः॥ १३॥ यस्य तल्पजस्तस्यासौ॥ १४॥ सहोढः सप्तमः॥ १५॥ [1]या गर्भिणी संस्क्रियते तस्याः पुत्रः॥ १६॥ स च पाणिग्राहस्य॥ १७॥**

षष्ठं लक्षयति। पितृगृहानुवृत्तौ पुनर्गृहोपादानं स्वगृहावगमाय। तेन चोढा सिध्यति। तस्यां भर्तृगृहे क्षेत्रक्षेत्रिभ्यामविज्ञायमानात् सवर्णात्, "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" इति **योगिना** पुत्रसाजात्याभिधानात्, उत्पन्नः पुत्रः गूढजः। स च षष्ठः; स्वक्षेत्रजत्वादिसत्त्वेऽपि स्वानुत्पत्त्या विशिष्टाभावात् कक्ष्याचतुष्टयेन अविज्ञातोत्पन्नत्वेन पञ्चम्या च व्यवधानात्। अनेन च पूर्वत्रोत्पादकानां विज्ञातत्वसिद्धया औरसलक्षणे आत्मन उत्पादकताज्ञानं स्वयंशब्दार्थ इति सिध्यति। तदभावाच्चास्य षष्ठत्वम्। यथाह **मनुः**—

"उत्पाद्यते गृहे यस्तु न विज्ञायेत कस्य सः।
स गृहे गूढमुत्पन्नस्तस्य स्याद्यस्य तल्पजः॥"

इति॥ १३॥

बीजिक्षेत्रिणोस्तुल्यसंबन्धात् कस्यासावित्यत आह। यस्य भार्यायां जातः, तस्यासौ पुत्र इत्यर्थः; योनिप्राबल्यात्॥ १४॥

सप्तमं लक्षयति। यः सहैव भार्यया उह्यते, स सहोढः। स च सप्तमः। पूर्वोक्ताभिः स्वक्षेत्रजत्वादि-पञ्चकक्ष्याभिः विज्ञातजत्वरूपया षष्ठ्या च व्यवधानात्॥ १५॥

सहोढशब्दार्थं व्याचष्टे। या गर्भिण्येव संस्कृता, तस्याः स एव पुत्रः सहोढः। अयमेव कानीनगूढजाभ्यां तस्य विशेषः—यत् वाग्दानात् पूर्वमेव ज्ञाताज्ञाता वा गर्भोत्पत्तिरिति। ननु वाग्दानात् पूर्वमपि संभूतः कानीनो भवतीत्युक्तम्; तर्हि तस्मात् कोऽस्य भेद इति चेत्; सत्यम्; तस्य संस्कारात् प्रागेव प्रसूतिः; अस्य तु संस्कारादनन्तरमिति महानेव भेदः॥ १६॥

[1] This Sūtra omitted in ख, ट.

वोढृमातामहयोः तुल्यसंबन्धात् कस्यासावित्यत आह। स सहोढः यस्तस्याः गर्भिण्याः पाणिं गृह्णाति तस्य पुत्रः; मात्रा सह दानेन मातामहसंबन्धनिवृत्तेः। यथाह मनुः—

"या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती।
वोढुः स गर्भो भवति सहोढ इति चोच्यते॥"

इति॥ १७॥

**[1]दत्तकश्चाष्टमः॥ १८॥ स च मातापितृभ्यां यस्य दत्तः॥ १९॥**

एवं क्षेत्रद्वारा संनिकृष्टान् समभिधाय, इदानीं बीजक्षेत्राभ्यामसंनिकृष्टान् विवक्षुरष्टमं लक्षयति। दत्त एव दत्तकः। स चाष्टमः; बीजक्षेत्रयोः सर्वथा परकीयत्वेन सहोढादपि विप्रकृष्टत्वात्। ननु तस्यापि वाग्दानात् प्रागेव गर्भसंभवात् बीजक्षेत्रयोः परकीयत्वाविशेष एवेति चेत्; बाढम्; तथाप्युत्तरकालमपि दानेन तस्य क्षेत्रे स्वत्वसंभवात्; प्रकृते तु सर्वथैव तदभावात्। यद्येवं क्रीतादिष्वपि समानत्वात् क्रमोऽनुपपन्नः, पौर्वापर्यनियामकप्रत्यासत्तितारतम्याभावादिति चेत्; मैवम्; दृष्टप्रत्यासत्त्यभावेऽपि क्रमानुपपत्त्या अदृष्टप्रत्यासत्तेरवश्याभ्युपेयत्वात्। तथाहि—यो दानप्रतिग्रहाभ्यां संस्कारविशेषो दत्तकस्य, नासौ क्रीतस्य; यथा ब्राह्मोढायां यः, नासौ आसुरोढायामिति। सोऽपि च यत्र दृष्टप्रत्यासत्त्यसंभवः, तत्र कल्प्यते; न पूर्वेषु सप्तस्विति॥ १८॥

दानं च केनेत्यत आह। स दत्तकः मातापितृभ्यां यस्य दत्तः, तस्य पुत्रः। षष्ठी संप्रदाने; बहुलानुशासनात्। "शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकः, तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः" इति **वसिष्ठ**स्मरणात्। भर्तुरनुज्ञया तु मातुरपि दानाधिकारः; "न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, अन्यत्रानुज्ञानाद्भर्तुः" इति तस्यैव स्मरणात्। एवं मात्रभावे पितुरपि; "माता पिता वा दद्यातां यमद्भिः पुत्रमापदि" इति **मनु**स्मरणात्। आपदि; दुर्भिक्षादौ। अनापदि तु दातुः प्रतिषेधः। यद्वा आपदि; प्रतिग्रहीतुरपुत्रत्वे; "अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा" इति **अत्रि**स्मरणात्। सपुत्रत्वे तु तस्यैव प्रतिषेधः। एकश्च पुत्रो न देयः; "न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा" इति **वसिष्ठ**स्मरणात्। तथा ज्येष्ठश्च; 'ज्येष्ठं पिता' इति **शौनःशेफीय**लिङ्गात्। भ्रातृपुत्रं विना; तस्मिन् सर्वपुत्रत्वस्य वक्ष्यमाणत्वात्। पुत्रप्रतिग्रहविधिमाह **वसिष्ठः**—"पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवमसंनिकृष्टमेव प्रतिगृह्णीयात्" इति। अदूरबान्धवम्; संनिहितदेशवासिज्ञातिसमूहम्। असंनिकृष्टम्; असंबन्धिनमेव। बन्धुसंनिकृष्टमेवेत्यपि पाठः। तत्र भ्रातृपुत्रो मुख्यः। दूरबान्धवत्वेन च संदेहे **स** एव—"संदेहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत्। विज्ञायते ह्येकेन बहूंस्त्रायते" इति। दानविधिस्तु **जाबालिना** पुत्रिकादानेन व्याख्यातः॥ १९॥

[1] दत्तकस्तु—ज.

**[1]क्रीतश्च नवमः ॥ २० ॥ स च येन क्रीतः ॥ २१ ॥ स्वयमुपगतो दशमः ॥ २२ ॥ स च यस्योपगतः ॥ २३ ॥**

नवमं लक्षयति । दत्तकोक्तरीत्या मातापितृभ्याम् अन्यतरेण वा ज्येष्ठमेकं वर्जयित्वा आपदि विक्रीयमाणो धनं दत्त्वा यः क्रीतः, स नवमः; क्रीतत्वेन क्रीतभार्यावत् देवपितृकार्यानर्हत्वेन दत्तादपि विप्रकृष्टत्वात् ॥ २० ॥

अविभक्तेषु भ्रात्रादिषु साधारणधनक्रीतत्वेन दासादिवत् साधारण्यापत्तावाह । स क्रीतः येन 'ममायं पुत्रो भवतु' इति बुद्ध्या गृहीतः, तस्यैव पुत्रः; न दासादिवत् साधारणः । यथाह **मनुः**—

"क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥"

इति ॥ २१ ॥

दशमं लक्षयति । यो मातापितृविहीनः, ताभ्यां त्यक्तः 'तवाहं पुत्रो भवानि' इति स्वयमेवोपगतः, स दशमः; स्वयमुपगते कर्तृव्यापाराभावात् "अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिस्तथा" इत्यादिविधिपर्यवसानाभावेन क्रीतात् विप्रकृष्टत्वात् । न च स्वीकार एव कर्तृव्यापारः; तस्य रागप्राप्तत्वेनाविधेयत्वात् । यथाह **मनुः**—

"मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तश्च स स्मृतः ॥"

इति ॥ २२ ॥

स्वयमुपगतः कस्यासावित्यत आह । सः स्वयमुपगतः यं कामयेत 'तवाहम्' इति, तस्यैव पुत्रो नान्येषाम् । तदेतत् स्पष्टमाचष्टे **वसिष्ठः**—"स्वयमुपगतश्चतुर्थः । तत् शुनःशेफेन व्याख्यातम् । शुनःशेफो वै यूपे नियुक्तो देवतास्तुष्टाव । तस्येह देवताः पाशं विमुमुचुः । तमृत्विज ऊचुः 'ममैवायं पुत्रोऽस्तु' इति । तान् ह न संपेदे । ते संपादयामासुः । एष एव यं कामयेत् तस्य पुत्रोऽस्त्विति । तस्य ह विश्वामित्रो होतासीत् । तस्य पुत्रत्वमियाय" इति ॥ २३ ॥

**अपविद्धस्त्वेकादशः ॥ २४ ॥ पित्रा मात्रा च परित्यक्तः ॥ २५ ॥ स च येन गृहीतः ॥ २६ ॥ यत्र क्वचनोत्पादितश्च द्वादशः ॥ २७ ॥**

[1] कृत्रिमश्च—ज, ठ.

एकादशं लक्षयति । यस्त्यक्तो गृह्यते सोऽपविद्धः । स चैकादशः; त्यक्तस्य स्वयं ग्रहणात् दत्तात्मनोऽपि विप्रकृष्टत्वात् ॥ २४ ॥

त्यागश्च केनेत्यत आह । प्रत्येकविभक्तिचकाराभ्यामुभाभ्याम्, अन्यतराभावेऽवशिष्टेनान्यतरेणैव वा परित्यक्तोऽपविद्ध इत्यर्थः । यथाह **मनुः**—

" मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥ "

इति ॥ २५ ॥

परित्यक्तस्यास्वामिकतया कस्यासावित्यत आह । अस्वामिकस्य परिग्रहीतुरेव स्वत्वात् येन गृह्यते, तस्यैव स पुत्रो भवति ॥ २६ ॥

द्वादशं लक्षयति । उक्तविषयेभ्योऽन्यत्र यत्र क्वचन स्वीयायां परकीयायां वा सवर्णायामसवर्णायां वा [1]ऊढायामनूढायां वा क्षतायामक्षतायां वा यो निष्पादितः, स तस्यैव पुत्रः; सजातीयतानियमस्य कृत्रिमेण सह द्वादशपुत्रविषयत्वात् । स च द्वादशः; विषयविशेषनियमाभावात् अपविद्धादपि विप्रकृष्टत्वात् । यथाह **मनुः**—

" य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥ "

इति । अत्र केचित्—य एते क्षेत्रजादय एकादश पुत्रा औरसप्रसङ्गादुक्ताः, ते यस्य बीजतो जाताः तस्य न भवन्ति; किंतु इतरस्य; यस्य क्षेत्रं, येन वा क्रयादि कृतं तस्यैवेत्याहुः । तन्न; अस्यार्थस्य तल्लक्षणवाक्यैरेवोक्तत्वेन पौनरुक्त्यप्रसङ्गात् । तथाहि—" तस्य स्याद्यस्य तल्पजः " इति, " वोढुः कन्यासमुद्भवम् " इति, " वोढुः स गर्भो भवति " इति गूढोत्पन्नकानीनसहोढलक्षणेषु तत्र [2]तत्र श्रूयमाणत्वात् । अन्ये तु—य एते दत्त्रिमादयः पुत्रा उक्तास्ते यदि दात्रादीनां क्षेत्रे अन्येभ्यो जाताः, तदा दात्रादिभिर्दत्ता अपि न प्रतिगृहीत्रादीनां पुत्रा भवन्ति; किंतु बीजिन एवेत्यस्यार्थ इत्याहुः । तदपि न; स्वक्षेत्रोत्पन्नत्वेन स्वस्वत्वे सति दानक्रियादौ बाधकाभावात् । न चैकपुत्रप्रतिषेधवत् वाचनिकोऽयमर्थ इति वाच्यम्; अदृष्टार्थत्वप्रसङ्गात्; बीजिपुत्रताभिधानेन सर्ववादिसिद्धक्षेत्रिपुत्रताया असिद्ध्यापत्तेश्च । अपरे तु—य एते क्षेत्रजादयः पुत्राः प्रसङ्गादुक्ताः, ते बीजिन एव । क्षेत्रिणः औरसः पुत्रिका वा स्यात् । अन्यबीजजत्वमेकादशानामप्युपलक्षणम् । तेन स्वबीजजावपि पौनर्भवशौद्रौ न कर्तव्यौ । अत एव **बृहस्पतिः**—

" आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः ।
तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना ॥ "

[1] गूढायामगूढायां वा—ख, ग, छ.

[2] सर्वत्र—ख, ग, छ.

इत्याहेत्याहुः । तदपि मन्दम्; अस्यार्थस्याव्यवहितपूर्ववाक्येनैवोक्तत्वेन पौनरुक्त्यात् । तच्च वाक्यम्—

" क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ "

इति; औरसपुत्रिकाकर्तव्यश्राद्धादिक्रियालोपो मा भूदिति तत्प्रतिनिधित्वेन क्षेत्रजादीनामभिधानात् । तस्मादस्य वाक्यस्य सम्योऽर्थो वक्तव्यः । स यथा—क्षेत्रजादयः क्षेत्रिकादीनामेव पुत्रा इति तत्तल्लक्षणवाक्यैरेव सिद्धे, औरसाद्यभावे प्रतिनिधीकार्या इति " क्षेत्रजादीन् " इत्यनेनोक्तम् । इदानीं बीजिनः सर्वथाप्यपुत्रत्वे न केवलं ते क्षेत्रिकादीनामेव; किंतु बीजिनोऽपीत्याह—यस्येति । यस्य ते बीजतो जातास्तस्यापि । नेतरस्य तु; तुशब्दोऽवधारणे । नेतरस्यैव क्षेत्रिकादेरिति; बीजिक्षेत्रिणोरुभयोरप्यपुत्रत्वे क्षेत्रजादय उभयोरपि पुत्रा भवन्तीत्यर्थः । यथाह **याज्ञवल्क्यः**—

" अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ "

इति । ननु, अयमर्थः स्त्रीपुंधर्माभिधानेऽभिहित एव

" क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत् प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ "

इत्यनेन । क्रियाभ्युपगमो नाम 'अत्रोत्पन्नमपत्यमावयोर्भविष्यति' इति परस्परसंप्रतिपत्तिः । बाढम्; क्षेत्रजस्यैव द्व्यामुष्यायणताभिधानायेदं वाक्यं प्रवृत्तम् । तत्र च क्रियाभ्युपगमो निमित्तम् । अत्र तु तदभावेऽपि उभयोरपुत्रत्वे दत्तकादीनां सर्वेषामेव द्व्यामुष्यायणत्वमुच्यत इति न पौनरुक्त्यम्; क्रियालोपादिति हेतोर्द्वयोरपि समानत्वात्; " अपुत्रेण परक्षेत्रे " इत्यत्रापुत्रतामात्रस्य द्व्यामुष्यायणतायां हेतुतादर्शनाच्च । तस्मात् बीजिनोऽप्यपुत्रत्वे यत्र क्वचनोत्पादितः पुत्रो भवतीति सिद्धम् । ननु,

" औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः ।
पौनर्भवश्च कानीनः सहोढो गूढसंभवः ॥
दत्तः क्रीतः स्वयं दत्तः कृत्रिमश्चापविद्धकः ।
यत्र क्वचोत्पादितश्च पुत्राख्या दश पञ्च च ॥
अनेनैव क्रमेणैषां पूर्वाभावे परः परः ।
पिण्डदोंऽशहरश्चेति युक्ता गुणवशात् स्थितिः ॥ "

इति देवलेन यत्र क्वचनोत्पादितो बीजजात् पृथगेवोक्तः[1]; तत् कथं यत्र क्वचनोत्पादितो बीजजत्वेन व्याख्यायत इति चेत्—मैवम् । क्रियाभ्युपगमादिति मनुवाक्यात् बीजक्षेत्रजाविति क्षेत्रजसाहचर्याच्च

[1] उपन्यस्तः—छ, ट.

यथोक्तसंविदोत्पादितो बीजजः पृथगुक्तः। संविदभावेऽपि बीजिनः सर्वथाप्यपुत्रत्वे दत्तक्रीतादीनामपि बीजिपुत्रत्वाभिधानाय यत्र क्वचनोत्पादितः साधारण्येनोच्यत इति न विरोधः। न चैवं द्वादशसंख्याविरोधः; यत्र क्वचनोत्पन्नस्य पारशवावान्तरभेदत्वेन स्वातन्त्र्याभावादिति वाच्यम्—द्वादशातिरिक्तस्यापि व्यभिचाराद्युत्पन्नस्य संभवात्; उपधेयसंकरेऽप्युपाधेरसंकराच्च तद्भेदस्यैव द्वादशत्वप्रयोजकत्वादित्यलम्। अथवा यत्र क्वचनेत्यनेनानूढा शूद्रा विवक्षिता; तस्यां जातो द्वादशः पुत्र इति व्याख्येयम्; ऊढायामुत्पन्नस्यैवौरसत्वाभिधानात्। अत एव **मनुः**—

"यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम्।
स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः॥"

इति। तथा "स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः" इत्यदायत्वमपि तस्यैवाह; ऊढायामुत्पन्नस्य "अंशं शूद्रासुतो हरेत्" इत्येकांशस्योक्तत्वात्॥ २७॥

**एतेषां पूर्वः पूर्वः श्रेयान्॥ २८॥ स एव दायहरः॥ २९॥ स चान्यान् बिभृयात्॥ ३०॥**

नन्वेषां प्रतिनिधित्वाविशेषे तुल्यकक्ष्यत्वमेवोचितम्; न तु द्वितीयादिकक्ष्यत्वमित्यत आह। एतेषां द्वादशानां मध्ये पूर्वः पूर्वः पूर्वपूर्वपठितः श्रेयान्। श्रेयोऽदृष्टविशेषः; तद्वत्त्वात् प्रशस्तः। नन्वेषां पौर्वापर्येणैवादृष्टविशेषः प्रत्यासत्तिरित्युक्तमेव; किमर्थमिदमुच्यते 'पूर्वः पूर्वः श्रेयान्' इति? सत्यम्; द्वेधा हि श्रेयस्त्वम्—अवयवप्रत्यासत्त्या विशुद्धजन्मना च। तत्र औरसपौत्रिकेययोः निमित्तद्वादशकसद्भावात् उभयथापि श्रेयस्त्वम्। क्षेत्रजादीनां सहोढान्तानां पञ्चानामवयवप्रत्यासत्त्यैव श्रेयस्त्वम्; दंपत्योरन्यतरावयवसंबन्धात्। न जन्मना; बीजक्षेत्रयोर्विपर्यासात्। दत्तकादीनां जन्मनैव श्रेयस्त्वम्; नावयवप्रत्यासत्त्या; उत्पन्नानामेव परिग्रहात्। तयोश्चावयवप्रत्यासत्तेरभ्यर्हितत्वमभिप्रेत्य क्षेत्रजादीनां पूर्वमुपन्यासः; तेषां पितृदाय इव बन्धुदायेऽप्यधिकारात्। यथाहतुः **शङ्खलिखितौ**—"औरसः क्षेत्रजः पुत्रिकासुतः पौनर्भवः कानीनो गूढोत्पन्नश्चेति षट् पुत्रा बन्धुदायादाः" इति। चकारात् सहोढोऽपि; "अथ दायादबन्धूनां सहोढः प्रथमः" इति **वसिष्ठ**स्मरणात्। दत्तकादीनां तु तदभावात् अनभ्यर्हितत्वेन पश्चादुपन्यासः। यथाह **हारीतः**—"दत्तः क्रीतकोऽपविद्धः सहोढः स्वयमुपागतः सहसा [1]दृष्टश्चेत्यबन्धुदायादाः" इति। सहसा दृष्टः; कृत्रिमः। बन्धूनामपुत्रपितृव्यादीनां दायमाददतीति बन्धुदायादाः; न बन्धुदायादाः अबन्धुदायादाः। अयमर्थः—पत्न्याद्यभावे यदा भ्रातृपुत्रादीनां दायसंबन्धः प्राप्नोति, तदा ते औरसाद्याः सहोढान्ताः [2]सप्तैवापुत्रपितृव्यादिधनभाजो भवन्ति; न दत्तकाद्याः पञ्चेति। ते तु केवलं पितुरेव धनभाजो नान्येषाम्;

[1] दृष्टश्चेत्येवाबन्धु—ख, छ.

[2] सप्तैव पितृव्यादि—ख, छ.

"तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव तु" इति **देवल**स्मरणात्। सहोढे तु गुणागुणाभ्यां व्यवस्था। एवं **मनुगौतमा**द्युक्तक्रमस्यापि व्यवस्था ज्ञेया; "पिण्डदोंऽशहरश्चेति युक्ता गुणवशात् स्थितिः" इति तस्यैव स्मरणात्। यस्तु **गौतमीये** पुत्रिकापुत्रस्य दशमत्वेन पाठः, स विजातीये द्विषट्चतुर्थांशाभिधानात् समानजातीयौरससाम्यात्। तेषां च औरसोत्पत्तौ ज्यैष्ठ्यमपि न; "औरसे पुनरुत्पन्ने ज्यैष्ठ्यं तेषु न विद्यते" इति **देवल**स्मरणात्॥ २८॥

श्रेयस्त्वस्य प्रयोजनमाह। यो यः श्रेयान् स पित्रादिदायहरः; न पापीयान्। श्रेयसोऽभावे तु पापीयानपि दायहरो भवति। यथाह **मनुः**—"श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति" इति॥ २९॥

यदा श्रेयसो दायहरत्वं, तदान्येषां का गतिरित्यत आह। स पूर्वः पूर्वः औरसादिर्दायहरः अन्यान् क्षेत्रजादीन् बिभृयात्, अन्नाच्छादनेन पोषयेत्। इदं च औरसाद्यपेक्षयान्येषामत्यन्तनिर्गुणत्वे ज्ञेयम्। समगुणत्वे तु **मनुः**—

"षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद्धनात्।
औरसो विभजन् दायं पित्र्यं पञ्चममेव वा॥"

इति। अत्यन्तसमगुणत्वे तु तृतीयांशो **ब्रह्मपुराणे**ऽभिहितः—

"समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः॥"

इति। पुत्रिकौरससमवाये तु **मनुः**—

"पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥

इति। औरसपौनर्भवादिसमवाये **ब्रह्मपुराणम्**—

"कृत्रिमः पञ्चभागं तु षड्भागं गूढसंभवः।
सप्तांशं चापविद्धस्तु कानीनश्चाष्टमांशभाक्॥
नवभागं सहोढश्च क्रीतो दशममश्नुते।
पौनर्भवस्त्वेकदशं द्वादशं स्वयमागतः।
त्रयोदशमभागं तु शौद्रो भुङ्क्ते पितुर्धनात्॥"

इति। **हारीतः**—"विभजिष्यमाण एकविंशं कानीनाय दद्यात्; विंशं पौनर्भवाय; एकोनविंशं द्व्यामुष्यायणाय; अष्टादशं क्षेत्रजाय; सप्तदशं पुत्रिकापुत्राय; इतरानौरसाय पुत्राय दद्युः" इति। एतौ च न्यूनाधिकौ भागौ औरसात् न्यूनाधिकगुणवशात् व्यवस्थाप्यौ। अत्यन्तगुणवत्त्वे पञ्चमोंऽशः; "क्षेत्रजाद्याः सुताश्चान्ये

पञ्चषट्सप्तभागिनः" इति **बार्हस्पत्यात्**। अत्यन्तनिर्गुणत्वे तु भरणमात्रमित्युक्तमेव। यदा तु विशिष्टजन्मना श्रेयस्त्वं, तदा क्रमविशेषं विभागविशेषं चाहतुः **बृहस्पतिदेवलौ**—

"एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः।
तत्तुल्या पुत्रिका प्रोक्ता द्वावेतावुत्तमौ स्मृतौ॥
दत्तोऽपविद्धः क्रीतश्च कृतः शौद्रस्तथैव च।
जातिशुद्धाः कर्मशुद्धा मध्यमास्ते सुताः स्मृताः॥
क्षेत्रजो गर्हितः सद्भिस्तथा पौनर्भवः सुतः।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च॥
विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते।
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनभाजनाः॥"

इति। अयमभिसंधिः—आनुपूर्व्यं प्रत्यासत्तिक्रमः। तस्माद्विशेषो जन्मादिशुद्धिविशिष्टः; पतितापतितोत्पन्नयोः पुत्रयोः पौत्रयोर्वा तुल्यायामपि प्रत्यासत्तौ विशुद्धोत्पन्नस्यैव पित्र्ये पैतामहे वा धनेऽधिकारदर्शनात्। एवं प्रत्यासत्तिविप्रकर्षेऽपि पुत्रभ्रातृपुत्रयोस्तथाविधयोः भ्रातृपुत्रस्यैव पितृव्यधनेऽधिकारः समर्थ्यते प्रत्यासत्त्या धनाधिकारवादिभिरपि। यद्येवं तर्हि मूलोक्तेष्वपि द्वादशपुत्रेषु तन्न्यायसंभवात् आस्तां प्रत्यासत्तिर्दूरे; विशुद्धजन्मनैव धनाधिकारः सिध्यतु। स्यादेवं यदि पाठक्रमप्रयोजकप्रत्यासत्तिमात्रेणैव धनाधिकारः कल्प्येत। अस्ति तु तत्रापि 'पूर्वाभावे परः परः' इति श्रौतक्रमविधायकं वचनम्। तस्मात् मूलोक्त**बार्हस्पत्य**योर्द्वयोरपि क्रमयोः श्रौतत्वात् विकल्प एव साधुः; न पक्षद्वयं मिश्रीकृत्य विषयव्यवस्था। औरससमवाये सगुणसवर्णविषयमिदम्। निर्गुणास्तु सवर्णाश्चतुर्थांशभागिनः;

"उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः॥"

इति **कात्यायन**स्मरणात्। औरसत्वेन [1]पुत्रिकापि गृह्यते। एतेन "तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्येत, चतुर्थभागभागी स्याद्दत्तकः" इति **वासिष्ठं** व्याख्यातम्। द्व्यामुष्यायणभागे विशेषमाह **योगीश्वरः**—

"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥"

[1] पुत्रिकाद्यपि—ख, ग, छ.

इति। यदा तु परस्परसंविदा द्व्यामुष्यायण उत्पन्ने बीजिक्षेत्रिणोरन्यतरस्यौरस उत्पद्येत, तदा स्वस्वपितृधनहरत्वमेवोभयोः; न तूभयांशहारित्वं द्व्यामुष्यायणस्येत्याह मनुः—

"यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यद्यस्य पैतृकं रिक्थं स तद् गृह्णीत नेतरत्॥"

इति॥ ३०॥

**अनूढानां स्ववित्तानुरूपेण संस्कारं कुर्यात्॥ ३१॥ पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः[1]॥ ३२॥ [2]रिक्थग्राहिभिस्ते भर्तव्याः॥ ३३॥**

बिभृयादित्यनेनेतरपरिसंख्याप्राप्तौ अपवादमाह। स पूर्वः पूर्व औरसादिः, अन्येषामौरसानां चानूढानामसंस्कृतानां स्ववित्तानुरूपेण संस्कारं जातकर्मादिविवाहान्तं कुर्यात्। यद्यपि प्रक्रमबलात् अनौरसानामेव भरणवत् संस्कारोऽपि गम्यते, तथापि कैमुतिकन्यायेनौरसेप्वप्यसौ सिध्यतीति ज्ञेयम्। तेन भरणेऽपि यावदंशप्रदानमर्थसिद्धमेव। यद्यपि अनूढानामित्युपक्रमस्यासंजातविरोधित्वेन बलवत्त्वात् उपसंहारस्थं संस्कारपदं विवाहपरमेव प्रतीयते, "वेदो वा प्रायदर्शनात्" इति न्यायात्; तथापि "असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः" इति योगिवचनेनोपक्रमोपसंहारयोरेकरूपेणैकवाक्यतयास्यापि तदर्थपरत्वमेव युक्तमिति। भ्रातुरुपक्रमे स्ववित्तानुसारेणेति वदता, भगिनीसंस्कारे विशेषो दर्शितः। स च 'अनूढाश्च दुहितरः' इति वक्ष्यते॥ ३१॥

यदुक्तं 'पूर्वः पूर्वः श्रेयान् दायहरः' इति, अस्यापवादमाह। पतितो महापातकादिना। क्लीबो नपुंसको जात्या विकारेण वा। अचिकित्स्यरोगः भगंदरादिग्रस्तः। विकलः इन्द्रियैः, अन्धबधिरविग्रमूककुष्ठ्युन्मत्तकुणिपङ्ग्वादिः। तुशब्दात् आश्रमान्तरगतादीनां ग्रहणम्। एते भागहारिणो न भवन्ति। यथाह **वसिष्ठः**—"अनंशास्त्वाश्रमान्तरगताः" इति। **नारदोऽपि—**

"पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः।
औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः॥"

इति। **मनुदेवलौ—**

"सर्वे एव विकर्मस्था नार्हन्ति भ्रातरो धनम्।"
"मृते न पितरि क्लीबकुष्ठ्युन्मत्तजडान्धकाः।
पतिताः पतितापत्यं लिङ्गी दायांशभागिनः॥"

[1] रोगि for रोग—झ.   [2] रिक्थभागतस्ते—ज.

इति। पतितादिषु चोद्देश्यगतत्वात् लिङ्गमविवक्षितम्। तेन च पत्नीदुहितृमात्रादीनां तथात्वे निरंशत्वं सिध्यति ॥ ३२ ॥

भागाभावे कथमेषां जीवनमित्यत आह। ये रिक्थग्रहणयोग्याः पुत्रादयो वक्ष्यमाणाः, तैस्ते क्लीबादयो भर्तव्याः। पतितस्य तु प्रायश्चित्तार्हतायां तत् कारयित्वांशो देयः। अनर्हतायां तु परित्याग एव; न तु भरणम्; "अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुः पतिततज्जातवर्जम्" इति **बोधायन**स्मरणात्। अन्येषां त्वभरणे पातित्यम्;

> "सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा।
> ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्॥"

इति **मनु**स्मरणात्। अत्यन्तं यावज्जीवम्। भेषजादिना तु क्लीबत्वादेरप्यपगमे भागप्राप्तिरस्त्येव; अनंशत्वनिमित्तापगमात्॥ ३३ ॥

**[1]तेषां चौरसाः पुत्रा भागहारिणः ॥ ३४ ॥ न तु पतितस्य ॥ ३५ ॥ पतनीये कर्मणि कृते त्वनन्तरोत्पन्नाः ॥ ३६ ॥**

क्लीबादीनामनंशत्वात् तत्पुत्राणामप्यनंशत्वप्राप्तावपवादमाह। तेषां क्लीबादीनामौरसाः पुत्रा भागं लभन्ते। चकारात् क्षेत्रजग्रहणम्; "औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः" इति **योगि**स्मरणात्। तत्र क्लीबस्य क्षेत्रजः, अन्येषामौरस इति व्यवस्था जातिक्लीबे। पुत्रोत्पत्त्यनन्तरं रोगादिना क्लैब्योत्पत्तौ तु क्लीबस्याप्यौरससंभवात् 'तेषामौरसाः' इत्यविशेषेणोपन्यासः। औरसक्षेत्रजग्रहणमितरपुत्रव्युदासार्थम्। यत्तु **देवलीये** "तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः" इति पुत्रसामान्योपादानं, तत् औरसक्षेत्रजपरमेव; उपसंहारन्यायात्। पुत्रग्रहणात् पत्नीदुहित्रोर्भरणमेव, न तु भागहारित्वमित्युक्तं भवति। यथाह **योगीश्वरः**—

> "सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः।
> अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः।
> निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥"

इति॥ ३४ ॥

तेषामित्यनेन पतितादीनां सर्वेषां प्राप्तावपवादमाह। पतितस्य तु औरसा अपि पातित्यावस्थोत्पन्नाः पुत्रा न भागहारिणः; तेषामपि पतितत्वात्। यथाह **वसिष्ठः**—"पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः" इति॥ ३५ ॥

1 तेषामेवौरसाः—ज, ठ.

के ते पतितोत्पन्नाः पतिता इत्यत आह। ब्रह्महत्यादिपतनीयकर्मकरणानन्तरमेव पातित्ये ये उत्पन्नाः पुत्राः, ते पातित्योत्पन्नाः पतिताः। न तु पातित्यात् पूर्वमपनीते वा पातित्ये ये उत्पन्नाः, ते पतिता इति। तेन च पातित्यावस्थोत्पन्नाः पतिता इत्यर्थः सिद्धः। एतेन "पतितोत्पन्नः पतितः" इति **वासिष्ठं** व्याख्यातम्। यद्वा, पतितस्यौरसाः पुत्रा न भागहारिणः; तर्हि के भागहारिण इत्यत आह। पतनीये कर्मणि कृते पातित्यावस्थायां तु नौरसा भागहारिणः। न त्वनन्तरोत्पन्नाः; अनन्तरः अव्यवहितः कनिष्ठो ज्येष्ठो वा भ्राता; तदभावे पूर्वोक्तः सपिण्डादिर्वा। तेन ये उत्पन्नाः क्षेत्रजा इति यावत्; ते तदीयं भागं लभन्ते, शुद्धावस्थोत्पन्नौरसाभावे। तत्सद्भावे तु पातित्यावस्थोत्पन्नः क्षेत्रजोऽपि न लभत एव॥ ३६॥

**[1]प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः॥ ३७॥ तत्पुत्राः पैतामहेऽप्यर्थे॥ ३८॥ [2]अंशग्राहिभिस्ते भरणीयाः॥ ३९॥**

यदुक्तं 'यत्र क्वचनोत्पादितो दायहरः' इति, तस्य क्वचिदपवादमाह। प्रतिलोमासु वैश्यादिस्त्रीषु शूद्रादिभ्य उत्पन्ना आयोगवादयो वक्ष्यमाणाः शूद्रादिभ्यः पितृभ्यो भागं न लभन्ते। यत्तु "शूद्रापुत्रवत् प्रतिलोमासु" इति **गौतमीयं,** तत् "शूद्रापुत्रोऽप्यनपत्यस्य शूश्रूषुश्चेल्लभेत वृत्तिमूलमन्तेवासिविधिना" इत्युपक्रान्तातिदेशात् शुश्रूषादिगुणोत्कृष्टप्रतिलोमजविषयम्। चकारात् अक्रमोढादीनां ग्रहणम्। यथाह **कात्यायनः**—

"अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति॥"

इति। अक्रमोढात्र असवर्णा ग्राह्या; सवर्णासुतस्य रिक्थभाक्त्वात्। यथाह **स** एव—"अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः" इति। तथा प्रतिलोमप्रसूतासमुत्पन्नौरसोऽपि न दायभाक्,

"प्रतिलोमप्रसूता या तस्याः पुत्रो न रिक्थभाक्।
ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिर्मतम्॥
बन्धूनामप्यलाभे तु पित्र्यं धनमवाप्नुयात्।
अपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवाः॥"

इति तस्यैव स्मरणात्। अत्यन्तं यावज्जीवम्। पित्र्यं पितुरार्जितम्। अपित्र्यं पित्रनुपार्जितम्; किंतु अपुत्रस्य पितृव्यादेर्लब्धम्। तत् बान्धवा एवाप्नुयुः; न तस्मै दद्युरित्यर्थः। द्वितीयश्चकारः पिण्डानधिकार-समुच्चयार्थः। तच्चानुपदमेव वक्ष्यते। इदं चाभागित्वं साक्षाद्वर्णोत्पन्नप्रतिलोमजानामेव। न प्रतिलोमजातिमात्रस्य; तस्य स्वस्वपितृदायहरणस्य वक्ष्यमाणत्वात्॥ ३७॥

[1] This Sutra omitted in ख.

[2] This Sutra omitted in क, ज, ठ.

ननु क्लीबादिवत् सूतादीनामनंशत्वेऽपि तत्पुत्राणां क्लीबादिपुत्रवत् अंशभागित्वं स्यादित्यत आह। तेषां प्रतिलोमासु जातानां सूतादीनां ये पुत्राः, ते पितामहस्य क्षत्रियादेर्योऽर्थः, तस्मिन्नप्यभागिनः। तस्मात् प्रतिलोमासु जातानां पुत्राणां पौत्राणां च न वर्णिधनभाक्त्वमिति सिद्धम् ॥ ३८ ॥

तर्हि कथं ते जीवेयुरित्यत आह। बहूनां विभज्यार्थग्राहित्वे सर्वेषां भरणकर्तृताबोधनायांशव्यपदेशः। अन्यथा यो यस्य रिक्थं गृह्णीयात्, स बिभृयादित्यर्थसिद्धमेव ॥ ३९ ॥

**यश्चार्थहरः स पिण्डदायी ॥ ४० ॥ एकोढानामप्येकस्याः पुत्रः सर्वासां पुत्र एव[1] ॥ ४१ ॥ भ्रातॄणामेकजातानां च ॥ ४२ ॥ पुत्रः पितृवित्तालाभेऽपि पिण्डं दद्यात् ॥ ४३ ॥**

रिक्थप्रसङ्गात् तुल्ययोगक्षेमस्यापि निर्णयमाह। यो यस्यार्थं रिक्थत्वेन गृह्णीयात्, स तस्मै पिण्डं श्राद्धमपि दद्यात्। द्वादशविधपुत्राभिप्रायमेतत्; तदुपक्रमेणैव "पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः" इति **योगि**स्मरणात्। पुत्राभावे तु धनग्रहणेनैव श्राद्धाधिकारं बोधयितुं साधारण्येन व्यपदेशः; "यो यस्याददीत स तस्मै श्राद्धं कुर्यात् पिण्डं च त्रिपुरुषं दद्यात्" इति **शङ्ख**स्मरणात् ॥ ४० ॥

तस्य क्वचिदपवादमाह। एकेन पुंसोढानां स्त्रीणामपुत्राणामप्येकस्याः सपत्न्याः यः पुत्रः, स सर्वासामपि पुत्रः, पुत्रकार्यकारी। अयमर्थः—मातृधनं दुहितृगामीति वक्ष्यति; पित्रोः श्राद्धाधिकारी पुत्र इति च। तत्र पुत्राभावे धनग्रहणनिमित्तको मातृश्राद्धाधिकारो दुहितॄणां प्राप्तः। तत् सपत्नीपुत्रे विधातुं पुत्रत्वेन तस्य व्यपदेश इति। एवकारोऽत्र पुत्रीकरणं व्यावर्तयति। यथा पत्न्यवयवारब्धः क्षेत्रजो भर्तुः पुत्रः, तथा भर्त्रवयवारब्धः सपत्नीपुत्रः पत्न्याः; दंपत्योरन्यतरावयवारब्धत्वेनैव पुत्रत्वसिद्धौ पुत्रीकरणानर्थक्यात्। यत्तु **बृहस्पतिना,**

> "यद्येकजाता बहवो भ्रातरस्तु सहोदराः।
> एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥
> बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः।
> एका चेत् पुत्रीणी तासां सर्वासां पिण्डदस्तु सः ॥"

इति भ्रातृपुत्रधर्मातिदेशः सापत्नेऽभिहितः, सोऽपि प्रतिनिधित्वविषयः; न पुत्रीकरणविषयः; तस्य प्राप्तत्वात् ॥ ४१ ॥

1 स पुत्र एव—ज.

सपत्नीन्यायं भ्रातृष्वप्यतिदिशति। एकजाताः सोदराः। तेषां भ्रातॄणामपुत्राणमप्येकस्य भ्रातुर्यः पुत्रः, स सर्वेषां पुत्रः पुत्रकार्यकारी। अयमर्थः

"अपुत्रस्य पितृव्यस्य यः पुत्रो भ्रातृजो भवेत्।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाम्॥
पार्वणं तेन कार्यं स्यात् पुत्रवद् भ्रातृजेन तु।
पितृस्थाने तु तं कृत्वा शेषान् पूर्ववदुच्चरेत्॥"

इति **स्मृत्यन्तरे**ऽप्युक्तः। तथा **मार्कण्डेयो**ऽपि—

"पुत्रः पौत्रः प्रपौत्रश्च तद्वद्वा भ्रातृसंततिः।
सपिण्डसंततिर्वापि क्रियार्हा तूपजायते।
सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्॥"

इति सर्वाभावे स्त्रीणामधिकारमाह। एतेन,

"अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च॥"

इति **वृद्धमनु**वाक्यं व्याख्यातम्; सर्वाभाव एव तदधिकारबोधनात्। यद्वा अपुत्रेण पुत्रप्रतिनिधौ क्रियमाणे भ्रातृपुत्र एवादौ प्रतिनिधिः कार्य इत्येतदर्थकमिदं वाक्यं व्याख्येयम्; यथाश्रुतार्थनिर्वाहाभावात्। तथाहि— न तावत् पुत्राभावे दायाधिकारो भ्रातृपुत्रस्य; "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुताः" इति तस्य पञ्चमस्थानपाठात्। नापि पिण्डाधिकारः; "पत्नी भ्राता भ्रातृजश्च" इति तृतीयस्थानपाठात्। तस्मात् यथोक्त एवार्थोऽस्य सभ्यः। अयं चापरो विशेषः—यदेकोऽप्यसावनेकैः भ्रातृभिः पुत्रीकार्य इति; **मनुना**—

"भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत्।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥"

इत्यत्र 'तेन पुत्रेण' इत्येकत्वनिर्देशात्। **कालिकापुराणे** उभाभ्यामपि वेतालभैरवाभ्याम्,

"एकमेव करिष्ये वो नन्दिनं चेत्यभाषताम्।
ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः॥
तस्यां स जनयामास सुवेशं नाम पुत्रकम्।
तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम्॥"

इत्यादिना एकस्यैव सुवेशस्य पुत्रीकरणलिङ्गदर्शनाच्च। विवृतं चैतत् **पराशरस्मृतिविवृतौ विद्वन्मनोहरायां दत्तकमीमांसायां** चास्माभिरिति नेह प्रतन्यते॥ ४२॥

'यश्चार्थहरः स पिण्डदायी' इत्यस्यापवादान्तरमाह। पितुर्निर्धनत्वेन स्वस्य निःस्पृहत्वेन वा यः पुत्रः पितृधनं न लभते, सोऽपि पित्रे पिण्डं दद्यात्। अनेन पुत्रत्वमेव पिण्डदाने प्रयोजकम्, न धनग्रहणम्; अन्येषां तु संबन्धसाम्येऽप्यपवादाभावे तदेव प्रयोजकमित्युक्तम् ॥ ४३ ॥

**पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।**
**तस्मात् पुत्त्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ४४ ॥**
**ऋणमस्मिन्[1] संनयत्यमृतत्वं च गच्छति ।**
**पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ ४५ ॥**
**पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।**
**अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ ४६ ॥**
**[2]पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ।**
**[3]दौहित्रोऽपि ह्यपुत्रं तं संतारयति पौत्रवत्[4] ॥ ४७ ॥**

**इति [5]श्रीविष्णुस्मृतौ पञ्चदशोऽध्यायः**

पुत्रपदनिर्वचनव्याजेन तत्रोपपत्तिमाह। मृतस्य प्रेतावस्थायां क्षुत्तृष्णाजनितदुःखानुभवः पुन्नामा नरकः। ततः पिण्डोदकदानादिना सुतो यस्मात् पितरं त्रायते, तस्मात् पुत्त्र इति स्वयमेव स्वयंभुवा वेदेन प्रोक्तः। अनेन पुत्रानुत्पादने पुन्नरकप्राप्तिर्दर्शिता। तेन पुत्रोत्पादनविधेर्नित्यत्वं सिध्यति। तथाच **श्रुतिः**—"नापुत्रस्य लोकोऽस्ति" इति। नरकात् त्राणं च पिण्डदानादिनैवेत्युक्तं **स्मृत्यन्तरे**—

"जीवतोर्वाक्यकरणान्मृताहे भूरिभोजनात्।
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥"

इति ॥ ४४ ॥

तमेव वेदमुदाहरति। जातस्य पुत्रस्य जीवतो मुखं यदि पिता पश्येत्, तदा अस्मिन् पुत्रे स्वीयं पित्र्यमृणं संनयति संक्रामयति। तावतैव स्वयं पितृऋणान्मुच्यत इति यावत्। यथाह **वसिष्ठः**—"विज्ञायते हि त्रिभिर्ऋणैः ऋणवान् ब्राह्मणो जायत इति यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इत्येष वा अनृणो यज्वा यः पुत्री ब्रह्मचर्यवानिति" इति। मृतश्चामृतत्वं मोक्षं च गच्छति।

[1] अस्मै—ठ.
[2] पुत्रदौहित्रयोः—ज, ठ.
[3] दौहित्रोऽपुत्रिणं यस्मात् संतारयति पुत्रवत्—ठ.
[4] पुत्रवत्—ज, ठ.
[5] वैष्णवे—क, ञ; वैष्णवे धर्मशास्त्रे पुत्रविशेषप्रकरणं पञ्चदशम्—ज, ठ.

प्रतिबन्धकीभूतऋणापगमात् मोक्षाधिकारी भवति; "प्रजाभिरग्ने अमृतत्वमश्यामित्यपि निगमो भवति" इति **वसिष्ठस्मरणात्** ॥ ४५ ॥

वंशकरपुत्रोत्पत्तौ फलविशेषमाह । पुत्रेणेन्द्रादिलोकान् जयति । पौत्रेण तेषामेवानन्त्यं चिरस्थायितामश्नुते प्राप्नोति । पुत्रस्य पौत्रेण स्वस्य प्रपौत्रेण ब्रध्नस्य सवितुः विष्टपं लोकं प्राप्नोति । दायभागप्रकरणे एतस्याभिधानं पत्न्यादिसद्भावेऽपि पुत्रस्य, तदभावे पौत्रस्य, तस्याप्यभावे प्रपौत्रस्य च दायभाक्त्वमिति दर्शयितुम् । तच्चाग्रे स्पष्टीकरिष्यते ॥ ४६ ॥

पुत्रपौत्रप्रपौत्राभावे दौहित्रस्य तत्कार्यकारितामाह । पौत्रदौहित्रयोरिह लोके विशेषसत्त्वेऽपि परलोके विशेषो नास्ति; तुल्योपकारजनकत्वात् । तमेव दर्शयति । यतः पौत्रवदेव दौहित्रोऽपि अपुत्रं मातामहं संतारयति नरकादुद्धरत्येव । अस्य च दायभागप्रकरणे पिण्डप्रस्तावेऽभिधानं पुत्रपौत्राद्यभावे दौहित्रस्य धनसंबन्धं पिण्डसंबन्धं च प्रतिपादयितुम्[1] । तथाच **स्मृत्यन्तरे**—

"अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां च स्वधाकारे पौत्रा दौहित्रका मताः ॥"

इति । इदं च न पुत्रिकापुत्रविषयम्; पुत्रिकापुत्रत्वेन पौत्रत्वव्यपदेशाविरोधात् । तस्मात् अपुत्रीकृतदुहितृसुतस्यापि मातामहधनसंबन्धोऽस्तीत्यनेन बोध्यते । अत एव **मनुः**—

"अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम् ।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम् ॥"

इत्युभयदुहितृसुतस्य मातामहधनसंबन्धं दर्शयति । स च पत्नीदुहित्रभावे इति च वक्ष्यते ॥ ४७ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि**श्रीरामपण्डिता**त्मज**श्रीनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** पञ्चदशोऽध्यायः

[1] प्रतिपादयति—ट.

## षोडशोऽध्यायः

**समानवर्णासु [1]पुत्राः सवर्णा भवन्ति ॥ १ ॥ अनुलोमासु [2]मातृसवर्णाः ॥ २ ॥**

एवं मुख्यगौणसुतान् विभज्य गौणा लक्षिताः। सांप्रतं षोडशेऽध्याये मुख्यसुतान् तदवान्तरभेदं च लक्षयति। भर्त्रपेक्षया समानवर्णासु। इदमुपलक्षणम्; तेन प्रशस्तविवाहोढासु अक्षतयोनिषु असमानार्षगोत्रासु असपिण्डासु यवीयसीषु भ्रातृमतीषु चेत्यपि द्रष्टव्यम्। तासु भर्त्रा जनिताः पुत्रा मातृपितृसमानवर्णा भवन्ति। यथाह **बौधायनः**—"एतानार्यस्य विवाहानाहुः। एतैः संस्कृतायामुत्पन्नास्तज्जातीया भवन्ति, नान्ये" इति। एतान् ब्राह्मादींश्चतुरः। आर्यस्य त्रैवर्णिकस्य। आर्यग्रहणात् शूद्रस्य विवाहान्तरोढायामपि जातस्य सवर्णत्वं भवति; न त्वनूढायाम्। **मनुरपि**—

"सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ॥"

इति। आनुलोम्यं यवीयस्त्वं कन्यायाः। न तु वर्णानुलोम्यम्; तस्य जात्यन्तरापादकत्वात्। तेनावरात् ज्यायस्यामुत्पन्नस्य न वर्णतेति। सगोत्रादिषु तु चण्डालत्वमेव स्मर्यते—

"आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥"

इति। भ्रातृमतीत्वं "भ्राता लाजानावपति" इति लाजावापे भ्रातुः कर्तृत्वेन तदभावे होमवैगुण्येन संस्कारानुत्पत्तेरावश्यकम्। न च भ्रातृस्थानीयेन तत्सागुण्यम्; तस्याप्यभावे वैगुण्यतादवस्थ्यात्। एतेन कानीनसहोढपौनर्भवगूढोत्पन्नकुण्डगोलकानामसवर्णत्वमुक्तं भवति; ब्राह्मण्यादिजातेः शास्त्रैकसमधिगम्यत्वात्; अन्यथा जातिविवेकशास्त्रानर्थक्यप्रसङ्गात्[3]। न चाभिव्यञ्जकनिरूपणाय तत्; तावताप्यलौकिकत्वसिद्धेः, [4]यूपाहवनीयादिवत्। न च जन्यजनकभाव एवाभिव्यञ्जकः; स च [5]मातुः प्रत्यक्ष एवेति वाच्यम्; तावन्मात्रस्यातिप्रसक्तत्वेन जन्यजनकयोरपि ब्राह्मण्यादिविशेषणाभ्युपगमात्। तज्ज्ञानं न मातुरपि प्रत्यक्षेण।

[1] सर्वे पुत्राः—ज, झ, ठ.
[2] मातृवर्णाः—ठ.
[3] नर्थक्यापातात्—ख, ग, छ.
[4] यूप omitted in ख, ग, छ.
[5] मानुष—ख.

नापि शब्देन; प्रत्यक्षाधीनत्वात् तस्येति तस्यापि प्रत्यक्षत्वासिद्धेः। एवं च स्त्रियाः स्वजातिः पुरुषजातिर्वा यदि न प्रत्यक्षा, तदा कथमिव स्वपुत्रजातिः प्रत्यक्षा स्यात्? तस्मात् शास्त्रजन्यानुभवमूलकानादिस्मरणपरंपराप्रमाणिकैव ब्राह्मण्यादिजातिरिति साधु मन्यताम्। वस्तुतस्तु 'ब्राह्मण्यमलौकिकम्, लौकिकार्थक्रियासाधनत्वाभावात्, आहवनीयादिवत्' इत्यनुमानादेवालौकिकम्। तत्र यद्यपि गमनभोजनादिकारित्वं ब्राह्मणस्याप्यस्ति, तथापि तत् न ब्राह्मण्यपुरस्कारेण, किंतु प्राणित्वादिनैव; ताद्रूप्येण त्वलौकिकक्रियायामेव साधनत्वात्। यत्रापि 'ब्राह्मणाः शतं दण्ड्याः' इत्यादिदुष्टराजादेशादौ ब्राह्मण्यमेव दण्डप्रयोजकम्, तत्राप्यर्थपदेन तन्निवृत्तिः; तस्य बलवदनिष्टानुबन्धीष्टार्थत्वात्। न च दण्डनमर्थवती क्रिया; दोषश्रवणात्। अनिष्टातिरिक्ता तु सर्वापीष्टक्रिया सामान्यविधिनार्थवत्येवेति न काप्यसिद्धिः। अत एव **वसिष्ठः**—"प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषात्" इत्युक्त्वा "ब्राह्मणोऽस्य मुखमासीदित्यपि निगमो भवति" इत्याह। एवं क्षत्रियत्वाद्युन्नेयमित्यलं प्रपञ्चेन। विशेषस्तु **मिताक्षरटीकायां प्रमिताक्षरायाम्** अस्मत्कृतायामवगन्तव्यः॥ १॥

सवर्णापदव्यावर्त्यमाह। ब्राह्मणादीनामनुलोमाः क्षत्रियादयः। तासु तेभ्यो जाताः मातृसवर्णाः पुत्रा भवन्ति। मातृसवर्णत्वं तत्तद्वर्णधर्मप्राप्त्यै; "ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव। क्षत्रियेण वैश्यायां वैश्य एव। वैश्येन शूद्रायां शूद्र एव" इति शङ्खस्मरणात्। न तु तत्तद्वर्णप्राप्त्यै; जात्यन्तरस्मरणात्। यथाह **योगीश्वरः**—

"विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥"

इति। **गौतमस्तु** अन्यथाह—"अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः" इत्यादि। अस्यार्थः—ब्राह्मणस्यानन्तरा क्षत्रिया; तस्यां तस्मात् सवर्णः। क्षत्रियस्य वैश्या; तस्यां तस्मादम्बष्ठः। वैश्यस्य शूद्रा; तस्यां तस्मादुग्रः। ब्राह्मणस्यैकान्तरा वैश्या; तस्यां तस्मान्निषादः। क्षत्रियस्य शूद्रा; तस्यां तस्मात् दौष्यन्तः। ब्राह्मणस्य द्व्यन्तरा शूद्रा; तस्यां पारशव इति। एताभ्यां **योगिगौतम**वाक्याभ्यां ब्राह्मणादिभ्यः क्षत्रियादिषु जातानां संज्ञाविकल्पोऽभिहितः। स यथा—मूर्धावसिक्तसवर्णौ, अम्बष्ठनिषादभृज्यकण्ठाः, निषादपारशवौ, माहिष्याम्बष्ठौ, उग्रदौष्यन्तयवनाः, करणोग्रौ चेति। अस्मादेव च वैरूप्यात् मूले संज्ञानभिधानमिति न न्यूनता। अनुलोमानामपि पितृसवर्णत्वं क्वचिदाह **योगीश्वरः**—

"जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥"

इति। जातयः मूर्धावसिक्ताद्याः। तासामुत्कर्षः ब्राह्मणत्वादिवर्णप्राप्तिः; स सप्तमे; अपिशब्दात् षष्ठे पञ्चमे वा युगे स्त्रीपुंसयोर्द्वन्द्वे भवति। यथा—ब्राह्मणेनोढायां[1] शूद्रायामुत्पादिता निषादी। सा ब्राह्मणेनोढा कन्यां जनयति। सापि ब्राह्मणेनोढा कन्यान्तरम्। इत्येवं सप्तमी शुद्धमष्टमं ब्राह्मणं जनयति। एवमम्बष्ठी षष्ठी सप्तमम्। एवं मूर्धावसिक्ता पञ्चमी षष्ठम्। एवमन्यत्र ज्ञेयम्। तथा शूद्रवृत्त्या जीवन् ब्राह्मणो यं जनयति, सोऽपि तया वृत्त्या जीवन् अन्यम्, इत्येवं सप्तमे द्वन्द्वे जातोऽष्टमः शूद्र एव भवति। एवं वैश्यवृत्त्या षष्ठे द्वन्द्वे सप्तमो वैश्यः। एवं क्षत्रियवृत्त्या पञ्चमे द्वन्द्वे षष्ठः क्षत्रिय इति। तथा मूर्धावसिक्तः क्षत्रियायां पुत्रं जनयति; सोऽपि क्षत्रियायां पुत्रान्तरम्; इत्येवं पञ्चमे द्वन्द्वे षष्ठः क्षत्रिय एव। एवम् अम्बष्ठो वैश्यामूढ्वा षष्ठे द्वन्द्वे सप्तमं वैश्यम्। एवं निषादः शूद्रामूढ्वा सप्तमे द्वन्द्वे अष्टमं शूद्रमेवेत्यपि ज्ञेयम्, "वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन पञ्चमेनाचार्याः" इति **गौतमस्मरणात्**॥ २॥

**प्रतिलोमास्त्वार्यविगर्हिताः ॥ ३ ॥ तत्र वैश्यापुत्रः शूद्रेणायोगवः ॥ ४ ॥ पुल्कसमागधौ क्षत्रियापुत्रौ वैश्यशूद्राभ्याम् ॥ ५ ॥ चण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्रविट्क्षत्रियैः ॥ ६ ॥ [2]संकरसंकराश्चासंख्येयाः ॥ ७ ॥**

तस्यैव व्यावर्त्यान्तरमाह। शूद्रादीनां प्रतिलोमा वैश्यादयः। तासु तेभ्यो जाता आर्यविगर्हिताः त्रैवर्णिकबाह्याः शूद्रसधर्माण इत्यर्थः। अनेनानुलोमजानां द्विजधर्मत्वमुक्तम्। यथाह **मनुः**—

" [3]सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः।
शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः॥ "

इति। अपध्वंसो व्यभिचारः। तेन कानीनादीनां शूद्रसधर्मत्वमेव। **गौतमस्तु** शूद्रायामनुलोमजस्याप्यधर्मत्वमाह—"प्रतिलोमात्तु धर्महीनः शूद्रायां च" इति। प्रतिलोमजेष्वपि विशेषं **स** एवाह—"असमानायां तु शूद्रात् पतितवृत्तिः" इति। असमाना वैश्यादिः; तस्यां शूद्रोत्पन्नः आयोगवादिः पतितवत् भवति। एतेन वैश्यादुत्पन्नस्य प्रतिलोमजस्य न पतितवृत्तिः; अपि तु शूद्रसधर्मत्वमिति॥ ३॥

तानेव संज्ञापूर्वकं लक्षयति। तत्र षण्णां प्रतिलोमजानां मध्ये शूद्रेण वैश्यायामुत्पन्नः पुत्र आयोगवसंज्ञो भवति [4]वैदेहक इति वा॥ ४॥

क्षत्रियायां वैश्यादुत्पन्नः पुल्कसः मागध इति वा धीवर इति वा। शूद्रादुत्पन्नो [5]मागधः वैदेहक इति वा पुल्कस इति क्षत्तेति वा॥ ५॥

[1] ऊढायां omitted in ख, छ.
[2] संकरिणः—क; संकरिणाम्—ठ.
[3] सजातिजात्यन्तरजाः—ग.
[4] वैदेहक इति वा omitted in ग.
[5] वैदेहकः मागधः—ख, ग.

ब्राह्मण्यां शूद्रादुत्पन्नश्चण्डालः। वैश्यादुत्पन्नो वैदेहकः क्षत्तेति वा मागध इति वा। क्षत्रियादुत्पन्नः सूत इति। यथाह **गौतमः**—" प्रतिलोमाः सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः " इति। अस्यार्थः— "अनन्तरैकान्तरद्व्यन्तरासु जाताः" इत्यनुवर्तते। तेन क्षत्रियस्यानन्तरा ब्राह्मणी; तस्यां तस्मात् सूतः। वैश्यस्य क्षत्रिया; तस्यां तस्मान्मागधः। शूद्रस्य वैश्या; तस्यां तस्मादायोगवः। वैश्यस्यैकान्तरा ब्राह्मणी; तस्यां तस्मात् क्षत्ता। शूद्रस्य क्षत्रिया; तस्यां तस्मात् वैदेहकः। शूद्रस्य द्व्यन्तरा ब्राह्मणी; तस्यां तस्मात् चण्डाल इति। मतान्तरेण **स** एव सवर्णानुलोमजप्रतिलोमजानां संज्ञान्तरमाह—"ब्राह्मण्यजीजनत् पुत्रान् वर्णेभ्य आनुपूर्व्या ब्राह्मणसूतमागधचण्डालान्। तेभ्य एव क्षत्रिया मूर्धावसिक्तक्षत्रियधीवरपुल्कसान्। तेभ्य एव वैश्या भृज्यकण्ठमाहिष्यवैश्यवैदेहकान्। पारशवयवनकरणशूद्रान् शूद्रेत्येके " इति। आनुपूर्वी वर्णक्रमः। न त्वानुलोम्यम्। **योगीश्वरोऽपि**—

" ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद्वैदेहकस्तथा।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः॥
क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्॥ "

इति॥ ६॥

वर्णसंकरवत् संकीर्णसंकरा अप्यभ्युपेयाः[1]। तदनभिधाने निमित्तमाह। संकरेषु अनुलोमजेषु प्रतिलोमजेषु च वर्णेभ्यः पुनरानुलोम्येन प्रातिलोम्येन च जाताः, ते संकरसंकराः। तथा संकराणामनुलोमजानां प्रतिलोमजानामानुलोम्येन प्रातिलोम्येन च परस्परं ये संकराः, ते असंख्येयाः; अनन्तत्वात्। यथाह **मनुः**—

" ब्राह्मणादुग्रकन्यायामावृतो नाम जायते।
आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः॥
जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः।
शूद्राज्जातो निषाद्यां तु स वै [2]कुक्कुटकः स्मृतः॥
क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते॥ "

इत्यादि। तेषामप्यानुलोम्यप्रातिलोम्याभ्यामुत्पत्तौ उत्कर्षापकर्षौ ज्ञेयौ; " पूर्ववच्चाधरोत्तरम् " इति योगिस्मरणात्॥ ७॥

[1] अभिधेयाः—ग, छ.

[2] कुक्कुटकः—छ, झ.

**रङ्गावतरणमायोगवानाम् ॥ ८ ॥ व्याधता पुल्कसानाम् ॥ ९ ॥ स्तुतिक्रिया मागधानाम् ॥ १० ॥ वध्यघातित्वं चण्डालानाम् ॥ ११ ॥ स्त्रीरक्षा तज्जीवनं[1] च वैदेहकानाम् ॥१२॥ अश्वसारथ्यं सूतानाम् ॥ १३ ॥**

प्रतिलोमजानां वृत्तीराह । रङ्गावतरणं मल्लविद्या, नृत्यशिक्षा च । सा आयोगवानां वृत्तिः । "त्वष्टिस्त्वायोगवस्य च" इति **मनुः** । त्वष्टिः काष्ठादितक्षणम् ॥ ८ ॥

व्याधता आरण्यपशुहिंसनम् । पुल्कसानामिति तत्समानधर्मणामन्येषामप्युपलक्षणम् । यथाह **मनुः**—

"मेदान्ध्रचञ्चुमद्गूनामारण्यपशुहिंसनम् ।
क्षत्त्रुग्रपुल्कसानां च बिलौकोवधबन्धनम् ॥"

इति । निषादाद्वैदेह्यां कारावरश्चर्मकारविशेषः । कारावरायां वैदेहान्मेदः । निषाद्यामन्ध्रः । ब्राह्मणात् वैदेह्यां जातः चञ्चुः । बन्दिस्त्रियां जातो [2]मद्गुः । क्षत्रियेण शूद्रायां जातो वन्दीति **बोधायनोक्तं** वेदितव्यम् ॥ ९ ॥

स्तुतिक्रिया सदसद्गुणकीर्तनं मागधानां वृत्तिः । "मागधानां वणिक्पथः" इति **मनुः** । वणिक्पथो वाणिज्यम् ॥ १० ॥

वध्यानां चौरादीनां घातनं चण्डालानां वृत्तिः । बहुवचनात् श्वपचानां च । यथाह **मनुः**—
"चण्डालश्वपचनां च" इत्युपक्रम्य,

"अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः ।
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः शय्यां चाभरणानि च ॥"

इति ॥ ११ ॥

स्त्रीणां नर्तक्यादीनां रक्षा पोषणादि । तज्जीवनं तदुपार्जितद्रव्यजीवनं च वैदेहकानां वृत्तिः । अन्तःपुररक्षेत्यन्ये ॥ १२ ॥

अश्वानां दमनयोजनादिशालिहोत्रज्ञानं रथसारथ्यं च सूतानां वृत्तिः ॥ १३ ॥

**चण्डालानां बहिर्ग्रामनिवसनं मृतचैलधारणमिति[3] विशेषः ॥ १४ ॥ सर्वेषां च [4]समानजातिभिर्विवाहः ॥ १५ ॥ स्वपितृवित्तानुहरणं च ॥ १६ ॥**

[1] तज्जातजीवनं—ज.
[2] मण्डुः—ग.
[3] धावनमिति—ठ.
[4] समानजातिभिश्च—क.

चण्डालेषु विशेषमाह। बहुवचनात् श्वपचादीनां ग्रहणम्। तेषां ग्रामात् बहिर्निवासः। शववस्त्राणां धारणमिति प्रतिलोमजानां मध्ये चण्डालादीनां विशेषः[1]। विशेषग्रहणात् भिन्नभाण्डभोजनादयोऽन्ये धर्मा अभ्यनुज्ञायन्ते। यथाह **मनुः**—

" चण्डालश्वपचानां तु बहिर्ग्रामात् प्रतिश्रयः।
कारावरो निषादात्तु चर्मकारः प्रजायते॥
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ।
चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान्॥
आहिण्डको निषादेन वैदेह्यामेव जायते।
चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्॥
पुल्कस्यां जायते पापः सदा सुजनवर्जितः।
निषादस्त्री च चण्डालात् पुत्रमन्त्यावसायिनम्॥
श्मशानगोचरं सूते बाह्यानामपि गर्हितम्।
अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम्॥
वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम्।
कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः॥
रात्रौ न विचरेयुश्च ग्रामेषु नगरेषु च।
दिवा चरेयुः कार्यार्थे [2]चिह्निता राजशासनैः॥"

इति। अपपात्राः; संस्कृतमपि एषां पात्रमन्यैर्न प्रयोज्यम्। परिव्रज्या अटनं सर्वेषां प्रायो विशेषः। राजशासनं राजादिष्टं चिह्नं कर्णे कपर्दिकादिबन्धनम्॥ १४॥

तद्धर्मानाह। आयोगवादीनां षण्णामपि तत्समानधर्माणामन्येषां च स्वस्वसमानजातिधर्मैः सह विवाहादिव्यवहारः; नोत्तमैः। यथाह **मनुः**—

" नैतैः समयमन्विच्छेत् पुरुषो धर्ममाचरन्।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह॥"

इति॥ १५॥

'प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः' इत्यस्यापवादमाह। सर्वेषामपि प्रतिलोमजानां स्वस्वपितृद्रव्यांशभागित्वमस्ति। पितृपदेनैव सिद्धौ स्वपदं स्वसमानजातिधर्मे पितरमाह; न विजातिधर्मम्। तेन साक्षात् वर्णजानां प्रतिलोमजानां न वर्णवित्तानुहरणमिति सिध्यति॥ १६॥

[1] विशेषः omitted in ख.

[2] विहिताः—ग, छ.

**संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।**
**प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥ १७ ॥**
**ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।**
**स्त्रीबालाद्यवपत्तौ[1] च बाह्यानां सिद्धिकारणम् ॥ १८ ॥**

इति [2]श्रीविष्णुस्मृतौ षोडशोऽध्यायः

यदुक्तं 'प्रतिलोमास्त्वार्यविगर्हिताः' इति तत्र विगर्हार्थं ज्ञानोपायमाह । या एता वर्णानां संकरे आयोगवादयो जातयः मातापितृभ्यां प्रदर्शिताः, ताः प्रच्छन्नाः गूढोत्पन्नाः, प्रकाशाः प्रकटोत्पन्ना वा स्वस्वकर्मभिरेव वेदितव्याः; शुक्रशोणितानुपातिनो जातिधर्मस्य बलवत्त्वात् । यथाह **मनुः**—

"वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा ।
न कथंचन दुर्योनिः प्रकृतिं स्वां विमुञ्चति ॥"

इति ॥ १७ ॥

तेषामदृष्टसाधनं धर्ममाह । गोब्राह्मणस्त्रीबालानामन्यतमस्यापि त्राणार्थम् अनुपस्कृतः दृष्टप्रयोजनानपेक्षः प्राणत्यागः बाह्यानां सिद्धिकारणं स्वर्गापवर्गहेतुः; न त्वन्यत्, विना सामान्यधर्मात् । यथाह **योगीश्वरः**—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥"

इति ॥ १८ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मज[4]श्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मजश्रीनन्द-पण्डितकृतौ [2]श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां षोडशोऽध्यायः

[1] स्त्रीबालानां विपत्तौ वा—क; स्त्रीबालाभ्यवपत्तौ च—ज.
[2] वैष्णवे षोडशोऽध्यायः—क, झ; वैष्णवे धर्मशास्त्रे संकरधर्मप्रकरणं षोडशम्—ज, ठ.
[3] श्रीमहाराज to पण्डितकृतौ omitted in ख, ग,
[4] श्री omitted in ग.

# सप्तदशोऽध्यायः

## पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छा [1]स्वयमुपार्जितेऽर्थे ॥ १ ॥

एवमध्यायद्वयेन मुख्यगौणसुतान् विभज्य लक्षयित्वा, सांप्रतं तेषां विभागं वक्तुं सप्तदशेन प्रक्रमते। तत्र साधारणस्य धनस्य विशेषेण भजनं विभागः। साधारणं चानेकस्वामिकम्। स्वत्वं च लौकिकमपि पुत्रादीनां जन्मनैव; "[2]उत्पत्त्यैवार्थे स्वामित्वाल्लभेतेत्याचार्याः" इति **गौतमीयात्**। पत्नीस्नुषादीनां तु पाणिग्रहणेन; "पाणिग्रहणाद्धि सहत्वं कर्मसु, तथा द्रव्यपरिग्रहेषु च" **इत्यापस्तम्बीयात्**। भ्रातृपुत्रादीनां तु स्वामिसंबन्धेन; "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति लिङ्गात्। तदपि द्विविधम्—सप्रतिबन्धम्, अप्रतिबन्धं च। तत्राद्यं पत्नीदुहित्रादीनाम्; पुत्रेण प्रतिबन्धात्। अन्त्यं पुत्रादीनाम्; कचित् पुत्रेच्छयापि विभागात्। विशेषश्चासाधारण्यम्; तेन भजनं ज्ञानमिच्छा वा। तच्च विद्यमाने पित्रादिधने 'इदं तव, इदं मम' इत्याकारकम्। अकिंचनतायां तु 'त्वया अद्यारभ्य यदर्थार्जनं तत् तवैव। मया यदर्थार्जनं तन्ममैव' इति। एवं चासंनिहितेऽपि धने ज्ञानादिविशेषो विभागः सिध्यति। द्रव्यपृथक्करणस्य तत्त्वे, तत् संनिहिते धने। अकिंचनतायां च विभागोऽसिद्धः।

तदस्मिन् विभागे कर्तृकालप्रकारमाह। पितेति कर्तृनिर्देशः। स च पुत्रपौत्राद्युपलक्षणम्। तच्च यथाप्रदेशं वक्ष्यते। चेदिति इच्छारूपकालनिर्देशः। स चान्येषामप्युपलक्षणम्। यथाह **गौतमः**— "ऊर्ध्वं पितुः पुत्रा रिक्थं भजेरन् निवृत्ते रजसि मातुर्जीवति वेच्छति" इति। **नारदोऽपि**—

> "मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च।
> निवृत्ते वापि रमणे पितर्युपरतस्पृहे ॥"

इति। नैमित्तिककालमाह **शङ्खः**—"अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि च" इति। रोगः क्रोधादेरुपलक्षणम्। यथाह **नारदः**—

> "व्याधितः कुपितश्चैव विषयासक्तमानसः।
> अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥"

[1] स्वयमुपात्ते—क, ञ, ठ.

[2] उत्पन्ने वार्थे—ग, छ.

इति । अन्यथाशास्त्रकारी विधिनिषेधातिक्रमकारी । उक्तनिमित्ताभावे न पुत्रेच्छया विभागः । यथाह **देवलः**—

" पितर्युपरते पुत्रा विभजेरन् पितुर्धनम् ।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥ "

इति । **मनुरपि**—" अनीशास्ते हि जीवतोः " इति । साहित्यमविवक्षितम्; " अस्वतन्त्राः पितृमन्तो मातर्यप्येवम् " इति **शङ्ख**स्मरणात् । मातरि जीवन्त्यां यदस्वातन्त्र्यं तत् मातृधन एव; न पितृधने । अन्यथा " पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् " इत्यादि विरुध्येत । एवं विभागकर्तृकालयोरनेकत्वेऽपि यदा पितैव पुत्रान् विभजेत्, तदा तस्य स्वार्जितार्थविभागे स्वेच्छैव नियामिका । अयमर्थः—यदि पिता कस्यचित् पुत्रस्य गुणवत्तया बहुकुटुम्बितया अशक्ततया वा किंचिदधिकं दित्सति, तदा स्वेच्छया दद्यात् । न पुत्रान्तरसंमत्यपेक्षा तत्र स्वार्जितार्थस्य । कारणं विना तु न दद्यात्;

" जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् ।
निर्भाजयेन्न चैवैकमकस्मात् कारणं विना ॥ "

इति **कात्यायनीयात्** । स्वोपार्जितं पैतामहस्यापि नष्टोद्धृतस्योपलक्षणम् । यथाह **बृहस्पतिः**—

" पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम् ।
प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ॥ "

इति । अत्रोभयत्रापि " अनाश्रित्य पितृद्रव्यं श्रमेण यदुपार्जयेत् " इति शेष इति वक्ष्यते । अत एव तादृग्विधविभागापालने पुत्रा दण्ड्या इत्याह **स** एव—

" समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।
तथैव तैः पालनीया विनेयास्ते स्युरन्यथा ॥ "

इति । न चोद्धारवैषम्याभिप्रायमेतत्, तस्यैव [1]शास्त्रीयत्वेन धर्म्यतया अलङ्घनीयत्वौचित्यादिति वाच्यम्; स्वार्जिते पितुरैच्छिकवैषम्यस्यापि शास्त्रीयत्वेन धर्म्यत्वात् । अत एव **नारदः**—

" पितैव वा स्वयं पुत्रान् विभजेद्वयसि स्थितः ।
ज्येष्ठं श्रेष्ठविभागेन यथा वास्य मतिर्भवेत् ॥ "

इति शास्त्रीयोद्धारविभागात् ऐच्छिकं विषमविभागं पृथगेवाह । तस्यैव चालङ्घनीयतामप्याह **स** एवाह—

" पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः ।
तेषां स एव धर्म्यः स्यात् सर्वस्य हि पिता प्रभुः ॥ "

[1] पालनीयत्वेन—ग, छ.

इति; पितामहाद्यार्जिते पितुः प्रभुत्वाभावात्। ननु "जीवन् पुत्रेभ्यो दायं विभजेत् समम्" इति **आपस्तम्बेन** समविभागाभिधानात् कथमयमैच्छिको विभागः प्रतिपाद्यत इति चेत्; सत्यम्; तस्य सामान्यरूपत्वेन स्वार्जितातिरिक्तपैतामहसहोत्थानार्जितधनविषयत्वेनापि संभवात्; यद्वा तस्योद्धारविभागनिषेधकत्वेनैच्छिकविभागनिषेधकत्वाभावात्। तथाहि—**आपस्तम्बेनैव** सममिति स्वमतमुक्तम्। "ज्येष्ठो दायाद इत्येके। देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य। रथः पितुः परिभाण्डं च गृहे। अलंकारो भार्याया ज्ञातिधनं चेत्येके" इत्येकीयमतेनैवोद्धारविभागमुक्त्वा "तच्छास्त्रैर्विप्रतिषिद्धम्" इति स एव निराकृतः। यदपि "मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते" इति समविभागसाधकं विषमविभागबाधकं चोक्तम्, तदपि "नित्यानुवादमविधिमाहुर्न्यायविदः" इत्यनेन निराकृतं तेनैव। एतेन **कात्यायनीयमपि** पूर्वार्धं व्याख्यातम्। उत्तरार्धं तु इच्छाया निरङ्कुशतानिराकरणाय; "यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रम्" इति श्रुतेरिति सर्वमनवद्यम्। एतेन

"विभागं चेत् पिता कुर्यादिच्छया विभजेत् सुतान्।"
"न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः।"

इति **याज्ञवल्क्यीयमपि** वचनद्वयं व्याख्यातम्। यत्तु "इच्छया विभजेत् सुतान्" इत्यत्र **मिताक्षरायाम्** इच्छायाः[1] स्वातन्त्र्येण विभागप्रकारनिमित्तत्वमपह्नुत्य उद्धारविभागसमविभागविषयत्वमेव नियमितं, तत् **विष्णुबृहस्पतिकात्यायननारदा**दिभिस्तत्र तत्र स्वतन्त्रैच्छिकविभागप्रतिपादनेन विरोधात् चिन्त्यम्। स्वार्जित इत्यनेन पितामहार्जिते पित्रार्जिते वा न विषमो विभाग इत्युक्तम्;

"द्रव्ये पितामहोपात्ते जङ्गमे स्थावरेऽपि वा।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि॥"

इति **बृहस्पति**स्मरणात्;

"भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह।
न तत्र विषमं भागं पिता दद्यात् कथंचन॥"

इति **मनु**स्मरणात्। उत्थानं धनार्जनम्। सह; पित्रेति वक्तव्यम्; अन्यथा केवलपुत्रार्जिते पुत्रेच्छयैव विभागात् पितेत्यसंगतं स्यात्। स्वेच्छयेत्यनेनोद्धारविभागे वैषम्यं नेत्युक्तम्; तस्य शास्त्रीयत्वेनैच्छिकत्वाभावात्। स्वपदेन च पुत्रेच्छया वैषम्यं निरस्तम्; "अनीशास्ते हि जीवतोः" इति **स्मरणात्**; "पितरि जीवति पुत्राणामर्थदानविसर्गाक्षेपेषु न स्वातन्त्र्यम्" इति **हारीत**स्मरणात्। अर्थो धर्मोपलक्षणम्; "अनर्हा एव पुत्रा अर्थधर्मयोरस्वातन्त्र्यात्" इति **शङ्ख**स्मरणात्। दानमदृष्टार्थम्। विसर्गो वन्दिभ्यो दानम्। आक्षेपो द्यूतादिना नाशनम्। अनिच्छायां त्वर्थत एव वैषम्यं निरस्तम्। पितेत्यनेन पुत्रैः पित्रार्जितस्यापि

[1] इच्छया—ग,

तदूर्ध्वं विभागो न विषम इत्युक्तम्; "विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम्" इति **योगिस्मरणात्**। चेदित्यनेन व्याध्यादिग्रस्ते पितरि जीवत्यपि पित्रार्जितस्य पुत्रैर्विभागो न विषम इत्युक्तम्; विशेषाश्रवणात् "समं स्यादश्रुतत्वात्" इति न्यायात्;

"व्याधितः कुपितश्चैव विषयासक्तमानसः।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः॥"

इति **स्मरणाच्च**। व्याध्यादेः पितृस्वातन्त्र्यनिराकर्तृत्वेनैच्छिकवैषम्यनिराकर्तृत्वसिद्धिः। पुत्रानित्यनेन मृतपितृकपौत्रविभागे न वैषम्यमित्युक्तम्; "पितृतो भागकल्पना" इत्यविशेषस्मरणात्; "अविभक्ते सुते प्रेते तत्सुतं रिक्थभागिनम्। कुर्वीत" इति **कात्यायनीय**विशेषस्मरणाच्च।

पुत्रविभागेऽपि विशेषमाह **योगीश्वरः**—"शक्तस्यानीहमानस्य किंचिद्दत्त्वा पृथक्क्रिया" इति। विशेषश्रवणं[1] न केवलं पुत्रविभाग एव, किंतु स्वविभागेऽपि। यथाहतुः **शङ्खलिखितौ**—"स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत्" इति। भूयिष्ठतायाश्च नियममाह **बृहस्पतिः**—"जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयम्" इति। [2]अंशद्वयमर्धस्याप्युपलक्षणम्। यथाह **कात्यायनः**—द्व्यंशहरोऽर्धहरो वा पुत्रवित्तार्जनात् पिता" इति। पुत्रश्च वित्तं च पुत्रवित्ते; तयोरर्जनात्। पुत्रश्चौरस एव; "स यद्येकपुत्रः स्यात् द्वौ भागावात्मनः कुर्यात्" इति **शङ्खलिखितस्मरणात्**। एकः मुख्यः पुत्रो यस्येति औरसपुत्रवानित्यर्थः; "एके मुख्यान्यकेवलाः" इति **त्रिकाण्डीस्मरणात्**। इयं च द्व्यंशकल्पना औरसपुत्राणामेव विभागे। अन्यविभागे तु ततोऽप्यधिकेन स्वांशकल्पना; तेषां चतुरादिभागभागित्वस्योक्तत्वात्। विशेषान्तरमप्याहतुः **शङ्खलिखितौ**—"यद्युपदस्येत् पुनस्तेभ्योऽपि गृह्णीयात् क्षीणांश्च बिभृयात्" इति। उपदस्येत्; भक्ष्याभावेन क्लिश्येत्; तदा तेभ्यः पुत्रेभ्यो जीवनं गृह्णीयात्। क्षीणांश्च पुत्रान् पिता बिभृयादित्यर्थः। मातुस्तु वक्ष्यति। भ्रातृविभागे अर्जकस्यापि द्व्यंशत्वमाह **वसिष्ठः**—"येन चैषां स्वयमुपार्जितं स्यात् स द्व्यंशमेव लभेत" इति। अर्थे इति सामान्योपादानेऽपि जङ्गमस्यैवैच्छिको विभागः; न स्थावरस्य;

"पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च।
स्थावरं तु न भुज्येत प्रसादे सति पैतृके॥"

इति [3]**दक्षस्मरणात्**; ऐच्छिकविभागस्यापि प्रसादहेतुकत्वात्। न चेदं पैतामहस्थावरविषयम्;

"स्थावरं द्विपदं चैव यद्यपि स्वयमार्जितम्।
असंभूय सुतान् सर्वान् न दानं न च विक्रयः॥"

1 इच्छा च—ग, छ.
2 अंशद्वय to तयोरर्जनात् omitted in ग, छ.
3 नारद—छ.

इति **स्मरणात्**। अस्यापवादमाहतुः **शङ्खलिखितौ**—"गृहं यवीयसोऽन्यत्र पितुरवस्थानात्" इति। **वसिष्ठोऽपि**—"अजावयो गृहं च कनिष्ठस्य" इति। यद्येकमेव गृहं विभागायोग्यं च, तदा कनिष्ठाय तत् देयमित्यर्थः, परं तु पित्रवस्थितिगृहं विना। तत्तु ज्येष्ठस्यैवेति। यथाह **हारीतः**—"ज्येष्ठाय दद्युर्देवता गृहं च। इतरे निष्क्रम्य कुर्युः" इति। देवताः पितृपूज्यविष्ण्वादिप्रतिमाः। गृहं पैतृकम्। निष्क्रम्य कुर्युरिति; आत्मवासार्थं गृहान्तराणि कुर्युरित्यर्थः। विभागार्हे तु गृहे विशेषमाह **स** एव—"एकस्मिन्नेव वा दक्षिणं ज्येष्ठायानुपूर्व्यमितरेषाम्" इति। दक्षिणं दक्षिणांशम्। इतरेषामानुपूर्व्यम्; उदक्संस्थतादिभागक्रम इत्यर्थः। दक्षिणं श्रेष्ठमिति[1] **कल्पतरुः**। अनेन बहुषु गृहेषु पैतृकं ज्येष्ठस्यैवेत्यर्थसिद्धमित्यलं बहुना ॥ १ ॥

**पैतामहे त्वर्थे पितृपुत्रयोस्तुल्यं[2] स्वामित्वम्[3] ॥ २ ॥**

अथ पैतामहद्रव्यविभागमाह। पितामहेनार्जितः पैतामहः। तस्मिन्नर्थे स्थावरे जङ्गमे वा पितृपुत्रयोस्तुल्यं स्वामित्वम्। यथाह **योगीश्वरः**—

"भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥"

इति। निबन्धो नाम 'एकस्य मासस्यैतद्दिनमारभ्य इयदन्नादि अस्मै देयम्' इति राजदत्तो वृत्तिविशेषः। पैतामह इत्यनेन प्रपितामहादिक्रमागतेऽपि तुल्यस्वाम्येन समांशित्वमनिच्छत्यपि पितरि पुत्रेच्छया विभागश्चोच्यते। यथाह **व्यासः**—

"क्रमागते गृहक्षेत्रे पितृपौत्राः समांशिनः।
पैतृके न विभागार्हाः सुताः पितुरनिच्छतः ॥"

इति। क्रमोऽत्र प्रपितामहपितामहपितॄणां विवक्षितः; प्रपौत्रपर्यन्तं दायसंबन्धश्रवणात्। यथाह **देवलः**—

"अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादा चतुर्थादिति स्थितिः ॥
तावत् कुल्याः सपिण्डाः स्युः पिण्डभेदस्ततः परम्।
सममिच्छन्ति पिण्डानां दायार्थस्वविभाजनम् ॥
विधिरेष सवर्णानां बहूनां समुदाहृतः।
एक एव सवर्णस्य दायोऽत्र न विभज्यते ॥"

[1] श्रेष्ठतममिति—च.
[2] तुल्यस्वामित्वम्—ठ.
[3] स्वाम्यम्—ग.

इति। अयमर्थः—अविभक्तानां विभक्तानां वा सह वसतां कुल्यानां यो दायविभागः प्रथमं भूयो वा, स आ चतुर्थात् चतुर्थपुरुषमभिव्याप्य स्यादिति स्थितिः मर्यादा। तत्र हेतुमाह—तावदिति। तावत् चतुर्थपुरुषपर्यन्तमेव कुल्याः सपिण्डाः समानपिण्डाः एकपिण्डदानक्रियान्वयिनो भवन्ति; त्रयाणां संप्रदानत्वात् चतुर्थस्य च दातृत्वात्। तद्व्यतिरेकमाह—ततः; चतुर्थात् परं पञ्चमस्य पिण्डभेदः पिण्डदानक्रियानन्वयः। तेन न दायभागित्वमित्यर्थः। तन्नियममाह। पिण्डानां पिण्डसंबन्धानां सममन्वयव्यतिरेकनियतं दायविभजनमिति। अयमपि विधिः सवर्णानामौरसानां सवर्णानां कानीनादीनां चेति। अयमभिसंधिः—येषामेकपिण्डदानक्रियान्वयः, तेषामेव दायसंबन्ध इति। **मनुरपि**—

"त्रयाणामुदकं कार्यं त्रिषु पिण्डं प्रवर्तते।
चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते॥
अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव च॥"

इति। चतुर्णां सपिण्डत्वात् स्वाम्यभावे तदीयं दायं पुत्रपौत्रप्रपौत्राः पूर्वपूर्वाभावे गृह्णीयुः, न पञ्चमः। स्वसंतानस्याभावे स्वपितृपितामहप्रपितामहसंतानो गृह्णीयात् पूर्वपूर्वाभावे। सपिण्डाभावे तु सकुल्यो वृद्धप्रपितामहसंततिः गृह्णीयादित्यर्थः।

यदुक्तं पञ्चमो न दायभागिति, तदपि जङ्गमविषयमेव। स्थावरं तु पञ्चमादिरपि लभत एव। यथाह **बृहस्पतिः**—

"तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत्।
जन्मनामपरिज्ञाने लभतेंऽशं क्रमागतम्॥
यं परंपरया मौलाः सामन्ताः स्वामिनं विदुः।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही॥"

इति। चकारेण वाशब्देन च चतुर्थषष्ठयोर्ग्रहणम्। महीति स्थावरमात्रोपलक्षणम्। पैतामहेऽपि पित्रा नष्टोद्धृते न [1]पितृपुत्रयोस्तुल्यं स्वामित्वं, किंतु पितुरेवेति वक्ष्यति। जीवति तु पितामहे पितृपुत्रयोरुभयोरप्यस्वातन्त्र्यमित्युक्तमेव। पितामहस्यापि मणिमुक्तादिषु स्वातन्त्र्येऽपि स्थावरे पुत्रपौत्रयोः [2]पारतन्त्र्यमेव,

"मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः॥"

[1] पितृपुत्रयोः to पितामहे omitted in ग, छ.

[2] अस्वातन्त्र्यमेव—ग, छ.

इति **स्मरणात्।** पैतामहेऽर्थे तुल्यस्वामित्वप्रतिपादनेन च समांशित्वमुक्तं भवति। अन्यथा तुल्यस्वामित्वेन दानविक्रयादिनिषेध एव सिध्येत्, न समांशित्वम्। अत एव **बृहस्पतिः**—

"द्रव्ये पितामहोपात्ते जङ्गमे स्थावरेऽपि च।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि॥"

इति॥ २॥

**पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युः॥ ३॥**

अथ विभागानन्तरोत्पन्नस्य विभागमाह। ये पित्रा समैर्विषमैर्वा अंशैर्विभक्ताः, तेऽपि भागकाले मातुरस्पष्टगर्भतया विभागानन्तरोत्पन्नस्य भ्रातुः स्वस्वेभ्योंऽशेभ्यः आयव्ययविशोधितेभ्यः स्वांशानुरूपं किंचित् किंचिदुद्धृत्य स्वसमीकृतं भागं दद्युः। यथाह **योगीश्वरः**—"दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्" इति। दृश्यात् भ्रातृविभागं कल्पयेयुरित्यर्थः। इदमपि पितृसंसृष्टभ्रातृधनाभावे। तत्सत्त्वे तु तत एवांशकल्पनास्येति। यथाह **मनुः**—

"ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत्।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह॥"

इति। पित्र्यमेवेत्येवकारेण विभक्तपुत्रांशात् न्यूनत्वे अधिकत्वे वा विभक्तजस्तदेव लभते। तत्पूर्वजा अधिकं न गृह्णीयुः, न्यूनं वा न पूरयेयुः; "अनीशाः पूर्वजाः पित्र्ये भ्रातृभागे विभक्तजाः" इति **बृहस्पतिस्मरणात्।** विभक्तजा इति बहुवचनात् बहूनामपि विभक्तजानामिति बोद्धव्यम्। पित्र्ये; मात्रंशभागित्वेनोक्तदुहित्रभावे मातुर्धनं विभक्तज एवाप्नोति; "मातुर्दुहितरः शेषमृणात् ताभ्य ऋतेऽन्वयः" इति **योगिस्मरणात्।** तत्राप्यसवर्णायां जातस्तु स्वांशमेव पित्र्यात् लभते। मातृकं तु सर्वमेव। यद्यप्यन्वयित्वेन पूर्वजानामपि प्राप्नोति, तथापि विभक्तजे सति तेषामस्वाम्यात् विभक्तजस्यैव मातृकम्; पित्र्यं तु तस्यैव;

"पुत्रैः सह विभक्तेन पित्रा यत् स्वयमार्जितम्।
विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृताः॥"

इति **बृहस्पतिस्मरणात्।** अत्रार्जितमिति समान्योपादानात् ऋणं धनं चेत्युभयमपि गम्यते। यथाह **स** एव,

"यथा धने तथर्णेऽपि दानाधानक्रयेषु च।
परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाम्॥"

इति। विशेषान्तरमाह **योगीश्वरः**—"पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्" इति। दानप्रतिषेधो दत्तप्रत्याहरणं वा न तेन कार्यमित्यर्थः। अनेनैव न्यायेन विभागात् प्रागूर्ध्वं वा पितृभ्यां यस्य यत् दत्तं, तत् तस्यैवेति वेदितव्यम्;

"पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् ।
तस्य तन्नापहर्तव्यं मात्रा दत्तं च यद्भवेत् ॥"

इति **व्यास**स्मरणात् । पितृविभक्ता इति परस्परविभक्तानामप्युपलक्षणम् । तेन पितुरूर्ध्वं परस्परविभक्ता अपि भ्रातरो विभक्तजस्य भ्रातुर्यथोक्तमंशं दद्युः । विभागानन्तरोत्पन्नस्येति सामान्यनिर्देशात् एवंविधस्य भ्रातृपुत्रस्याप्यंशं पितृव्या दद्युरिति सिध्यति । स्पष्टे तु गर्भे यावत्प्रसवं प्रतीक्षैव कार्या । यथाह **वसिष्ठः**—"अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासामा पुत्रलाभात्" इति । प्रतीक्ष्येति शेषः ॥ ३ ॥

## अपुत्रधनं पत्न्यभिगामि ॥ ४ ॥

पुत्रपौत्रप्रपौत्राणां दायादत्वं निरूपितम् ।
तदभावे [1]प्रमीतानां दायादानाह केशवः ॥

न विद्यन्ते पूर्वोक्ता द्वादश पुत्रा यस्यासौ अपुत्रः । पुत्रश्चात्र पौत्रप्रपौत्रयोरप्युपलक्षणम् । ततश्च पुत्रपौत्रप्रपौत्राणामभावे यद्वित्तं, तत् पत्न्या इति सिध्यति ;

"अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादा चतुर्थादिति स्थितिः ॥"

इति **देवलेन** प्रपौत्रस्यापि दायसंबन्धाभिधानात्, "अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः" इति अपुत्रदायाधिकारिपुत्रपौत्रसंतानाभावस्याभिमतत्वाच्च[2] । अत्र दौहित्रपदमपुत्रधनग्राहिमात्रोपलक्षणम्; पूर्वोक्तन्यायात् । अत एव **बौधायनः**—"सवर्णायाः पुत्रः पौत्रः प्रपौत्रः" इत्युपक्रम्य "असत्स्वन्येषु तद्गामी ह्यर्थो भवति" इति स्पष्टमाह । अन्येषु पत्न्यादिषु । तद्गामी ; पुत्रादिगामी । किंच पुत्रपदस्य मुख्यगौणपुत्रमात्रपरत्वे मृतपुत्रायाः पौत्रवत्[3] पत्न्या एव धनग्रहणप्रसङ्गः । न चेष्टापत्तिः ; पितृपितामह्या एव सकलधनसंबन्धेन पुत्राणां तत्पारतन्त्र्येणांशकल्पनायोगात् । तच्चाग्रे स्पष्टयिष्यते । न च पैतामहे धने पौत्राणामपि स्वत्वाद्विभागः सिध्यत्येवेति वाच्यम् ; पितामहेनेव पितामह्यापि पौत्राणां पारतन्त्र्यात् । तस्मात् पुत्रपौत्रप्रपौत्राभाव एव पत्न्या धनाधिकार इति सिद्धमित्यलं पल्लवितेन ।

तस्यापुत्रस्य पुत्रपौत्रप्रपौत्ररहितस्य मृतस्य स्थावरजङ्गमादि सर्वं पत्नी विवाहसंस्कृता सवर्णा भार्या गृह्णीयात् । [4]यथाह **वृद्धमनुः**—

"अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च[5] ॥"

[1] प्रमीतस्य—ग.
[2] संतानस्य for संतानाभावस्य—ख.
[3] पौत्रवत्याः—ख, ग.
[4] यदाह—छ; तत्राह—ग.
[5] वा—ख.

इति । कृत्स्नं स्थावरं जङ्गमं च । यथाह बृहस्पतिः—

"जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥
पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् ।
पूजयेत् कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥
तत्सपिण्डा बान्धवा ये तस्याः स्युः परिपन्थिनः ।
हिंस्युर्धनानि तान् राजा चौरदण्डेन शातयेत् ॥"

इति । स्थावरं गृहक्षेत्रारामादि । जङ्गमं गवाश्वादि । हेमकुप्यादीनामुभयात्मकत्वात् पृथङ् निर्देशः । पितृव्यादिसाहित्यं वृद्धादीनां पूजने चकारेणोच्यते । तेन तन्नैरपेक्ष्यं स्थावरे । क्वचिदपवादमाह स एव—

"यद्विभक्तं धनं किंचिदाध्यादिविधिसंभवम् ।
[1]तज्जाया स्थावरं मुक्त्वा लभते गतभर्तृका ॥"

इति । अस्यार्थः—आधिः प्रनष्टस्वत्वः "आधिः प्रणश्येद् द्विगुणे धने" "काले कालकृतो नश्येत्" इत्याद्युक्तः । अयमभिसंधिः—यद्भर्त्रा स्थावरमाधीकृत्य धनं प्रयुक्तं, तस्मिन् [2]कलावृद्ध्या द्वैगुण्यमापन्ने तस्मिन्नाधौ स्वामिनः स्वत्वनाशेन धनप्रयोक्तुः भर्तुः स्वत्वमुत्पन्नमिति स्थितिः । भर्तृमरणानन्तरं तस्मिन्नाधौ स्त्रियां संक्रान्ते तादृशप्रयोगान्तरोत्पत्त्या धनद्वैगुण्यातिक्रमेण कलायां वर्धमानायामाधिनाशो नास्तीति सिध्यति । ततश्च मरणात् भर्तृस्वत्वे नष्टे कलावृद्ध्या च स्त्रियाः स्वत्वानुत्पत्तौ तादृशस्थावरस्य पर्युदासो युक्त एवेति । आदिपदात् भर्तुः प्रीतिदानम् । तदुभयविधिना यत् संभूतं स्थावरं, तन्मुक्त्वा स्थावरं जङ्गमं च लभत इति । ततश्चाविभक्तस्थावरविषयमिदं वृत्तिहीनपत्नीविषयं चेत्यपि व्याख्यानं परास्तम् । दुहितृरहितपत्नीविषयमिदमिति तु तुच्छमेव; प्रमाणाभावात् । न च पूर्ववाक्ये दौहित्रपूजनश्रवणात् दौहित्रवत्याः स्थावराधिकारसिद्धेरिदं [3]दौहित्ररहितपत्नीविषयमर्थात् भवेदिति वाच्यम्; दौहित्रवत् पितृव्यादीनामपि पूजनश्रवणात् तद्वत्या अधिकारापत्त्या तदभावविषयता व्यापद्येत । न च पितृव्याद्यपेक्षया दौहित्रस्य संनिहितत्वेनाधिकारापादकत्वमिति वाच्यम्, संनिहितस्वदौहित्राश्रवणात् प्रकृतभर्तृदौहित्रस्याधिकारापादकत्वासंभवात् । तस्मान्न किंचिदेतदित्यलम् ।

यत्तु "स्थावरं मुक्त्वा" इति वचनं दायादानुमतिं विना स्थावरदानविक्रयादिनिषेधपरमिति, तदपि प्रमाणाभावग्रस्तम् । यत्तु

"मृते भर्तरि भर्त्रंशं लभते कुलपालिका ।
यावज्जीवं हि तत्स्वाम्यं दानाधमनविक्रये ॥"

[1] न जाया—ख, ग. [2] कालवृद्ध्या—ख. [3] दुहितृ—ख, ग

इति **कात्यायनीयं** वचनं प्रमाणमिति, तदपि न; तत्र स्थावरपदाश्रवणात्; तस्य भर्तृप्रीतिदत्तविषयत्वस्य वक्ष्यमाणत्वात्।

सवर्णाभावे त्वसवर्णा अपि सर्वं धनं गृह्णीयुः; 'सवर्णाभावे त्वनन्तरस्य' इति वक्ष्यमाणत्वात्। समवाये तु सर्वा विभज्य गृह्णीयुः। परं तु स्वस्वपुत्रभागानुसारेण। यदा तु द्विजातीनां केवलशूद्रैव भार्या, नान्या, तदा सा न सर्वं लभते; किंत्वर्धमेव। अर्धं चान्ये रिक्थिनो गृह्णीयुः। यथाह **गौतमः**—"पिण्डगोत्रर्षिसंबद्धा रिक्थं भजेरन्; स्त्री चानपत्यस्य" इति। अनपत्यस्य धनं सपिण्डाद्याः प्रत्यासत्तिक्रमेण भजेरन्; स्त्री च। अत्र सपिण्डादिभ्यः स्त्रियाः पृथक् निर्देशात् अर्धं सपिण्डाद्यन्यतमः; अर्धं स्त्रीति सिध्यति। स्त्रीग्रहणाच्चेदं शूद्रापरमेव; अन्यासां पत्नीत्वात्। वक्ष्यति च—'द्विजातीनां शूद्रस्त्वेकः पुत्रोऽर्धहरः। अपुत्ररिक्थस्य या गतिः सात्रार्धस्य द्वितीयस्य' इति; शूद्रापुत्रन्यायस्य शूद्रायां पत्न्यामपि तुल्यत्वात्। **बृहस्पतिस्तु** क्षत्रियादिपरिणीतायां शूद्रायां विशेषमाह—

"अन्यत्र ब्राह्मणात् किंतु राजा धर्मपरायणः।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः॥
अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम्।
वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः॥
एतावदेव साध्वीनां चोदितं विधवाधनम्।
वसनस्याशनस्यैव तथैव रजकस्य च।
धनं व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत्॥"

इति। साध्वीनामिति विशेषणात् असाध्वीनां तदपि नेति ध्वनितम्;

"भरणं चापि कुर्वीरन् स्त्रीणामा जीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु च॥"

इति **नारदस्मरणात्**। अपक्रीतापुनर्भूस्वैरिण्यवरुद्धादिभ्यस्तु आढकमात्रमेव देयं, नान्यत्; पत्नीत्वाभावस्य सर्वास्वपि तुल्यत्वात्; "आढकं भर्तृहीनाया दद्यादामरणं स्त्रियाः" इति **प्रजापतिस्मरणाच्च**। एतस्मादेव **गौतमबृहस्पत्या**दिवचनज्ञापितदायादक्रमात् यदा सवर्णा दुहिता असवर्णा च स्त्री समवेतः, तदोभयोः समांशित्वम्; पुत्राभावे उभयोर्विधानात्। पत्न्यभावे दुहिता सवर्णादुहिता। सवर्णाभावे असवर्णा पत्नीति द्व्यन्तरितत्वसाम्यात्। यथाह **नारदः**—"पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात्" इति। "[1]सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता" इति च **बृहस्पतिः**। सवर्णाभावे असवर्णेत्युक्तमेव।

[1] From here up to इति नारदस्मरणात् on p. 290, l. 19 omitted in ग.

एवमुत्तमवर्णकन्याधमवर्णस्त्रीसमवायेऽन्यत्राप्यूह्यम् । इदं च पत्न्यादीनां धनग्रहणं विभक्ते पत्यावसंसृष्टिनि मृते च द्रष्टव्यम्; विभागस्य पूर्वमुक्तत्वात्, संसृष्टिनां चाग्रे वक्ष्यमाणत्वात् ।

ननु अपुत्रस्येत्यत्र पुत्रपदेन स्नुषापि कुतो न विवक्ष्यते? तस्या अपि "अर्धो वा एष आत्मनः पत्नी" इति श्रुत्या पुत्रार्धशरीरत्वावगमात् । सत्यम्; पत्नीमात्रविषयन्यायश्रुत्या श्वश्र्वा अपि श्वशुरशरीरार्धता-प्रतिपादनात् स्वामिशरीरार्धतया श्वश्र्वाः एतत्स्नुषापेक्षया संनिकर्षेण विवक्षाफलाभावात् । पत्न्यभावे त्वपुत्रधनं स्नुषैव लभते, न दुहिता; तदधिकारस्य पुत्रपत्न्यभावायत्ततया पत्न्यभावेऽपि पुत्रार्धशरीरसत्त्वेन पुत्राभावविरहात् । तथाच **बृहस्पतिः**—

"यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धशरीरे तु कथमन्यः समाप्नुयात् ॥"

इति । न च दुहितुः साक्षात् पित्रवयवारब्धत्वेन पित्रवयवारब्धपुत्रसहकारिस्नुषापेक्षया संनिकृष्टत्वमिति वाच्यम्; पित्रवयवारब्धपुत्रसहकारित्वमेव न केवलम्, अपि तु दुहित्रपेक्षया सगोत्रसपिण्डायाः स्नुषायाः प्रत्यासत्त्यतिशयात् । यद्येवं पित्रादिष्वतिप्रसङ्ग इति चेत्; सत्यम्; तेषां वचनेनैव स्थानविशेषस्य नियमितत्वात् । यत्रापि पतिमरणानन्तरं पत्न्येव लभते, तत्रापि मातृधनत्वेन तद्धनं दुहितृगामीति न भ्रमितव्यम्; जन्मना पुत्रस्येव विवाहेन स्नुषाया अपि भर्तृद्वारा श्वशुरधने स्वत्वोत्पत्त्या श्वशुरमरणे श्वश्रूस्नुषयोः स्वत्वसाम्येन श्वश्रूमरणे स्नुषाया एव साधारणस्वाम्यात् ॥ ४ ॥

## तदभावे दुहितृगामि ॥ ५ ॥

तदभावे क इत्यत आह । तेषां पुत्रादिस्नुषान्तानामभावे दुहितरो धनं गृह्णीयुः; पूर्वपूर्वाभावसह-कृतोत्तरोत्तरभावस्यैवोत्तरोत्तराधिकारापादकत्वात् । अत्र च दुहितृसामान्यनिर्देशेऽपि पुत्रवत्या एव तस्याः पितृधनाधिकारो युक्तः, "पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात्" इति **नारद**स्मरणात् । अनेनैव च हेतुनिर्देशेन प्रत्यासत्तिसाम्येऽप्युपकारातिशयेन धनाधिकारोऽभिहितो भवति, यथा पुत्रत्वसाम्येऽप्यक्लीबादीनाम् । एतदेव स्पष्टीकृतमुत्तरार्धे तेनैव—"पुत्रश्च दुहिता चोभौ तुल्यसंतानकारकौ" इति । पुत्रदुहित्रोरुभयोरपि संतानवत्त्वमेव धनग्रहणेऽधिकारापादकम्; न स्वरूपमात्रम्; अन्यथा क्लीबादिपर्युदासस्यादृष्टार्थतापत्तेः । यदपि अपुत्रस्यापि पुत्रादेर्धनग्रहणं, तदपि योग्यतामादायैव; नायोग्यतानिश्चये । ततश्च विधवादीनामयोग्य-तानिश्चयेन धनानधिकारः । किंतु क्लीबादीनामिव तासामपि धनग्राहिभिः भरणमात्रं कार्यमिति । तत्र सवर्णा, तदभावे असवर्णापि । समवाये तु स्वस्वसुतोत्पत्त्यनुरूपेणांशेन पितृधनं गृह्णीयुः । यथाह **बृहस्पतिः**—

"भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता ।
सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ॥"

इति । सदृशी सवर्णा । सा चासवर्णोपलक्षणम्; 'पुत्रभागानुसारेण भागापहारिण्योऽनूढाश्च दुहितरः' इति वक्ष्यमाणलिङ्गात् । ऊढेत्यनूढोपलक्षणम्;

"पत्नी पत्युर्धनहरी या स्याद्व्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत् तदा ॥"

इति **कात्यायन**स्मरणात् । ततश्च सवर्णा असवर्णा ऊढा अनूढाश्च समवाये यथांशं समं च विभज्य गृह्णीयुः । पूर्वपूर्वाभावे तूत्तरोत्तरैवेति । ऊढानूढासमवाये अनूढैवेति तु न; तादृशक्रमकल्पने प्रमाणाभावात् । यत्तु "यद्यनूढा भवेत्तदा" इति यद्यनूढा दुहिता भवेत् तदैव सा धनं लभते, नान्यथेत्यनेनानूढाभाव एव ऊढाया धनग्रहणं सिध्यतीति; तन्न; तस्यान्यार्थपरत्वात् । तथाहि—यद्यनूढा भवेत्, तदा अनूढावस्थायां पितृभागं न लभते; किंतु यावद्विवाहं भरणं विवाहोपयुक्तं च द्रव्यम् । पितृभागं तु विवाहानन्तरमेव लभत इति । तथाच **नारदः**—

"स्यात्तु वै दुहिता तस्याः पित्रंशो भरणे मतः ।
आ संस्काराद्धरेद्भागं परतो बिभृयात् पतिः ॥"

इति । अस्यार्थः—यद्यनूढा दुहिता स्यात्, तदा तस्याः आविवाहं पित्रंशेन भरणं कार्यम् । परतो विवाहानन्तरं पित्र्यं भागं हरेत् । तस्याश्च भरणं पतिरेव कुर्यात्; न पित्रंशेनेति । **देवलोऽपि**—

"कन्याभ्यश्च पितृद्रव्याद् देयं वैवाहिकं वसु ।
अपुत्रस्य तु कन्या स्वा धर्मजा पुत्रवद्भवेत् ॥"

इति । वैवाहिकं विवाहोपयुक्तम् । देयं कन्यादानाधिकारिणा । स्वा सवर्णा । धर्मजा औरसी । यदपि **पराशर**वचनम्—'अपुत्रमृतस्य कुमारी ह्यर्थं गृह्णीयात्, तदभावे वोढा' इति पठन्ति, तदपि धनमन्तरेणानूढकन्याया ऋतुदर्शने पित्रादीनां नरकपातश्रुतेः तद्विवाहः प्रथमं कर्तव्यः; अनन्तरमंशदानम्; तदभावे विवाह्यकुमार्यभावे ऊढा सपुत्रा संभावितपुत्रा वा गृह्णीयादित्यर्थकम् । यद्यपि संनिपत्योपकारकत्वात् सपुत्राया एव प्रथमं धनग्रहणं प्राप्नोति, तथापि तदभावे संभावितपुत्राया अपि योग्यतया पुत्रवत्त्वात् दुहितृत्वाविशेषाच्चोभयोरपि विभज्यैव धनग्रहणं युक्तमुत्पश्यामः । एतेन "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च" इति **गौतमीयस्य** पितृधने समानत्वात् प्रत्ताप्रत्तसमवाये अप्रत्तैव, प्रतिष्ठिताप्रतिष्ठितसमवाये चाप्रतिष्ठितैवेत्यपि व्याख्यानं परास्तम्; वाक्यस्य स्त्रीधनविषयत्वात्, न्यायस्य च पितृधनविषये दुष्टत्वादित्यलं प्रसङ्गेन । 'तुल्यसंतानदर्शनात्' इति हेतूपन्यासेन पुत्राभावे पौत्रस्येव, दुहित्रभावे दौहित्रस्याधिकारः । यथाह **बृहस्पतिः**—

"यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥"

**इति ॥ ५ ॥**

**तदभावे पितृगामि ॥ ६ ॥ तदभावे मातृगामि ॥ ७ ॥**

तदभावे क इत्यत आह । तेषां पुत्रादिदौहित्रान्तानामभावे अपुत्रधनं पितृगामि । यथाह **देवलः**—"तुल्या दुहितरो वापि ध्रियमाणः पितापि च" इति । **कात्यायनोऽपि**—

"अपुत्रस्यापि कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः ॥"

इति ॥ ६ ॥

तदभावे क इत्यत आह । तेषां पित्रन्तानामभावे माता; मात्यस्यां गर्भ इति या माता जननी, सा धनं गृह्णीयात् । यथाह **बृहस्पतिः**—

"भार्यासुताविहीनस्य तनयस्य मृतस्य तु ।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥"

इति । एतेन "पितरौ भ्रातरस्तथा" इति **योगि**वाक्यमपि व्याख्यातम् । यत्तु—एकशेषे विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातात्, एकशेषाभावे च मातापितराविति मातृशब्दस्य पूर्वं श्रवणात्, पाठक्रमादेवार्थक्रमावगमात् प्रथमं माता गृह्णीयात्, पश्चात् पितेति व्याख्यातम्; तदसत्; मूलवाक्ये तदभावेनार्थक्रमो गृह्यते "[1]अग्निहोत्रं जुहोति, यवागूं पचति" इतिवत्; "पिता माता" इति **कात्यायन**वाक्येन प्रतीयमानश्रौतक्रमविरोधेन च पाठक्रमस्यातन्त्रत्वात् । यदपि पिता पुत्रान्तरेष्वपि साधारणः, माता तु असाधारणीति प्रत्यासत्त्यतिशयात् मातुः प्रथमं धनग्रहणं युक्तमिति; तदप्ययुक्तम्; पित्रवयवाधिक्येन पितुः प्रत्यासन्नतरत्वात्; अवयवप्रत्यासत्तेश्चोक्तप्रत्यासत्त्यपेक्षयाभ्यर्हितत्वात् । अन्यथा दुहितॄणां मातृधनग्रहणं पुत्राणां च पितृधनग्रहणं न स्यात् । किंच अपत्योत्पत्तौ शुक्रस्य प्राधान्यं शोणितस्य च तदुपष्टम्भकत्वेन गुणभाव इत्यपि पितुः प्रत्यासन्नतरत्वम् । तदाह **बौधायनः**—'अपत्यजनने पितुः प्राधान्यं, पितुरेव बीजस्य प्राधान्यात् । अयोनिजा अपि पुत्रा दृश्यन्ते द्रोणागस्त्यादयः' इति । एतदेवाभिप्रेत्य स्पष्टमाह **मनुः**—

"उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते ।
पिता प्रधानं जनने तस्माद्धर्मेण तं भजेत् ॥"

इति । उपसर्जनं नाम माता, प्रधानस्य पितुः धर्मतो धर्मेण रिक्थग्रहणादिना नोपपद्यते न संबध्यते । यतः जनने [2]पुत्रोत्पत्तौ पिता प्रधानम् । अतो धर्मेण पुत्रधनं तमेव पितरमेव भजेत, न मातरमिति । तस्मात् पितैव प्रथमं गृह्णीयात्; पश्चान्मातेति । मात्रभावे पितामही धनं गृह्णीयात्;

[1] आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति—ग, छ.

[2] अपत्योत्पत्तौ—छ.

" अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥ "

इति **मनुना** मात्रभावे पितामह्याः धनसंबन्धबोधनात् ।

अत्र केचित्—सत्यमनेन मातुरनन्तरं पितामह्याः धनग्रहणं प्राप्तम्; परं तु पित्रादीनां भ्रातृसुतपर्यन्तानां बद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात् 'पितुर्माता' इति वचनस्य धनग्रहणाधिकारिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामही गृह्णाति, अविरोधादित्याहुः। तद्विरुद्धम्; बद्धक्रमाणामपि पञ्चानां चितीनां मध्ये अनारभ्याधीतानां चित्रिण्यादीनामिष्टकानाम् " यां वै कांचित् ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चितावुपदध्यात् " इति वचनेन यथा मध्यमचितावुपधानं, तथा बद्धक्रमाणामपि पित्रादीनां मध्ये " मातर्यपि च वृत्तायाम् " इति वचनेन मातुरनन्तरं पितामह्याः निवेशसंभवात्। यदप्यस्य धनग्रहणाधिकारिमात्रपरत्वात् न क्रमपरत्वमिति; तदपि न;

" विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वापि माता वा तत्पितुः क्रमात् ॥ "

इति श्रौतक्रमविधायक**कात्यायन**वाक्यैकवाक्यतया क्रमपरत्वसंभवात्। पुत्रपदं च दौहित्रान्तसंनिहितोपलक्षणम्। अनेन " अनपत्यस्य पुत्रस्य " इत्यपि व्याख्यातम्। भ्रातुः पूर्वनिर्देशश्च मात्रभ्यनुज्ञानाभिप्रायः; " माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया " इति **स्मरणात्**। तस्मात् मात्रभावे पितामही धनं गृह्णातीति सिद्धम् ॥ ७ ॥

**तदभावे भ्रातृगामि ॥ ८ ॥ तदभावे भ्रातृपुत्रगामि ॥ ९ ॥**

तदभावे क इत्यत आह। तेषां पितामह्यन्तानामभावे भ्रातरः। स्वसारश्च भ्रातरश्चेति भ्रातरः; " भ्रातृपुत्रौ स्वसृदुहितृभ्याम् " इत्येकशेषात्। **योगि**वाक्ये " पितरौ भ्रातरस्तथा " इत्येकशेषोपक्रमाद्वा भ्रातरो भगिन्यश्च भ्रातृधनं गृह्णन्ति, प्रत्यासत्तिसाम्यात्; " भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः " इति संसृष्टिधने भगिनीनामप्यंशभागित्वदर्शनाच्च। तत्र प्रथमं समानपितृका भ्रातरो गृह्णीयुः; पित्रवयवाधिक्येन प्रत्यासन्नतरत्वात्। तदभावे समानमातापितृका भगिन्यो गृह्णीयुः; तासां भिन्नमातृकादिभ्रात्रपेक्षया संनिहितत्वात्; भिन्नोदराणां मात्रा भिन्नबीजानां च पित्रा विप्रकर्षात्। तदभावे तु तेऽपि गृह्णीयुः;

" सोदर्याः सन्त्यसोदर्या भ्रातरो द्विविधा यदि ।
विद्यमानेऽप्यसोदर्ये सोदर्या एव भागिनः ॥ "

इति **स्मरणात्**। तत्रापि प्रथमं समानपितृकाः; पश्चात् समानमातृकाः; बीजस्य प्राधान्यात्, प्रत्यासत्तेश्च क्रमनियामकत्वात्। तद्यथा—एकस्य द्वे पत्न्यौ। तत्रैकस्यां द्वौ पुत्रौ, अन्यस्यामेकः पुत्रस्तेन जनितः।

अनन्तरं च द्विपुत्रा अन्यं पतिमाश्रित्य पुत्रान्तरं जनयामासेति तस्याः त्रयः पुत्रा बभूवुः। तत्र पूर्वयोरन्यतरस्मिन् प्रमीते तद्धनं समानमातापितृक एव प्रथमं गृह्णीयात्। तदभावे समानपितृको भिन्नोदरोऽपि गृह्णीयात्; बीजप्राधान्यात्। तदभावे समानमातृको भिन्नपितृकोऽपीति। तत्रापि ज्येष्ठ एव प्रथमं गृह्णीयात्, तदभावेऽन्यः; "असंसृष्टिविभागः प्रेतानां ज्येष्ठस्य" इति **गौतम**स्मरणात्। सवर्णभ्रात्रभावे सवर्णा सपुत्रा माता गृह्णीयात्; "सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम्" इति **देवल**स्मरणात्। अत्रान्ते भार्योपादानं शङ्कितव्यभिचारिणीविषयमित्युक्तं प्राक्। सवर्णसपत्नमात्रभावे असवर्णा भ्रातरो गृह्णीयुः। तदभावे असवर्णा सपत्नमातेति ॥ ८ ॥

[1]तदभावे क इत्यत आह। तेषां भ्रात्रन्तानामभावे भ्रातृपुत्राः धनं गृह्णीयुः। अत्राप्येकशेषः पूर्ववदेव। तथाच भ्रातृपुत्राणामभावे भगिनीपुत्रा गृह्णीयुः; पूर्ववदेव प्रत्यासत्तेरान्तरतम्यात्। भ्रातॄणां पूर्वप्रमीतत्वेन भ्रातृधने स्वत्वानुत्पत्त्या भ्रातृपुत्राणामेव च स्वामिनाशेन स्वत्वोत्पत्त्या पितृक्रमेण विभागानर्हत्वान्न पितृतो भागकल्पना स्यात्, पैतृकस्वत्वस्य द्रव्यविषयत्वात्। यदा तु अपुत्रे भ्रातरि मृते अन्येषां तद्भ्रातॄणां तद्धने स्वत्वोत्पत्तेर्यदि कश्चित् तद्धनविभागात् प्रागेव म्रियते, तदा तत्पुत्राणाम्; पितृतोऽधिकारविशेषात्। अत्रापि भ्रातृवदेव प्रत्यासत्तिर्वर्णनीया ॥ ९ ॥

**तदभावे बन्धुगामि ॥ १० ॥ तदभावे सकुल्यगामि ॥ ११ ॥**
**तदभावे सहाध्यायिगामि ॥ १२ ॥**

तदभावे क इत्यत आह। तेषां भ्रातृपुत्रान्तानामभावे बन्धवः सपिण्डाः। ते च सगोत्रा असगोत्राश्च। तत्र प्रथमं सगोत्राः सपिण्डा गृह्णीयुः। ते च पितृपितामहप्रपितामहास्त्रयः। तेषां चापत्यानि त्रीणि त्रीणि। तत्रायं क्रमः—पितृसंताने भ्रातृपुत्राभावे भ्रातृपौत्रः तदभावे पितामहः तत्पुत्रः तत्पौत्रश्च। तदभावे प्रपितामहः तत्पुत्रः तत्पौत्रः तत्प्रपौत्रश्चेत्येवं चतुर्णामेवाधिकारः, न पञ्चमस्येति।

"त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते।
चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते ॥"

इत्यभिधानात्। "पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात्" इत्यस्यात्मदुहितृष्विव पित्रादिदुहितृष्वपि तुल्यत्वात्। पितृसपिण्डाभावे मातृसपिण्डाः मातामहमातुलतत्सुताद्या गृह्णीयुः; बीजस्य प्राधान्यात्। तदभावे मातृष्वसृतत्सुताद्याः। यत्तु आत्मपितृमातृबन्धूनामात्मपैतृष्वसेयादीनां मध्ये प्रथममात्मबन्धुः, पश्चात् पितृबन्धुः, तदभावे मातृबन्धुरिति व्याख्यातम्, तत् आत्मभगिनीभागिनेयादिषु विद्यमानेषु पैतृष्वसेयादीनां धनग्रहणमनौचितीपराहतं, विप्रकर्षादित्युपेक्षणीयमेव चेति युक्तम् ॥ १० ॥

[1] Commentary on Sūtra-s 9 and 10 missing in ग.

तदभावे क इत्यत आह। तेषां बन्ध्वन्तानामभावे सकुल्यः पञ्चमादिसंततिः; तद्गामि। यथाह **बौधायनः**—"प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तानविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायादान् सकुल्यानाचक्षते। सत्सु सपिण्डेषु तद्गामी ह्यर्थो भवति। सपिण्डाभावे सकुल्याः, तदभावे त्वाचार्योऽन्तेवासी ऋत्विग्वा हरेत्। तदभावे राजा" इति। दायोऽत्र पिण्डः; दीयते इति व्युत्पत्तेः। सः आभिमुख्येन दीयते पित्रादिभ्यः; आदीयते गृह्यते च पुत्रादिभ्यो यस्मिन् कर्मणि तत् दायादं श्राद्धम्। तत् अविभक्तम् एकदातृदेवताभावेन येषां ते अविभक्तदायादाः; एकश्राद्धान्वयिन इत्यर्थः। ते ये चत्वारः सपिण्डाः, ततोऽन्ये पञ्चमादयः सकुल्या इत्यर्थः। सकुल्यः सपिण्डाभावे धनं गृह्णीयात्। सकुल्याभावे आचार्यो गृह्णीयात्। तदभावे शिष्यः; "पुत्राभावे प्रत्यासन्नः सपिण्डः, तदभावे आचार्यः, आचार्याभावे अन्तेवासी" इति **आपस्तम्ब**स्मरणात्॥ ११॥

शिष्याभावे क इत्यत आह। तस्य शिष्यस्याभावे सहाध्यायी गृह्णीयात्। येन सह एकस्मात् गुरोरधीतं, स सहाध्यायी। अध्ययनमुपनयनस्याप्युपलक्षणम्। तेनैकाचार्योपनीतोऽपि लभते; "शिष्यसब्रह्मचारिणः" इति **योगि**स्मरणात्। तदभावे ऋत्विक् हरेत्; "अन्तेवासी ऋत्विग्वा हरेत्" इति **शङ्ख**स्मरणात्॥ १२॥

**तदभावे ब्राह्मणधनवर्जं राजगामि॥ १३॥ ब्राह्मणार्थो ब्राह्मणानाम्[1]॥ १४॥ वानप्रस्थधनमाचार्यो गृह्णीयात्॥ १५॥ शिष्यो वा॥ १६॥**

[2]ऋत्विजोऽभावे क इत्यत आह। तेषां पुत्रादीनामृत्विगन्तानामभावे तद्धनं राजा गृह्णीयात् ब्राह्मणधनं वर्जयित्वा। यथाह **बृहस्पतिः**—

"येऽपुत्राः क्षत्रविट्छूद्राः पत्नीभ्रात्रादिवर्जिताः।
तेषां धनहरो राजा सर्वस्याधिपतिर्हि सः॥"

इति॥ १३॥

तर्हि ब्राह्मणधनस्य का गतिरित्यत आह। ब्राह्मणस्यार्थो धनम्। तं श्रोत्रिया ब्राह्मणा गृह्णीयुः; "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्" इति **गौतम**स्मरणात्। तदभावे ब्राह्मणमात्रम्। यथाह **मनुः**—"सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः" इति॥ १४॥

[1] ब्राह्मणमेव—ज.

[2] ऋत्विजोऽप्यभावे—ञ.

यदुक्तं पुत्रादयस्तदभावे पत्न्यादयश्च धनभाज इति, तदुभयापवादमाह । वानप्रस्थ इति गृहस्थातिरिक्ताश्रमत्रयोपलक्षणम् । आचार्य इति शिष्याद्युपलक्षणम् । तेन च वानप्रस्थयतिब्रह्मचारिणां धनं क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनो गृह्णीयुः । यथाह **योगीश्वरः**—

"वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥"

इति । आचार्योऽत्र वानप्रस्थाश्रमदीक्षयिता ; "दीक्षितो गुरुणानुज्ञातो दिशमुपनिष्क्रम्य" इति **वृद्धहारीतीय**-लिङ्गात् । **भारतेऽपि**—

"तत्रैनं विधिवद्राजा प्रत्यगृह्णात् कुरूद्वहम् ।
स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः ॥
शतयूपाश्रमे तस्मिन्निवासमकरोत् तदा ।
तस्मै सर्वं विधिं राज्ञे राजाचख्यौ महामतिः ॥"

इति धृतराष्ट्रस्य वानप्रस्थाश्रमे आचार्यवत्त्वलिङ्गाच्च । सन् गुणवान् निर्दोषः शिष्यः । धर्मभ्राता प्रतिपन्नो भ्राता । एकतीर्थी समानाचार्यकः । धर्मभ्राता चासौ एकतीर्थी चेति ; एकाचार्येषु भ्रातृत्वेन प्रतिपन्न इति यावत् । एते त्रयः त्रयाणां क्रमेण धनभाजः । यद्वा एकतीर्थी वाराणस्याद्येकतीर्थवासी ; पृथगेव द्वन्द्वाश्रयणात् । ते चत्वारः त्रयाणां क्रमेण पूर्वपूर्वाभावे परः परो धनभागित्यर्थः । यतेस्तु आचार्यो महावाक्योपदेष्टा ; "संन्यस्याचार्यमुपतिष्ठेत ब्रह्मजिज्ञासया" इति शङ्खस्मरणात् । यत्तु यतिवर्णिनो-राचार्याभावमभिप्रेत्य प्रातिलोम्यक्रमेणेति व्याख्यातं, तत् **हारीतविष्णुशङ्ख**वाक्यादर्शनमूलकमित्युपेक्ष्यम् ॥ १५ ॥

आचार्याभावे क इत्यत आह । सच्छिष्यो वा वानप्रस्थादिधनं गृह्णीयात् । वाशब्दात धर्मभ्रात्रेकतीर्थिनोर्ग्रहणम् ॥ १६ ॥

**संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।**
**दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥ १७ ॥**

अपवादमाह । विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टम् ; "संसृष्टं धनमुभयं समाकृतम्" इति श्रुतेः । यदेकं सत् उभौ याति तदुभयम् ; विभक्तमिति यावत् । तत् समाकृतं साधारणीकृतं संसृष्टम् । तदस्यास्तीति संसृष्टी । यथाह **बृहस्पतिः**—

"विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥"

इति। एकत्र स्थितिरत्र विभक्तानां धनानामिदंताव्यवहारप्रयोजकधर्मापनयनेन पूर्ववत् सर्वेषां साधारण्येनोपभोगयोग्यतापादनम्। तच्च 'यावद् भूतभावि भवद्धनं तव, तन्ममापि; यावच्च तद्धनं मे, तत् तवापि' इत्यनुमतिः। सा तु कचिद्वाचनिकी; कचित्तु अनन्यथासिद्धव्यवहारगम्या; "अनुक्त्वापि वचः किंचित् कृतं भवति कर्मणा" इति **विष्णुपुराणात्**। पित्रादिगणनं तु प्रदर्शनार्थं, नान्यपरिसंख्यार्थम्; दोषत्रयापत्तेः; "विभक्ताः सह जीवन्तः" इति **मानवीये** सामान्याभिधानाच्च। न च विशेषेणोपसंहारः; "विभजेरन् पुनर्यदि" इति पुनःशब्देनावृत्तिवाचिना आद्यविभागपूर्वावस्थां द्योतयता यत्प्रतियोगिक आद्यो विभागः, तत्प्रतियोगिकस्यैव संसर्गस्य प्रदर्शनेनास्पष्टताभावात्। किंच पित्रादित्रयसंसर्गे "अनपत्यस्य धर्मोऽयम्" इत्यादिवक्ष्यमाण**बार्हस्पत्य**संसृष्टिक्रमानुपपत्तिः। तस्मात् यैः सह विभागः, तैरेव सह संसर्ग इति स्थितम्। तेन च पित्रा विभक्तः पुत्रः पूर्वविभक्तेन पितृव्यादिना सह संसृष्टो न भवति; किंतु यः पितृव्यादिभिः सांप्रतं विभक्तः, स तेषामेवान्यतमेन। न विभागस्योपलक्षणत्वम्; संभूयसमुत्थानादावतिप्रसङ्गात्।

तस्य संसृष्टिनो मृतस्यांशं संसृष्टी दद्यात्। कस्य दद्यादित्यपेक्षायामाह—जातस्येति। संसृष्टधनसंबन्धितयेति शेषः। सा च त्रिधा—संसर्गावस्थोत्पत्त्या, संसृष्टिपितृसंसर्गेण, अविभक्तपितृकेण संसर्गेण चेति। तद्यथा—यः संसर्गावस्थायामुत्पद्यते पुत्रः, यो वा पूर्वविभक्तो भ्रात्रादिसंसृष्टेन पित्रा पश्चात् संसृज्यते, यो वा अविभक्तः पितृकृतसंसर्गेणैव संसृष्टी भवति, तस्य त्रिविधस्यापि। यथाह **मनुः**—

"ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह॥"

इति। य इति सामान्यनिर्देशात् पितृपुत्रभ्रातृव्यादयो ये तेन पित्रा सह संसृष्टाः, तैः सह विभजेत; तेभ्योऽशं गृह्णीयात्; ते तस्मै अंशं दद्युरित्यर्थः। तादृशपुत्राभावे मृतस्य संसृष्टिनोंऽशं संसृष्ट्येवापहरेत् गृह्णीयात्। न त्वसंसृष्टः पुत्रभ्रात्रादिः; पूर्वविभागेनासंसृष्टानां स्वत्वस्य निवृत्त्या, संसृष्टानां तु संसृष्टिधनसंसर्गेण स्वत्वोत्पत्त्या, सत्सु च तेषु धनस्वामिषु 'कस्येदं धनं भवति' इत्याकाङ्क्षाया अनुदयेनासंसृष्टिगामित्वशङ्कानवकाशात्। एवंच विभक्तानेकपुत्रसत्त्वेऽपि यदा केनचिदेकेनैव पुत्रेण पिता संसृज्य सुतादकृतविभाग एव म्रियते, तदा तद्भागं संसृष्ट्येव पुत्रो गृह्णाति, नासंसृष्टी पुत्रः।

एवमेव यदा कश्चित् भ्राता स्वभ्रातॄन् स्वपुत्रांश्च विभज्य केनचित् भ्रात्रा भ्रातृपुत्रेण वा संसृष्टः, संसर्गावस्थायां च पुत्रान्तरमनुत्पाद्यैव मृतः, तदा संसृष्ट्येव भ्राता भ्रातृव्यो वा तद्धनं गृह्णीयात्। नासंसृष्टः पुत्रभ्रात्रादिः; "संसृष्टिनस्तु संसृष्टी" इति वचनारम्भसामर्थ्यात्। उक्तन्यायबलात्

"संसृष्टिनां तु यो भागस्तेषामेव स इष्यते।
अतोऽन्यथानंशभाजो निर्बीजेष्वितरानियात्॥"

इति व्याख्यातम् । अतः संसृष्टिभ्यः; अन्यथा ये असंसृष्टिनः, ते अनंशभाजः अंशानर्हाः । कदा पुनस्ते अंशभाज इत्यत आह । निर्बीजेषु निरपत्येषु पुनः संसृष्टिषु मृतेषु तद्भागः इतरान् असंसृष्टिनोऽपि इयात् गच्छेत् । अयमर्थः—संसृष्टिधनं पूर्वोक्तस्त्रिविधोऽपि संसृष्टी पुत्रो गृह्णीयात् । तदभावे संसृष्टी पितृभ्रात्रादिः । तस्याप्यभावे पूर्वोक्तस्त्रिविधोऽसंसृष्टी पुत्रः । तस्याप्यभावे असंसृष्टी पितृभ्रात्रादिः ; निर्बीजत्वविशेषणस्योभयसंसृष्टिशेषत्वात् ।

नन्वेतदसंगतम् ;

"विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः ।
पुनर्विभागकरणे ज्यैष्ठ्यं तत्र न विद्यते ॥
यदा कश्चित् प्रमीयेत प्रव्रजेद्वा कथंचन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥
या तस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥"

इति **बृहस्पतिना** पुत्रपत्नीपितृरहितस्यैव संसृष्टिनो भ्रातुरंशं संसृष्टी भ्राता गृह्णीयादित्युक्तत्वात् कथमसंसृष्टिनि पुत्रे विद्यमाने संसृष्टी भ्राता भ्रातृव्यो वा धनभागिति । उच्यते—नेदमपत्यादिसामान्याभावं बोधयति ; पत्न्याद्यपवादकसंसृष्टिवाक्यशेषत्वविरोधात् । किंतु "संसृष्टिनां तु यो भागः" इति **नारद**वचनैकवाक्यतया संसृष्टिवाक्यशेषतया च संसृष्टिनां पुत्रपत्नीपितॄणामभावं गमयति । तथाच यत्रैकस्य कस्यचित् पुत्रभार्यापितृभ्रातृभिः समं संसर्गः, तस्मिन् मृते संसर्गाविशेषेण सर्वेषां सममंशग्रहणे प्राप्ते संसृष्टिपुत्राद्यभाव एव संसृष्टिभ्रात्रादेर्धनसंबन्धं बोधयति ; "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा" इति क्रमस्य संसृष्टिवाक्यापोद्यत्वेन तद्विषयाप्रवृत्त्या अनेकसंसृष्टिविषये क्रमाकाङ्क्षायामस्य प्रवृत्तेः । अन्यथा संसृष्टिवाक्यस्य पत्न्याद्यपवादकत्वानुपपत्तेः, प्रत्युत विकल्पापत्तेः ; 'सत्यामपि पत्न्यां संसृष्टी गृह्णीयात् । सत्यां पत्न्यां न ससृष्टी गृह्णीयात्' इति परस्परविरोधात् ; अपवादकत्वस्य च "अतोऽन्यथानंशभाजः" इत्यनेनावश्यकत्वात् । तस्मात् पुत्राद्यनेकसंसर्गे प्रत्यासत्तिविशिष्टसंसर्गिक्रमेण प्रथमं संसृष्टी पुत्रः, तदभावे संसृष्टिनः स्त्री, तदभावे संसृष्टी पिता, तदभावे संसृष्टिनी माता, तदभावे संसृष्टी भ्राता, तदभावे तु असंसृष्ट्यपि पुत्रादिरिति यथोक्तक्रमेण लक्ष्यते ; "निर्बीजेष्वितरानियात्" इति **स्मरणात्** ; संसृष्टिप्रक्रमे,

"मृतोऽनपत्योऽभार्यश्चेदभ्रातृपितृमातृकः ।
सर्वे सपिण्डास्तद्दायं विभजेरन् यथांशतः ॥"

इति **बृहस्पतिस्मरणाच्च** ।

ननु पुत्रादिभिरनेकैः संसर्गे पुत्रस्य सत्त्वात् भ्रातुर्धनग्रहणं न प्राप्नोत्येव ; "न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः" इति **स्मरणात्** ; संसृष्टिवाक्यस्य 'अपुत्रधनं पत्न्यभिगामि' इत्यस्यापवादकत्वेनो-

त्सर्गसमानविषयतया अपुत्रविषयत्वाच्च । तस्मादत्र क्रमाकाङ्क्षाविरहेण एतद्वाक्यारम्भो निरर्थक इति चेत— मैवम् । संसृष्टिवाक्येन ‘अपुत्रधनं पत्न्यभिगामि’ इत्यस्य विशिष्टस्यापवादं वदता पुत्रपत्नीसद्भावेऽपि संसृष्टिनो धनग्रहणं बोधितम् । तथा संसृष्टिपुत्रसत्त्वेऽपि पुत्रत्वमनादृत्य संसर्गाविशेषात् तेन सह भ्रातुरपि धनग्रहणं प्राप्तम् । न क्रमविधानाय; अनपत्यस्येति वचनारम्भसामर्थ्यात् । विशिष्टापवादत्वे च “संसृष्टिनां तु यो भागस्तेषामेव स इष्यते । अतोऽन्यथानंशभाजः” इति **नारद**वाक्यमेव प्रमाणम् । अन्यथा पत्न्याद्यपवादोऽपि न स्यात्; प्रमाणान्तराभावात् । यदि चेदमेव प्रमाणं, तर्हि असंसर्गाविशेषात् पुत्रस्याप्यपवादकमस्तु । न चादृष्टपूर्वः पुत्रापवादः; वानप्रस्थादिषु दर्शनात् । न च पुत्रांशेषु प्रतिप्रसवोऽस्ति । यत्तु अनपत्यस्येति, तत् अनेकसंसृष्टिनां क्रमपरम् । अन्यथा विरोधः; पत्न्यामपि तुल्यत्वादित्युक्तमेव ।

ननु ‘अनपत्यस्य’ इत्यस्य सामान्याभावपरत्वानङ्गीकारे महदेव वैशसम्[1] । तथाहि—“अतोऽन्यथानंशभाजः” इत्यनेन पूर्वविभक्तस्य पुत्रस्यापवादः । संसर्गावस्थोत्पन्नस्य तु “संसृष्टास्तेन देयाः स्युः” इत्यनेनांशग्रहणं बोधितम् । संसृष्टिनस्तु ‘अनपत्यस्य’ इत्यनेन संबन्धो बोधितः । तथाच सति यदा अकृतविभागेन पुत्रेण सहैव पिता भ्रात्रादिना संसृज्यते, तदा तादृशपुत्रस्य कोटित्रयेऽप्यनन्तर्भावात् का गतिरिति चेत्—न; संसृष्टान्तर्भाव एवात्र गतिरिति ब्रूमः । अविभक्ते धनेऽपि पितापुत्रयोः स्वत्वस्य तुल्यतया एतादृशधनेनान्यसंसर्गे पितृवत् पुत्रस्यापि संसृष्टित्वस्य शब्दशक्त्यैव सिद्धत्वात् । न चैवं “दंपती धनस्येशाते” इति **आपस्तम्बेन** पाणिग्रहणादेव पत्न्या अपि भर्तृधने स्वत्वबोधनात् अकृतविभागभार्येणान्यसंसर्गे भार्यापि भर्त्रंशं लभेत; तथाचापवादो निर्विषय इति वाच्यम् । अकृतविभागायाः कृतविभागायाः संसर्जितधनायाश्चोक्तरीत्या संसृष्टत्वेऽपि अपवादस्य कृतविभागासंसर्जितधनपत्नीविषयत्वसंभवात्; पत्नीवाक्ये उभयविधाया अपि ग्रहणात् । न चैवमपि भगिन्याः संसृष्टित्वं न संभवत्येव; भ्रातृसत्त्वे तस्याः विभागानर्हतया तदभावेन संसर्गासंभवादिति चेत्—न; असंस्कृतभगिन्या अंशदानपूर्वकं संस्कारश्रवणात् विभागसंभवेन संसर्गसंभवात् । तस्मात् सिद्धं पुत्रपत्न्याद्यनेकसंसर्गे क्रमविधानार्थम् अनपत्यवाक्यमिति ।

ननु संसर्गावस्थोत्पन्नपुत्राभावविषयतया अनपत्यपदं सवर्णापरतया व्रतस्थापरतया वा भार्यापदं च कुतो नेष्यते? वृद्धैस्तथा व्यवस्थापनादिति चेत्—न; पितृपदे विषयविशेषपरतासंभवेन विरोधतादवस्थ्यात् । अपत्यपदस्य तु पुत्रदुहितृपरता अवश्याभुपेयैव; दुहितुरप्यैच्छिकविभागसंभवेन संसर्गसंभवात् । पत्न्यास्तु पाक्षिकं विभागं वक्ष्यत्येव । न च—भ्रातृमात्रविषयमनपत्यस्येति वचनम्; प्रकरणादिति वाच्यम्; वाक्यान्तरैकवाक्यतायाः प्रकरणात् बलवत्त्वात् । अन्यथा मूलान्तरकल्पनाक्लेशापत्तेः । पत्न्याद्यपवादस्यास्य वाक्यस्य पत्न्याद्यभाव एव विशेषणमिति विरोधात् असंसृष्टस्यापि भ्रातुर्धनग्रहणे पुत्रपत्न्याद्यभावो विशेषणम्; स एव संसृष्टस्यापीति अविशेषेणैतद्वाक्यारम्भानर्थक्याच्च । तस्मात् अनपत्यस्येत्यादि

[1] वैषम्यम्—ग.

संसृष्टिमात्रविशेषणम्; "विभक्तो यः पुनः पित्रा" इत्याद्युपक्रमबलात्। मध्ये भ्रातृमात्रपरामर्शस्तु "सोदरस्य विधीयते" इत्यादिगुणविधानाय।

यदपि संसृष्टिवाक्यं न पत्नीवाक्यस्यापवादः; किंतु पत्न्यादिपित्रन्तानामभावे क्रमेण भ्रात्रधिकारे विशेषविधायकम्। ततश्च बृहस्पतिवाक्ये संसर्गस्योपक्रमात् "सोदरस्य विधीयते" इत्येतदपि संसृष्टविषयं वाच्यम्। तदेकवाक्यतापन्नम् 'अनपत्यस्य' इति वाक्यं पुत्रादीनां पित्रन्तानामभावे संसृष्टिसोदरस्याधिकारं गमयतीत्यविरोधेनोपपत्तौ किमर्थं पत्नीबाधकत्वं कल्प्यताम्? एवं च संसृष्टिवाक्यं न्यायमूलं भवति। अन्यथा त्वदृष्टार्थं चेदमूलकं स्यादिति—तदपि न; "विभक्तो यः पुनः पित्रा" इत्यादिना पितृभ्रातृपितृव्यैः संसर्गाभिधानस्यानर्थक्यापातात्। न हि संसृष्टिवाक्ये पित्रादयो विषयाः; तस्य भ्रातृमात्रविशेषाभिधायकत्वात्। किंच पुत्रादिपित्रन्तानामभावस्य पत्नीवाक्येनैव भ्रातृमात्रे प्राप्तत्वात् संसृष्टिभ्रातरि तदभिधायकस्य 'अनपत्यस्य' इति वाक्यस्यारम्भोऽनर्थकः, अपवादत्वेऽपि तदर्थतापत्तेः, संसर्गोत्पन्नस्य स्वत्वान्तरस्यापि दृष्टस्यैव निर्णयादित्यलं विस्तरेण।

'संसृष्टिनस्तु संसृष्टी' इत्यस्यापवादमाह—'सोदरस्य तु सोदरः' इति। सोदरस्य संसृष्टिनो मृतस्य धनं सोदरः संसृष्टी जातस्य दद्यात्;[1] तदभावे स्वयमेव हरेत्। न तु संसृष्ट्यपि भिन्नोदर इत्यर्थः; भिन्नोदरे संसर्गमात्रसत्त्वात्; सोदरे तु संसर्गसोदरत्वयोर्द्वयोः सत्त्वात्। यदा तु सोदरः संसृष्टी नास्ति, तदा भिन्नोदर एव संसृष्टी गृह्णीयात्। यदा पुनः सोदरः असोदरश्चोभावपि संसृष्टिनौ न स्तः, तदा असंसृष्ट्यपि पुत्रादिर्गृह्णीयात्। एतदेव स्पष्टयितुं वचनान्तरमाह **याज्ञवल्क्यः**—

"अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।
असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः॥"

इति। अत्रेयं व्याख्या—अन्योदर्यस्तु संसृष्टी धनं हरेत्। नान्योदर्यश्चेन्न; न अन्योदर्यः नान्योदर्यः; मृतस्य सोदर इति यावत्। मृतस्य संसृष्टिनः सोदरः संसृष्टी चेन्नास्ति, तदा भिन्नोदरोऽपि संसृष्टी हरेदित्यर्थः। असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजश्चेत्; सोदरासोदरसंसृष्ट्यभावे असंसृष्ट्यपि पुत्रादिर्गृह्णीयादित्यर्थः;

"संसृष्टिनां तु यो भागस्तेषामेव स इष्यते।
अतोऽन्यथानंशभाजो निर्बीजेष्वितरानियात्॥"

इति **नारद**स्मरणात्। निर्बीजेषु निरपत्येषु। अपत्यानि च त्रिविधान्यपि संसृष्टानीत्युक्तम्। इतरान् असंसृष्टिनः। संसृष्टिनः अपत्याभावं वदता संसृष्ट्यभावः अर्थागेवोक्तः। तदेव स्पष्टमाह **कात्यायनः**—

"संसृष्टानां तु संसृष्टाः पृथक्स्थानां पृथक् स्थिताः।
अभावेंऽशहरा ज्ञेया निर्बीजान्योन्यभागिनः॥"

[1] नान्यस्य added in छ.

इति। अयमर्थः—संसृष्टानां संसृष्टा एव गृह्णीयुः। तदभावे पृथक् स्थिताः। तथा पृथक्स्थानामंशं पृथक् स्थिताः असंसृष्टिन एव गृह्णीयुः। तदभावे संसृष्टाः। न केवलं स्वाम्यभाव एवान्यस्यार्थहरत्वम्; किंतु त्रिविधसंसृष्टपुत्राभाव इत्याह—निर्बीजेति। त्रिविधसंसृष्टपुत्राभावे अन्योन्यस्यार्थहरत्वम्; न तु तत्सत्त्वे। अस्य चोभयशेषतया संसृष्टानामभावे तदपत्याभावे च संसृष्टा गृह्णीयुः। तेषामभावे तदपत्याभावे च पृथक् स्थिता इत्यर्थः पर्यवस्यति। एवं पृथक् स्थितानामपि द्रष्टव्यम्। यत्तु—"अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्। असंसृष्टी" इत्यन्वयव्यतिरेकाभ्यामन्योदर्यस्य संसृष्टित्वमेव धनभाक्त्वे हेतुरिति प्राचोक्तम्; तच्चिन्त्यम्; संसृष्टिवाक्यस्य पत्न्याद्यपवादकत्वोक्त्यैवैतदर्थसिद्धेर्वाक्यारम्भानर्थक्यात्; पित्रादीनामपि संसृष्टित्वसंभवात् तस्य साधारण्ये च पृथगसोदर्ये तद्विधानवैयर्थ्याच्च। न च सोदर्यस्यैव संसृष्टित्वेनांशभाक्त्वं नान्यस्येति नियमाय वचनारम्भः; पित्रादीनां संसर्गिणामपि धनभाक्त्वाप्रसङ्गात्; असंसर्गिणामपि धनभाक्त्वप्रसङ्गाच्च। न चेष्टापत्तिः। आद्ये पित्रादिसंसर्गिविधानवैयर्थ्यात्। अन्त्ये तदपवादत्वविरोधात्।

यद्येवं सोदरवाक्यस्यापि संसृष्टिवाक्यापवादकत्वारम्भेणैव सोदर्याभावे अन्योदर्यः, सोदरासोदरसंसृष्ट्यभावे चासंसृष्टी हरेदित्यर्थसिद्धौ एतद्वाक्यानर्थक्यं तदवस्थमेवेति चेत्—न; सोदरभ्रातृपुत्रान्योदर्यभ्रातृसत्त्वे किं द्वयोरपि, उत अन्यतरस्यांशभाक्त्वमित्यपेक्षायां पूर्वार्धप्रवृत्तेः; भ्रात्रपत्यासत्त्यभावेऽपि पित्रपत्यासन्नत्वेनांशभाक्त्वौचित्यात्। उत्तरार्धं तु अपवादापवादकशास्त्रमन्तरेणोत्सर्गाप्रवृत्तेरारभ्यत इति नानर्थक्यम्। अपवादकाभावमात्रेणोत्सर्गप्रवृत्त्यङ्गीकारे वानप्रस्थादिधनाधिकार्यभावेऽपि पुत्रादीनामधिकारापत्तेरित्यलम्।

यदपि संसृष्टिनो भिन्नोदरस्यासंसृष्टिनश्च सोदरस्य सद्भावे उभयोर्विभज्य धनग्रहणमिति उत्तरार्धव्याख्यानं, तदपि तथैव; "अतोऽन्यथानंशभाजः" "अभावेंऽशहरा ज्ञेयाः" इति **नारदकात्यायन**वाक्यविरोधात्। असंसृष्टिसंसृष्टिपदयोः पूर्वत्रान्वितयोः इतरत्राप्यनुषङ्गस्य, संसृष्टिपदे संसृष्टित्वसोदरत्वरूपार्थद्वयकल्पनस्य, एवकाराध्याहारस्य च निष्प्रमाणकत्वाच्च।

यच्च

"विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥
येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥
सोदर्या विभजेयुस्तं समेत्य सहिताः समम्।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥"

इति **मनुवाक्ये** सोदर्यपदमसंसृष्टिसोदरपरम्; "भ्रातरो ये च संसृष्टाः" इत्येतच्च संसृष्टिभिन्नोदरपरमिति व्याख्यानं प्रमाणवदाभासते—तदपि न; सोदरभ्रातृपदयोः विशेषणविशेष्यभावमात्रेणोक्त**बृहस्पति**-

वाक्यस्थसोदरपदेन एकार्थत्वसंभवे अर्थान्तरकल्पनाया अन्याय्यत्वात्; चकारवशात् तत्कल्पने तु **नारदकात्यायन**[1]वाक्यविरोधापत्तेः; चकारद्वयस्यापि धवश्च खदिरश्चेतिवत् उत्तरविवक्षया भगिनीसमुच्चयार्थत्वात्। न च विशेषणानर्थक्यम्; भगिनीविशेषणवत् भिन्नोदरभ्रातृवारणार्थत्वात्। तस्मात् यथोक्तैव व्यवस्था साधीयसीति।

**अत्रापरार्कः**—'अपुत्रधनं भ्रातॄणामित्युक्तम्। तत्रायं विशेषः—संसृष्टिनः सोदरस्य मृतस्यांशं सोदरः संसृष्टी गृह्णीयात्। तस्मिन् मृते जातस्य पुत्रस्य दद्यादिति तु प्रासङ्गिकम्। सोदर्यत्वाभावे तु नांशभाक्त्वमिति स्पष्टयति—अन्योदर्यस्तु संसृष्टयपि नान्योदर्याद्धनं हरेदिति। यदा तु अन्योदर्य एव संसृष्टी, न सोदर्यः, तदाह—असंसृष्टयपि चादद्यात् सोदर्य एव, नान्यमातृजः संसृष्टयपि' इति—तत् आमूलं शिथिलम्। संसृष्टिवाक्यस्य भ्रातृमात्रविषयत्वे पितृभ्रातृपितृव्यैः संसर्गाभिधानमनर्थकम्; तत्संसर्गनिर्णायकवाक्यान्तराभावात्; प्रकरणविच्छेदकतुशब्दद्वयवैयर्थ्याच्च; सोदर्यनियमादेवान्योदर्यव्यावृत्तिसिद्धौ व्यतिरेकाभिधानवैयर्थ्याच्च। संसृष्टिसत्त्वेऽपि असंसृष्टिनोंऽशभाक्त्वे **नारदकात्यायन**वचोविरोधश्चेत्यलं वृद्धविरोधेन।

अंशमिति सामान्योपादानेऽपि स्थावरे विशेषमाह **वृद्धहारीतः**—"संसृष्टी गृह्णाति स्थावरवर्जं स्थावराणां सपिण्डसमता" इति। अस्यार्थः—सोदरासोदरसंसर्गे सोदरः संसृष्टी सोदरसंसृष्टिनोंऽशं गृह्णीयात्; परं तु अविभक्तं स्थावरं वर्जयित्वा; तस्य सोदरासोदरसाधारण्यादिति। तदाह **यमः**—

"अविभक्तं स्थावरं यत् सर्वेषामेव तद्भवेत्।
विभक्तं स्थावरं ग्राह्यं नान्योदर्यैः कथंचन॥"

इति। अविभक्तविभागे यत् स्थावरं, तत् सर्वेषां संसृष्टिनां सोदराणामसोदराणां च। विभक्तं तु नान्योदर्यैर्ग्राह्यम्, किंतु सोदरैरेव। तदाह **बृहन्मनुः**—

"एकोदरे जीवति तु सापत्नो न लभेद्धनम्।
स्थावरेऽप्येवमेव स्यात् तदभावे लभेत वै॥"

इति। यदपि **प्रजापति**स्मरणम्—

"अन्तर्धनं तु यद् द्रव्यं संसृष्टानां च तद्भवेत्।
भूमिं गृहं च संसृष्टाः प्रगृह्णीयुर्यथांशतः॥"

इति, तदपि संसृष्टानां सोदराणाम्। भूमिं गृहं च; अविभक्तमिति व्याख्येयम्॥ १७॥

**पितृमातृसुतभ्रातृदत्तम्, अध्यग्न्युपागतम्, आधिवेदनिकं, बन्धुदत्तं, शुल्कम्, अन्वाधेयकमिति स्त्रीधनम्॥ १८॥**

[1] विशेषणवद्वाक्य—ग, छ.

एवं पुरुषधनविभागं सप्रपञ्चमभिधाय स्त्रीधनविभागं विवक्षन् तल्लक्षणमाह । पित्रा मात्रा पुत्रेण भ्रात्रा च यद्दत्तं, तत् सौदायिकम् । यच्च विवाहकाले अग्निमधिकृत्य पितृव्यादिभ्यः अधिगतं तत् अध्यग्न्युपागतम् । आधिवेदनिकम्; अधिवेदनं भार्यान्तरपरिग्रहः; तदर्थमेव पत्न्यै यत् दत्तम् । बन्धुभिः मातुलादिभिः यत् दत्तं तत् बन्धुदत्तम् । शुल्कं पित्रादिदत्तं गृहादि; स्वकन्यामूल्यं वा । अन्वाधेयकं विवाहानन्तरं भर्तृकुलात् पितृकुलाद्वा लब्धम् । इतिकरणात् अध्यावहनिकम्; "रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इति **गौतमीयात्**; "वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं स्मृतम्" इति **देवलीयाच्च**। तल्लक्षणमाह **कात्यायनः**—

"ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा ।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥"

ऊढया पत्युः सकाशात्, कन्यया पितृगृहे पैतृकमित्रादिभ्यः पित्रादिभ्यो वा ।

"विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥"

विवाहकाले कन्यादानकाले । अग्निसंनिधौ होमकाले ।

"अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥
प्रीत्या दत्तं तु यत् किंचिच्छ्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं यत्तु प्रीतिदत्तं तदुच्यते ॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम् ।
मूल्यं लब्धं तु यत् किंचिच्छुल्कं तत् परिकीर्तितम् ॥"

पित्रादिदत्तस्य गृहादेः भ्रात्रादिगामित्वस्य श्रवणात् गृहस्य उपस्करः उलूखलादिः । वाह्यो वृषभादिः । दोह्यो गवादिः । आभरणं विवाहकालीनम् । कर्मिणो दासाद्याः । मूल्यं हाटकादि ।

"विवाहात् परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया ।
भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तदुच्यते ॥
यत् पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥"

इति । **व्यासोऽपि**—

"विवाहकाले यत् किंचिद्वरायोद्दिश्य[1] दीयते ।
कन्यायास्तद्धनं सर्वमविभाज्यं स्वबन्धुभिः ॥"

[1] वरेणोद्दिश्य—ख, ग, ञ.

इति । कन्याया इदमित्युद्दिश्य; अन्यथा औद्वाहिकस्य पृथगभावेन विभागनिषेधानुपपत्तेः । बन्धुभिरिति वचनात् तत्पुत्रैर्विभाज्यमेव ;

" यद्दत्तं दुहितुः पत्ये स्त्रियमेव तदन्वियात् ।
मृते जीवति वा पत्यौ तदपत्यमृते स्त्रियाः ॥ "

इति **स्मरणात्** । स्त्रियाः ऋते तद्धनं तदपत्यं प्राप्नोति । पित्रादिदेये विशेषमाह **कात्यायनः**—

" पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावराद्दते ॥ "

इति । द्विसाहस्रं कार्षापणम्; " द्विसहस्रपणो दायः स्त्रियै देयो धनं न तु " इति **व्यास**स्मरणात् । इयमपि संख्या प्रत्यब्दं देये । सकृदेव अनेकाब्दपर्याप्तधनदाने तु नेयं संख्या; नापि स्थावरपर्युदासः ; " दद्याद्धनं च पर्याप्तं क्षेत्रांशं वा यदीच्छति " इति **बार्हस्पत्यात्** ।

उक्तलक्षणे च स्त्रीधने स्त्रीणां स्वातन्त्र्यमेव ;

" सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च तथैव स्थावरेष्वपि ॥ "

इति **कात्यायन**स्मरणात् । सौदायिकं च स्त्रीणां धनमात्रोपलक्षणम् ;

" सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात् तदानृशंस्यार्थं तैर्दत्तं तत् प्रजीवनम् ॥ "

इति हेतोः सर्वत्र सत्त्वात् । आनृशंस्यमनुकम्पा ; सैवार्थः प्रयोजनं यस्य । प्रजीवनं जीवनप्रकर्षाधायकम् । यत्तु—

" भर्तृदायं मृते पत्यौ विन्यस्येत् स्त्री यथेच्छतः ।
विद्यमानेषु संरक्षेत् क्षपयेत् तत्कुलेऽन्यथा ॥
अपुत्रा शयनं भर्तुः पालयन्ती गुणैः स्थिता ।
भुञ्जीता मरणात् क्षान्ता दायादा ऊर्ध्वमाप्नुयुः ॥ "

इति तेनैवोक्तं, तत् उभयमपि भर्तृदत्तद्विविधसौदायिकविषयम्, भर्तृदायोपक्रमात् । तत्राद्येन जङ्गमव्यवस्था । मृते स्वातन्त्र्यात् जीवति तन्नेति गम्यते । स्वातन्त्र्यापवादमाह—विद्यमानेषु दुहित्रादिदायादेषु तं संरक्षेत्; न स्वेच्छया व्ययीकुर्यात्; पितृधने पुत्राणामिव मातृधने पुत्रीणामपि जन्मनैव स्वत्वे साधारण्यात् । न चैवं पुत्रीच्छया विभागः; पित्रार्जिते पुत्राणामिव मात्रार्जिते पुत्रीणामपि पारतन्त्र्यात् । अन्यथा दुहित्रभावे, तत्कुले दुहितृकुले दौहित्र्यादिषु, क्षपयेत् दद्यात् । अन्यथेति वचनात् दुहितृसत्त्वे दौहित्र्यादीनामनधिकारेण पैतामहे

पौत्राणामिव मातामहीधने दौहित्रीच्छया न विभागः; "मातुर्दुहितरोऽभावे दुहितॄणां तदन्वये" इति **नारद**स्मरणात्।

एवं जङ्गमं निर्णीय स्थावरं निर्णयति। अपुत्रा पुत्रपौत्ररहिता; पौत्राणामपि पितामहीऋणदातृत्वेन तद्धनभागित्वात्। तादृशी यथोक्तगुणवती विधवा भर्तृदत्तस्थावरम् आ मरणात् भुञ्जीतैव; न दद्यात्, विक्रीणीत वा;

"भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्।
सा यथाकाममश्नीयाद् दद्याद्वा स्थावरादृते॥"

इति **नारद**स्मरणात्। भर्तृग्रहणात् श्वशुरदत्ते स्थावरे स्वातन्त्र्यमेव। यथाह **बृहस्पतिः**—

"स्थावरं हि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु।
न तच्छक्यमपाकर्तुं पुत्रैरपि हि कर्हिचित्॥"

इति। अनेन,

"मृते भर्तरि भर्त्रंशं लभते कुलपालिका।
यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये॥"

इति **कात्यायन**वाक्यमपि व्याख्यातम्; भर्तृदत्तस्थावरविषयत्वात्। तन्मरणोत्तरं तु भर्तुः भ्रात्रादयः प्राप्नुयुः; पितृदत्तस्य स्थावरस्य भ्रातृगामित्वेन भर्तृदत्तस्य तद्भ्रात्रादिगामित्वस्यैवौचित्यात्। अपुत्रेति विशेषणात् पुत्रपौत्रसत्त्वे त एव गृह्णीयुः, न दुहितरो नापि दायादाः; तयोरपि मातृपितामहीधनाधिकारात्। किंच अपुत्रविशेषणात् पुत्रपौत्ररहितायाः दुहितृसत्त्वेऽपि दायादा एवाप्नुयुः; न दुहितरः; अपुत्रपदसामर्थ्यात्। अन्यथा अप्रजेत्येवावक्ष्यदित्यलं विस्तरेण।

पित्रादिदत्तस्यापि क्वचित् स्त्रीधनत्वापवादमाह **कात्यायनः**—

"यत्तु सोपाधिकं दत्तं यच्च योगवशेन वा।
पित्रा भ्रात्राथवा पत्या न तत् स्त्रीधनमिष्यते॥"

इति। उत्सवादौ शोभार्थं दानमुपाधिः। योगः भोगाद्यर्थं छलेन। तथा स्वयमपि शिल्पैरर्जिते न स्वातन्त्र्यम्।

"प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः।
भर्तुः स्वाम्यं सदा तत्र शेषं तु स्त्रीधनं स्मृतम्॥"

इति **कात्यायन**स्मरणात्। भर्तुः शिल्पैः तन्तुवायादिस्त्रीभिः यत् वस्त्रवानादिभिः प्राप्तं, भर्तुः प्रीत्या च यदन्यैः दत्तं, तत्र भर्तुः स्वाम्यमित्यवश्यं व्याख्येयम्; अन्यथा स्वार्जनस्य स्वत्वापादकत्वापत्तेः॥ १८॥

**ब्राह्मादिषु चतुर्षु [1]विवाहेष्वप्रजायामतीतायां तद्भर्तुः ॥ १९ ॥ शेषेषु च पिता हरेत् ॥ २० ॥**

स्त्रीधनमुक्त्वा इदानीं तद्विभागमाह । ब्राह्मदैवार्षप्राजापत्यैश्चतुर्भिर्विवाहैरूढायामप्रजायां वक्ष्यमाण-दुहित्रादिसंततिरहितायामतीतायां मृतायां तत् पूर्वोक्तं स्त्रीधनं तद्भर्तुर्भवति । यथाह **मनुः**—

" ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥ "

इति । गान्धर्वग्रहणं विकल्पार्थम् । पुत्रिकाधनमपि भर्तुरेवेत्याह **स** एव,

" अप्रजायां मृतायां तु पुत्रिकायां कथंचन ।
धनं तत्पुत्रिकाभर्ता हरेदेवाविचारयन् ॥ "

इति । पुत्रिका च " अस्यां यो जायते पुत्रः " इत्येवं द्रष्टव्या । भर्त्रभावे भर्तृसपिण्डाः पूर्वोक्तप्रत्यासत्तिक्रमेण गृह्णीयुः ; " अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः " इति **योगिस्मरणात्** ॥ १९ ॥

ब्राह्मादिविशेषणव्यावर्त्यमाह । शेषेषु आसुरगान्धर्वराक्षसपैशाचविवाहेषु अप्रजःस्त्रीधनं पिता, चकारात् माता च हरेत् । तत्र प्रथमं माता, पश्चात् पितेति ज्ञेयम् ; दुहितृषु मात्रवयवाधिक्येन मातुः प्रत्यासत्त्यतिशयात् । यथाह **कात्यायनः**—

" आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रिया ।
अभावे तदपत्यानां मातापित्रोस्तदिष्यते ॥ "

इति । पैतृकं पित्रादिभ्यो लब्धम् । शुल्काख्यस्त्रीधने तु विशेषमाह **गौतमः**—" भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः पूर्वं चैके " इति । वृत्त्यपेक्षो विकल्पः । यत्तु तेनैवोक्तम्—" स्वं च शुल्कं वोढार्हति " इति, तत् प्राक् संस्कारान्मृतायां ज्ञेयम् ; " मृतायां सर्वमादद्यात् परिशोध्योभयव्ययम् " इति **योगिस्मरणात्** । तदुभयाभावे पितुरेव । यथाह **बोधायनः**—

" रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः समम् ।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत् ॥ "

इति । रिक्थं शुल्कम् । ' इयं मे पुत्रः ' इत्येतस्यां पुत्रिकायां तु विशेषमाह **पैठीनसिः**—" प्रेतायां पुत्रिकायां न भर्ता द्रव्यमर्हति । अपुत्रायां कुमार्या मात्रा स्वस्रा वा तत् ग्राह्यम् " इति । पित्राद्यभावे तु भर्तृगाम्येव । यथाह **कात्यायनः**—" बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् " इति । बन्धवः पित्रादयः ॥ २० ॥

[1] विवाहेषु जायायाम्—क.

## सर्वेष्वेव प्रसूतायां [1]यद्धनं [2]तत् दुहितृगामि ॥ २१ ॥

प्रसूतायामुभयापवादमाह । सर्वेष्वेवाष्टस्वपि विवाहेषु परिणीतायां यद्धनं तत् प्रसूतायां संततिमत्यां तस्यां दुहितृगाम्येव भवति ; न भर्तृगामि पितृगामि वा। दुहितृग्रहणात् न पुत्रादिगामि, " दुहितॄणां प्रसूता चेत् " इति **योगि**स्मरणात् । यद्यप्यत्र धनदुहित्रोः सामान्येनोपादानं, तथापि व्यवस्था द्रष्टव्या । सा चेत्थम्—उक्तलक्षणेषु स्त्रीधनेषु यत् अध्यग्नि कृतं तत् दुहितृष्वपि कुमार्य एव लभन्ते, नोढाः ; " मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव सः " इति **मनु**स्मरणात् । यौतकं विवाहकाले लब्धम् ; " पारिणेयं स्त्रियो विभजेरन् " इति **वसिष्ठ**स्मरणात् । पारिणेयं परिणयनकालीनम् । स्त्रियः कुमार्यः । कुमारीवत् अप्रतिष्ठितापि ; " स्त्रीधनं [3]दुहितॄणामप्रत्तानामप्रतिष्ठितानां च " इति **गौतम**स्मरणात् । स्त्रीधनं पैतृकम् । निर्धना निरपत्या विधवा दुर्भगा चाप्रतिष्ठिता । कुमार्यभावे तूढापि कन्यैव लभते, न पुत्रः ; " गुणलोपे च मुख्यस्य " इति न्यायात्; दुहितृपदसामर्थ्याच्च । एवमप्रतिष्ठिताभावे प्रतिष्ठितापीति द्रष्टव्यम् । अन्वाधेयं तु स्त्रीपुंनपुंसक-साधारणप्रजाया भवति । यथाह **मनुः**—

" अन्वाधेयं तु यद्दत्तं पत्या प्रीतेन वा पुनः ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥ "

इति । शुल्के तूक्तमेव प्राक् ।

सौदायिके स्थावरे जङ्गमे च विशेषमाह **वृद्धकात्यायनः**—

" पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम् ।
अप्रजायामतीतायां भ्रातृगामि तु सर्वदा ॥ "

इति । चकारात् भ्रातृपितृव्यादिदत्तमपि । अप्रजात्वविशेषणात् तत्सत्त्वे सैव लभते ; न भ्रातरः । तत्रापि प्रथमं दुहितरः ; तदभावे पुत्रादय इति । सर्वदा ; सर्वविवाहेषु, नासुरादिष्वेवेति ।

यत्तु अपुत्रस्य पितुः विभागकाले पत्युर्वा रिक्थत्वेन मात्रा लब्धं, तत् पुत्रैर्दुहितृभिश्च समं विभाज्यम् । यथाह **मनुः**—

" जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ "

[1] तद्धनं—ख, छ. [2] दुहितृगामि तत्—ज. [3] दुहितॄणामदत्तानाम्—ख, छ, ञ.

इति। भगिन्यः कुमार्यः ; "समं सर्वे सहोदरा मातृकं रिक्थमर्हन्ति कुमार्यश्च" इति **शङ्खलिखित**स्मरणात् ; "सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्मृतम्" इति **देवल**स्मरणात्। ऊढास्तु चतुर्थांशमात्रं लभन्ते; न समम्। तदाह **बृहस्पतिः**—

"स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी।
अदत्ता चेत् समूढा तु लभते सा न मातृकम्॥"

इति। अनूढानां पितृधन इव ऊढानां मातृधने चतुर्थांश इत्युक्तं प्राक्। यत्तु—

"अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्तितम्।
पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक्॥"

इति, तत् अप्रत्ताभावे प्रत्तापि तुल्यांशभागित्याह; अप्रत्तासद्भावे प्रत्तायाश्चातुर्थांश इति स्मरणात् तदभावे समांशस्य न्यायप्राप्तत्वात् ;

"भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः।
स्त्रीधनस्येति धर्मोऽयं विभागस्तु समः स्मृतः॥"

इति **कात्यायन**स्मरणात्। एतेन 'भ्रातृभगिन्योः संभूयांशहरत्वं नास्ति; इतरेतरयोगस्य द्वन्द्वैकशेषाभावाद-प्रतीतेः' इति परास्तम्। "चार्थे द्वन्द्वः" इत्यनेनेतरेतरयोगस्य चार्थत्वात् ; "सामान्यं पुत्रकन्यानाम्" इति द्वन्द्वश्रवणात्। यौतकव्यतिरिक्ते तु सर्वत्र दुहितृदौहित्रीसमवाये दौहित्रीणामपि किंचित् दातव्यम्। यथाह **मनुः**—

"यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः।
मातामह्या धनात् किंचित् प्रदेयं प्रीतिपूर्वकम्॥"

इति। मृतमातृकाणां दौहित्रीणां तु "पितृतो भागकल्पना" इति न्यायात् पुत्रदुहित्रादिभिः समवाये समांशभाक्त्वमेव। दुहित्रभावे तु रिक्थं पुत्र एव लभते, न दौहित्रः; "दुहितॄणामाभावे तु रिक्थं पुत्रस्य तद्भवेत्" इति **कात्यायन**स्मरणात्। पुत्राभावे दौहित्रः; तदभावे दौहित्रपुत्रः; तस्याप्यभावे स्वस्रीय इत्यविशेषेण सर्वे धनभाज इत्याह **बृहस्पतिः**—

"मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥
यदासामौरसो न स्यात् पुत्रो दौहित्र एव वा।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः॥"

इति । आद्यशब्देन "यस्य मातुलानी सः" इत्यादि द्रष्टव्यम् । पूर्वजः अग्रजः । यद्यप्यत्र पुत्राभावे दौहित्रः श्रूयते, तथापि पुत्रदौहित्रसद्भावेऽपि दौहित्रीणां किंचिद्धनसंबन्धश्रवणात् तदभावे च सर्वधनसंबन्धस्याप्रतिबन्धात् मातामह्यवयवाधिक्येन च दौहित्रापेक्षया प्रत्यासन्नत्वाच्च दौहित्र्यभावे दौहित्रो धनभागवधेयः । अत्राप्ययं विशेषः—यत् पितृकुलागतं तत् स्वस्रीयाद्याः, यत् भर्तृकुलागतं तत् देवराद्या गृह्णीयुः । जामाता तूभयमप्यविशेषात् ॥ २१ ॥

**पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् ।**
**न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥ २२ ॥**
**अनेकपितृकाणां तु पितृतोंऽशप्रकल्पना[1] ।**
**यस्य यत् पैतृकं रिक्थं स तद् गृह्णीत नेतरः ॥ २३ ॥**

इति [2]श्रीविष्णुस्मृतौ सप्तदशोऽध्यायः

पितृधनविभागशेषमाह । गृहपतिना स्वपत्न्यै स्नुषाभ्यो वा विवाहकाले योऽलंकारो दत्तः, स्त्रीभिश्चासौ धृतः परिहितो भवेत्, न तु तथैव स्थापितः, तं विभागकाले दायादाः पुत्रभ्रात्रादयो जीवति पत्यौ न भजेरन् । किंतु यस्याः सोऽलंकारः तत्पतिभाग एव तं दद्युः, यथा सैव तं परिदध्यात् । न तु पत्यौ जीवति यो धृतः, स मृतेऽप्यविभाज्य इति; अदृष्टार्थतापत्तेः । एतेन 'सर्वथा सोऽविभाज्यः' इत्यपि निरस्तम् । अथालंकारसौन्दर्यलोभेन भजन्ते, तदा पतिता भवन्ति । जीवतीति विशेषणात् मृते तस्मिन् अन्येनापि ग्रहणे न दोषः ॥ २२ ॥

पैतामहद्रव्यविभागशेषमाह । अनेके पितरो येषां पौत्राणां, ते समा विषमा वा यदा पैतामहं धनं विभजेयुः, तदा तेषां पितृसंख्ययैवांशकल्पना भवति; न स्वसंख्यया । प्रशब्दाच्च समा । अयमर्थः—यदैकस्य त्रयः पुत्राः; तेषां च कस्यचिदेकः, कस्यचित् त्रयः, तदा ते त्रीनेव समानभागान् कुर्युः, न तु षट्; समानजातीयाश्चेत् पितरः । विजातीयानां तु पितॄणां यस्य यावानंशोऽग्रे वक्ष्यते, तमेवांशं तत्पुत्रो लभते; न न्यूनाधिकमधमोत्तमसाम्येन । यथाह **बृहस्पतिः**—

"समवेतैस्तु यत् प्राप्तं सर्वे तत्र समांशिनः ।
तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः ॥"

[1] भागकल्पना—क.   [2] वैष्णवे—क, झ; वैष्णवे धर्मशास्त्रे रिक्थविभागप्रकरणं सप्तदशम्—ज, ठ.

इति । यद्यप्यस्य पैतामहद्रव्यविषयत्वमाहत्य न प्रतीयते, तथापि पितृतोंऽशप्रकल्पनान्यथानुपपत्त्या यस्मिन् द्रव्ये पौत्राणां पितृद्वारकं स्वत्वं, तद्विषयत्वं पर्यवस्यति । अत्रैव पुत्रपौत्रसमवाये विशेषमाह **कात्यायनः**—

" अविभक्ते सुते प्रेते तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेतांशं स पित्र्यं तु पितृव्यात् तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ।
लभेत तत्सुतो वापि निवृत्तिः परतो भवेत् ॥ "

इति । अविभक्ते पितरि प्रेते पुत्रः पितामहात् अथवा पितृव्यात् तत्पुत्रात् तत्पौत्राद्वा स्वपित्रंशं गृह्णीयात् । तमेवांशं भ्रातृभ्यो विभजेत् । एवं तत्पुत्रः तत्पौत्रोऽपि । पञ्चमोऽत्र न लभत इत्युक्तं प्राक् । यदा तु अविभक्तेषु भ्रातृषु केनचित् अपुत्रमातामहात् रिक्थं लब्धं, तदा तदपि सर्वैर्विभाज्यमिति प्राप्तावाह । यस्य पित्रा यन्मातामहरिक्थं लब्धं, स एव तत् गृह्णीयात्, नेतरभ्रातृपुत्र इति । अनेनाविभक्तार्जितस्यापि तादृशस्याविभाज्यत्वमुक्तम् । रिक्थपदग्रहणात् प्रतिग्रहाद्यार्जितं विभाज्यमेव । परं तु आर्जकस्य भागद्वयं कल्प्यम्; " येन चैषां स्वयमुपार्जितं स्यात् स द्व्यंशमेव लभेत " इति **स्मरणात्** । संभूयोत्थाने तु समांशतैव । एवं प्रपितामहधनविभागोऽपि पितामहसंख्यया द्रष्टव्यः ।

यद्वा एकस्यामेव योषिति यदा बहुभिः पुत्रा जन्यन्ते, तदा तेषां कथं विभाग इत्यत आह—अनेकपितृकाणामिति । यो येन जनितः, स तस्यैव रिक्थभागित्यर्थः । यथाह **बृहस्पतिः**—

" यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ ।
यस्य यत् पैतृकं रिक्थं स तद् गृह्णीत नेतरः ॥ "

इति । नायं[1] पारिभाषिकः; क्षेत्रजस्य पूर्वं विभागान्तराभिधानात्; किंतु क्षेत्रमात्रोत्पन्न इति ध्येयम् ।

" द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रियां धने ।
तयोर्यद्यस्य पित्र्यं स्यात् तत् स[2] गृह्णीत नेतरः ॥ "

इति **मानवात्** । [3]**वृद्धयाज्ञवल्क्यः**—

" विभागधर्मसंदेहे बन्धुसाक्ष्यविलेखनैः ।
विभागभावना कार्या न भवेद् दैविकी क्रिया ॥ "

[1] नान्यः—घ, च.
[2] संगृह्णीत नेतरत्—च.
[3] From here up to the end of the chapter omitted in ख, ग, छ.

इति । कथं तत्र निर्णय इत्याकाङ्क्षायामाह **मनुः**—

"विभागे यत्र संदेहो दायादाभ्यां परस्परम् ।
पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ॥"

इति । यत्र संदेहो युक्तिभिरपि नापैति, तत्र पुनर्विभागः कर्तव्य इत्यर्थः ।

यत्तु तेनैवोक्तम्—

"सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥"

इति, तत् युक्तिभिर्निर्णेतुं शक्तौ सत्यां वेदितव्यम् । स्वयंकृतस्यासंदिग्धस्य पुनः प्रवर्तको राज्ञा दण्डनीय इत्याह **बृहस्पतिः**—

"स्वेच्छाकृते विभागे यः पुनरेव विसंवदेत् ।
स राज्ञा स्वांशके स्थाप्यः शासनीयोऽनुबन्धतः ॥"

इति । अनुबन्धतः निर्बन्धतः ॥ २३ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि**श्रीरामपण्डिता**त्मज**श्रीनन्द-पण्डित**कृतौ **विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** सप्तदशोऽध्यायः

# अष्टादशोऽध्यायः

**ब्राह्मणस्य चतुर्षु [1]वर्णेषु चेत् पुत्रा भवेयुः, ते पैतृकं रिक्थं दशधा विभजेयुः ॥ १ ॥ तत्र ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात् ॥ २ ॥ क्षत्रियापुत्रस्त्रीन् ॥ ३ ॥ [2]द्वावंशौ वैश्यापुत्रः ॥ ४ ॥ शूद्रापुत्रस्त्वेकम् ॥ ५ ॥**

पूर्वाध्यायान्ते पितृतोऽशक्लृप्तिरुक्ता । तत्र यज्जातीयस्य यावानंशः, तमष्टादशेनाभिधातुं [3]प्रक्रमते । तत्र ब्राह्मणपुत्राणां तावदाह । यदा विप्रस्य चातुर्वर्णिकस्त्रीषु उक्तसंज्ञाः पुत्रा भवेयुः, तदा ते पितृधनस्य दश भागान् कुर्युः । चेदित्यनेनासवर्णापुत्राणामनित्यतोक्ता । त इत्यनेन पुत्रकर्तृकविभाग एवेयमंशकल्पना नियता; न पितृकर्तृके; तत्र पित्रिच्छाया एव नियामकत्वात् । पैतृकमिति पैतामहमपि; तस्यापि पितृतो भागकल्पनात् । पैतृकमिति सामान्योपादानेऽपि प्रतिग्रहलब्धभूमिव्यतिरिक्तमिति ज्ञेयम् । यथाह **बृहस्पतिः—**

" न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥ "

इति । प्रतिग्रहशब्दात् क्रयादिलब्धा देयैव । सापि न शूद्रापुत्राणाम्; " [4]शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति " इति **स्मरणात्** । भूमिः स्वयमर्जितं क्षेत्रम्; न क्रमागतं गृहं वा;

" ब्रह्मदायं गतां भूमिं हरेद्यो ब्राह्मणीसुतः ।
गृहान् द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् "

इति **बृहन्मनुस्मरणात्** । ब्रह्मदायः प्रतिग्रहः ॥ १ ॥

दशानां विनियोगमाह । तत्र चातुर्वर्णिकेषु पुत्रेषु दशसु भागेषु विप्रस्य विप्रापुत्रश्चतुरोंऽशान् गृह्णीयात् ॥ २ ॥

[1] विवाहेषु—ज.
[2] वैश्यापुत्रो द्वावंशौ—ज, ठ.
[3] प्रक्रमति—ख, ग, छ, ज,
[4] शूद्रो—ख, ग.

किंच विप्रात् क्षत्रियोत्पन्नः त्रीनंशानादद्यात् ॥ ३ ॥

किंच विप्रात् वैश्योत्पन्नो द्वावंशौ गृह्णीयात् । अंशानुवृत्तावप्यंशोपादानं विकृतस्यानुषङ्गाभावबोधनाय; "सं ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि" इतिवत् । तेनोत्तरत्रैकवचनान्तस्याध्याहारः । **मनुस्तु**—"वैश्याजोऽप्यर्धमेवांशम्" इत्याह ॥ ४ ॥

किंच विप्रात् शूद्रोत्पन्नस्तु एकमंशं गृह्णीयात् । यत्तु—

"ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात् तदेवास्य धनं भवेत् ॥"

इति **मानवं**, तत् अनूढशूद्रापुत्रविषयम्; "ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदा स्त्रियः" इत्युपक्रम्य "अंशं शूद्रासुतो हरेत्" इति तेनैवाभिधानात् । अत्र **शङ्खलिखितौ** विशेषमाहतुः—"असवर्णस्त्रीजातानां दायादर्धार्धहानिर्वर्णक्रमेण" इति । अयमर्थः—ब्राह्मणीपुत्रात् क्षत्रियादिपुत्राणामर्धार्धहान्या अंशो देय इति । यथा—अष्टावंशाः ब्राह्मणीपुत्रस्य, चत्वारः क्षत्रियापुत्रस्य; द्वौ वैश्यापुत्रस्य; एकः शूद्रापुत्रस्येति । सोऽयमंशभेदो गुणागुणाभ्यां व्यवस्थाप्यः । अनयैव दिशा[1] क्षत्रियादिषु कल्प्यम् ॥ ५ ॥

**अथ चेत् शूद्रवर्जं ब्राह्मणस्य पुत्रत्रयं भवेत्, तदा तद्धनं नवधा विभजेयुः ॥ ६ ॥ वर्णानुक्रमेण चतुस्त्रिद्विभागीकृतानंशानाददुः ॥ ७ ॥ वैश्यवर्जमष्टधा कृतं चतुरस्त्रीनेकं [2]चाददुः ॥ ८ ॥ [3]क्षत्रियवर्जं सप्तधा कृतं चतुरो द्वावेकं च ॥ ९ ॥ ब्राह्मणवर्जं षड्धा कृतं त्रीन् द्वावेकं च ॥ १० ॥**

एवं चातुर्वर्णिकपुत्रचतुष्टयसमवाये विभागमुक्त्वा, इदानीं त्रित्रिसमवाये तमाह । यदा पुनर्विप्रस्य शूद्रापुत्रवर्जं विप्रक्षत्रियवैश्यास्त्रय एव पुत्रा भवेयुः, तदा पितृधनं नवधा कुर्युः ॥ ६ ॥ तद्विनियोगमाह । विप्रक्षत्रियवैश्याः क्रमेण चतुरः त्रीन् द्वौ च भागान् गृह्णीयुः ॥ ७ ॥ किंच यदा विप्रस्य वैश्यापुत्रवर्जं विप्रक्षत्रियशूद्रास्त्रय एव पुत्रा भवेयुः, तदा ते पितृधनमष्टधा कुर्युः[4] । तद्विनियोगमाह । वर्णानुक्रमेण चतुरः त्रीन् एकं च गृह्णीयुः ॥ ८ ॥ यदा विप्रस्य क्षत्रियवर्जं विप्रवैश्यशूद्रा एव पुत्रा भवेयुः, तदा ते पितृधनं सप्तधा विभज्य क्रमेण चतुरः द्वौ एकं चांशं गृह्णीयुः ॥ ९ ॥ किंच यदा विप्रस्य क्षत्रियवैश्यशूद्रा एव पुत्रा भवेयुः, तदा ते पितृधनं षोढा विभज्य क्रमेण त्रीन् द्वौ एकं चांशं गृह्णीयुः ॥ १० ॥

[1] रीत्या—घ.

[2] चांशानादद्युः—झ.

[3] Text of Sūtra-s 9 and 10, and comm. on Sūtra 10 missing in ख.

[4] कृत्वा चतुरः—घ, च, छ.

**क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव[1] विभागः ॥ ११ ॥ अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां, तदा सप्तधा कृतात् धनात् ब्राह्मणश्चतुरोंऽशानादद्यात् ॥ १२ ॥ त्रीन् राजन्यः ॥ १३ ॥**

उक्तमर्थं क्षत्रियस्य त्रैवर्णिकपुत्रसमवायेऽप्यतिदिशति । विप्रस्य विप्रपुत्रवर्जं त्रैवर्णिकपुत्रेषु यो विभाग उक्तः, स एव क्षत्रियस्यापि त्रैवर्णिकपुत्रेषु; तस्यापि विप्रपुत्राभावात् । अयमर्थः—तेऽपि षोढा पितृधनं विभज्य त्रीन् द्वौ एकं चांशमादद्युः । अत्र विशेषो **महाभारते**—

" भीष्म उवाच—

क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया वा भवेच्छूद्रा न तु दृष्टान्ततः क्वचित् ॥
अष्टधा तु भवेत् कार्यं क्षत्रियस्य युधिष्ठिर ।
क्षत्रियाया हरेत् पुत्रश्चतुरोंऽशान् पितुर्धनात् ॥
युद्धावहारिकं यच्च पितुरासीद्धरेत तत् ।
वैश्यापुत्रस्तु भागांस्त्रीन् शूद्रापुत्रस्तथाष्टमम् ।
सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्तुमर्हति ॥ "

इति ॥ ११ ॥

एवं त्रित्रिसमवाये विभागमुक्त्वा, इदानीं द्विद्विसमवाये तमाह । यदा विप्रस्य विप्रक्षत्रियौ द्वावेव पुत्रौ स्यातां, तदा पितृधनं सप्तधा कृत्वा तेषु विप्रश्चतुरोंऽशानादद्यात् ॥ १२ ॥ किंच सप्तसु अवशिष्टानंशान् क्षत्रिय आदद्यात् ॥ १३ ॥

**अथ ब्राह्मणस्य ब्राह्मणवैश्यौ[2], तदा षड्धा विभक्तस्य चतुरोंऽशान् ब्राह्मणस्त्वादद्यात् ॥ १४ ॥ द्वावंशौ वैश्यः ॥ १५ ॥ अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां, तदा तद्धनं पञ्चधा विभजेयाताम् ॥ १६ ॥ चतुरोंऽशान् ब्राह्मणस्त्वादद्यात् ॥ १७ ॥ एकं शूद्रः ॥ १८ ॥**

किंच यदा विप्रस्य विप्रवैश्यावेव पुत्रौ स्यातां तदा पितृधनं [3]षड्धा विभज्य तत्र चतुरोंऽशान् विप्रः प्रथममादद्यात् ॥ १४ ॥ किंच षट्सु अवशिष्टौ द्वावंशौ वैश्यो गृह्णीयात् ॥ १५ ॥ किंच यदा विप्रस्य

[1] एवमेव—ग, छ, ञ. [2] पुत्रौ स्यातां added in झ. [3] षोढा—घ, छ, ञ.

विप्रशूद्रावेव पुत्रौ स्यातां तदा पितृधनं पञ्चधा विभजेयाताम् ॥ १६ ॥ तद्विनियोगमाह । पञ्चसु चतुरोंऽशान् विप्रो गृह्णीयात् ॥ १७ ॥ किंच पञ्चस्ववशिष्टमेकमंशं शूद्रो गृह्णीयात् ॥ १८ ॥

**अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ पुत्रौ स्यातां, तदा तद्धनं पञ्चधा विभजेयाताम् ॥ १९ ॥ त्रीनंशान् क्षत्रियस्त्वादद्यात् ॥ २० ॥ द्वावंशौ वैश्यः ॥ २१ ॥ अथ ब्राह्मणस्य क्षत्रियस्य वा [1]क्षत्रियशूद्रौ पुत्रौ स्यातां, तदा तद्धनं चतुर्धा विभजेयाताम् ॥ २२ ॥ त्रीनंशान् क्षत्रियस्त्वादद्यात् ॥ २३ ॥ एकं शूद्रः ॥ २४ ॥**

एवं विप्रविषयविभागमुक्त्वा इदानीं विप्रक्षत्रिययोः द्विद्विसमवाये तमाह । यदा विप्रक्षत्रिययोः क्षत्रियवैश्यावेव पुत्रौ स्यातां, तदा पितृधनं पञ्चधा विभजेयाताम् ॥ १९ ॥ तद्विनियोगमाह । पञ्चसु त्रीनंशान् क्षत्रियो गृह्णीयात् ॥ २० ॥ किंच पञ्चस्ववशिष्टौ द्वावंशौ वैश्यो गृह्णीयात् ॥ २१ ॥ [2]किंच यदा विप्रक्षत्रिययोः क्षत्रियशूद्रावेव पुत्रौ स्यातां, तदा [3]तद्धनं चतुर्धा विभजेयाताम् ॥ २२ ॥ तद्विनियोगमाह । चतुर्ष्वंशेषु त्रीनंशान् क्षत्रियः प्रथममादद्यात् ॥ २३ ॥ किंच चतुर्षु अवशिष्टमंशमेकं शूद्रो गृह्णीयात् ॥ २४ ॥

**अथ ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा वैश्यशूद्रौ पुत्रौ स्यातां, तदा तद्धनं त्रिधा विभजेयाताम् ॥ २५ ॥ द्वावंशौ वैश्यस्त्वादद्यात् ॥ २६ ॥ एकं शूद्रः ॥ २७ ॥**

एवं विप्रक्षत्रियविषयविभागमुक्त्वा इदानीं विप्रक्षत्रियविशां द्विद्विसमवाये तमाह । यदा विप्रक्षत्रियविशां वैश्यशूद्रावेव पुत्रौ स्यातां, तदा तौ पितृधनं त्रिधा विभजेयाताम् ॥ २५ ॥ तद्विनियोगमाह । त्रिष्वंशेषु द्वावंशौ वैश्यः प्रथममादद्यात् ॥ २६ ॥ किंच त्रिष्ववशिष्टमेकमंशं शूद्रो गृह्णीयात् । अत्रापि वैश्यविषये विशेषो महाभारते—

"एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीयापि भवेच्छूद्रा न तु दृष्टान्ततः क्वचित् ॥

[1] द्वौ for क्षत्रियशूद्रौ—ख, ग.

[2] Here comm. on Sūtra-s 22, 23 and 24 corrupt in ख.

[3] पितृधनं—ग.

पञ्चधा तु भवेत् कार्यं वैश्यस्वं भरतर्षभ ।
वैश्यापुत्रस्तु गृह्णीयाच्चतुरोंऽशान् पितुर्धनात् ॥
पञ्चमस्तु भवेद्भागः शूद्रापुत्राय भारत ।
सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्तुमर्हति ॥ ”

इति ॥ २७ ॥

**अथैकपुत्रा ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्याः सर्वहराः ॥ २८ ॥ क्षत्रियस्य राजन्यवैश्यौ ॥ २९ ॥ वैश्यस्य वैश्यः ॥ ३० ॥ शूद्रः शूद्रस्य ॥ ३१ ॥**

एवं चातुर्वर्णिकपुत्राणां द्वित्रिचतुःसमवाये अंशकल्पनामुक्त्वा इदानीमेकाकिनां तदपवादमाह । यदा विप्रस्य विप्रक्षत्रविशः एकपुत्राः । एकश्चासौ पुत्रश्चेत्येकपुत्रः । एकपुत्रश्च एकपुत्रश्च एकपुत्रश्चेत्येकपुत्राः । विप्रक्षत्रविशामन्यतम एकाक्येव पुत्र इति यावत् । तदा ते सर्वहराः । यदा एक एव पुत्रः, तदा स एव सर्वं पितृधनं गृह्णीयादित्यर्थः । यद्यप्येतत् स्वामिनाशादेव तत्स्वत्वोत्पत्तेर्न वक्तव्यं, तथापि मातुः स्वत्वाविशेषात् तद्विभागापवादायेति नानर्थक्यम् । तेन चैकपुत्राया मातुर्यावज्जीवं भरणमेव; नांशभाक्त्वमिति वक्ष्यते ॥ २८ ॥ किंच यदा क्षत्रियस्य क्षत्रियो वैश्यो वा एक एव पुत्रः, तदासौ सर्वमेव हरेत् ॥ २९ ॥ किंच यदा वैश्यस्य वैश्य एक एव पुत्रः, तदासौ सर्वमेव हरेत् ॥ ३० ॥ किंच शूद्रस्य शूद्र एवैकः पुत्रश्चेत्, असौ सर्वमेव हरेत् ॥ ३१ ॥

**द्विजातीनां शूद्रस्त्वेकः पुत्रोऽर्धहरः ॥ ३२ ॥ अपुत्ररिक्थस्य या गतिः, सात्रार्धस्य द्वितीयस्य ॥ ३३ ॥ मातरः पुत्रभागानुसारेण[1] भागापहारिण्यः ॥ ३४ ॥ अनूढाश्च दुहितरः ॥ ३५ ॥**

द्विजपुत्राः द्विजा एव सर्वहराश्चेत् शूद्रस्य का गतिरित्यत आह । द्विजातीनां विप्रक्षत्रविशां शूद्र एव चेदेकः पुत्रः, तदासौ न सर्वहरः, किंत्वर्धमेव हरेत् । इदं च गुणवच्छूद्रपरम् । निर्गुणे तु—

“ निषाद एकपुत्रस्तु विप्रस्य स तृतीयभाक् ।
द्वौ सपिण्डः सकुल्यो वा स्वधादानाय वा हरेत् ॥ ”

इति देवलोक्तस्तृतीयांशो ज्ञेयः । अत्यन्तनिर्गुणे तु—

“ यद्यपि स्यात्तु सत्पुत्रोऽप्यसत्पुत्रोऽथवा भवेत् ।
नाधिकं दशमाद् दद्याच्छूद्रापुत्राय धर्मवित् ॥ ”

[1] भागानुसारि—झ, ञ.

इति **मानवं** द्रष्टव्यम्। यद्वा दद्यादित्यन्यकर्तृनिर्देशात् पित्रादिकर्तृके विभागेऽस्य दशमांशभागित्वं, स्वकर्तृके तु अर्धादिहरत्वमिति विवेकः। यत्तु—

" ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।
यदेवास्य पिता दद्यात् तदेवास्य धनं भवेत्॥ "

इति **मानवं**, तत् अनूढशूद्रापुत्रविषयमित्युक्तम्, पितृप्रसादलब्धधनविषयं वा ज्ञेयम्। शूद्रस्य दासीपुत्रे विशेषमाह **योगीश्वरः**—

" जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्।
अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते॥ "

इति॥ ३२॥

अर्धान्तरस्य विनियोगमाह। ' अपुत्रधनं पत्न्यभिगामि ' इत्यादिना ये अपुत्रधनाधिकारिणोऽभिहिताः, ते तेनैव क्रमेणेदमर्धं गृह्णीयुः॥ ३३॥

पुत्रांशकल्पनाया मातृष्वतिदेशमाह। यज्जातीयस्य पुत्रस्य यो भाग उक्तः, तदनुसारेणैव तज्जातीया माताप्यशं हरेत्। ब्राह्मणी चतुरोंऽशानादद्यात्। क्षत्रिया त्रीन्। वैश्या द्वौ। शूद्रा एकमिति। समविषमसंख्यानां विभागः पूर्ववदूहनीयः। मातृशब्दसामर्थ्यात् पुत्रकर्तृकविभागे तासां नियतांशभाक्त्वम्, न पतिकर्तृक इत्युक्तं भवति। अत एव,

" यदि कुर्यात् समानंशान् पत्न्यः कार्याः समांशिकाः।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा॥ "

इति **योगिना** पाक्षिक एव तासां विभाग उपन्यस्तः। यद्यप्यत्र समांशित्वे यद्युपबन्धः, नांशकल्पनायामित्यंशकल्पनाया न पाक्षिकत्वं गम्यते, तथापि इच्छयेत्यनुवर्तनात् पत्नीनां समांशकरणस्यैच्छिकत्वेन पाक्षिकत्वसिद्धेर्न दोषः। एतदेवाभिप्रेत्याह **विज्ञानेश्वरः**—" भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवति " इति। **हरदत्तोऽपि** " जायापत्योर्न विभागो विद्यते " इति **आपस्तम्बीयं** सूत्रम् " आत्मन एवांशं तस्या अपीति मन्यते " इति व्याचक्षाणः मात्रंशक्लृप्तेः पाक्षिकत्वं गमयति। पुत्रभागानुसारेण चैकपुत्रायाः मातुः पुत्रस्यैव सर्वहरतया विभागाभावेन तदनुसरणायोगात् अंशकल्पना नास्त्येव। किंतु यावज्जीवं भरणमात्रमेव। तथाच **देवलः**—" एक एव सवर्णः स्याद् दायोऽत्र न विभज्यते " इति। सवर्ण इत्यसवर्णोऽपि शूद्रव्यतिरिक्तः। मातुरेव चायं विभागनिषेधः पर्यवस्यति; तस्या एव तत्र स्वत्वसद्भावात्। नान्येषाम्; एकपुत्रत्वात् तस्याः। अत एवानेकपुत्राणां विभाग एव मातुरंशकल्पनामाह **योगीश्वरः**—" पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् " इति। अनेकासां प्रत्येकमेकपुत्रत्वे तु भवत्येव तासामंशक्लृप्तिः; विभाजकानां

भ्रातॄणां बहुत्वात्। मातर इति बहुवचनात् बह्वीनामप्येकपुत्राणां न विभागः; किंतु भरणमेव। मातर इति च पितामहीनामप्युपलक्षणम्। तेन पैतामहधनविभागे तासामप्यंशो देयः। यथाह **व्यासः**—

"असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः।
पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः॥"

इति। मातृतुल्याः मातृवदंशभाजः। स चांशः स्त्रीधने दत्ते अर्धः। अदत्ते पूर्णः; "दत्ते त्वर्धं प्रकीर्तितम्" इति **योगिस्मरणात्**। अर्धमित्युपलक्षणम्। यावता अंशसाम्यं भवति तावदित्यर्थः। [1]भाग इति सामान्योपादानेऽपि स्थावरं विनेति द्रष्टव्यम्; "वृषलस्य कृतेऽप्यंशे न स्त्री स्थावरमर्हति" इति **बृहस्पतिस्मरणात्**॥ ३४॥

अतिदेशान्तरमाह। यज्जातीयाः पुत्रा यमंशं लभन्ते, तज्जातीया अविवाहिता दुहितरोऽपि तमंशं लभेरन्। **योगीश्वरस्तु** तत्तज्जातीयपुत्रांशचतुर्थांशं तत्तज्जातीयकन्याया आह—

"असंस्कृतास्तु संस्कार्या भ्रातरः पूर्वसंस्कृतैः।
भगिन्यश्च निजादंशाद् दत्वांशं तु तुरीयकम्॥"

इति। अनयोश्च पक्षयोर्व्यवस्थामाह **कात्यायनः**—

"कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते।
पुत्राणां च त्रयो भागाः साम्यं त्वल्पधने स्मृतम्॥"

इति। अयमर्थः—यदा ब्राह्मणस्य सजातीय एकः पुत्रः कन्या त्वेका, तदा पितृधनं द्वेधा विभज्य तत्रैकं भागं चतुर्धा कृत्वा चतुर्थांशं कन्यायै दत्त्वा स्वांशमवशिष्टं चांशत्रयं पुत्रो गृह्णीयात्। एवं सजातीय-विजातीयकन्यापुत्रयोः साम्ये वैषम्ये वोहनीयम्। तदेतत् बहुधने। स्वल्पधने तु समोंऽश इति। यत्तु 'अंशादिविक्रयात् विवाहोपयुक्तद्रव्यमात्रं लभेत; "कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वसु" इति **देवलवचनात्**' इति **चन्द्रिका**चमत्कृतम्; तन्न; "विभज्यमाने दायाद्ये कन्या अलंकारं वैवाहिकं स्त्रीधनं च लभेत" इति **शङ्ख**स्मरणविरोधात्। अलंकारं स्वधृतम्। वैवाहिकं विवाहोपयुक्तम्। स्त्रीधनं पैतृकं रिक्थं चतुर्थांशादि॥ ३५॥

**समानवर्णाः पुत्राः समानंशानादद्युः॥ ३६॥ ज्येष्ठाय श्रेष्ठमुद्धारं दद्युः॥ ३७॥**

[1] भागसामान्यो—ग.

एवं विजातीयपुत्रसमवाये विभागमुक्त्वा, इदानीं सजातीयसमवाये तमाह। यदि चतुर्णामपि वर्णानां सजातीया एव पुत्रा भवेयुः, तदा ते समानेवांशानादद्युः। इदं चैकमातृकाणाम्। भिन्नमातृकाणां तु समसंख्यानां मातृत एव विभागः। तदाह **व्यासः**—

" समानजातिसंख्या ये जातास्त्वेकेन सूनवः।
विभिन्नमातृकास्तेषां मातृतो भागकल्पना ॥ "

इति। **बृहस्पतिरपि**—

" यद्येकजाता बहवः समाना जातिसंख्यया।
सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मतः "

इति। विषमसंख्यानां तु पुत्रसंख्ययैव। तदाह **व्यासः**—" सवर्णा भिन्नसंख्या ये विभागस्तेषु शस्यते " इति। अत्रापि पुत्रनिर्देशात् पुत्रकर्तृक एव विभागे समत्वम्, न पितृकर्तृक इत्युक्तमेव ॥ ३६ ॥

समांशत्वस्य ज्येष्ठे अपवादमाह। सर्वस्मिन् पितृधने यत् श्रेष्ठं गोमिथुनादि, उद्धारं विंशांशादि च, ज्येष्ठाय सर्वापेक्षया, कनीयांसो दद्युः। यथाह **गौतमः**—" विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथो गोवृषः " इति। मिथुनं गवादेः। उभयतोदतः अश्वाश्वतरगर्दभाः। तेषामन्यतमाभ्यां युक्तो रथः। गोवृषः पुंगवः। ज्येष्ठाय श्रेष्ठवचनेन मध्यमाय मध्यमं कनिष्ठाय च[1] कनिष्ठमुक्तं भवति। तदाह **स** एव— " काणखोरकूटषण्डा [2]मध्यमस्यानेकाश्चेत्। अविर्धान्यायसी गृहमनोयुक्तं चतुष्पदां चैकैकं यवीयसः " इति। काणः एकनेत्रः। खोरः वृद्धः, खञ्जो वा। कूटः शृङ्गहीनः। षण्डः अण्डरहितः गवादिः। एवंरूपा अनेकाश्चेत् मध्यमस्योद्धारः। अविः उरभ्रः यद्यप्येकः, तथापि स यवीयस एव। धान्यं व्रीह्यादि। आयसं दात्रादि। एतदुभयं सर्वमेव। गृहमावसथः। अनः शकटम्। युक्तं वाह्याभ्याम्। चतुष्पदां च गवादीनां बहूनामेकैकमिष्टं यवीयस उद्धारः। ज्येष्ठस्य विंशतिभागवचनात् चत्वारिंशदशीतितमौ भागौ मध्यमकनीयसोः सिध्यतः। तदाह **मनुः**—

" ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।
ततोऽर्धं मध्यमस्य स्यात् तुरीयं तु यवीयसः ॥ "

इति। सममितरत् सर्वम्।

अयमेकमातृकाणामुद्धारः। अनेकमातृकाणां त्वाह **गौतमः**—" ऋषभोऽधिको ज्येष्ठाय। ऋषभषोडशा ज्यैष्ठिनेयस्य " इति। यदा कानिष्ठिनेयो ज्येष्ठः, तदा तस्यैक ऋषभ उद्धारः। यदा तु ज्यैष्ठिनेय एव ज्येष्ठः, तदा तस्य ऋषभषोडशा गाव उद्धारः। अत्रैव पक्षान्तरमाह **स**

[1] च omitted in ख, ग, छ.

[2] मध्यमाय—ख, ग, छ.

एव—"प्रतिमातृ वा स्ववर्गे भागविशेषः" इति। मातृसंख्यया विभक्ते धने, यस्याः यो ज्येष्ठः, तस्य तदीयादेवांशादयमुद्धारो द्रष्टव्यः, न पितृधनादिति।

अयमपि समानजातीयमातृकाणामुद्धारः। विजातीयमातृकाणां तु नासावित्याह **बृहस्पतिः**—

"विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः।
भवेत् समांशः क्षत्रेण वैश्याजातस्तथैव च॥"

इति। एवमन्यत्राप्यूह्यम्। ज्यैष्ठ्यं च जन्मत एव। न मातृतः;

"सदृशस्त्रीषु जातानां पुत्राणामविशेषतः।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥"

इति **मानवात्**। सदृशग्रहणात् असदृशस्त्रीजातानां जन्मतो ज्यैष्ठ्यं नेत्युक्तमेव। अविशेषतः; सर्ववर्णेष्विति शेषः। अस्यापवादमाह **मनुः**—

"जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता॥"

इति। यस्य प्रथमं गर्भोत्पत्तिः स ज्येष्ठः, न तु जन्मनेति;

"यदा वेशे द्विधा भूतं बीजं पुष्पं परिक्षरत्।
तदा भवेद् द्विधा गर्भः सूतिर्वेशविपर्ययात्॥"

इति **श्रीधरात्**। अत्र विशेषमाह **देवलः**—

"बहिर्वर्णेषु चारित्र्याद्यमयोः पूर्वजन्मतः।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्॥"

इति। वर्णेभ्यो बहिः बहिर्वर्णाः अनुलोमप्रतिलोमजाः। तेषु यमयोः चारित्र्यात् सत्कर्मणा ज्यैष्ठ्यम्। मातापितृसजातीययोस्तयोर्गर्भेषु पूर्वजन्मतः एकजरायुजयोस्तयोः प्रथमं यस्य मुखं दृश्यते तस्येत्यर्थः॥ ३७॥

**यदि द्वौ ब्राह्मणीपुत्रौ स्यातामेकः [1]शूद्रापुत्रः, तदा नवधा विभक्तस्यार्थस्य ब्राह्मणीपुत्रावष्टौ भागानादद्यातामेकं शूद्रापुत्रः॥ ३८॥ अथ शूद्रापुत्रावुभौ स्यातामेको ब्राह्मणीपुत्रः, तदा षड्धा विभक्तस्यार्थस्य चतुरोऽशान् ब्राह्मणस्त्वादद्यात्, द्वावंशौ शूद्रापुत्रौ॥ ३९॥ अनेन क्रमेणान्यत्राप्यंशकल्पना भवति॥ ४०॥**

[1] शूद्रस्तदा—क.

समसंख्यविजातीयपुत्रसमवाये विभागः पूर्वमुक्तः। इदानीं विषमसंख्यतत्समवाये तमाह। यदि विप्रस्य द्वौ विप्रौ, एकश्च शूद्र इत्येवं त्रयः पुत्राः स्युः, तदा ते पितृधनं नवधा विभज्य चतुरश्चतुरो भागानैकैको विप्रः, शूद्रश्चैकं भागं गृह्णीयात्॥ ३८॥

किंच यदा द्वौ शूद्रौ, एको विप्रश्चेत्येवं त्रयः पुत्राः स्युः, तदा ते षोढा अर्थं विभज्य चतुरोंऽशान् विप्रो गृह्णीयात्; एकैकं शूद्रो शूह्णीयात्॥ ३९॥

एवं प्रतिवर्णं पुत्रसंख्यासमभेदे तत्समवायानां वक्तुमशक्तेः ऊहप्रकारमाह। योऽयं विप्रस्य विषमसंख्य-विप्रशूद्रसमवाये विभाग उक्तः, तेनैव क्रमेण विट्शूद्रसमवाये विप्रक्षत्रसमवाये विप्रविट्समवाये अंशकल्पना भवतीति ज्ञेयम्। एवं क्षत्रविट्शूद्राणामपि॥ ४०॥

**विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि।**
**समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥ ४१॥**
**अनुपघ्नन् पितृद्रव्यं श्रमेण[1] यदुपार्जयेत्।**
**स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥ ४२॥**

[2]संसृष्टिविभागशेषमाह। ये पित्रा स्वयं वा विभक्ताः सन्तः सह संसृष्टीभूय जीवन्ति, ते यदा पुनर्विभजेरन्, तदा तेषां सम एव विभागः, नाद्यविभागवत् पित्रिच्छया। किंच ज्यैष्ठ्यं ज्येष्ठताप्रयुक्त उद्धारविशेषोऽपि तत्र संसृष्टिविभागे नास्ति। अयं च 'ज्येष्ठाय श्रेष्ठमुद्धारं दद्युः' इत्यस्यापवादः। अनेन विभक्तानामेकीभवनमेव संसर्गः। स च धनसाधारण्यानुमतिपर्यवसन्न इत्युक्तमेव प्राक्। समविधानादेव सिद्धौ ज्यैष्ठ्यनिषेधः बह्वल्पधनसंसर्गनिमित्तकवैषम्यानुज्ञानार्थः। तेन समवायेन यावद्धनं संसृष्टं, तस्य तावत एवोपचयापचयौ विचार्य भागः कार्यः। क्वचित् साम्यापवादमाह **बृहस्पतिः**—

"संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाधिकम्।
प्राप्नोति तस्य दातव्यो द्व्यंशः[3] शेषाः समांशिनः॥"

इति॥ ४१॥

भ्रातृविभागशेषमाह। पितृद्रव्यमनुपघ्नन् पितृधनमनुपभुज्य यत् श्रमेण [4]कृषिवाणिज्यादिक्लेशेनार्जितं, यच्च स्वयमीहितं वाञ्छितं सत् मित्रादिभ्यो लब्धम्, तत् अकामः अनिच्छन् भ्रात्रादिभ्यो दातुं नार्हति। तदाह **योगीश्वरः**—

"पितृद्रव्याविरोधेन यदन्यत् स्वयमार्जितम्।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत्॥"

[1] क्रमेण—झ.
[2] The commentary on Sūtra-s 41 and 42 corrupt in छ.
[3] अंशाः—ग, घ.
[4] सेवादिक्लेशेन—छ.

इति । **व्यासोऽपि**—

" विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत् तस्य नान्वेष्टव्यं सनाभिभिः ॥ "

इति । सौदायिकं माधुपर्किकम् । ' अनुपघ्नन् इति शत्रा यदुपार्जने पितृद्रव्यानुपयोगः, तस्याविभाज्यत्वमुक्तम्; न तु पितृद्रव्यार्पणैरपरिपुष्टेनार्जितस्य ' इति व्याख्यानमयुक्तम्, परभक्तोपयोगेनेति वक्ष्यमाणविद्याप्राप्तलक्षण-विरोधात्; तस्य चाविभाज्यमात्रोपलक्षणत्वात्; अन्यथैकस्मिन् व्यासवाक्ये समभिव्याहारानुपपत्तेः । तस्मात् पितृद्रव्यापरिपुष्टेनार्जितस्यैवाविभाज्यत्वं युक्तम् । पितृद्रव्यं च साधारणधनमात्रोपलणम् । तेन भ्रातॄणामप्यतथा-विधेनार्जितस्यैवाविभाज्यत्वमित्यलम् ॥ ४२ ॥

**पैतृकं तु यदा द्रव्यमनवाप्तं यदाप्नुयात् ।**
**न तत् पुत्रैर्भजेत् सार्धमकामः स्वयमर्जितम् ॥ ४३ ॥**
**वस्त्रं पत्रमलंकारः कृतान्नमुदकं स्त्रियः ।**
**योगक्षेमं प्रचारश्च न विभाज्यं च पुस्तकम् ॥ ४४ ॥**

### इति [1]श्रीविष्णुस्मृतौ अष्टादशोऽध्यायः

पितृविभागशेषमाह । यत् पैतृकं पितृसंबन्धि धनं नष्टं प्रयुक्तं वा पित्रा चासामर्थ्येनानुद्धृतं स्वसामर्थ्या-दुद्धरेत्, यच्च स्वयं विद्याशौर्यादिना अर्जितं, तत् अकामः स्वपुत्रैः सह न विभजेत् । यथाह **बृहस्पतिः**—

" पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥ "

इति । **कात्यायनोऽपि**—

" स्वशक्त्या यद्धृतं नष्टं स्वयमाप्तं[2] च यद्भवेत् ।
एतत् सर्वं पिता पुत्रैर्विभागे नैव दाप्यते ॥ "

इति । एतच्च भूमिव्यतिरेकेण । भूमौ तु विशेषमाह **शङ्खः**—

" पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत् क्रमात् ।
यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम् ॥ "

[1] वैष्णवे—क, झ.
वैष्णवे धर्मशास्त्रे रिक्थप्रकरणमष्टादशम्—ज, ठ.
वैष्णवे धर्मशास्त्रे रिक्थविशेषप्रकरणम्.—ट.
[2] प्राप्तं—घ.

इति। सर्वस्या भूमेः चतुर्थांशमुद्धर्त्रे दत्त्वा, शेषं तेन सहैव यथांशं गृह्णीयुरित्यर्थः। विद्याप्राप्तलक्षणमाह **कात्यायनः**—

"परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या।
तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते॥"

इति। अस्य च कचिदपवादमाह **नारदः**—

"कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः।
भागं विद्याधनात् तस्मात् स लभेताश्रुतोऽपि सन्॥"

इति। इदमप्यवैद्याभिप्रायेण। समानाधिकविद्यानां तु कुटुम्बभरणमृतेऽपि अंशो भवत्येव। यथाह **कात्यायनः**—

"नाविद्यानां तु वैद्येन देयं विद्याधनात् कचित्।
समविद्याधिकानां तु देयं वैद्येन तद्धनम्॥"

इति। अकाम इति वचनात् कामनया तु दद्यादेव। अत एवोक्तम्—'तस्य स्वेच्छा स्वयमुपार्जितेऽर्थे' इति॥४३॥

एवं भ्रातृपितृविभागेषु अविभाज्यमुक्तम्। इदानीं सर्वविभागेष्वविभाज्यमाह। वस्त्रं यत् येन परिहितम्। पत्रं वाहनं यत् येनारूढम्; ऋणादिपत्रं वा। अलंकारः कुण्डलमुद्रिकादिः यो येन धृतः। कृतान्नं मोदकापूपादि। उदकं जलाधारः कूपादिः। स्त्रियः दास्यः, अवरुद्धाश्च। योगक्षेमम्; इष्टापूर्ते राजादयो वा। प्रचारः गृहादिप्रवेशमार्गः। पुस्तकं प्रसिद्धम्। एतत् सर्वमविभाज्यम्। चकारात् धर्मार्थमुद्धृतं च धनम्;

"धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम्।
उदकं चैव दासश्च निबन्धो यः क्रमागतः॥"

इति **कात्यायनीयात्**। पत्रनिविष्टं धर्मार्थत्वेन लिखितम्। अयमभिसंधिः—वस्त्रं समानजातीयं सर्वेषामेव चेत् यथावस्थमेव स्थाप्यम्। [1]नान्यतरनिषेधेन विपरिवर्तनीयम्। विषममधृतं बहुमूल्यं वा मूल्यादिकल्पनया विभाज्यम्। एवं वाहनालंकारादावपि द्रष्टव्यम्। ऋणादिपत्रं चेत् समं द्रव्यसाम्येन विभाज्यम्। विषमं तु द्रव्यद्वारैव विभाज्यम्; न स्वरूपतः; कार्याक्षमत्वात्। कृतान्नं तु यावदुपयोगं भोक्तव्यमेव; न सममपि स्वरूपतो विभाज्यम्। कूपादिस्तु समश्चेत् स्वरूपेण विभाज्यः। विषमस्तु पर्यायेण जलोद्धरणादिनोपभोक्तव्यः। स्त्रियोऽपि समाश्चेत् विभाज्याः। विषमाः पर्यायेण कर्म कारयितव्याः। अवरुद्धास्तु समा अपि न विभाज्याः; "स्त्रीषु च संयुक्तासु" इति **गौतमस्मरणात्**। संयुक्तानां विभागनिषेधात् विवाहितानामर्थसिद्ध एवासौ। इष्टापूर्ते अविभक्तदशायां येन कृते तस्यैव; नान्येन तन्मूल्यं याचनीयम्। यथाह **लौगाक्षिः**—

[1] नान्यतरनिर्बन्धेन—ख, ञ.

" क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये च ते प्रोक्ते शयनासनमेव च ॥ "

इति । राजादयस्तु न स्वरूपेण विभाज्याः; किंतु तदुत्पन्नो लाभ एव विभाज्यः । सोऽपि विषमश्चेत्; " योगक्षेमवतो लाभः समत्वेन विभज्यते " इति **बृहस्पति**स्मरणात् । प्रचारोऽपि सति संभवे अन्य एव कार्यः । न तु स एव भित्त्यादिना छेत्तव्यः; किंतु सर्वैरुपभोग्यः । पुस्तकमपि समं विभाज्यम् । विषमं पर्यायेणाध्येतव्यम् । न तु द्वेधा कार्यम्; स्वरूपनाशापत्तेः ।

तदेवंविधविभागसंदेहे निर्णयमाह **नारदः**—

" विभागधर्मसंदेहे दायादानां विनिश्चयः ।
ज्ञातिभिर्भागलेख्येन पृथक् कार्यप्रवर्तनात् ॥
दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः ॥
साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥
[1]येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थतः ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥ "

इति । उक्तोपायैरप्यनिर्णये पुनर्विभागमाह **मनुः**—

" विभागे यत्र संदेहो दायादानां परस्परम् ।
पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ॥ "

इति । यत्तु तेनैवोक्तम्—

" सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि [2]सतां सकृत् ॥ "

इति, तत् युक्तिभिर्निर्णेतुं शक्तौ सत्यां द्रष्टव्यम् । स्वयंकृतासंदिग्धविभागातिक्रमे विशेषमाह **बृहस्पतिः**—

" स्वेच्छाकृतविभागे यः पुनरेव विसंवदेत् ।
स राज्ञा स्वांशके स्थाप्यः शासनीयोऽनुबन्धतः ॥ "

इति । अनुबन्धः; धनाद्यपेक्षया । विभक्तकृत्यमाह **नारदः**—

" यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत् कार्येषु संमताः ॥

[1] विश्वमेताः—ख.

[2] सकृत् सकृत्—ग, घ.

स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत् सर्वमीशास्ते स्वधनस्य हि ॥
भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेत् तेषु पृथक् पृथक् ॥"

इति ॥ ४४ ॥

[1]इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज[4]श्रीनन्द-पण्डितकृतौ [2]श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामष्टादशोऽध्यायः

समाप्तो व्यवहारकाण्डः[3]

1 इति विष्णुस्मृतिविवृतौ अष्टादशोऽध्यायः—घ.

2 श्री omitted in ग.

3 विष्णुस्मृतिटीकायां वैजयन्त्यां व्यवहाराध्यायः समाप्तः—ग.

# एकोनविंशोऽध्यायः

**मृतं द्विजं न शूद्रेण निर्हारयेत् ॥ १ ॥ न शूद्रं द्विजेन ॥ २ ॥ पितरं मातरं च पुत्रा निर्हरेयुः ॥ ३ ॥ न द्विजं पितरमपि शूद्राः ॥ ४ ॥**

[1]एवं षोडशभिरध्यायैः व्यवहारकाण्डं परिसमाप्य चतुर्दशभिराचारकाण्डं प्रारिप्सुः सर्वकर्माङ्गशुद्धिनिरूपणाय पञ्चाध्यायीमारभते । [2]तत्र पूर्वाध्याये विभागमभिधाय तत्समनियतं पैतृमेधिकमेकोनविंशेनाभिधातुमादौ निर्हरणविधिमाह । मृतं त्रैवर्णिकं द्विजं शूद्रेण सपिण्डेनासपिण्डेन वा न निर्हारयेत्[3] ॥ १ ॥

किंच तथा शूद्रमपि द्विजेन सपिण्डेनासपिण्डेन वा न निर्हारयेत् ॥ २ ॥

एवमुभयथा निषेधे के निर्हरेयुरित्यत आह । पुत्राः सवर्णा असवर्णाश्च मातापितरौ निर्हरेयुः । चकारात् पितामहादीनपि ॥ ३ ॥

पुत्रत्वेऽप्यपवादमाह । शूद्रापुत्राः द्विजं पितरमपि न निर्हरेयुः । यत्तु—

" न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् ।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥ "

इति **मानवे** 'स्वेषु तिष्ठत्सु' इति विशेषणं, तदविवक्षितम्; अस्वर्ग्येति दोषश्रवणात् । पितृग्रहणात् मातरं निर्हरेयुरेव; " स्वमाता कुरुते चैषां तेऽपि तस्याश्च कुर्वते " इति विजातीयपुत्रप्रस्तावे **देवलस्मरणात्**। पितृनिर्हरणनिषेधादन्येषां सुतरां निषेधः ॥ ४ ॥

**ब्राह्मणमनाथं ये ब्राह्मणा निर्हरन्ति ते स्वर्गलोकभाजः[4] ॥ ५ ॥ निर्हृत्य च बान्धवं प्रेतं [5]संस्कृत्याप्रदक्षिणेन चितामभिगम्याप्सु सवाससो निमज्जनं कुर्युः ॥ ६ ॥**

[1] विष्णुस्मृतिटीकायां वैजयन्त्यामाचाराध्याय प्रारम्भः added in घ. [2] एवं—ग.
[3] वाहयेत्—ख. [4] लोक omitted in क. [5] सत्कृत्य—क, ज.

निर्हरणनिषेधस्य क्वचित् प्रतिप्रसवमाह । अनाथं सपिण्डादिरहितं ब्राह्मणं ये ब्राह्मणाः द्विजातयः निर्हरन्ति, ते क्रतुफलस्वर्गलोकभाजः ;

" अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥ "

इति **स्मरणात्** ॥ ५ ॥

बान्धवनिर्हरणे विशेषमाह । बान्धवं प्रेतं निर्हृत्य स्वशाखोक्तविधिना यथाविहिताग्निना संस्कृत्य चितामप्रदक्षिणेनाभिगम्य, अप्सु अनुद्धृतासु सवाससः वासःप्रक्षालनपूर्वकं निमज्जेयुः । बान्धवग्रहणात् अबान्धवे **पाराशर्यः** प्राणायामोऽधिकः—

" असगोत्रमबन्धुं च प्रेतीभूतं द्विजोत्तमम् ।
वहित्वा च दहित्वा च प्राणायामेन शुध्यति ॥ "

इति ॥ ६ ॥

**प्रेतस्योदकनिर्वपणं कृत्वैकं[1] पिण्डं कुशेषु दद्युः ॥ ७ ॥ परिवर्तितवाससश्च निम्बपत्राणि विदश्य द्वार्यश्मनि पदन्यासं कृत्वा गृहं प्रविशेयुः ॥ ८ ॥**

नवश्राद्धस्य कालं स्वरूपं चाह । वक्ष्यमाणमुदकदानं निर्वपणमवयवपिण्डं च कृत्वा, अनन्तरमेकं पिण्डं कुशेषु दद्युः । पिण्डोदकदानानन्तर्यविधानेन प्रथमदिनादि कर्तव्यता बोधिता । तत्र विशेषमाहाङ्गिराः—

" प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव नवश्राद्धमुदीरितम् ॥ "

इति । एकपिण्डत्वेनैकोद्दिष्टत्वमुक्तम् । तदाह **प्रचेताः**—

" एकोद्दिष्टविधानेन सर्वैः पुत्रैः पृथक् पृथक् ।
निनीयाश्मनि पूर्वं तु ततः श्राद्धं प्रकल्पयेत् ॥ "

इति । अश्मनि प्रेतशिलायां, निनीय तिलाञ्जलिमवयवपिण्डं च, एकोद्दिष्टविधानेन श्राद्धं नवश्राद्धं प्रकल्पयेत् कारयेदित्यर्थः । कारणविधानात् प्रेताचार्यस्यावश्यकत्वं गम्यते । कुशेष्विति अवयवपिण्ड इव भूम्युपलकुशानां

[1] एकपिण्डं—क.

विकल्पो निवर्त्यते। दद्युरिति बहुवचनं सर्वेषामपि पुत्राणां प्रत्येकं नवश्राद्धाद्यधिकाराभिप्रायेण "सर्वैः पुत्रैः पृथक् पृथक्" इत्युक्तप्रचेतोवचनात्। एतेनाग्रेतनान्यपि बहुवचनानि व्याख्यातानि; सर्वसपिण्डसांनिध्यार्थं वा; "नवश्राद्धं सह दद्युः" इति **परिशिष्टात्**। यद्वा प्रेतस्यानेके पुत्रा नवश्राद्धं सह दद्युः; न प्रत्येकम्। यथाहोशना—

"नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥
सर्वैरनुमतं कृत्वा ज्येष्ठेनैव च यत् कृतम्।
धनेन चाविभक्तेन सर्वैरेव कृतं भवेत्॥"

इति॥ ७॥

किंच ततो बालपुरःसरं गृहं गत्वा, यैः सहाप्सु मग्नं तानि वासांसि द्वारदेशे वासोऽन्तरैः परिवर्त्य; तानि त्यक्त्वा अन्यानि धारयित्वेति यावत्। तत्रैव निम्बपत्राणि दन्ताग्रैर्विदश्य किंचिच्चर्वयित्वा [1]थूत्कृत्याचम्य गोमयसर्षपादींश्च स्पृष्ट्वा अश्मनि देहल्यां पदं न्यस्य गृहं प्रविशेयुः। यथाह **योगीश्वरः**—

"इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः॥
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः॥"

इति। **शङ्खोऽपि**—"दूर्वाप्रवालमग्निं वृषभं चालभ्य गृहं प्रविशेयुः" इति॥ ८॥

**अक्षतांश्चाग्नौ क्षिपेयुः॥ ९॥ [2]चतुर्थे दिवसेऽस्थिसंचयनं कुर्युः॥ १०॥ तेषां गङ्गाम्भसि प्रक्षेपः[3]॥ ११॥ यावत्संख्यमस्थि पुरुषस्य गङ्गाम्भसि तिष्ठति, तावद्वर्षसहस्राणि [4]स्वर्गलोकमधितिष्ठति॥ १२॥**

किंच गृहं प्रविश्याक्षतान् यवान् अग्नौ लौकिके तूष्णीं प्रक्षिपेयुः॥ ९॥
किंच आहिताग्नेरनाहिताग्नेर्वा दाहात् चतुर्थेऽहनि अस्थिसंचयनं कुर्युः;

"अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः।
शुद्धिः संचयनं दाहान्मृताहस्तु यथाविधि॥"

1 थूत्कृत्य—ख; थूत्कृत्वा—घ, च.
2 चतुर्थे च—झ.
3 क्षिपेयुः—क, झ; क्षेपः—ज.
4 स्वर्गलोके महीयते—क.

इति अङ्गिरःस्मरणात्। चतुर्थ इति प्रथमाद्युपलक्षणम्। बहुवचनं तु [1]गोत्रजसाहित्यार्थम्,

" प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा।
अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह ॥ "

इति संवर्तस्मरणात् ॥ १० ॥

संचितास्थ्नां प्रतिपत्तिमाह। तेषां संचितानामस्थ्नां कालान्तरे गङ्गाम्भसि प्रक्षेपः कार्यः,

" अरण्ये वृक्षमूले वा शुद्धे संस्थाप्य तान्यथ।
तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले।
कश्चित् क्षिपति [2]तत्पुत्रो दौहित्रो वा समाहितः ॥ "

इति ब्राह्मपुराणात् ॥ ११ ॥

अस्य फलमाह। यस्य पुरुषस्य यत्संख्याकान्यस्थीनि गङ्गातोये तिष्ठन्ति, सः तावदब्दसहस्राणि स्वर्गलोके वसति ॥ १२ ॥

**यावदाशौचं तावत् प्रेतस्योदकं [3]पिण्डमेकं च दद्युः ॥ १३ ॥**

पिण्डोदकदानविधिमाह। यस्य वर्णस्य यावदाशौचं वक्तव्यं, तस्य तावद्दिनं प्रेततृप्त्यर्थम् 'अमुकगोत्र, अमुक प्रेत, एतत्ते तिलोदकमुपतिष्ठतु' इत्युदकं मूर्धाद्यवयवनिष्पत्त्यर्थं स्मृत्यन्तरोक्तविधिना पिण्डं च दद्युः। यथाह शङ्खः—" अपसव्ये वासोयज्ञोपवीते कृत्वा अञ्जलिना 'शव, एतत्ते उदकम्' इत्युक्त्वा भूमौ माल्यपिण्डपानीयमुपले वा दद्युः " इति। कुशेष्विति वृद्धप्रचेताः—" तं सबाष्पमथादाय दर्भेषु विनिवेशयेत् " इति। यावदाशौचवचनात् ब्राह्मणस्य दश, क्षत्रियस्य द्वादश, वैश्यस्य पञ्चदश, शूद्रस्य त्रिंशदित्यर्थः पर्यवस्यति। तदाह पारस्करः—

" ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्तिताः ॥ "

इति। यदा तु सर्ववर्णानां दशरात्रमेवाशौचं, तदा दशैव पिण्डा भवन्ति। अनेन चोदकदानेऽपि " प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया " इति गौतमीयपक्षान्तरस्य गौणता दर्शिता। एकमिति वचनात्,

" प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमेऽपि वा।
द्वौ द्वौ पिण्डौ प्रदातव्यौ शेषास्तु दशमेऽहनि ॥ "

[1] गोत्रसाहि—ख. [2] सत्पुत्रो—घ. [3] पिण्डांश्च—ठ.

इत्यस्य,

“ देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा ।
शूद्राणां दशमः पिण्डो मासे पूर्णे विधीयते ॥ ”

इत्यस्य च गौणपक्षता दर्शिता । यावदाशौचमिति सामान्यवचनात् अनुपनीतस्यापि त्र्यहाशौचे पिण्डत्रयदानं गम्यते । तथाच **योगीश्वरः**—“ पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ” इति । तत्र धर्मविशेषमाह **प्रचेताः**—“ असंस्कृतानां भूमौ पिण्डं दद्यात्, संस्कृतानां कुशेषु ” इति । तत्र पिण्डद्रव्याणि तन्नियमं चाह **शुनःपुच्छः**—

“ फलमूलैश्च पयसा शाकेन च गुडेन च ।
तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत् ॥
शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ।
प्रथमेऽहनि यद् द्रव्यं तदेव स्याद् दशाहिकम् ॥ ”

इति । कर्तृनियमस्तु **परिशिष्टे**—

“ असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ॥ ”

इति । दद्यात्, [1]अग्निमिति शेषः ।

“ असगोत्रः सगोत्रो वा प्रेतायाग्निं ददाति यः ।
पिण्डं चोदकदानं च स दशाहं समापयेत् ॥ ”

इति **स्मरणात्**[2] । देशनियमोऽपि **परिशिष्टे**—“ यत्रैको दीयते पिण्डस्तत्र पिण्डान् समापयेत् ” इति ॥ १३ ॥

**क्रीतलब्धाशनाश्च भवेयुः ॥ १४ ॥ अमांसाशनाश्च ॥ १५ ॥**
**स्थण्डिलशायिनः ॥ १६ ॥ पृथक्शायिनश्च ॥ १७ ॥**

किंच क्रीतमयाचितलब्धं वा अश्नन्ति ते, तथा भवेयुः । न पूर्वसंचितगृहस्थमश्नीयुः । चकारात् क्षारलवणे च वर्जयेयुः, “ अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ” इति **स्मरणात्** ।

“ गोक्षीरं गोघृतं चैव धान्यं मुद्गास्तिला यवाः ।
अक्षाराः कथिता ह्येते क्षाराश्चान्ये प्रकीर्तिताः ॥ ”

[1] पिण्डमिति—ख, ग.

[2] स्मरणात् omitted in ख.

इति। इदं च प्रथमदिने उपवासाशक्तौ; "नैतस्यां रात्रावन्नं पचेयुः" इत्याश्वलायनस्मरणात्। **वसिष्ठस्तु** त्र्यहमुपवासमाह—"गृहान् व्रजित्वा अघप्रस्तरे त्र्यहमनश्नन्त आसीरन्। क्रीतोत्पन्नेन वा वर्तेरन्" इति। अघप्रस्तरः आशौचिनां शयनादिकटः॥ १४॥

क्रीतादौ विशेषमाह। न मांसमश्नन्तीति अमांसाशना भवेयुः। चकारात् मत्स्यादि च; "मत्स्यमांसादि न भक्षयेयुरा प्रदानात्" इति **गौतमीयस्मरणात्**। प्रदानमैकादशाहिकं श्राद्धम्॥ १५॥

किंच स्थण्डिलं मृन्मयश्चत्वरः। तत्र शेरत इति स्थण्डिलशायिनः। अनेन खट्वादिनिवृत्तिः; "अधःशय्यासना दीना उपभोगविवर्जिताः" इति **स्मरणात्**॥ १६॥

तत्र विशेषमाह। भूमावप्येकस्मिन् कटादौ न सर्वे शयीरन्। किंतु पृथक् पृथगिति। पृथग्वचनात् मैथुननिवृत्तिः; "ब्रह्मचारिणः सर्वे" इति [1]**गौतमीयस्मरणात्**। चकारात् ताम्बूलादिनिवृत्तिश्च;

"मातापित्रोः क्षयश्राद्धे तथैव क्षयसूतके।
ताम्बूलं चर्वयेद्यस्तु पितृहा स निगद्यते॥"

इति **स्मरणात्**॥ १७॥

**ग्रामान्निष्क्रम्याशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः परिवर्तितवाससो[2] गृहं प्रविशेयुः॥ १८॥**

आशौचान्तदिनकर्तव्यमाह। आशौचस्यान्तो यस्मिन् तत् आशौचान्तम्; अन्त्यदिनम्। तस्मिन् ग्रामान्नगराद्वा निवासस्थानात् निष्क्रम्य अन्त्यपिण्डदानानन्तरं मुण्डनं श्मश्रुकर्म वा यथाधिकारं कारयित्वा तिलकल्केन गौरसर्षपकल्केन वा तिलतैलसंयुक्तेन मलस्नानं कृत्वा, तत्रैवाशौचवासांसि परित्यज्य, नववस्त्राणि परिगृह्य, गृहं प्रविशेयुः। यथाह **ब्रह्मपुराणम्**—

"यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः।
तत्र वस्त्रविशुद्धिं च गृहशुद्धिं च कारयेत्॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी॥
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं समाचरेत्।
श्मश्रुलोमनखानां च यत् त्याज्यं तज्जहात्यपि॥
गौरसर्षपकल्केन तिलतैलेन संयुजा[3]।
मलस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः॥

1 गौतम—ख, च. 2 वाससश्च—ठ. 3 संयुता—ख.

वासोयुगं नवं शुक्लमव्रणं शुद्धमेव च ।
गृहीत्वा गां सुवर्णं च मङ्गलानि शुभानि च ।
स्पृष्ट्वा संकीर्तयित्वा च पश्चाच्छुद्धो भवेन्नरः ॥ ”

इति । **देवलोऽपि**—

“ दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥ ”

इति । क्षौरे तु विशेषो **मैत्रायणीयपरिशिष्टे**—

“ गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधाने सोमपाने[1] च वपनं सप्तसु स्मृतम् ॥ ”

इति । मृताविति निमित्तसप्तम्या पित्रादिमरणानन्तरमेव वपनं कार्यमित्युक्तं भवति; नैमित्तिकस्य निमित्तानन्तर्यनियमात् । अत्रैव पक्षान्तरमाह **देवलः**—

“ क्रियां तु कुरुते यस्तु तद्दिने तस्य मुण्डनम् ।
लघीयसां दशाहे तु पुत्राणां वपनं स्मृतम् ॥ ”

इति । अनेन क्रियाया एव निमित्तत्ववचनात् पुत्रातिरिक्तस्यापि प्रथमेऽह्नि क्रियानिमित्तं वपनं भवतीत्युक्तम् । अन्येषां तु अन्त्य एव;

“ पुत्रः पत्नी च वपनं कुर्यादन्त्ये यथाविधि ।
पिण्डदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः ॥ ”

इति **व्यासस्मरणात्** । तदपि प्रेतकनीयसामेव, न ज्यायसाम्; “ अनुभाविनां च परिवापनम् ” इति **आपस्तम्बस्मरणात्** । अनु पश्चात् भवन्तीत्यनुभाविनः कनिष्ठाः । तेषां [2]वपनविधानात् ज्यायसां श्मश्रुकर्मैव पर्यवस्यति ॥ १८ ॥

**तत्र शान्तिं कृत्वा ब्राह्मणानां च पूजनं कुर्युः ॥ १९ ॥ देवाः परोक्षदेवाः, प्रत्यक्षदेवा ब्राह्मणाः ॥ २० ॥ ब्राह्मणैर्लोका धार्यन्ते ॥ २१ ॥**

किंच तत्र गृहे आशौचान्तदिन एव शान्तिं शान्तिसूक्तपाठं कृत्वा ब्राह्मणपूजनं कुर्युः ॥ १९ ॥ तत्रार्थवादमाह । देवानां परोक्षत्वात् पूजा न शक्या । ब्राह्मणानां प्रत्यक्षत्वात् सा शक्येति भावः ॥ २० ॥ किंच ब्राह्मणैर्धर्मप्रवचनानुष्ठानाभ्यां भूराद्या लोका धार्यन्ते ॥ २१ ॥

[1] यागे—ख.

[2] वपननिषेधात्—ख.

[1]ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः ।
ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित् ॥ २२ ॥
यद्ब्राह्मणास्तुष्टतमा वदन्ति तद् देवताः प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ २३ ॥

तदुपपादयति । ब्राह्मणानुष्ठितनित्यनैमित्तिकादिकर्माप्यायिता देवा दिवि तिष्ठन्ति । ब्राह्मणाभिहितशापानुग्रहादिवाक्यैः दुष्टनिग्रहशिष्टानुग्रहाभ्यामनुगृहीता जनाश्च भुवीति लोकधारणमुपपन्नम् ॥ २२ ॥

वाक्यमात्रस्य कथं फलसाधकतेत्यत आह । पूजादिना तुष्टतमा विप्राः यस्मै यत् पुत्रपशुधनादि 'अस्तु' इति वदन्ति, तत् देवताः 'तथास्तु' इति वाक्यैः प्रत्यभिनन्दयन्ति । स्वार्थे णिच् । प्रत्यभिनन्दन्तीत्यर्थः । यद्वा प्रत्यभिनन्दन्तं निजपरिवारं प्रेरयन्ति । प्रत्यभिनन्दने हेतुमाह । प्रत्यक्षदेवेषु विप्रेषु [2]अतितुष्टेषु परोक्षदेवाः ब्रह्मादयो निरन्तरमेव तुष्टा भवन्ति; तदाप्यायकक्रियाणां ब्राह्मणाधीनत्वात् ॥ २३ ॥

[3]दुःखान्वितानां मृतबान्धवाना-
माश्वासनं कुर्युरदीनसत्त्वाः ।
वाक्यैस्तु यैर्भूमि तवाभिधास्ये
[4]वाक्यान्यहं तानि मनोऽभिरामे ॥ २४ ॥

इति [5]श्रीविष्णुस्मृतौ एकोनविंशोऽध्यायः

अग्रिमाध्यायप्रतिपाद्यं प्रस्तौति । न दीनं सत्त्वं धैर्यं येषां ते धैर्यवन्तः पुरुषाः बान्धववियोगेन दुःखार्तानां नराणामाश्वासनं शोकापनोदनं यैर्वाक्यैः कुर्युः, तानि अहं हे भूमि मनोऽभिरामे, धर्मप्रश्नप्रवृत्ततया मन्मनोऽनुकूले, तव तुभ्यम् अभिधास्ये कथयिष्यामि । भूमीशब्दस्य नद्यन्तत्वात् ह्रस्वत्वम् ॥ २४ ॥

इति[6] श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मजश्रीनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामेकोनविंशोऽध्यायः

[1] This entire verse and the first quarter of the next omitted in झ.

[2] अति omitted in छ.

[3] The first half of the verse corrupt in क.

[4] वदान्यहं—क.

[5] वैष्णवे—क, झ; वैष्णवे धर्मशास्त्रे प्रेतनिर्हृतिप्रकरणमेकोनविंशम्—ठ.

[6] श्रीमन्महा to वाराणसीवासि omitted in घ, च.

# त्रिंशोऽध्यायः

**यदुत्तरायणं[1] तदहर्देवानाम् ॥ १ ॥ दक्षिणायनं रात्रिः ॥ २ ॥ संवत्सरोऽहोरात्रः ॥ ३ ॥ तत्त्रिंशता मासाः ॥ ४ ॥ मासा द्वादश वर्षम् ॥ ५ ॥**

पूर्वाध्यायान्ते प्रस्तुतशोकापनोदनवाक्याभिधानाय विंशाध्यायमारभते । तस्य च जगदनित्यताज्ञानायत्ततया जगत्कर्तुर्ब्रह्मण एवानित्यतां वक्तुं कालविभागमाह । उत्तरस्यामयनं रवेः उत्तरायणम् ; मकरसंक्रान्तिमारभ्य कर्कसंक्रान्तिपर्यन्तः कालः । तत् देवानामहः ; देवकर्मानुष्ठानयोग्यत्वात् ॥ १ ॥ दक्षिणस्यामयनं रवेः दक्षिणायनम् ; कर्कसंक्रान्तिमारभ्य मकरसंक्रान्तिपर्यन्तः कालः । सा देवानां [2]रात्रिः निद्राकालः ; " विष्णुः स्वपिति कर्कटे " इत्यादिस्मरणात् । वस्तुतस्तु मेरुगतानां देवानां नाडिकामण्डलं क्षितिजम् । तस्मादुपरि स्थिताः क्रान्तिवृत्ते मेषादयः षट् राशयो दृश्याः । तुलादयः षट् अधःस्थिता अदृश्याः । अतः मेषादिषट्कस्थितेऽर्के देवानां दिनम् ; दृश्यत्वात् । तुलादिषट्कस्थिते रात्रिः ; अदृश्यत्वादित्यहोरात्रं गोलवासनासिद्धम् । तस्य च स्मृत्या विरोध एवं परिहार्यः । मेषादेर्दिनस्य कर्कसंक्रमे मध्याह्नः । तदुपरि रात्र्युन्मुखत्वादर्कस्य रात्रिरित्युच्यते । एवं मकरसंक्रमे अर्धरात्रः । तदुपरि दिनोन्मुखत्वात् दिनमेवेति । तदेतत् फलकथनाय ; न तु वास्तवम् । तदुक्तं सिद्धान्ते—

" दिनं सुराणामयनं [3]यदुत्तरं निशेतरत् सांहितिकैः प्रकीर्तितम् ।
दिनोन्मुखेऽर्के दिनमेव तन्मतं निशा तथा तत्फलकीर्तनाय तत् ॥
" कर्के गतेऽर्के हि सुरापराह्णः फलं पुना रात्रिवदाहुरस्य ।
नक्रं गते चापररात्रमेषामेतत् परं वासरवत् स्मरन्ति ॥ "

दिन(वासर)वदित्यनेन दिवसेऽप्येषैव कल्पना—" अतश्च कैश्चिद्दशमीष्वपि प्राक् कापालिको (प्राभातिको) वेधविधिर्निरुक्तः " इति । एवं कृष्णशुक्लपक्षयोरपि पित्रहोरात्रत्वं द्रष्टव्यम् ॥ २ ॥ दक्षिणोत्तरायणरूपः कालः

[1] उदगयनं—ज, ठ.
[3] यदुक्तं—ख.
[2] From here to मेरुगतानां देवानां omitted in ख.

संवत्सरः। स देवानामहोरात्रः ॥ ३ ॥ तेषां संवत्सररूपाहोरात्राणां त्रिंशता मासः ॥ ४ ॥ ते द्वादश मासाः षष्ट्यधिकशतत्रयाब्दरूपाः दिव्यं वर्षं भवति ॥ ५ ॥

**द्वादश वर्षशतानि दिव्यानि कलियुगम् ॥ ६ ॥ [1]द्विगुणानि द्वापरम् ॥ ७ ॥ त्रिगुणानि त्रेता ॥ ८ ॥ चतुर्गुणानि कृतयुगम् ॥ ९ ॥ [2]द्वादशवर्षसहस्राणि दिव्यानि चतुर्युगम् ॥ १० ॥ [3]चतुर्युगाणामेकसप्ततिर्मन्वन्तरम् ॥ ११ ॥ चतुर्युगसहस्रं [4]च कल्पः ॥१२॥ स च पितामहस्याहः ॥ १३ ॥ [5]तावती चास्य रात्रिः ॥ १४ ॥**

उक्तरूपाणि दिव्यानि द्वादश वर्षशतानि कलियुगं भवति। तत्र शतद्वयं संध्यासंध्यांशयोः। वर्षसहस्रमेव च युगम्। युगस्य पूर्वभागः संध्या। उत्तरभागः संध्यांशः। मध्यभागश्च युगमिति। तदुक्तं विष्णुपुराणे—

"तत्प्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते।
संध्यांशकश्च तत्तुल्यो युगस्यानन्तरेण यः॥
संध्यासंध्यांशयोरन्तर्यः कालो मुनिसत्तम।
युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञितः॥"

इति। एवमग्रेऽपि ज्ञेयम् ॥ ६ ॥ चतुर्विंशतिशतानि दिव्यानि वर्षाणि संध्यासंध्यांशसहितं[6] द्वापरयुगं ज्ञेयम् ॥ ७ ॥ षट्त्रिंशच्छतानि दिव्यानि वर्षाणि संध्यासंध्यांशसहितं त्रेतायुगं ज्ञेयम् ॥ ८ ॥ अष्टाचत्वारिंशच्छतानि दिव्यानि वर्षाणि संध्यासंध्यांशसहितं कृतयुगं ज्ञेयम् ॥ ९ ॥ उक्तरूपाणि दिव्यानि द्वादशवर्षसहस्राणि चतुर्युगम्। चतुर्णां युगानां समाहारः चतुर्युगम्। दशसहस्राणि चतुर्णां [7]युगानाम्; द्वे सहस्रे संध्यासंध्यांशयोरिति द्वादश सहस्राणि। अनुवृत्तावपि पुनर्दिव्योपादानं मानुषभ्रमनिरासाय ॥ १० ॥ एकसप्ततिवारमावृत्तानि चत्वार्यपि युगानि मन्वन्तरं भवति ॥ ११ ॥ सहस्रवारमावृत्तानि चत्वार्यपि युगानि कल्पः। कल्पते जगदस्मिन् काल इत्यर्थः ॥ १२ ॥ यः कल्प इत्युक्तः, स एव[8] पितामहस्य ब्रह्मणः अहःसंज्ञो भवति ॥ १३ ॥ कल्पपरिमितैव ब्रह्मणो रात्रिः निद्राकालः ॥ १४ ॥

[1] कलियुगद्विगुणानि—क.
[2] दशवर्ष—ज, ठ.
[3] This Sūtra omitted in क.
[4] च omitted in क.
[5] This Sūtra omitted in ज, ठ.
[6] संध्यांशशतं—घ.
[7] युगं—ख.
[8] एषः—ख.

**एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुः ॥ १५ ॥ ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः ॥ १६ ॥ तस्यान्ते महाकल्पः ॥ १७ ॥ तावत्येवास्य [1]निशा ॥ १८ ॥ पौरूषेयाणामहोरात्राणामतीतानां संख्यैव नास्ति ॥ १९ ॥ न च [2]भविष्याणाम् ॥ २० ॥ अनाद्यन्तत्वात् कालस्य ॥ २१ ॥**

एवंविधेन कल्पद्वयपरिमितेनाहोरात्रेण त्रिंशत्संख्येन मासः । तैः द्वादशभिर्वर्षम्[3] । तानि शतं वर्षाणि सर्वस्यैव यो यो यदा यदा ब्रह्मा जायते, [4]तदा तदा तस्य तस्यायुर्भवति ; " शतायुर्वै पुरुषः " इति श्रुतेः ॥ १५ ॥ यानि शतं वर्षाणि ब्रह्मायुः, तैरेव परिमितः पुरुषस्य भगवतोऽनाद्यन्तस्य श्रीवासुदेवस्य दिवसः ॥ १६ ॥ तस्य पौरुषदिवसस्यान्ते मध्ये महाकल्पः, महान् ब्रह्मा कल्पते यस्मिन्निति ॥ १७ ॥ अस्य [5]पुरुषस्य तावत्येव ब्रह्मायुःपरिच्छिन्नैव निशा निद्राकालः ॥ १८ ॥ भगवतो यान्यतीतानि अहोरात्राणि तानि असंख्यानीत्यर्थः ॥ १९ ॥ संख्यास्तीति शेषोऽनुवर्तते ॥ २० ॥ तत्र हेतुमाह । " [6]कलयति जगदेष कालोऽतः " इत्यादिस्मृत्या कालोऽत्र भगवान् परमेश्वरः । तस्याद्यन्तरहितत्वात् आयुःपरिच्छेदकाहोरात्रादिसंख्या नास्तीति युक्तम् । तथाच कूर्मपुराणे—

" अनादिरेष भगवान् कालोऽनन्तोऽजरः परः ।
सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः ॥ "

इति ॥ २१ ॥

**एवमस्मिन्निरालम्बे काले सततयायिनि ।
न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद् ध्रुवा ॥ २२ ॥
गङ्गायाः सिकता धारास्तथा वर्षति वासवे ।
शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ २३ ॥**

यदुक्तं [7]कलयितृत्वेन भगवतो नित्यत्वं, तदुपपादनाय कलयितव्यानित्यतामाह । एवम् उक्तरीत्या, अस्मिन् षडिन्द्रियवेद्ये, निरालम्बे निरुपादानके, सततयायिनि नित्ये, काले भगवति, न तत् भूतं, पृथिव्याद्यन्यतममप्यस्ति, यस्य स्थितिः सत्ता, ध्रुवा कालत्रयाबाध्या स्यात् । एवं भूतानामनित्यत्वोक्त्या भौतिकानां सुतरामनित्यत्वमुक्तं भवति ॥ २२ ॥

[1] From here up to the end of Sūtra 21 missing in झ.
[2] भविष्यताम्—ट.
[3] वर्षः—ख.
[4] तदा तदा omitted in ख.
[5] पुरुषस्य omitted in ख.
[6] काल्यति—ख, छ ; कल्यः कलयति जगदशेष—ग.
[7] कालयितृत्वेन—ख.

ननु यदि भूतानित्यतया भौतिकानित्यत्वं, तर्हि ब्रह्मनित्यतया भूतनित्यतैवास्तु ; इत्यत आह । या गङ्गायाः सिकताः वालुकाकणाः, या वा वासवे वर्षति जलधाराः, ता अपि लोके[1] गणयितुं शक्यन्ते, न त्वतीताः पितामहाः ब्रह्माणः । तथाच ब्रह्मण एवानित्यत्वे तन्निर्मितानां [2]भूतानां कथं नित्यत्वमिति भावः ॥२३॥

**चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः ।**
**सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥ २४ ॥**
**बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च ।**
**विनष्टानीह कालेन मनुजेष्वथ का कथा ॥ २५ ॥**

कैमुतिकन्यायेन मानुषानित्यतां वक्तुमिन्द्राद्यनित्यतामाह । एकैकस्मिन् कल्पे ब्रह्मदिवसे चतुर्दश देवप्रधाना इन्द्रा मनुष्यप्रधाना मनवश्च विनश्यन्ति ॥ २४ ॥

किंच एकैकस्मिन् कल्पे चतुर्दश चतुर्दशेत्येवं कल्पानामानन्त्यात् बहूनीन्द्रसहस्राणीत्युक्तस्यैव प्रपञ्चः । तथा दैत्येन्द्राणां हिरण्यकशिपुहिरण्याक्षादीनां नियुतानि लक्षाणि स्वस्वावधिभूतेन कालेन नष्टानि । तत्राल्पतरायुषां मनुजानां विनाशे कथैव केत्यनास्थोक्त्या तेषामनादरणीयतैवाभिहिता ॥ २५ ॥

**राजर्षयश्च बहवः सर्वैः समुदिता गुणैः ।**
**देवा[3] ब्रह्मर्षयश्चैव कालेन निधनं गताः ॥ २६ ॥**
**ये समर्था जगत्यस्मिन् सृष्टिसंहारकारणे ।**
**तेऽपि कालेन नीयन्ते कालो हि दुरतिक्रमः ॥ २७ ॥**

किंच राजर्षयः प्रभुत्वेऽप्यविकृतचित्ताः सगरादयः सर्वैः शौर्यौदार्यादिभिर्गुणैः सम्यगुदिता अभ्युदयवन्तः, तथा देवाः अग्निवरुणादयः ब्रह्मर्षयः कश्यपादयश्च[4] कालेन स्वस्वावधिभूतेन निधनं पञ्चत्वं गताः । तत्र मनुजानां का कथेति ॥ २६ ॥

किंच न केवलमतीतकाल एव विशिष्टा नष्टाः । किंतु इदानीमपि अस्मिन् जगति वर्तमानेऽपि लोके सृष्टिसंहारकारणे उत्पत्तिविनाशविधाने ये समर्थाः सोमसूर्यादयो ग्रहाः, तेऽपि कालेनास्तं नीयन्ते । किं पुनरन्ये ? हि यतः कालः अनतिक्रमणीयः ॥ २७ ॥

[1] लोके omitted in ख.
[2] भूतानां omitted in ख.
[3] देव—ज.
[4] कश्यपाद्याः—ग.

**आक्रम्य [1]सर्वः कालेन[2]परलोकं च नीयते ।**
**[3]कर्मपाशवशो जन्तुस्तत्र का परिदेवना ॥ २८ ॥**
**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**अर्थे दुष्परिहार्येऽस्मिन्नास्ति लोके [4]सहायता ॥ २९ ॥**

किंच न केवलं मानुषेष्वेव कालप्राभवम्; अपि तु सर्वोऽपि जन्तुः अवधिसमाप्तौ आक्रम्य निष्पीड्य कालेन परलोकं पञ्चत्वं नीयते । तत्र परिदेवना विषादः कः? तत्र हेतुमाह । यतो जन्तुः, कर्मैव स्वकृतं पाशो बन्धकत्वात्; तद्वशः तदायत्तः । अयमर्थः—येन शरीरेण यावत्कालं यत्कर्म भोक्तव्यं, तत्कर्मसमाप्तौ कालः प्रभवति, नार्वागिति । प्रकटितं चैतत् गौतमीलुब्धकसंवादे व्यासेन[5] ॥ २८ ॥

किंच उत्पन्नस्य जन्तोः शरीरारम्भककर्मक्षये मृत्युर्निश्चितः । मृतस्य च तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव । जन्मात्ययरूपेऽस्मिन्नर्थे प्रवृत्तिनिवृत्त्योः सहायता [6]सहकारिता कस्यापि नास्ति; यतोऽयमर्थो दुःखेनाप्यपरिहरणीयः, प्रारब्धकर्मणां भोगैकनाश्यत्वात्[7] ॥ २९ ॥

**[8]शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः[9] ।**
**अतो न रोदितव्यं हि[10] क्रिया [11]कार्या स्वशक्तितः ॥ ३० ॥**
**सुकृतं दुष्कृतं चोभौ सहायौ यस्य गच्छतः ।**
**बान्धवैस्तस्य किं कार्यं शोचद्भिरथवा न वा ॥ ३१ ॥**

किंच शोचन्तो जनाः मृतस्य नोपकुर्वन्ति । प्रत्युत श्लेष्माश्रुमोचनेनापकुर्वन्त्येव; "श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः" इति योगिस्मरणात् । अतो न रोदितव्यम् । किंतु प्रेतोपकाराय श्राद्धादिक्रियाः स्वशक्त्यनुसारेण कार्याः ॥ ३० ॥

किंच इष्टानिष्टप्राप्तौ धर्माधर्मौ पुरुषस्य सहायौ । तावपि यस्य मृतस्य सहैव गच्छतः, नात्रैव स्वफलं प्रयच्छतः; शरीरारम्भककर्मसमाप्त्या शरीरसमाप्तेः; तस्य शोचद्भिः अशोचद्भिर्वा बान्धवैः किं कार्यम् ॥ ३१ ॥

1 सर्वे—क.
2 परलोकाय—ठ.
3 The text and comm. corrupt for this line—ख.
4 सहायवान्—च.
5 व्यासेन omitted in ख.
6 सहचरिता—ग.
7 नाश्यतावश्यकत्वात्—ख.
8 This verse corrupt in क.
9 यदा—ज, ठ.
10 स्यात्—ठ.
11 कार्यास्य—ग, ठ.

**बान्धवानामशौचे तु स्थितिं प्रेतो न विन्दति ।**
**अतस्त्वभ्येति तानेव पिण्डतोयप्रदायिनः ॥ ३२ ॥**
**अर्वाक् सपिण्डीकरणात् प्रेतो भवति यो मृतः ।**
**प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ॥ ३३ ॥**

प्रेतोपकारकक्रियाविधानाय तदर्थवादमाह । यावत् बान्धवाः प्रेताशौचमाचरन्ति, तावत् अस्माल्लोकात् प्रस्थितो लोकान्तरप्राप्त्यभावात् कुत्रापि स्थितिमलभमानः [1]पुनः पुनर्वासनावशात् पिण्डतोयप्रदायिनो बान्धवानेवाभ्येति । तस्मात् पिण्डदानादि कार्यम् ॥ ३२ ॥

विधेयांशमाह । वक्ष्यमाणेषु सपिण्डीकरणकालेषु यावत् सपिण्डीकरणं भवति, तावत् मृतो जन्तुः प्रेतः क्षुत्तृष्णाजनितदुःखानुभववान् भवति । तन्निवृत्तये सोदकुम्भमन्नं प्रयच्छतेति । अयमर्थः—प्रेतस्य दाहानन्तरं प्रथमपाथेयश्राद्धेनेतः प्रेतलोकं [2]प्रापितस्य दशाहिकैकादशाहिकाश्च पिण्डा उपतिष्ठन्ते । ततः सपिण्डीकरणेन विमुक्तप्रेतत्वः द्वितीयपाथेयश्राद्धेन प्रेतलोकात् पितृलोकं नीयत इति । प्रेतत्वानामनेकत्वात् तन्निवर्तकक्रियाणामनेकत्वमिति नान्यानर्थक्यम् । अत्र विशेषं त्वग्रे वक्ष्यति ॥ ३३ ॥

**पितृलोकगतश्चान्नं श्राद्धे भुङ्क्ते स्वधासमम् ।**
**पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ॥ ३४ ॥**
**देवत्वे यातनास्थाने तिर्यग्योनौ तथैव च ।**
**मानुष्ये च तथाप्नोति श्राद्धं दत्तं [3]स्वबान्धवैः ॥ ३५ ॥**

नन्वेवं प्रेतत्वनिवर्तिकैव क्रिया कार्या, नाग्रेतनीत्यत आह । सपिण्डीकरणेन पितृत्वप्राप्त्यनन्तरमपि मृतो जन्तुः श्राद्धे पार्वणादौ पुत्रादिदत्तमन्नपानादि स्वधया पितृभोग्येणामृतविशेषेण समं तुल्यं भुङ्क्ते । तस्मात् पितृलोकगतस्यापि जन्तोः श्राद्धं कार्यम् ॥ ३४ ॥

ननु प्रातिस्विकशुभाशुभकर्मवशेन स्वर्गनरकादिगतस्य जन्तोः कथं पुत्रादिदत्तश्राद्धादिना तृप्तिः ? इत्यत आह । स्वकर्मप्राबल्येन यद्यत् जन्तुः शरीरं प्राप्नोति, तत्तच्छरीरोपभोग्यवस्तुत्वेन बान्धवदत्तं श्राद्धीयमन्नपानादि उपतिष्ठते । तस्मात् मृतस्यापि तृप्तिसिद्धेः श्राद्धं कार्यमिति ॥ ३५ ॥

[1] पुनर्वासना—ख.
[2] From here up to प्रेतत्वानामनेकत्वात् missing in ख.
[3] च मानवैः—ज.

**प्रेतस्य श्राद्धकर्तुश्च पुष्टिः श्राद्धे कृते ध्रुवम् ।**
**तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम् ॥ ३६ ॥**
**एतावदेव कर्तव्यं [1]सदा प्रेतस्य बन्धुभिः ।**
**नोपकुर्यान्नरः [2]शोचन् [3]प्रेतस्यात्मन एव च ॥ ३७ ॥**

ननु स्वप्रयोजनाभावे परतृप्तिमात्रोद्देशेन [4]सार्वजनीनप्रवृत्तिर्न स्यादित्यत आह । यथोक्तद्रव्यैः श्राद्धकरणे[5] पितृणां तृप्तिविशेषः । कर्तुश्च,

" आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं [6]प्रीता नृणां पितामहाः ॥ "

इत्यादिफलप्राप्तिर्यतो निश्चितैव, तस्मात् श्राद्धं सदैव श्राद्धकालेषु निरर्थकमनर्थहेतुं शोकं त्यक्त्वा कार्यम् । तथाच संवलिताधिकारकत्वान्नित्यकाम्यत्वं नैमित्तिककाम्यत्वं च जातेष्टिवत् श्राद्धस्यापि सिध्यति ॥ ३६ ॥

उक्तमर्थमुपसंहरति । शोकेन श्राद्धमकुर्वन् विध्यतिक्रमनिमित्तप्रत्यवायेनात्मनः, क्षुत्तृष्णादिदुःखानपनोदनेन प्रेतस्य च प्रतिकूलमेव कुर्यात्; नोपकारम् । तस्मात् तदुभयानिष्टनिवृत्तये एतावत् पूर्वोक्तं श्राद्धादि प्रेतस्य बन्धुभिः कार्यमेव ॥ ३७ ॥

**दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान् ।**
**धर्ममेकं [7]सहायार्थं वरयध्वं सदा नराः ॥ ३८ ॥**
**मृतोऽपि[8] बान्धवः शक्तो नानुगन्तुं [9]नरं मृतम् ।**
**जायावर्जं हि सर्वस्य याम्यः पन्था [10]विरुध्यते ॥ ३९ ॥**

यदुक्तम् 'नास्ति लोके सहायता' इति, तदुपपादयति । आक्रन्दः पृष्ठरक्षकः, मृतस्य लोके पश्चात् प्रियानुष्ठानेनोपकर्ता; तद्रहितोऽयं लोकः । यतः प्रतिदिनं म्रियमाणा एव बान्धवा दृश्यन्ते, अतः स्वस्यासहायतां ज्ञात्वा इहामुत्र च सहायार्थं धर्ममेवैकं भो नराः, सदा वरयध्वम् ॥ ३८ ॥

ननु यदि स्नेहातिशयेन बान्धवा अपि सह म्रियन्ते, तदा अमुत्र साहाय्यं [11]कुर्युरित्यत आह । सह मृतानामपि प्रातिस्विककर्मार्जितलोकभोगावश्यकतया नैकत्रावस्थानमिति क्व सहायोपयोगः? तर्हि पत्न्या अपि

[1] तदा—ठ. [2] शोके—ठ. [3] मृतस्य—ज, ठ.
[4] सार्वजनी प्रवृत्तिः—छ. [5] कारिणः—ग. [6] पितृणां च पितामहाः—ख.
[7] सहायार्थे—क, ज, ठ. [8] मृतो हि—म; मृतेऽपि बान्धवैः शक्यं—ज, झ.
[9] मृतं नरम्—ज. [10] विभिद्यते—ज, ठ. [11] कथं न कुर्युः—ख, च, छ.

सह गमनं विरुध्येतेत्यत आह। जायायाः पत्येकशरीरत्वेन "दिवि ज्योतिरजरमारभेताम्" "सह तेनैव मोदते" इत्यादिश्रुतिस्मृतिभ्यामवियोगप्रतीत्या "व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्। तद्वदुद्धृत्य सा नारी" इत्याद्युपकारकत्वश्रवणाच्च तां विनान्यस्य सर्वस्यापि यमलोकमार्गानुसरणं विरुद्धमेव ॥ ३९ ॥

**धर्म एकोऽनुयात्येनं[1] यत्र क्वचन गामिनम्।**
**नन्वसारे नृलोकेऽस्मिन् धर्मं कुरुत मा चिरम् ॥ ४० ॥**
**श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।**
**न हि प्रतीक्षते मृत्युः कृतं वास्य न वाकृतम् ॥ ४१ ॥**

यदुक्तम् 'धर्ममेकं [2]सहायार्थं वरयध्वम्' इति, तदुपपादयति। प्रातिस्विकशुभाशुभकर्मवशेन जन्तुः यासु यासु योनिषु येषु येषु लोकेषु वा गच्छति, तत्र तत्र धर्म एनमनुयाति। यद्यप्यधर्मोऽप्यनुयाति, [3]तथापि तदनुगमनस्य दुःखहेतुतया परिहरणीयतयैव [4]नानुष्ठेयता। धर्मानुगमनस्य तु सुखहेतुतयेष्टत्वेनासारे धर्मातिरिक्तसुखहेतुरहितेऽस्मिन् मनुष्यलोके कर्तव्यान्तरपरिहारेण धर्ममेव कुरुतेति ॥ ४० ॥

अचिरत्वमुपपादयति। "न श्वः श्वमुपासीत। को हि मनुष्यस्य श्वो वेद" इति श्रुत्या संसारानित्यतां प्रतीत्य, श्वः कार्यं कर्माद्यैव कार्यम्। तथा अपराह्णकर्तव्यं पूर्वाह्ण एव कार्यम्। यतोऽस्य जन्तोः कृतमकृतं च मृत्युर्न प्रतीक्षते; प्राप्ते काले नयत्येव ॥ ४१ ॥

**क्षेत्रापणगृहासक्तमन्यत्र गतमानसम्।**
**वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ४२ ॥**
**न कालस्य प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते।**
**आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ॥ ४३ ॥**

कृताकृताप्रतीक्षणमेवोपपादयति। 'क्षेत्रमिदं कृष्टम्, इदमकृष्टम्; आपणे चेदं पण्यमस्ति, इदं नास्ति; गृहे चेदं कृतम्, इदमकृतम्' इत्याद्यकृतपदार्थसंपादनासक्तम्, अन्यत्र पुत्रदुहित्राद्युपनयनविवाहादौ गतमानसम् अकृतकार्यमेव मृत्युरादाय गच्छति। यथा वृकी उरणं मेषमिति दृष्टान्तेन मृत्युप्राणिनोः प्रबलदुर्बलभावो दर्शितः ॥ ४२ ॥

[1] एकं—ज.
[2] सहायार्थे—च, छ.
[3] तथापि omitted in ख.
[4] From here to मनुष्यलोके omitted in ख.

तमेवोपपादयति। कलयति जगदिति कालः मृत्युः। तस्य प्रियः प्राप्ते काले रक्षणीयः, द्वेष्यश्च अप्राप्ते काले मारणीयो वा नास्ति। किं तर्हि? जन्तोः आयुर्जनके प्रारब्धकर्मणि [1]क्षीयमाणे, प्रसह्य क्रियमाणमायुर्जनकं कर्मावमत्यैव जन्तुं मृत्युर्हरति॥ ४३॥

**नाप्राप्तकालो म्रियते विद्धः शरशतैरपि।**
**[2]कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति॥ ४४॥**
**[3]नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः।**
**त्रायन्ते मृत्युनोपेतं जरया वापि मानवम्॥ ४५॥**

रागद्वेषाभावं विविनक्ति। न प्राप्तः प्रारब्धकर्मक्षयकालो यस्यासौ शरशतैर्विद्धोऽपि न म्रियते, यथा भीष्मः। स एव प्रारब्धकर्मक्षयकालं प्राप्य कुशाग्रसंस्पर्शमात्रेणापि म्रियते, यथा गौतमीया गौः॥ ४४॥

प्रारब्धात् क्रियाणस्य कर्मणो दौर्बल्यं दर्शयति। औषधानि नीलकण्ठरसादीनि। मन्त्राः मृत्युंजयादीनाम्। होमाः जन्मदिनकर्तव्याः दूर्वाहोमादयः। जपाः महारुद्रादीनाम्। चकारात् सुवर्णदानादीनि। जरया मृत्युना वा ग्रस्तं मानवं न त्रायन्ते। न चैवं विध्यानर्थक्यम्; [4]प्राग्जन्मीयसजातीयकर्माङ्कुरसंवलनेन विजातीयकर्माङ्कुरोन्मूलनेन वा फलवत्त्वात्।

इदमत्राकूतम्—नानाजन्मसु पुत्रादिफलप्रतिबन्धकानि तज्जनकानि च नानाविधानि कर्माणि जन्तुनार्जितानि सन्त्येव। तेषु यदेव सजातीयसंवलनेन प्राबल्यमावहति, तदेव स्वस्वकार्यं फलं तत्प्रतिबन्धं वा जनयति। तत्रेदानींतनं फलकामनयानुष्ठीयमानं कर्म प्राग्भवीयसजातीयकर्मसंवलितं फलं जनयति। तदभावे तत्प्रतिबन्धकं दुर्बलं कर्मोपमर्द्य स्वफलं जनयति। तत्प्राबल्ये तु स्वयमेव तत्प्रतिबद्धं तिष्ठति यावत् सजातीयान्तरं लभते। सजातीयविजातीयोभयाभावे तु स्वयमेव साङ्गं चेत् फलं जनयति। व्यङ्गत्वे तु सजातीयान्तरमेवापेक्षत इति न किंचिद्विध्यानर्थक्यम्। तदेतत् विश्वामित्रमतङ्गाद्युपाख्यानव्याजेन भगवता व्यासेन प्रपञ्चितम्॥ ४५॥

**[5]आगामिनमनर्थं हि [6]प्रविधानशतैरपि।**
**न निवारयितुं शक्तस्तत्र का परिदेवना॥ ४६॥**

[1] क्षीणे—ग, छ.
[2] From here four lines of the text missing in झ.
[3] From here three lines of the text missing in क.
[4] प्राग्भवीय—ख.
[5] From here three verses missing in ज.
[6] प्रतीकार—ठ; प्रविधानकृतैरपि—ख, ग.

**यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।**
**[1]तथा पूर्वकृतं कर्म [2]कर्तारं विन्दते ध्रुवम् ॥ ४७ ॥**

औषधादीनामत्रातृत्वे हेतुमाह । प्रारब्धकर्मप्राबल्येन भाविनोऽनर्थस्योपायशतैरप्यन्यथयितुमशक्यत्वे कः शोकावसरः ? भाविनोऽनर्थस्य गौरवात् ॥ ४६ ॥

हेतुमेव प्रपञ्चयति । जन्मान्तरीयऋणसंबन्धेनोत्तमर्णाधमर्णवासनाप्राबल्यात् धेनुसहस्रेषु वत्सो यथा मातरमेव [3]गच्छति नान्यां धेनुं, तथा "शास्त्रफलं प्रयोक्तरि" इति न्यायात् पूर्वकृतं कर्म कर्तारमेवोपतिष्ठत इति शास्त्रेषु निश्चितम् ; "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति स्मरणात् ॥ ४७ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि [4]चाप्यथ ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ४८ ॥**
**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र[5] न मुह्यति ॥ ४९ ॥**

अव्यक्तमदृश्यमानमेव प्रधानमादिः निदानं येषां तानि अव्यक्तादीनि भूतानि पाञ्चभौतिकानि शरीराणि ; कारणात्मना स्थितानामेवोत्पत्तेः । तथा व्यक्तं दृश्यमानं मध्यं जन्ममरणान्तरालस्थितिलक्षणं येषाम् । अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव । तेषु परिदेवना विलापः कः ? ॥ ४८ ॥

ननु शरीरवत् जीवस्यापि नाशे विलापोऽर्थवानेवेत्यत आह । देहोऽस्यास्तीति देही, तदभिमांनी जीवः । तस्य यथा [6]स्थूलदेहे कौमाराद्यवस्थाः देहनिबन्धना एव, न त्वात्मनः ; पूर्वावस्थानाशेनावस्थान्तरोत्पत्तावपि 'स एवाहम्' इति प्रत्यभिज्ञानात् ; तथैव एतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धना । न तावतात्मनो नाशः ; जातमात्रस्य स्तन्यपानादौ प्रवृत्तिदर्शनात् । अतो धीरः धीमान् तत्र देहोत्पत्तिनाशयोः न मुह्यति ; आत्मैव जातो मृतश्चेति न मन्यते ॥ ४९ ॥

**गृह्णातीह यथा वस्त्रं त्यक्त्वा पूर्वधृतं नरः ।**
**गृह्णात्येवं [7]नवं देही देहं कर्मनिबन्धनम् ॥ ५० ॥**
**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ५१ ॥**

[1] एवं—ठ. [2] कर्तारमनुविन्दति—ठ. [3] अनुगच्छति—छ.
[4] भारत—ठ. [5] वीरस्तत्र—ग.
[6] स्थूल omitted in ख. [7] नरो देहं देही—ज.

ननु आत्मनोऽविनाशेऽपि देहनाश एव शोक इत्यत आह। तत्तत्कर्मनिबन्धनान्येव जीवशरीराणीति पूर्वशरीरपरित्यागेनान्यशरीरग्रहणमावश्यकमेव, जीवदवस्थायां वस्त्रग्रहणमिवेति नात्र शोकावसर इत्यर्थः ॥५०॥

इदानीं [1]वधसाधनाभावेनाप्यात्मनो नित्यतामुपपादयति। शरीरवत् शस्त्रच्छेदाग्निदाहजलशीर्णतावायुशोषादि आत्मनो न भवतीत्यविनाश्योऽयमशोच्य इत्यर्थः ॥ ५१ ॥

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः [2]सततगः स्थाणुरचलोऽयं सनातनः ॥ ५२ ॥**
**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेवं[3] विदित्वैनं नानुशोचितुमर्हथ[4] ॥ ५३ ॥**

इति [5]श्रीविष्णुस्मृतौ [6]विंशोऽध्यायः

तत्र हेतूनाह। अच्छेद्यः, निरवयवत्त्वात्। तत एवाक्लेद्योऽपि। अदाह्यः अमूर्तत्वात्। अशोष्यः द्रवद्रव्यत्वाभावात्। किंच नित्यः अविनाशी। सततगः सर्वकालवर्ती। स्थाणुः स्थिरस्वरूपः रूपान्तरापत्तिः शून्यः। अचलः पूर्वदेशापरित्यागी। सनातनः अनादिः ॥ ५२ ॥

अव्यक्तः चक्षुराद्यविषयः। अचिन्त्यः मनसोऽप्यविषयः। अविकार्यः अन्यथाकर्तुमशक्य इत्यर्थः। उच्यते इत्यभियुक्तोक्तिं प्रमाणयति। उक्तमर्थमुपसंहरति। तदेवमात्मनो जन्ममरणाभावात् शरीरस्यावश्यनाशित्वाच्च न शोकावेशविकला भवितुमर्हथेति ॥ ५३ ॥

इति [7]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज[8]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां विंशोऽध्यायः

[1] वधमानाभावेनापि—ग.
[2] सर्वगतः—ख.
[3] एनं विदित्वैवं—ख.
[4] अर्हसि—ठ.
[5] वैष्णवे—क, झ; वैष्णवे धर्मशास्त्रे हितोपदेशप्रकरणं विंशम्—ज, ठ.
[6] विंशतितमः—झ.
[7] From here up to वाराणसीवासि omitted in घ, च.
[8] श्री omitted in ग.

## एकविंशोऽध्यायः

**अथाशौचव्यपगमे सुस्नातः [1]सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवंविधानेव ब्राह्मणान् यथाशक्ति उदङ्मुखान् गन्धमाल्यवस्त्रालंकारादिभिः पूजितान् भोजयेत् ॥ १ ॥**

पूर्वाध्याये क्रियाः कार्या इत्युक्तम् । ताश्च द्विविधाः ; शौचाशौचयोरधिकारात् । तत्रान्त्या नवश्राद्धाद्याः पूर्वमुक्ताः[2] । इदानीमेकविंशेनाद्यानाह । तत्राशौचानन्तरदिनकर्तव्यमाह । अथ शोकनिर्हरणानन्तरम् । तेन चाशौचमध्य एव मा [3]भूदित्येवमाशौचव्यपगम इति । व्यपगमे विशिष्टापगमे । विशेषश्च,

" विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः ॥ "

इति **मनूक्तः** । तेन यथोक्तकालेन चापगमे । अयं च सार्ववर्णिकः साधारणः कालः ;

" आशौचान्ते ततः सम्यक् पिण्डदानं समाप्यते ।
ततः श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः ॥ "

इति **मरीचिस्मरणात्** । यत्तु—

" एकादशेऽह्नि यच्छ्राद्धं तत् सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानामाशौचं तु पृथक् पृथक् ॥ "

इति, तत् दशाहदशपिण्डपक्ष इत्यविरोधः । तत्र सुस्नातः मन्त्रवत् कृतस्नानः ; " नित्यानि निवर्तेरन् " इति आशौचे मन्त्रवत्स्नाननिषेधात् " आशौचान्ते पुनः क्रिया " इत्यनेन च मन्त्रवत्ताबोधनायोपसर्गः । एवं " नित्यानि निवर्तेरन् " इत्यनेनैव शौचाचमनयोरपि अदृष्टसाधनेतिकर्तव्यतानिवर्तनात् आशौचान्ते तदनुष्ठानावगमायाप्रेतनावप्युपसर्गौ । तेन च यथोक्तविधिना पाणिपादं प्रक्षाल्याचम्यानन्तरम् एवंविधान् वक्ष्यमाणलक्षणान्[4], पित्रर्थानेवेति वा । तेन वैश्वदेवार्थविप्रनिवृत्तिः । बहुवचनेनायुग्मान्,

[1] सु omitted in झ.
[2] उक्त्वा—ग.
[3] भूदित्येवमर्थम्—छ.
[4] लक्षणानेव—छ.

" एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्तव्यमयुग्मानाशयेद् द्विजान् ॥ "

इति **शातातप**स्मरणात् । तत्र संख्याविशेषविधानाय यथाशक्तीति । तां चाह **बृहस्पतिः**—" एकोद्दिष्ट-विधानेन यदेकस्य प्रदीयते " इत्युपक्रम्य " श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश " इति । सप्तार्वाचीनामपि संख्यामाह **आश्वलायनः**—" [1]एकैकमुपवेशयेदेकैकस्य द्वौ द्वौ त्रींस्त्रीन् वा ; वृद्धौ फलभूयस्त्वम् " इति । तत्र एकद्विपक्षो बहुवचनेनैव निरस्तः । वृद्धिशब्देन च पञ्चापि परिगृहीताः । नवत्रयोदशयोरन्तर्वर्तिन्येकादशसंख्यापि ग्राह्या ; " दशम्यामतीतायां प्रातरुत्थाय प्रेतब्राह्मणानेकादशानामन्त्र्य " इति **सत्यव्रत**स्मरणात् । उदङ्मुखानिति पित्र्यर्थदिङ्नियमः । गन्धाः चन्दनादयः, माल्यानि शुक्लादीनि । वस्त्रालंकारग्रहणं नियमार्थम् । यथाह **कात्यायनः**—

" एवमाह्वानिते गन्धपुष्पधूपैः समर्चयेत् ।
ततो वस्त्राणि विप्राय सर्वाण्याभरणानि च ॥ "

इति । दद्यादिति शेषः । आदिशब्दात् धूपदीपादिग्रहणम् । गन्धादीनां प्रकृतितः प्राप्तावपि पुनर्वचनं प्रेतश्राद्धतया " अनूदकमधूपं च गन्धमाल्यविवर्जितम् " इत्यादिप्राप्तनिषेधपरिहाराय । तान् भोजयेत् ॥ १ ॥

**एकवन्मन्त्रानूहेदेकोद्दिष्टे ॥ २ ॥ उच्छिष्टसंनिधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत्[2] ॥ ३ ॥**

यावदुक्तेतिकर्तव्यतानैराकाङ्क्ष्यादमन्त्रत्वप्राप्तावाह । प्रकृतौ पार्वणे ये बहुवचनान्ता मन्त्राः, ते विकृतावेकोद्दिष्टे एकवचनान्तत्वेनोह्याः । वचनग्रहणमुपलक्षणम् । तेन प्रकृतेरप्यूहः, मुख्यदृष्टार्थतास्वार्थ-समवेतार्थतादीनामूहकारणानां तुल्यत्वात् । यथा **आश्वलायनाना**मर्घ्यपात्रतिलावापे " तिलोऽसि सोमदेवत्यः " इति मन्त्रे बहुवचनान्तपितृशब्दस्थाने एकवचनान्तपितृशब्दस्योहः । " शुन्धन्तां पितरः " इत्यत्र तु प्रकृतिमात्रस्यैवोहः, न वचनस्य ; प्रकृतावसमर्थत्वात् । एवमन्येऽपि शाखाभेदेन ग्राह्याः । एकवदूहेनैव एकोद्दिष्टत्वसिद्धावेकोद्दिष्टवचनमितः प्राचीनेषु अमन्त्रत्वबोधनाय ; " नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् " इति **परिशिष्टात्** ॥ २ ॥

एकोद्दिष्टधर्मानाह । उच्छिष्टसंनिधौ ;

" अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रयोजयेत् ।
यत्रोपस्पृशतां वापि प्राप्नुवन्ति न बिन्दवः ॥ "

[1] उपवेशयेत् omitted in छ.

[2] निर्वापयेत्—ज.

इति अत्रिस्मरणात् अरत्निमात्रदेशमुत्सृज्य । एकमेव; प्रेतोद्देशेनैव, न तत्पित्रादीनाम् । नामगोत्राभ्यामेव न; किंतु "एतत्ते" इति मन्त्रेण च । पिण्डम्; कपित्थप्रमाणम्;

"एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।
नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ॥"

इति **स्मरणात्** । निर्वपेत्; कुशेषु पितृतीर्थेन दद्यात् । उच्छिष्टसंनिधावित्यनेन यत्र स्थालीपाकसद्भावः, तत्राग्निसमीप एव पिण्डदानमित्युक्तं भवति । तच्चाग्रे स्पष्टयिष्यते । धर्मान्तरमाह **याज्ञवल्क्यः**—

"एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणवर्जितं ह्यपसव्यवत् ॥
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह ॥"

इति ॥ ३ ॥

**भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकः[1] चतुरङ्गुलपृथ्वीः तावदन्तराः [2]तावदधःखाताः वितस्त्यायताः तिस्रः कर्षूः कुर्यात् ॥ ४ ॥ कर्षूसमीपे चाग्नित्रयमुपसमाधाय[3] परिस्तीर्य तत्रैकैकस्मिन् आहुतित्रयं जुहुयात् ॥५॥ सोमाय पितृमते स्वधा नमः ॥ ६ ॥ अग्नये कव्यवाहनाय स्वधा नमः ॥ ७ ॥ यमायाङ्गिरसे स्वधा नमः ॥ ८ ॥**

किंच "नानाभक्तान्नरसविन्यासैरेकैकमुद्दिश्य विधिवद्भोजयेत्" इति **सत्यव्रतोक्तविधिना** भुक्तवत्सु ब्राह्मणेषु "[4]वासोहिरण्यदास्युपानच्छत्रोदकुम्भा दक्षिणा गुणवति पात्रे शय्यादानम्" इति तदुक्तदक्षिणयैवाभिपूजितेषु प्रेतनामगोत्रे उच्चार्य 'उपतिष्ठताम्' इत्यक्षय्योदकं तेषु दत्त्वा, 'अभिरम्यताम्' इति तान् विसृज्य, कर्ता तिस्रः कर्षूः अवटान् कुर्यात् । तत्परिमाणमाह । चतुरङ्गुलविस्तृताः, तावदन्तराः चतुरङ्गुलान्तराः. तावदधःखाताः चतुरङ्गुलगभीराः, वितस्त्यायताः द्वादशाङ्गुलायामाः इति ॥ ४ ॥

[1] उदकेषु—ठ.
[2] From here up to 40th Sūtra of the 22nd chapter missing in ठ.
[3] समाधाय for उपसमाधाय—झ.
[4] सुवासो—छ.

किंच कर्षूणां समीपे मूले किंचित् स्थलमपहाय, अग्नित्रयं तूष्णीमुपसमाधाय तूष्णीं परिस्तीर्य, तेषु अग्निषु एकैकस्मिन् आहुतित्रयमोदनस्य जुहुयात् ॥ ५ ॥

तत्र मन्त्रानाह । पितृमत्त्वं सोमस्य, कव्यवाहनत्वमग्नेः, आङ्गिरसत्वं च यमस्य गुणः; न पृथग्देवताः; तेषु मन्त्रेषु तथा दर्शनात् ॥ ६, ७, ८ ॥

**स्थानत्रये च प्राग्वत् पिण्डनिर्वपणं कुर्यात् ॥ ९ ॥ अन्नदधिघृतमधुमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत् ॥ १० ॥ एवं मृताहे[1] प्रतिमासं कुर्यात् ॥ ११ ॥**

किंच कर्षूमूले यत् स्थलं स्थापितं, तेषु त्रिष्वपि प्राग्वत् कुशेषु प्रेतनामगोत्राभ्यामेकैकं पिण्डं दद्यात् ॥ ९ ॥

किंच अन्नम् ओदनः; तद्युक्तैः दधिघृतमधुमांसैः प्रत्येकं कर्षूत्रयं पूरयित्वा "एतत्ते तत, ये च त्वामत्रानु" इति **आश्वलायनोक्तं** मन्त्रं यथाशाखं जपेत् । अत्र ततशब्दस्थाने प्रेतशब्दस्योहः; प्रेतश्राद्धेषु "पितृशब्दः स्वसंबन्धः शर्मशब्दस्तथैव च" इत्याद्यष्टादशपदार्थनिषेधात् ॥ १० ॥

मासिकान्याह । एवम् आद्यैकोद्दिष्टविधिना संवत्सरं यावत् प्रतिमासं मृताहे एकोद्दिष्टं कुर्यात्; "मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्" इति **योगिस्मरणात्** ॥ ११ ॥

**संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् देवपूर्वान् भोजयेत् ॥ १२ ॥ [2]अत्राग्नौकरणमावाहनं पाद्यं च कुर्यात् ॥ १३ ॥**

सपिण्डीकरणमाह । संवत्सरान्ते संवत्सरान्तदिने, तस्मिन् सति अव्यवहिताग्रिमदिने इति वा । सोऽयं सार्ववर्णिकः साधारणः कालः । कालान्तरमप्याह [3]**भविष्यत्पुराणम्**—

"द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासि मङ्गले वाप्युपस्थिते ॥"

इति । तत्र प्रेतादिभ्यश्चतुर्भ्यः चत्वारः, वैश्वदेविके च द्वौ इत्येवं षट् ब्राह्मणान् प्रेतस्यैकोद्दिष्टविधिना तत्पित्रादीनां च त्रयाणां पार्वणविधिना भोजयेत् । तदेतत् पार्वणैकोद्दिष्टात्मकं नरसिंहाकारपशुश्राद्धपदाभिधेयमुभयविलक्षणमेकमेव श्राद्धम्; "अथ सपिण्डीकरणं, चत्वार्युदपात्राणि" इत्यादावेकवचनश्रुतेः । यत्तु श्राद्धद्वयमुपक्रम्य "कुर्वीत सहपिण्डताम्" इत्यादिस्मरणं, तत् विधिद्वयाभिप्रायेणेति मन्तव्यम् ॥ १२ ॥

[1] मृताहं—ज; मृताह्नि—झ. [2] तत्र—ज. [3] भविष्यपुराणम्—ख.

तद्विशेषधर्मानाह । अत्र सपिण्डीकरणान्तर्गतैकोद्दिष्टे अग्नौकरणावाहनपाद्यानि कुर्यात् । नैकोद्दिष्टत्वेनात्र तन्निवृत्तिः ; तस्य चतुर्दैवतपार्वणत्वात् । यथोक्तं **चतुर्विंशतिमते**—

"सपिण्डीकरणं चाब्दे संपूर्णेऽभ्युदयेऽपि वा ।
पूर्वं कृत्वा नवं प्रेतमुत्तरान् प्रपितामहान् ॥
चतुर्भिः पितृभिर्युक्तं पार्वणं तु विधीयते ॥"

इति । अत्रेति वचनात् पूर्वैकोद्दिष्टेषु एषां निवृत्तिरित्युक्तमेव । चकारात् एकपवित्रत्वादिकं भवति । तदितिकर्तव्यतां चाह **बोधायनः**—"सर्वस्मात् सकृत् सकृत् समवदायाभिघार्य दक्षिणतो भस्मभिः सहाङ्गारान्निरुह्य तेषु जुहुयात् प्रेतायामुष्मै यमाय स्वाहेति तद्धुतमहुतं च भवति" इति । तथा

"पितृशब्दे क्षिपेत् प्रेतं स्वधावर्जं तु सर्वतः ।
प्रेतमावाह्य विप्रांश्चाप्युपवेश्य निमन्त्रणम् ॥"

इति । न चायं पार्वणांश एव विधिः ; प्रकृतिप्राप्तत्वात् । तेन एकोद्दिष्टांश एवेति मन्तव्यम् ; अप्राप्तत्वात् ॥१३॥

**[1]संसृजतु त्वा[2] पृथिवी [3]समानी व इति च[4] प्रेतपाद्यपात्रे[5] [6]पितृपाद्यपात्रत्रये योजयेत् ॥ १४ ॥ उच्छिष्टसंनिधौ[7] पिण्डचतुष्टयं कुर्यात् ॥ १५ ॥**

किंच पाद्यं च पात्रं च पाद्यपात्रे ; प्रेतपाद्यपात्रे—प्रेतपाद्यं प्रेतपाद्योदकम् ; पात्रं प्रेतार्घ्यपात्रोदकम् ; तदुभयं पितृपाद्योदकत्रये पित्रर्घ्यपात्रोदकत्रये च यथाक्रमं मन्त्राभ्यां योजयेत् । अयमर्थः—प्रेतपाद्योदकपात्रं प्रेतपाद्यदानानन्तरं संसृनोदकमेकस्मिन् पात्रे कृतं पितृपाद्योदकेन पात्रत्रये कृतेन "संसृजतु त्वा पृथिवी" इति वक्ष्यमाणेन मन्त्रेण "समानी व आकूतिः" इत्यनेन च संयोजयेत् । तत्रैवार्घ्यदानानन्तरमवशिष्टं प्रेतार्घ्यपात्रोदकं पित्रर्घ्यपात्रत्रये योजयेत् ॥ १४ ॥

किंच सपिण्डीकरणपार्वणेऽप्यग्नौकरणं नास्तीत्युच्छिष्टसंनिधाविति पुनरुक्तम् । तत्रैकोद्दिष्टविधिना प्रेतनामगोत्राभ्यामेकपिण्डं दत्त्वा पार्वणविधिना पिण्डत्रयं दद्यात् ॥ १५ ॥

**ब्राह्मणांश्च[8] स्वाचान्तान् दत्तदक्षिणांश्चानुव्रज्य विसर्जयेत् ॥ १६ ॥ ततः प्रेतपिण्डं पाद्यपात्रोदकवत्[9] पिण्डत्रये निदध्यात् ॥ १७ ॥ कर्षूत्रयसंनिकर्षेऽप्येवमेव ॥ १८ ॥**

1 Sūtra-s 14 and 15 omitted in क.
2 द्यावा—ज.
3 समाना वः—घ.
4 तु—ज.
5 पात्रं—ज, झ.
6 पितृपात्रत्रये—ज, झ.
7 च added in ज.
8 चतुरः—ज.
9 पात्रत्रयोदकवत्—ज.

किंच ब्राह्मणान् पैतृकान् वैश्वदेविकांश्च, स्वाचान्तान् कृतशुद्धाचमनान्, दत्ता यथाशक्ति दक्षिणा येभ्यस्तान्, अनुव्रज्य आसीमान्तमनुगम्य विसर्जनमन्त्रेण विसर्जयेत् ॥ १६ ॥

किंच यथा प्रेतपाद्योदकं पितृपाद्योदकत्रयेण प्रेतार्घ्यपात्रोदकं च पित्रर्घ्यपात्रोदकत्रयेण योजितं, तथैव प्रेतपिण्डं त्रिधा विभज्य पित्रादिपिण्डत्रये ताभ्यामेव मन्त्राभ्यां योजयेत्। तदुक्तं **काठकगृह्ये**— "चतुर्थं पिण्डमुत्सृज्य त्रेधं कृत्वा पिण्डेषु निदध्यात्, संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः संसृज्यध्वं पूर्वेभिः पितृभिः सह। समाना वः सं वो मनांसीत्येवमुदकम्" इति ॥ १७ ॥

किंच प्रेतैकोद्दिष्टे यत् कर्षूत्रयं, तत्संनिकर्षे तत्संनिधौ ये पिण्डाः, तानपि पित्रादिपिण्डेषु एवमेव यथोक्तं योजयेत् ॥ १८ ॥

**सपिण्डीकरणं मासिकार्थवत् [1]द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् ॥ १९ ॥ मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि ॥ २० ॥ संवत्सराभ्यन्तरे [2]यद्यधिमासो भवेत्, तदा मासिकार्थे दिनमेकं वर्धयेत् ॥ २१ ॥**

मासिकसपिण्डीकरणयोः कालान्तरमाह। मासि भवं मासिकम्; तदर्थः प्रेताप्यायनादिः; सोऽस्त्यस्मिन्निति मासिकार्थवत् मासिककार्यकारि श्राद्धमाशौचापगमे [3]द्वादशाहं द्वादशसु अहःसु कृत्वा त्रयोदशेऽह्नि वा यथोक्तं सपिण्डीकरणं कुर्यात्। अस्मिन् पक्षे ऊनत्रैपक्षिकाणामभावः। सोऽयमापत्कल्पः। अनेन चान्येऽप्येवंविधा उपलक्षिताः। यथा—

"आनन्त्यात् कुलधर्माणां पुंसां चैवायुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥"

इति। कुलधर्मैश्चैत्रादिपौर्णमासीषु[4] दमनकादिना कुलदेवताराधनम्। आयुःक्षयो मरणम्। अस्थितिः एकदेशस्थित्यनियमः। द्वादशाह इत्याशौचान्तोपलक्षणम्; "सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम्" इति **कात्यायन**स्मरणात्। अस्मिन् पक्षे मासिकानि द्वादशाह एव कार्याणि; "मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा" इति **पैठीनसि**स्मरणात्; तदकरणे सपिण्डनानधिकारात्। तदाह **गोभिलः**— "श्राद्धानि षोडशादत्त्वा नैव कुर्यात् सपिण्डनम्" इति। अथान्यो विशेषः **श्राद्धकल्पलताया**मस्माभिरुपपादित इति नेहोच्यते ॥ १९ ॥

[1] द्वादशेऽह्नि वा कुर्यात्—क.
[2] यद्यधिकमासः—ज.
[3] द्वादशाहे—ख.
[4] चैत्र्यादि for चैत्रादि—ग.

शूद्राणां त्वत्र विशेषमाह। शूद्राणां सपिण्डीकरणं द्वादशेऽह्नि भवति; न त्रयोदशे; यतस्तन्मन्त्रवर्जम्। अयं चार्थवादः अल्पेतिकर्तव्यताकत्वबोधनाय। न हेतुः; अनैकान्त्यात्। नापि गुणविधिः; प्राप्तत्वात्, वाक्यभेदाच्च। नापि विशिष्टविधिः; गुणगुणिनोः सामान्यत एव प्राप्तत्वात्। तस्मादर्थवादः। मन्त्रवर्जनमपि न सामान्यतः; अपि तु वैदिकानाम्; "अनुमतोऽस्य नमस्कारो मन्त्रः" इति **गौतमस्मरणात्**। वैदिकानामपि स्वयं पाठो निषिध्यते; न विप्रैः; "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति **ब्रह्मपुराणात्**।

यत्तु—अमावास्याश्राद्धकारिशूद्रविषयमिदं वचनादाशौचमध्य एव कार्यमिति व्याख्यातम्; तत् '[1]अथाशौचव्यपगमे' इति पूर्ववाक्याननुसंधानमूलकमित्युपेक्षणीयम्। किंच वचनादाशौचेऽस्यानुष्ठानेऽपि अमावास्याश्राद्धस्याननुष्ठानमेव, वचनाभावादित्यास्तां तावत्। यदि च द्वादशाहविधान एवाग्रहः, तर्हि सार्ववर्णिकदशाहाशौचपक्षे शूद्राणां सपिण्डने द्वादशाहविधानमस्तु; अप्राप्तत्वात्॥ २०॥

यदुक्तं 'मासिकार्थवत् द्वादशाहं श्राद्धम्' इति, तत्र मासवृद्धौ कथमित्यत आह। यस्मिन् संवत्सरे मासिकानि कार्याणि, तन्मध्ये चेत् अधिमासो भवति, तदा तन्मासिकसिद्ध्यर्थमेकं दिनमधिकं कुर्यात्। त्रयोदशाहं मासिकानि कुर्यादित्यर्थः। अनेन च स्वकालकर्तव्यमासिकवृद्धिरर्थसिद्धैव। यथाह **वसिष्ठः**—

"असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा॥"

इति॥ २१॥

**सपिण्डीकरणं स्त्रीणां कार्यमेवं तथा भवेत्।**
**यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम्॥ २२॥**
**अर्वाक् सपिण्डीकरणं यस्य संवत्सरात् कृतम्।**
**[2]तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने॥ २३॥**

इति [3]श्रीविष्णुस्मृतौ एकविंशोऽध्यायः

पुरुषौर्ध्वदेहिकीः क्रियाः स्त्रीष्वप्यतिदिशति। यदुक्तं सपिण्डीकरणं तत्, तथान्यदपि, एवं प्रेतसंस्कारकं दाहादि मासिकान्तं यत् [4]कर्म, तच्च स्त्रीणां भवेत्[5];

[1] अथाशौचव्यपगम इति omitted in ख. [2] तस्यान्नं सोदकुम्भं च—क.
[3] वैष्णवे एकविंशोऽध्यायः—क, झ; वैष्णवे धर्मशास्त्रे सपिण्डीकरणप्रकरणमेकविंशतितमम्—ज.
[4] कार्यं—ग. [5] कुर्यात्—ख.

" नवश्राद्धं दशाहानि नवमिश्रं तु षड् ऋतून् ।
अतः परं पुराणं स्यात् त्रिविधं श्राद्धमुच्यते ॥ "

इति **परिशिष्टात्** त्रिविधं श्राद्धम् । तत्र नवश्राद्धं पूर्वाध्याये । नवमिश्रं तु अस्मिन्नुक्तम् । इदानीं पुराणमाह । यथा सपिण्डान्तानि कर्माणि स्त्रीपुरुषयोः कार्याणि, तथा यावज्जीवं प्रतिसंवत्सरं मृताहे श्राद्धमपि वक्ष्यमाणविधिना कुर्यात् । 'अर्वाक् सपिण्डीकरणात्' इत्यनेन सोदकुम्भश्राद्धं विधाय संवत्सरान्ते सपिण्डनं वदता यावद्वर्षं तदित्युक्तम् ॥ २२ ॥

तत्र सपिण्डनापकर्षे प्रेतत्वनिवृत्त्या तत्तृप्तिरूपद्वारलोपात् तल्लोपप्राप्तावाह । यस्य वृद्ध्यादिनिमित्तेन मासिकान्यपकृष्य सपिण्डनमप्यपकृष्यते, तस्यापि यावद्वर्षं विप्राय सोदकुम्भमन्नं दद्यात् । तदेव सोदकुम्भश्राद्धम् । तत्स्वरूपमाह **गौतमः**—

" अदैवं पार्वणश्राद्धं सोदकुम्भमधर्मकम् ।
कुर्यात् प्रत्याब्दिकाच्छ्राद्धात् संकल्पविधिनान्वहम् ॥ "

इति ॥ २३ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डिता**त्मजश्री**नन्द-पण्डित**कृतौ [2]श्री**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्या**मेकविंशोऽध्यायः

[1] श्रीमन्हा to वाराणसीवासि omitted in छ. [2] श्री omitted in ग.

## द्वाविंशोऽध्यायः

**ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचम् ॥ १ ॥ द्वादशाहं राजन्यस्य ॥ २ ॥ पञ्चदशाहं वैश्यस्य ॥ ३ ॥ मासं शूद्रस्य ॥ ४ ॥**

पूर्वाध्याये 'अथाशौचव्यपगमे' इत्युक्तम् । तत्रापेक्षितत्वात् द्वाविंशेनाशौचं क्रमेणाह । सपिण्डादिजननमरणाहितोऽतिशयविशेष आशौचम् । तत् ब्राह्मणस्य सपिण्डजननमरणयोः दशाहं दशाहोरात्रं भवति । तच्च ज्ञातमेव निमित्तम्; "निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च" इति लिङ्गात् ॥ १ ॥

किंच राजन्यः क्षत्रियः । तस्याशौचं द्वादशाहम् । दशरात्रं **वृद्धपराशरः** । एकादशाहं **गौतमः** । पञ्चदशाहं **वसिष्ठः** । षोडशाहं **पैठीनसिः** । तदेषां कल्पानां यथाचारं व्यवस्था ज्ञेया ॥ २ ॥

किंच वैश्यस्याशौचं पञ्चदशाहम् । द्वादशाहं **गौतमः** । विंशतिरात्रं **वसिष्ठः** । तत्रापि पूर्वैव व्यवस्था ॥ ३ ॥

किंच शूद्रस्याशौचं मासं त्रिंशद्दिनानि भवन्ति । सच्छूद्राणां पञ्चदश दिनानीति **योगीश्वरः** । सत्त्वं च द्विजातिपरिचर्येत्युक्तम्[1] । विंशतिरात्रमिति **देवलशातातपौ** । सर्वेषां दशाहमिति **अङ्गिराः**—

"सर्वेषामेव वर्णानां सूतके [2]मृतके तथा ।
दशाहाच्छुद्धिरथवा इति शातातपोऽब्रवीत् ॥"

इति ॥ ४ ॥

**सपिण्डता च पुरुषे सप्तमे [3]विनिवर्तते ॥ ५ ॥**

सपिण्डानामित्युक्तम् । के ते सपिण्डाः? तानाह । पिण्डो देहजनकः; स समो येषां ते सपिण्डाः; तेषां भावः, सपिण्डता । सा च कूटस्थमारभ्य षष्ठपर्यन्तमेवानुवर्तते; सप्तमे पुरुषे विनिवर्तते; विशेषेण निवर्तते । विशेषश्चायमेव—यद्विवाहे साप्तपुरुषम्; "सापिण्ड्यं सप्तमादूर्ध्वम्" इति वक्ष्यमाणत्वात् । अत्र तु षाट्पुरुषमेव; सप्तमे निवृत्तिसरणात् । न चातीतपदाध्याहारेण तदेकवाक्यता कार्या; तेनैवेष्टसिद्ध्या

1 परिचर्यर्येत्युक्तम्—ख. 2 मरणे—घ. 3 वि omitted in झ.

वाक्यान्तरारम्भानर्थक्यात्। यदि च तस्य स्त्रीपुंद्वारकतयोभयसाधारण्येनास्य पुंमात्रद्वारकतामाविष्कर्तुं वाक्यान्तरारम्भः, तर्हि मातृपितामहीप्रपितामह्यादीनां पुंमात्रद्वारकसापिण्ड्याभावेनाशौचाभावप्रसङ्गः। तथाच षाट्पुरुषत्वमाविष्कर्तुं स कुतो नेष्यते? मूलान्तरकल्पनाक्लेशादिति चेत्, तुल्यमेतद्भवतोऽपि। यदि च "सपिण्डता च साप्तपुरुषी विज्ञायते" इत्याशौचप्रकरणीय**वसिष्ठादि**वाक्यैकवाक्यतार्थमध्याहारः, तर्हि "पिण्डनिवृत्तिः सप्तमे" [1]इत्याशौचप्रकरणीय**मनुगौतम**वाक्यैकवाक्यतार्थं यथान्यासमेवास्तु। न च तत्राध्याहारः; "ऊर्ध्वं सप्तमात् पितृबन्धुभ्यः" इति विवाहप्रकरणीयेन पौनरुक्त्यात्। तस्मात् **वसिष्ठगौतमा**दीनां वाक्यद्वयारम्भबलादत्रापि सापिण्ड्यद्वयवैलक्षण्याभिधानाय वाक्यान्तरारम्भ इति वक्तव्यम्। **वसिष्ठ**वाक्यविरोधस्तु आशौचकल्पविकल्पवत् व्यवस्थापनीय इत्यलम्।

'पुरुषे' इत्यनेन पुंमात्रद्वारकताभिधानात् स्त्रीद्वारकं सापिण्ड्यं निवर्त्यते; न स्त्रीसापिण्ड्यम्। [2]ततश्च सत्यपि सापिण्ड्ये मातामहादीनां न दशाहाद्याशौचप्रसङ्गः; नापि मात्रादीनां तदप्रसङ्गः। पुरुषे च सप्तमत्वविशेषणात् अप्रत्तानां स्त्रीणां सापिण्ड्यान्तरमुक्तम्। तदाह **वसिष्ठः**—"अप्रत्तानां स्त्रीणां त्रिपुरुषी विज्ञायते" इति। सपिण्डतेत्यनुवर्तते। तस्याश्चोभयनिरूप्यत्वात् द्वयोरपि परस्परं त्रिपुरुषमेव [3]सापिण्ड्यं सिध्यति। ततश्च अप्रत्तस्त्र्याशौचं चतुर्थादीनां चतुर्थाद्याशौचं वा तासां न भवति। **मनु**रप्याशौचे सापिण्ड्यमेवमेवाह—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥"

इति। "निवर्तेता चतुर्दशात्" इति **वृद्धमनुः**। **गौतमस्तु** पञ्चमेऽप्याह—"पिण्डनिवृत्तिः [4]सप्तमे पञ्चमे वा" इति। तत्र पञ्चमे वेति पुत्रिकापुत्रविषयं द्रष्टव्यम्; तस्य चतुःपुरुषमेव पिण्डान्वयात्। यथाह **बोधायनः**—"कथं नु खलु पुत्रिकापुत्रस्य पिण्डदानम्? एतत्तेऽमुष्मै पितर्मम पितामह, ये च त्वामनु; एतत्तेऽमुष्मै पितामह मम प्रपितामह, ये च त्वामनु; एतत्तेऽमुष्मै प्रपितामह मम [5]परमप्रपितामह, ये च त्वामनु" इति। इदमनौरसानामुपलक्षणम्, तेषामपि चतुःपुरुषमेव पिण्डान्वयात्। यथाह **मनुः**—

"त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते।
चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते॥"

इति। तदनेनौरसानामवयवानुवृत्त्या षाट्पुरुषं सापिण्ड्यम्; अनौरसानां निर्वाप्यपिण्डान्वयेन[6] चतुःपुरुषमित्युक्तं भवति। इदमपि सवर्णेषु। असवर्णेषु तु त्रिपुरुषमेव,

[1] मनु omitted in छ.
[2] From here up to न भवति omitted in छ.
[3] सा सिध्यति—ख, ग.
[4] पञ्चमे सप्तमे वा—ख.
[5] परप्रपितामह—ख, ग.
[6] वा added in ख, ग.

" सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु ॥ "

इति **शातातप**स्मरणात् । भिन्नजातयः विजातीयभार्योत्पन्नाः । यथोक्तं **ब्राह्मे**—

" क्षत्रविट्छूद्रजातीनां सापिण्ड्यं तु त्रिपूरुषम् ।
ब्राह्मणैरपि जातानामविभक्तार्थभागिनाम् ॥ "

इति । ब्राह्मणैरिति बहुवचनं क्षत्रियादिप्राप्त्यर्थम् । अविभागोक्तिः पितृजातीयाशौचप्राप्त्यर्था । यथाह **आपस्तम्बः**—

" क्षत्रविट्छूद्रजातीनां ततश्चेन्मृतसूतके ।
तेषां तु पैतृकाशौचं विभक्तानां तु मातृकम् ॥ "

इति । विभागः पितृमरणोपलक्षणम् ।

" नानाजातिषु पारक्यं पैतृकं जीवतः पितुः ।
अतीते मातृकं विद्यात् पारक्यमुभयोरपि ॥ "

इति । यदा तु एकोऽन्तःसंख्यमपरश्च बहिःसंख्यं वर्तते, यथा षाट्पुरुषे सापिण्ड्ये पञ्चमसप्तमौ, तदा तयोः सापिण्ड्यं निवर्तते । उभयनिरूप्ये तस्मिन् अन्यतरस्य संख्याबहिर्भावेनानिरूपकतया तत्स्वरूपानिष्पत्तेः ; यथोक्तसंख्यानिरूपकाणामेव च तन्निरूपकत्वात् । तस्मात् यथान्यतरकर्मादिना संयोगादिर्नश्यति, एवमन्यतर-संख्याबहिर्भावेन सापिण्ड्यमपीत्यवगन्तव्यम् । तेन च तयोः परस्परं सोदकाशौचमेव ; न सपिण्डाशौचम् । न चैवं विवाहप्रसङ्गः ; तत्रोभयोरप्यसपिण्डत्वविशेषणेनोभयोरपि संख्याबहिर्भावस्यापेक्षणात् । तच्च तत्रैव वक्ष्यते ॥ ५ ॥

**आशौचे[1] होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते ॥ ६ ॥ नाशौचे कस्यचिदन्नमश्नीयात् ॥ ७ ॥ ब्राह्मणादीनामशौचे यः सकृदेवान्नमत्ति तस्य तावदाशौचं यावत् तेषाम् ॥ ८ ॥**

आशौचापनोद्यमाह । होमो वैश्वदेवः ; " विप्रो दशाहमासीत वैश्वदेवविवर्जितः " इति **संवर्त**-स्मरणात् । न श्रौतः ; " वैतानोपासनाः कार्याः " इति प्रतिप्रसवात् । दानं नैमित्तिकातिरिक्तम् ; " दानं नैमित्तिकं विना " इति प्रतिप्रसवात् । [2]प्रतिग्रहो विद्यमानान्नस्य ; " सद्यो भ्रस्यत्कुटुम्बार्थे प्रतिग्रहकृतौ तथा " इति प्रतिप्रसवात । स्वाध्यायो ब्रह्मयज्ञः । स चान्येषां त्रयाणामुपलक्षणम् । एते च जननमरणाशौचे

[1] च added in ज.

[2] From here up to प्रतिप्रसवात् omitted in ख.

निवर्तन्ते ; "पञ्चयज्ञविधानं च न कुर्यान्मृत्युजन्मनोः" इति **स्मरणात्** । चकारः स्मार्तकर्ममात्रोपसंग्रहार्थः । यथाह **व्याघ्रपादः**—

"स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥"

इति । अत्र श्रौतस्मार्तयोरेव निषेधप्रतिप्रसवौ, "नित्यानि निवर्तेरन् वैतानवर्जम्" इति **पारस्कर**स्मरणात्[1] । नैमित्तिककाम्ययोस्तु निषेधः **स्मृत्यन्तरे**—"वर्जयेत् सूतके कर्म नित्यनैमित्तिकादिकम्" इति । अत्र नित्यनैमित्तिके सगतिके । आदिशब्दात् काम्यम् । तदपि सगतिकम् ॥ ६ ॥

आशौच्यन्नभोजने आशौचविधानाय तन्निषेधति । आशौचिनः सवर्णस्यासवर्णस्य वा असपिण्डस्यान्नमन्यो नाश्नीयात् । सपिण्डस्य तु न दोषः । यथाह **यमः**—

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ॥"

इति । उभयत्र जननमरणयोः । कुलस्याशौचिनोऽन्नमन्यैर्न भुज्यते । सूतके तु न दोष इत्यर्थः । कस्यचिदिति सामान्योपादानेऽपि अनग्निहोत्रिण इति द्रष्टव्यम् । तदाह **अङ्गिराः**—

"ब्रह्मक्षत्रविशां भुक्त्वा न दोषो ह्यग्निहोत्रिणाम् ।
सूतके शाव आशौचे ह्यस्थिसंचयनात् परम् ॥"

इति ॥ ७ ॥

तदेवाह । ब्राह्मणाद्यन्यतमाशौचिनो योऽन्नमश्नीयात् सकृदपि, स तत्तदाशौचमेव प्राप्नुयात्, तावत्कालमशुचिर्भवतीत्यर्थः । इदं च कामतोऽनापदि भोजने ज्ञेयम्;

"यस्तेषामन्नमश्नाति सकृदेवापि कामतः ।
तदाशौचे निवृत्ते तु स्नानं कृत्वा विशुध्यति ॥"

इति **कौर्मात्** । आपद्यकामतो भोजने तु **अङ्गिराः**—

"प्रेतान्नमसपिण्डस्य यावदश्नात्यकामतः ।
तावन्त्यहान्यशौचं स्यात् सपिण्डानां कथंचन ॥"

इति । विस्तरस्तु **शुद्धिचन्द्रिकायाम**वगन्तव्यः ॥ ८ ॥

1 श्रवणात्—घ.

**आशौचापगमे[1] प्रायश्चित्तं कुर्यात् ॥ ९ ॥ सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तन्निमग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत् ॥ १० ॥ क्षत्रियाशौचे ब्राह्मणस्त्वेतदेवोपोषितः कृत्वा शुध्यति ॥ ११ ॥ [2]वैश्याशौचे राजन्यश्च ॥ १२ ॥ वैश्याशौचे ब्राह्मणस्त्रिरात्रोपोषितश्च ॥ १३ ॥ ब्राह्मणाशौचे राजन्यः [3]क्षत्रियाशौचे वैश्यश्च स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् ॥ १४ ॥ वैश्यश्च [4]ब्राह्मणाशौचे गायत्र्यष्टशतं[5] जपेत् ॥ १५ ॥ शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं चरेत् ॥ १६ ॥ शूद्रश्च द्विजाशौचे स्नानमाचरेत् ॥ १७ ॥ शूद्रः शूद्राशौचे स्नातः पञ्चगव्यं पिबेत् ॥ १८ ॥**

किंच [6]अन्नभोजनादिनिमित्तेन यस्य यावदाशौचं प्राप्तं, तदपगमे वक्ष्यमाणं प्रायश्चित्तं कुर्यात् ॥ ९ ॥ तदेवाह । द्विजो विप्रादिः सवर्णाशौचे भुक्त्वा नदीं गत्वा तन्निमग्नः त्रिवारमघर्षणम् "ऋतं च सत्यम्" इति तृचं जप्त्वा उत्तीर्य, अष्टाधिकं सहस्रं गायत्रीर्जपेत् ॥ १० ॥ विप्रस्तु क्षत्रियाशौचे भुक्त्वा पूर्वेद्युरुपोष्य परेद्युः पूर्वोक्तमेव कृत्वा शुध्यति ॥ ११ ॥ राजन्योऽपि वैश्याशौचे भुक्त्वा पूर्वेद्युरुपोष्य परेद्युः पूर्वोक्तमेव कृत्वा शुध्यति ॥ १२ ॥ विप्रो वैश्याशौचे भुक्त्वा त्रिरात्रोपोषितः पूर्वोक्तं कृत्वा शुध्यति ॥ १३ ॥ विप्राशौचे क्षत्रियः, क्षत्रियाशौचे वैश्यो भुक्त्वा नदीं गत्वा गायत्रीशतपञ्चकं जपेत् । 'स्रवन्तीमासाद्य' इत्यनुवृत्तावपि पुनर्वचनमघमर्षणनिवृत्त्यर्थम्; उत्तरत्र [7]तावन्मात्रानुवृत्त्यर्थं च ॥ १४ ॥ वैश्यो विप्राशौचे भुक्त्वा, नदीं गत्वा अष्टोत्तरशतं गायत्रीर्जपेत् ॥ १५ ॥ द्विजो विप्रादिः शूद्राशौचे भुक्त्वा नदीं गत्वा वक्ष्यमाणं प्राजापत्यं चरेत् ॥ १६ ॥ शूद्रश्च द्विजाशौचे भुक्त्वा नदीं गत्वा स्नानं कुर्यात् ॥ १७ ॥ शूद्रः शूद्राशौचे भुक्त्वा नद्यां स्नातः पञ्चगव्यं पिबेत् ॥ १८ ॥

**पत्नीनां दासानामानुलोम्येन स्वामिनस्तुल्यमाशौचम् ॥ १९ ॥ मृते स्वामिन्यात्मीयम् ॥ २० ॥**

1 व्यपगमे—ज.
2 This Sūtra omitted in ज.
3 ब्राह्मणाशौचे—ज.
4 क्षत्रियाशौचे—ज.
5 अष्टसहस्रं—च.
6 अत्र—ख, छ.
7 तावन्मात्रांशा—ख.

विजातीयाशौचमाह। विप्रादीनामानुलोम्येन याः पत्न्यः, "क्षत्रियाद्यास्तिस्रो वर्णानुपूर्व्येण" इति **स्मरणात्**; ये च दासाः "वर्णानामानुपूर्व्येण दास्यं न प्रतिलोमतः" इति **स्मरणात्**; तासां पत्नीनां दासानां च स्वजननमरणयोरपि स्वामितुल्यमेवाशौचम्। यज्जातीयः स्वामी, तदाशौचकालेनैव तेषामपि शुद्धिरित्यर्थः। एतच्च जीवति स्वामिनि स्वामिगृहावस्थितौ ज्ञेयम्;

"दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके॥"

इति **बृहस्पतिस्मरणात्**॥ १९॥

मृते तु स्वस्वजातीयमेवेत्याह। स्वामिमरणानन्तरं पृथगवस्थितानां वा पत्न्यादीनां स्वस्वजातीयमेवाशौचम्। तदाह **हारीतः**—

"मृतसूतेषु दासानां पत्नीनां चानुलोमतः।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतकम्॥"

इति। यौतकं स्वस्वजातीयम्॥ २०॥

**हीनवर्णानामधिकवर्णेषु सपिण्डेषु [1]तदशौचव्यपगमे शुद्धिः॥ २१॥ ब्राह्मणस्य क्षत्रविट्शूद्रेषु [2]सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः॥ २२॥ क्षत्रियस्य विट्शूद्रयोः [3]षड्रात्रत्रिरात्राभ्याम्॥ २३॥ वैश्यस्य शूद्रेषु षड्रात्रेण[4]॥ २४॥**

हीनवर्णानां क्षत्रियादीनामधिकवर्णेषु ब्राह्मणादिषु सपिण्डेषु जातेषु मृतेषु वा यदुत्तमवर्णाशौचं तदपगम एव शुद्धिः। तदाह **ब्रह्मपुराणम्**—

"शूद्रा वैश्याः क्षत्रियाश्च क्रमादुत्तमजातिषु।
बान्धवेषु चरन्त्यत्र यत्संख्यं तेषु विद्यते॥"

इति। सापिण्ड्यानुवृत्तावपि सापिण्ड्योपादानं विजातीयसापिण्ड्यवैलक्षण्यबोधनाय। तदुक्तमेव प्राक्॥ २१॥

क्षत्रविट्शूद्रेषु सपिण्डेषु जातेषु मृतेषु वा विप्रस्य षड्रात्रत्रिरात्रैः क्रमेण शुद्धिः॥ २२॥

विट्शूद्रयोः सपिण्डयोर्जातमृतयोः क्षत्रियस्य षड्रात्रत्रिरात्राभ्यां शुद्धिः॥ २३॥

[1] तद्व्यपगमे—ख.
[2] सपिण्डेषु omitted in क.
[3] एकरात्र—क.
[4] षड्रात्रम्—क.

शूद्रेषु सपिण्डेषु जातेषु मृतेषु वा वैश्यस्य षड्रात्रेण शुद्धिः। यथाह **हारीतः**—

" [1]शुध्येद्विप्रो दशाहेन जन्महानौ स्वयोनिषु।
षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु॥"

इति। यत्तु **ब्राह्मे**—

" बान्धवेषु च विप्रस्य क्षत्रविट्शूद्रजातिषु।
मृतेषु वाथ जातेषु दशाहाच्छुद्धिरिष्यते॥
क्षत्रियस्याथ वैश्यस्तु वैश्यस्य वृषलस्तथा।
जायते म्रियते बन्धुस्तत्राशौचं स्वकं भवेत्॥"

इति, तत् देशाचारानुरोधेन व्यवस्थाप्यम्। [2]तदुक्तं तत्रैव,

" देशधर्मप्रमाणत्वात् षड्रात्रं क्षत्रियेष्वथ।
त्रिरात्रमपि वैश्यस्य [3]शूद्रेष्वेकाहमेव च॥"

इति॥ २४॥

## मासतुल्यैरहोरात्रैर्गर्भस्रावे॥ २५॥

गर्भस्रावाशौचमाह। यावन्तो मासा गर्भस्य, तत्समसंख्यैरहोरात्रैर्गर्भस्रावे माता शुध्यति। यद्यपि "आ चतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः" इति **मरीचिना** स्रावपातौ परिभाषितौ, तथापि अधःपातमात्रमभिप्रेत्यात्र स्रावशब्द उपात्त इति द्रष्टव्यम्। तत्राद्यमासत्रये मातुरेव त्रिरात्रं, न सपिण्डानाम्। चतुर्थपञ्चमषष्ठेषु च माससमसंख्यैरहोरात्रैः मातुः शुद्धिः। पित्रादीनां तु तत्र त्रिरात्रमित्यर्थः। तदाह **स** एव,

" गर्भस्रावे यथामासमचिरे तूत्तमे त्रयः।
स्रावे मातुस्त्रिरात्रं स्यात् सपिण्डाशौचवर्जनम्।
पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्॥"

इति। अचिरे आद्यमासत्रये। उत्तमे ब्राह्मणजातौ। यत्रापि सपिण्डाशौचाभावः, तत्रापि पितुः स्नानमस्त्येव; "गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां, स्नानमेव पुरुषस्य" इति **वृद्धवसिष्ठ**स्मरणात्। क्षत्रियादीनां त्वाह **मरीचिः**—

" राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च।
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता॥"

[1] शुद्धो विप्रो—ग.    [2] यदुक्तं—ग.    [3] शूद्रस्तु—ग.

इति । मूले त्वस्यानुक्तिः उक्तपक्षेणैव सर्ववर्णशुद्धिमभिप्रेत्येति न न्यूनता;

" षण्मासाभ्यन्तरं यावद्गर्भस्रावो यदा भवेत् ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ "

इति ब्राह्मे तच्छब्देन सर्ववर्णस्त्रीणां परामर्शात्; " तुल्यं वयसि सर्वेषाम् " इति व्याघ्रपादस्मरणाच्च ॥२५॥

**[1]जातमृते मृतजाते वा कुलस्य सद्यः शौचम् ॥ २६ ॥ अदन्तजाते बाले प्रेते सद्य एव ॥ २७ ॥ नास्याग्निसंस्कारो नोदकक्रिया ॥ २८ ॥**

जात एव मृतः जातमृतः; नाभिच्छेदात् पूर्वमेव मृत इति यावत् । मृत एव जातः मृतजातः । तस्मिन् कुलस्य सद्यः शौचम् । तन्मरणनिमित्तं कुलस्य नाशौचमित्यर्थः । यथाह [2]**बृहन्मनुः**—

" दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ "

इति । सूत्याशौचे विशेषः **स्मृत्यन्तरे**—

" जीवन् [3]जातो यदि मृतो मृतसूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां दिनत्रयम् ॥ "

इति । मृतः; नालच्छेदात् पूर्वमित्यर्थः । **पारस्करोऽपि** " गर्भे यदि विपत्तिः स्याद् दशाहं सूतकं भवेत् " इति ॥ २६ ॥

जाताः दन्ताः यस्यासौ दन्तजातः; तद्भिन्नः अदन्तजातः । तस्मिन् बाले प्रेते सपिण्डानां सद्य एव शुद्धिः । इदं च दाहाभावे; तथा वक्ष्यमाणत्वात्; " दाहे त्वहोरात्रमेकाहो दन्तजन्मनः प्राक् " इति **स्मृत्यन्तरात्** । पित्रोस्तु त्रिरात्रमेव सर्वत्र; " बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् " इति **मनुस्मरणात्** ॥ २७ ॥

अस्याजातदन्तस्याग्निसंस्कारो दाहो न कार्यः । नापि उदकक्रिया, अञ्जलिदानं न कार्यम् । निषेधश्चायं पाक्षिको ज्ञेयः;

" तूष्णीमेवोदकं कुर्यात् तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥ "

इति **लौगाक्षिस्मरणात्** ॥ २८ ॥

[1] This Sūtra omitted in क, ज, झ. [2] मनुः—ख, ग. [3] मृतो—ख.

**दन्तजाते त्वकृतचूडे त्वहोरात्रेण ॥ २९ ॥ कृतचूडे त्वसंस्कृते त्रिरात्रेण ॥ ३० ॥ ततः परं यथोक्तकालेन ॥ ३१ ॥**

जातदन्ते पुनरकृतचूडे अहोरात्रेण सपिण्डानां शुद्धिः । आहिताग्न्यादित्वात् पूर्वनिपातः । एतदपि दाहाभावे । दाहे तु त्रिरात्रम् । तदाह **अङ्गिराः**—

" यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
[1]तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेत् ॥ "

इति ॥ २९ ॥

चूडाकरणानन्तरमसंस्कृतेऽनुपनीते त्रिरात्रेण शुद्धिः सर्वेषाम् । अत्र दाहो नियत एव; " तूष्णीमेवोदकं कुर्यात् " इति **स्मरणात्** । त्रिवर्षस्य तु चूडाभावेऽपि दाहत्रिरात्रे नियते ।

" चौलं न क्रियते यस्य स्वकाले तन्मृतावपि ।
चतुर्थे वर्षमारभ्य दाहादि त्रिदिनं स्मृतम् ॥ "

इति **षडशीतिस्मरणात्** ॥ ३० ॥

ततः उपनयनात् परं स्वस्वकालेन दशाहादिना सर्वे वर्णाः शुध्येयुः ॥ ३१ ॥

**स्त्रीणां विवाहः संस्कारः ॥ ३२ ॥ संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे ॥ ३३ ॥**

संस्कृतासु स्त्रीषु आशौचाभावं पितृपक्षे वक्ष्यति । तत्र संस्कारः कः ? इत्यपेक्षायामाह । स्त्रीणां तु पूर्णाशौचं विवाहानन्तरमेव ; उपनयनस्थानीयत्वात् तस्य ; " वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः " इति **मानवात्** । प्राग्विवाहात्तु विशेषो **ब्राह्मे**—

" आजन्मनस्तु चौलान्तं कन्या यदि विपद्यते ।
सद्यः शौचं भवेत् तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
ततः परं प्रवृद्धायां त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ।
स्वजात्युक्तमशौचं स्यान्मृतके जातके तथा ॥ "

[1] दाहयित्वा तथाप्येनं—ग.

इति । पित्रोस्तु सर्वत्र त्रिरात्रमेव । तदाह **कार्ष्णाजिनिः**—

" प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥ "

इति । वाग्दत्तावाग्दत्ताकृतचौलाकृतचौलास्वित्यर्थः । अत्र विशेषमाहतुः **शङ्खकार्ष्णाजिनी**—" अजातदन्तासु पित्रोरेकरात्रम् " इति । **देवस्वामी** तु अप्रत्तास्वपि दशाहमाह; " दशाहं सपिण्डेषु, गुरौ चासपिण्डे, अप्रत्तासु च स्त्रीषु " इति **आश्वलायन**स्मरणात् । **वसिष्ठो**ऽपि—" दशाहं शावमाशौचम् " इत्युपक्रम्य " अप्रत्तानां स्त्रीणां त्रिपुरुषी विज्ञायते " इत्यभिधाय " जननेऽप्येवमेव स्यात् " इत्युपसंहरन्नेवमाह[1] । तच्च देशाचारतो व्यवस्थाप्यम् । विवाह इति सामान्योपादानेऽपि ब्राह्मदैवार्षप्राजापत्यानामेव ग्रहणम्; तत्रैव प्रदानसद्भावात्, प्रदानस्यैव चाशौचविच्छेदकत्वात् । तथाच **वसिष्ठः**—" प्रत्तानामितरे कुर्युः " इति । अन्यथा सापिण्ड्यसद्भावेन[2] दशाहाशौचप्रसङ्गः । न च विशेषवचनादेव तन्निवृत्तिः; निमित्तविशेषाभावे विशेषवचनत्वासिद्धेः । तस्मात् प्रदानमेव निमित्तम् । तथाच गान्धर्वासुरराक्षसपैशाचेषु प्रदानाभावेन सगोत्रत्वसापिण्ड्ययोरनिवृत्त्या दशाहाशौचमेव सिध्यति ।

येऽपि

" सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानं च शौचाशौचं तदानुगम् ॥ "

इति **शङ्खलिखित**वचनात् सापिण्ड्यविशिष्टं सगोत्रत्वं दशाहाशौचनिमित्तमाहुः, तेषां सापिण्ड्योत्तीर्णसगोत्रोढमातृष्वसृपुत्रेषु सगोत्रत्वसापिण्ड्ययोर्विद्यमानत्वेन दशाहाशौचप्रसङ्गो दुरुद्धरः ॥ ३२ ॥

स्त्र्याशौचस्य पितृपक्षे नैमित्तिकमपवादमाह । ब्राह्मादिचतुर्विधविवाहोढासु स्त्रीषु प्रसूतासु मृतासु वा पितृपक्षे नाशौचं भवति ॥ ३३ ॥

**तत्प्रसवमरणे चेत् पितृगृहे स्यातां, तदा एकरात्रं त्रिरात्रं च ॥ ३४ ॥ जननाशौचमध्ये यद्यपरं जननाशौचं स्यात्, तदा पूर्वाशौचव्यपगमे शुद्धिः ॥ ३५ ॥ रात्रिशेषे दिनद्वयेन ॥ ३६ ॥ प्रभाते दिनत्रयेण ॥ ३७ ॥**

तस्यैव नैमित्तिकं प्रतिप्रसवमाह । तस्याः संस्कृतायाः कन्यायाः प्रसवमरणयोरन्यतरत् यदि पितृगृहे स्यात्, तदा पित्रोस्त्रिरात्रं, बन्धूनामेकरात्रं ज्ञेयम् । यथाह **ब्राह्मे**—

" [3]दत्ता कन्या पितुर्गेहे सूयते म्रियतेऽथवा ।
तद्बन्धुवर्गस्त्वेकेन शुध्यते जनकस्त्रिभिः ॥ "

[1] मेवाह—च. [2] सद्भावे—ख. [3] दत्तकन्या—ख.

इति। एतेन प्रसवे एकरात्रं, मरणे त्रिरात्रमिति निरस्तम्। यत्तु प्रसवमरणे समुच्चिते निमित्तम्, द्वन्द्वनिर्देशादिति; तन्न; "गृहे मृतासु दत्तासु कन्यासु स्यात् त्र्यहं पितुः" इति **कौर्म**विरोधात्॥ ३४॥

आशौचसंनिपाते विशेषमाह। प्रक्रान्तजननाशौचस्यान्तिमदिनीयसूर्योदयपर्यन्तमपरं जननाशौचं चेत् स्यात्, तदा पूर्वाशौचशेषेणैव कालेन शुद्धिः, न पुनर्दशरात्रादि। यथाह **बोधायनः**—"अथ यदि दशरात्रात् संनिपतेयुराद्यं दशरात्रमाशौचमा नवमात् दिवसात्" इति। आङभिव्याप्त्यर्थः। जननाशौचसामान्योपादानेऽपि दीर्घकालेन समकालमल्पकालं वापैति; न तु स्वल्पकालेन दीर्घकालमिति द्रष्टव्यम्। तदाह **देवलः**—

"अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा।
गुरुणा लघु शुध्येत लघुना नैव गुर्विति॥"

इति॥ ३५॥

किंच अत्राशौचप्रकरणे रात्रिशब्दोऽहःशब्दश्चाहोरात्रपरः। तेनान्तिमाहोरात्ररूपे शेषे आशौचान्तरपाते अधिकेन दिनद्वयेन शुद्धिः; न पूर्वशेषेणैव॥ ३६॥

किंच प्रभातो रात्रेश्चरमो यामः। तत्राशौचान्तरपाते अधिकेन दिनत्रयेण शुद्धिः। तदाह **देवलः**—

"पुनः पाते दशाहात् प्राक् पूर्वेण सह गच्छति।
दशमेऽह्नि पतेद्यस्य द्व्यहेन स विशुध्यति।
प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः॥"

इति। **शातातपो**ऽपि—"रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहाच्छुचिः" इति। [1]इति प्राञ्चः। **हरदत्तस्तु**—"प्रभाते तिसृभिः" इति **गौतमीयं** सूत्रं दशाहादौ व्यतीते प्रभाते संगवे यद्यन्यदापतेत्, ततः तिसृभिः रात्रिभिः शुध्येरन्निति व्याचष्टे। तस्य चेयमुपपत्तिः—आशौचिनां हि आशौचानन्तरदिने संगवे स्नानं विहितम्। स्नानकालापनोद्यं चाशौचम्। ततश्च स्नानात् प्राक् प्रातरप्याशौचान्तरपाते त्र्यहेण शुद्धिरिति युक्तमेव। तदेतत् स्पष्टमुक्तम् **अग्निस्मृतौ**—

"दशाहे दशमे शावे शावमन्यद्यदापतेत्।
द्व्यहाच्छुद्धिर्भवेत् तस्य प्रभाते च त्र्यहात् तथा॥
प्रोक्तः पुरोगतः कालः प्रभातस्त्रिमुहूर्तकः।
पुरोदयाच्च कल्याख्यः कालः पञ्चमुहूर्तकः॥
स्नानकालः प्रभातान्तः शावसूतकिनां स्मृतः।
स्त्रीणां चर्तौ तु तत्कालात् प्राक् स्नानाच्च शुचिर्भवेत्॥"

[1] From here the rest of the commentary on this Sūtra omitted in all MSS. except छ.

इति। अस्यार्थः—दशमे; दिन इति शेषः। शाव इति सूतकस्याप्युपलक्षणम्। प्रभात इत्यत्रापेक्षितं प्रभातलक्षणमाह। उदयात् पूर्वं पञ्चमुहूर्तः; उदयात् पुरोगतः उदयानन्तरभावी च त्रिमुहूर्तः कालः प्रभात इत्यर्थः। स एव च कल्याख्यः। शावं च सूतकं च शावसूतके; ते विद्येते येषां ते शावसूतकिनः। तेषामाशौचानन्तरदिने स्नानकालः प्रभातान्तः। प्रभातस्यान्तो येनासौ प्रभातान्तः; संगवकाल इत्यर्थः। स्त्रीणामृतौ च स एव स्नानकालः; "संगवे स्नानमाचरेत्" इति वक्ष्यमाणदेवलस्मरणात्। तुशब्देन तत्स्नाने कालान्तरमप्याह। तत्कालात् संगवकालात् प्राक् च प्रातरपि रजस्वला स्नानात् शुचिर्भवेदित्यर्थः ॥ ३७ ॥

**मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम् ॥ ३८ ॥ श्रुत्वा देशान्तरस्थो जननमरणे आशौचशेषेण शुध्येत् ॥ ३९ ॥ व्यतीतेऽशौचे संवत्सरान्तस्त्वेकरात्रेण ॥ ४० ॥ [1]ततः परं स्नानेन ॥ ४१ ॥ आचार्ये मातामहे च व्यतीते त्रिरात्रेण ॥ ४२ ॥**

जननाशौचसंनिपाते यो निर्णयः, स एव मरणाशौचसंनिपातेऽप्यवधेयः। विशेषस्तु शावाशौचेन सूत्याशौचमपैति; न सूत्याशौचेन शावाशौचमिति। तदुक्तं **चतुर्विंशतिमते**—

"मृतजातकयोर्योगे या शुद्धिः सा तु कथ्यते।
मृतेन शुध्यते जातं न मृतं जातकेन तु ॥"

इति। अत्र विशेषान्तरं **षडशीतिमते**—

"[2]पूर्वाशौचेन या शुद्धिः सूतिनां मृतिनां च सा।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ॥
पूर्वेण वा परेणापि पित्रोः [3]शावेन हीतरत्।
आशौचं शुद्धिमायाति न पित्रोः शावमन्यतः ॥"

इति। पित्राशौचसंनिपाते तु **शङ्खः**—

"मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥"

इति ॥ ३८ ॥

[1] अतः—ठ; ज omits this Sūtra. [2] पूर्वाशौचे तयोः—ख. [3] शावं न—छ; शौचेन—ग.

देशान्तरस्थं प्रत्याह । आशौचमध्ये इत्यनुवर्तते । तेन देशान्तरस्थो दशाहान्तः सपिण्डजननमरणे श्रुत्वा आशौचशेषकालेनैव शुध्येत् । तदाह **बृहस्पतिः**—

" अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म च ।
अनिर्गते दशाहे तु शेषाहोभिर्विशुध्यति ॥ "

इति ॥ ३९ ॥

तस्यैवाशौचापगमे विशेषमाह । दशाहादावशौचकालेऽतिक्रान्ते पुनर्वर्षमध्ये ज्ञातिमरणश्रवणे देशान्तरस्थः अहोरात्रेण शुध्येत् । यद्यप्यशौच इति सामान्येनोपात्तं, तथापि मरणाशौचमात्रे इदं ज्ञेयम् ; " नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि " इति **देवलस्मरणात्** । पुत्रजन्मश्रवणे तु पितुः स्नानमस्त्येव ;

" निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥ "

इति **मानवात्** । संवत्सरान्त इत्यविशेषेऽपि षण्मासादूर्ध्वमिति द्रष्टव्यम् ;

" अर्वाक् त्रिपक्षात् त्रिनिशं षण्मासाच्च दिवानिशम् ।
[1]अहः संवत्सरादर्वाग्देशान्तरमृते सति ॥ "

इति **विष्णुपुराणात्**[2] । दिवानिशमित्यनेन अहर्द्वययुक्ता निशोच्यते ; " षण्मासात् पक्षिणी भवेत् " इति **स्मरणात्** ; अन्यथा 'अहः संवत्सरात्' इत्यनेनाविशेषापातात् । 'अहः संवत्सारात्' इत्यपि षण्मासादूर्ध्वं नवमान्मासादर्वाक् द्रष्टव्यम् ; नवमादूर्ध्वं स्नानमात्रश्रवणात् । यथाह **वृद्धवसिष्ठः**—

" मासत्रये त्रिरात्रं स्यात् षण्मासात् पक्षिणी भवेत् ।
अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥ "

इति ॥ ४० ॥

किंच ततो नवमान्मासात् परं देशान्तरमृतं श्रुत्वा स्नानमात्रेण शुध्येत् । यत्तु—नद्यादिव्यवहित-देशान्तरमृते तत्सपिण्डानां दशाहादूर्ध्वं मासत्रयादर्वागपि सद्यःशौचमिति **मिताक्षरोक्तं**, तत् **विष्ण्वादि**-वाक्यविरोधादुपेक्षणीयम् । यच्च

" देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥ "

इति वचनं, तत् नवममासादूर्ध्वं स्नानविधायकमिति न विरोधः ॥ ४१ ॥

1 त्र्यहः—ख, ग.

2 विष्णुस्मरणात्—ग.

असगोत्राशौचमाह । आचार्यो वक्ष्यमाणलक्षणः । मातामहो मातुः पिता । तस्मिन् व्यतीते मृते त्रिरात्रेण शुद्धिः । चकारात् मातामह्यामपि ; " मातामहे च तत्पत्न्यामाचार्ये च त्रिवासरम् " इति षडशीतिस्मरणात् ॥ ४२ ॥

**[1]अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।**
**परपूर्वासु [2]भार्यासु प्रसूतासु मृतासु च ॥ ४३ ॥**

अनौरसाद्याशौचमाह । अनौरसाः पुत्राः क्षेत्रजगूढजकानीनसहोढजपुत्रिकापुत्राद्याः । यद्यपि क्रीतकृत्रिमदत्तकस्वयंदत्तापविद्धानामुत्पत्त्यनन्तरमेव पुत्रत्वेन परिग्रहात् तज्जननाशौचं न संभवति, तथापि तदपत्योत्पत्ताविति द्रष्टव्यम् । एतेषु जातेषु मृतेषु वा त्रिरात्रमाशौचम् । [3]तथा परः पूर्वो यासां ताः परपूर्वाः पुनर्भ्वः स्वैरिण्यश्च ; तासु [4]प्रसूतासु मृतासु वा त्रिरात्रमाशौचम् । इदं च यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैवेति ज्ञेयम् । अन्येषामहोरात्रमेव । यथाह **मरीचिः**—

" सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥ "

इति । परः पूर्वः पतिः पिता च ययोस्तौ भार्यापुत्रौ । परपूर्वेत्यन्याश्रितायाः स्वभार्याया अप्युपलक्षणम् ;

" अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥ "

इति **प्रजापति**स्मरणात् ॥ ४३ ॥

**[5]आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण ॥ ४४ ॥ स्वदेशराजनि च ॥ ४५ ॥ असपिण्डे[6] स्ववेश्मनि मृते च ॥ ४६ ॥**

पूर्वशेषमाह । आचार्यो वक्ष्यमाणलक्षणः । तत्पत्नी विवाहसंस्कृता । पुत्रश्चौरसस्तस्यैव । उपाध्यायो वक्ष्यमाणलक्षणः । मातुलः मातुः सोदरो भ्राता । श्वश्रूः श्वशुरश्च श्वशुरौ । श्वशुर्यः स्यालकः । सहाध्यायी सहाध्ययनकारी । शिष्योऽध्यापितः । तेष्वतीतेषु एकरात्रेण शुद्धिः ॥ ४४ ॥

[1] This verse omitted in झ.
[2] नारीषु—च.
[3] From here up to त्रिरात्रमाशौचम् omitted in ख.
[4] प्रसूतासु omitted in ग.
[5] आचार्यपुत्रोपाध्यायमातुलश्वशुरश्वश्रूश्वशुर्य—क, ज, ठ.
[6] असपिण्डेऽपि—ठ.

यस्मिन् देशे स्वयमुष्यते, स स्वदेशः । तस्य राजनि च मेते एकरात्रेण शुद्धिः ॥ ४५ ॥
सपिण्डः पूर्वोक्तः । तद्भिन्नः असपिण्डः तस्मिन् स्ववेश्मनि मृते एकरात्रेण शुद्धिः ॥ ४६ ॥

**भृग्वग्न्यनाशकाम्बुसंग्रामविद्युन्नृपहतानां नाशौचम् ॥४७॥**

मरणविशेषेणाशौचापवादमाह । भृगुः गिरिकटकः । अग्निः अग्निप्रवेशः । अनाशकमनशनम् । अम्बु जलपातः । संग्रामो युद्धम् । विद्युत् वज्रः । नृपो राजा । एतैः बुद्धिपूर्वं हतानां नाशौचम् । यद्यपि एतैश्चतुर्धापि मरणं संभवति—निषिद्धं, नैमित्तिकं, काम्यम् , अभ्यनुज्ञातं चेति, तथापि आद्येषु त्रिष्वेवाय-माशौचाभावः । तत्र निषिद्ध **शङ्खः**—

" भृग्वग्न्यनाशकाम्भोभिर्मृतानामात्मघातिनाम् ।
न पिण्डस्तस्य नाशौचं शस्त्रविद्युद्धताश्च ये ॥ "

इति । नैमित्तिके **गौतमः**—" यस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत् । सर्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युः " इति । प्राणान्तिकप्रायश्चित्तप्रस्तावे **सुमन्तुरपि**—" भृग्वग्निजलसंपातदेशान्तरस्थ-संन्यास्यनशनमहाध्वनिकानामुदकक्रियाः कार्याः, सद्यः शौचं भवति " इति । काम्ये **शिवपुराणे वायु-संहितायाम्**—

" तथापि मरणं शस्तमुशन्त्यनशनादिभिः ।
शास्त्रविस्रम्भधीरेण मनसा क्रियते यतः ॥
एतेष्वन्यतमोपायं कथमप्यवलम्ब्य वा ।
षडध्वशुद्धिं विधिवत् प्राप्तो वा म्रियते यदि ॥
सद्य एव विमुच्येत नात्र कार्या विचारणा ।
पशूनामिव तस्येह न कुर्यादौर्ध्वदेहिकम् ॥
नैवाशौचं प्रसज्येत तत्पुत्रादेर्विशेषतः ।
[1]अथैतमपि चोद्दिश्य कर्म चेत् कर्तुमीप्सितम् ।
कल्याणमेव कुर्वीत भक्त्या भक्तांश्च पूजयेत् ॥ "

इति । कल्याणं शिवमहोत्सवः । एतेष्वित्यनेन काष्ठपाषाणजलप्रवेशादयोऽपि काम्यमरणोपायाः परामृश्यन्ते । तेन तत्राप्याशौचादिनिवृत्तिः । तथाच **बृहत्पराशरः**—

" जलमध्यगतो वापि काष्ठमध्यगतोऽपि वा ।
वाराणसीमृतो जन्तुर्न स संस्कारमर्हति ॥ "

[1] अथैनमपि—च.

इति । अभ्यनुज्ञाते **मनुशातातपौ**—

" वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ "

इति । आशौचमित्यौर्ध्वदेहिकस्याप्युपलक्षणम् । यथाह **आपस्तम्बः**—

" व्यापादयेदिहात्मानं स्वयं योऽग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥ "

इति । प्रमादमृते त्वस्त्येव सर्वम् ;

" अथ कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥ "

इति **अङ्गिरः**स्मरणात् ॥ ४७ ॥

**न [1]राज्ञां राजकर्मणि ॥ ४८ ॥ [2]न व्रतिनां व्रते ॥ ४९ ॥ न सत्रिणां सत्रे ॥ ५० ॥ न कारूणां कारुकर्मणि ॥ ५१ ॥**

अथ केषांचित् कर्मविशेषेणापवादमाह । राज्ञामभिषिक्तानां[3] राजकर्मणि प्रजापालनोपयुक्तहोमदानव्यवहारदर्शनादौ नाशौचम् ॥ ४८ ॥

व्रतं कृच्छ्रचान्द्रायणादि विद्यते येषां ते व्रतिनः । तेषामारब्धव्रतानुष्ठाने नाशौचम् । यद्वा व्रतिनो ब्रह्मचारिणः । तेषामपि नाशौचम् । [4]किंतु पित्रोरन्यत्र । यदाह **वसिष्ठः**—" ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः " इति । यद्वा व्रतिनः प्रक्रान्तप्रायश्चित्ताः " प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा " इति **ब्राह्मात्** ॥ ४९ ॥

सत्रं गवामयनादि अन्नसत्रादि च ; तद्विद्यते येषां यजमानानां ते सत्रिणः । तेषां सत्रे गवामयनान्नसत्रादौ नाशौचम् ; " अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् " इति **स्मरणात्** । सत्रमेकाहादीनामुपलक्षणम् ; " ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् " इति **योगि**स्मरणात् ॥ ५० ॥

कारवः तक्षादयः । तेषां कारुकर्मणि काष्ठतक्षणादौ नाशौचम् ॥ ५१ ॥

[1] राज्ञां omitted in क.
[2] Text and commentary of Sūtra-s 49 to 51 omitted in ख, ग.
[3] षिक्तादीनां—घ.
[4] परं तु—घ, च.

**न राजाज्ञाकारिणां तदिच्छया[1] ॥ ५२ ॥ न देवप्रतिष्ठा-विवाहयोः पूर्वसंभृतयोः ॥ ५३ ॥ न देशविभ्रमे ॥ ५४ ॥ आपद्यपि च कष्टायाम् ॥ ५५ ॥**

राज्ञामाज्ञाकारिणो राजसेवकाः । तेषां राजेच्छया नाशौचम् ; "राज्ञः पुरोहितोऽमात्यः शुद्धिस्तस्य तदाश्रयात्" इति शङ्खलिखितस्मरणात् ॥ ५२ ॥

विष्ण्वादिमूर्तिप्रतिष्ठापने विवाहे च नाशौचम्, पूर्वमाशौचात् संभारः प्रारम्भश्चेत् । एवं श्राद्धादिष्वपि ज्ञेयम् ; "यज्ञे संभृतसंभारे विवाहे श्राद्धकर्मणि" इति **स्मरणात्** । प्रारम्भलक्षणं त्वाह **विष्णुः**—

"प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥"

इति ॥ ५३ ॥

देशोपप्लवे नाशौचं स्पर्शादौ, तन्निमित्तशान्त्यादौ च ;

"विवाहे देवयात्रायां संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां स्पृष्टास्पृष्टिर्न दोषकृत् ॥"

इति **स्मरणात्** ;

"दुर्भिक्षे राष्ट्रसंपात आपदां च समुद्भवे ।
उपसर्गमृतौ चैव सद्यः शौचं विधीयते ॥"

इति **पराशरस्मरणात्** ॥ ५४ ॥

कष्टा आपत् दुर्भिक्षरोगादिः । तत्र प्रतिग्रहदानादौ नाशौचम् ;

"जन्मप्रभृतिपापानां निरासे च मरिष्यतः ।
उत्क्रान्तिवैतरिण्यादिदाने प्रेताहुतिष्वपि ।
सद्यो भ्रश्यत्कुटुम्बार्थे प्रतिग्रहकृतौ तथा ॥"

इति **षडशीतिस्मरणात्**[2] ॥ ५५ ॥

**आत्मत्यागिनः पतिताश्च नाशौचोदकभाजः[3] ॥ ५६ ॥ पतितस्य दासी भृतेऽह्नि पदा [4]अपां घटमपवर्जयेत् ॥ ५७ ॥**

[1] तदिच्छायाम्—ठ.
[2] मतात्—ग.
[3] भागिनः—च.
[4] अपां omitted in झ, ठ.

और्ध्वदेहिकाद्यपवादमाह । आत्मत्यागिनः पूर्वोक्ताः । पतिताः महापातकिप्रभृतयः । तेषामाशौचोदकदानादि न कर्तव्यम् ;

" आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥ "

इति स्मरणात् । यद्यपि आत्मघातिनामाशौचाभावः पूर्वमेवोक्तः, तथापि उदकदानादिनिवृत्त्यै पुनरुपन्यासः ॥ ५६ ॥ कथं तर्हि तस्य तृप्तिः स्यात् ? अत आह । पतितस्य मरणदिने दासी अपां घटं पदा [1]अपवर्जयेत् ' इदं त्वं पिब ' इति । तदुक्तं ब्राह्मे—

" पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति ।
स हि दासीं समाहूय सर्वगां दत्तवेतनाम् ॥
अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि ।
हे दासि गच्छ मूल्येन तिलानानय सत्वरम् ॥
तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी ।
उपविष्टा तु वामेन चरणेन ततः क्षिपेः ।
कीर्तयेः पतितां संज्ञां त्वं पिबेति मुहुर्वद ॥ "

इति । मुहुः ; त्रिः । स एष मृतपतितबहिष्कारः । जीवद्बहिष्कारस्तावद्वक्ष्यते । प्रकारान्तरमप्युक्तं तत्रैव—

" क्रियते पतितानां तु गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वात् गयाकूपेषु बन्धुभिः ।
मार्तण्डपादमूले च श्राद्धं हरिहरं स्मरन् ॥ "

इति ॥ ५७ ॥

**उद्बन्धनमृतस्य[2] यः पाशं छिन्द्यात् स तप्तकृच्छ्रेण शुध्यति ॥ ५८ ॥ आत्मत्यागिनां संस्कर्ता च ॥ ५९ ॥ तदश्रुपातकारी च ॥ ६० ॥ सर्वस्यैव प्रेतस्य [3]बान्धवैः सहाश्रुपातं कृत्वा स्नानेन ॥ ६१ ॥ अकृतेऽस्थिसंचये सचैलस्नानेन ॥ ६२ ॥**

आत्मघातिसंस्कारादौ प्रायश्चित्तमाह । [4]उद्बन्धनं गलपाशः । तेन मृतस्य यः तं पाशं छिन्द्यात् , स तप्तकृच्छ्रेण वक्ष्यमाणेन शुध्यति ॥ ५८ ॥ पूर्वोक्तानामात्मघातिनां दाहकवाहकादिरपि तप्तकृच्छ्रेण शुध्यति ;

[1] पर्यस्येत्—ख.
[2] मृते तस्य—ग, च.
[3] तद्बान्धवैः—ठ.
[4] The commentary from here up to that on Sūtra 60 omitted in ख.

"वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ।
तप्तकृच्छ्रेण शुध्यन्तीत्येवमाह प्रजापतिः ॥"

इति पराशरस्मरणात् ॥ ५९ ॥ तेषामात्मघातिनामर्थे योऽश्रुपातं करोति, सोऽपि तप्तकृच्छ्रेण शुध्यति ॥ ६० ॥ प्रसङ्गादन्यार्थाश्रुपातेऽपि प्रायश्चित्तमाह । सर्वस्य चातुर्वर्णिकस्य प्रेतस्य प्रसङ्गान्मिलितैः बान्धवैः सहाश्रुपातं कृत्वा सर्वोऽपि स्नानमात्रेण शुध्यति ; तद्गृहगमनादौ त्वाशौचान्तरस्मरणात् । तच्च शुद्धिचन्द्रिकायामुक्तमिति नेहोच्यते । यद्वा सर्वस्य ब्राह्मणव्यतिरिक्तस्य क्षत्रियादेः क्षत्रियाद्युद्देशेन रोदने इदं द्रष्टव्यम् । यथाह ब्राह्मे—

"सचैलं स्नानमन्येषामकृते त्वस्थिसंचये ।
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम् ॥"

इति ॥ ६१ ॥ अस्थिसंचयादर्वाक् रोदने तु सचैलस्नानेन शुद्धिः । अकृत इति वचनात् कृते स्नानमात्रं द्रष्टव्यम् ॥ ६२ ॥

**द्विजः [1]शूद्रप्रेतानुगमनं कृत्वा स्रवन्तीमासाद्य [2]तन्निमग्नः त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत् ॥ ६३ ॥ द्विजप्रेतस्याष्टशतम् ॥ ६४ ॥ शूद्रः प्रेतानुगमनं कृत्वा स्नानमाचरेत् ॥ ६५ ॥ चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः ॥ ६६ ॥**

द्विजः त्रैवर्णिकः शूद्रं प्रेतमनुगम्य नदीं गत्वा तस्यां निमज्ज्य त्रिरघमर्षणं जप्त्वा उत्तीर्य अष्टाधिकं सहस्रं गायत्रीर्जपेत् ॥ ६३ ॥ द्विजो द्विजं प्रेतमनुगम्य पूर्ववदघमर्षणं जप्त्वा अष्टाधिकशतं गायत्रीर्जपेत् ॥ ६४ ॥ शूद्रः द्विजं प्रेतमनुगम्य स्नायात् ॥ ६५ ॥ चिता प्रसिद्धा । तद्धूमसेवने सर्वे वर्णाः स्नानं कुर्युः ॥ ६६ ॥

**मैथुने [3]दुःस्वप्ने रुधिरोपगतकण्ठे वमनविरेकयोश्च ॥ ६७ ॥ श्मश्रुकर्मणि कृते च ॥ ६८ ॥ शवस्पृशं च स्पृष्ट्वा रजस्वलाचण्डालयूपांश्च ॥ ६९ ॥ भक्ष्यवर्जं पञ्चनखशवं[4] तदस्थिस्नेहं च ॥ ७० ॥ सर्वेष्वेतेषु स्नानेषु [5]वस्त्रं नाप्रक्षालितं बिभृयात् ॥ ७१ ॥**

[1] शूद्रप्रेतस्यानु—ठ.
[2] तन्निमग्नः to उत्तीर्य omitted in ठ.
[3] वपने दुःस्वप्ने—ठ.
[4] शावं—ज.
[5] पूर्वं वस्त्रं—क, ख.

प्रसङ्गात् स्नाननिमित्तान्याह । स्त्रीसंभोगे दुःस्वप्ने गर्दभाद्यारोहणे कण्ठतो रुधिरनिर्गमे वान्ते अतिसारे च सर्वे स्नानं कुर्युः ॥ ६७ ॥ श्मश्रुकर्म क्षौरम् । तस्मिंश्च कृते स्नानं कार्यम् ॥ ६८ ॥ शववाहकं, रजस्वलामुदक्यां, चण्डालं तत्समानधर्मं श्वपचादिकं च, यूपं यज्ञस्तम्भं स्पृष्ट्वा स्नायात् ॥ ६९ ॥ भक्ष्याः पञ्चनखाः शशादयः पञ्च ; तद्वर्जं श्वादिपञ्चनखशवमार्द्रं तदस्थि स्पृष्ट्वा स्नायात् ॥ ७० ॥ एषु स्नानेषु विशेषमाह । एषु पूर्वोक्तेषु सर्वेष्वपि स्नानेषु स्पर्शकालीनं वस्त्रं प्रक्षाल्यैव बिभृयात् ; नाप्रक्षालितम् ॥ ७१ ॥

**रजस्वला चतुर्थेऽह्नि [1]स्नानाच्छुध्यति ॥ ७२ ॥ रजस्वला हीनवर्णां [2]रजस्वलां स्पृष्ट्वा न तावदश्नीयात् यावन्न शुद्धा ॥ ७३ ॥ सवर्णामधिकवर्णां वा स्पृष्ट्वा [3]सद्यः स्नात्वा शुध्यति ॥ ७४ ॥**

रजःशुद्धिमाह । रजस्वला उदक्या, दिनत्रयं व्रतेनातिवाह्य चतुर्थेऽह्नि प्रातः संगवे वा मृद्भिः शौचं कृत्वा सचैलं स्नात्वा शुध्यति स्पर्शे भर्तृपरिचरणे च योग्या भवति । दैवपित्र्ययोस्तु पञ्चम एव ;

" चतुर्थेऽहनि कुर्वीत प्रातः स्नानं यथाविधि ।
संगवे वा मृदाद्भिश्च शौचं कृत्वा रजस्वला ॥ "

इति **स्मृत्यन्तरात्** । **आपस्तम्बोऽपि**—

" शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥ "

इति । '[4]चतुर्थेऽहनि शुध्यति ' इत्यभिधानात् दिनत्रयं सर्वव्यवहारायोग्येति गम्यते । तथाच **तैत्तिरीयश्रुतिः**— " तस्मान्मलवद्वाससा न संवदेत, न सहासीत, नास्या अन्नमद्यात् " इत्यादि । अस्यापवादोऽपि तत्रैव " अथो खल्वाहुरभ्यञ्जनं वा स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यत् " इति । अस्यार्थः— मतान्तरमुपन्यस्यति—अथो इति । अभ्यञ्जनं व्यवायः । तदेव स्त्रिया अन्नं तर्पकम् । तदेव न प्रतिगृह्यं न कर्तव्यम् ; " यस्ततो जायते सोऽभिशस्तः " इत्यपत्यदोषश्रवणात् । अन्यत् सहासिकाभाषणादि कामम् । वर्जने अभ्युदयः । अवर्जने प्रत्यवायाभाव इति । तदिदं देशभेदेन यथाचारं व्यवस्थाप्यम् ॥ ७२ ॥

रजस्वलयोरन्योन्यस्पर्शे शुद्धिमाह । ब्राह्मण्यादिः रजस्वला हीनवर्णां क्षत्रियादिरजस्वलां स्पृष्ट्वा न तावदश्नीयात् यावन्न शुद्धा भवति ॥ ७३ ॥

सवर्णां ब्राह्मण्यादिः ब्राह्मण्यादिकाम्, अधिकवर्णां क्षत्रियादिः ब्राह्मण्यादिकां वा रजस्वलां स्पृष्ट्वा सद्यः स्नात्वा अश्नीयात् ; नोपवसेत् । इदमुभयमप्यकामतः स्पर्शे । कामतः स्पर्शे तु यावच्छुद्धि उपवासः ;

[1] स्नाता शुध्येत्—ज. [2] रजस्वलां omitted in ख. [3] सद्यः omitted in क, ठ.
[4] From here up to यथाचारं व्यवस्थाप्यम् omitted in all MSS. except छ.

अन्ते प्रायश्चित्तं च वसिष्ठपराशराद्युक्तमुन्नेयम् । तच्च पराशरस्मृतिविवृतौ विद्वन्मनोहरायामुक्तमिति नेहोच्यते ॥ ७४ ॥

**क्षुत्वा सुप्त्वा भुक्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य [1]मूत्रपुरीषं कृत्वा [2]पञ्चनखास्थि अस्नेहं स्पृष्ट्वा चाचामेत् ॥ ७५ ॥ चण्डालम्लेच्छसंभाषणे च ॥ ७६ ॥**

आचमनशुद्धिमाह । क्षुतस्वापभोजनानन्तरं भोजनाध्ययनादौ च पानस्नाननिष्ठीवनवासःपरिधानरथ्याक्रमणमूत्रपुरीषोत्सर्गास्नेहपञ्चनखास्थिस्पर्शेषु आचामेत् । चकारः पुनरुक्त्यर्थः । यथाह **योगीश्वरः**—

" स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च[3] ॥ "

इति । **आपस्तम्बः**—" भोक्ष्यमाणोऽध्येष्यमाणश्च प्रयतोऽपि[4] द्विराचामेत् " इति । **प्रचेताः**—" मूत्रपुरीषोत्सर्गनिष्ठ्यूतशुक्तवाक्याभिधाने पुनरुपस्पृशेत् " इति ॥ ७५ ॥ चण्डालः उक्तलक्षणः । म्लेच्छाः किरातादयः । तेषां संभाषणे च द्विराचामेत् ॥ ७६ ॥

**नाभेरधस्तात् प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैश्चोपहतो[5] मृत्तोयैस्तदङ्गं प्रक्षाल्य [6]शुध्येत् ॥ ७७ ॥ अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन ॥ ७८ ॥ [7]वक्त्रोपहतस्तूपोष्य स्नात्वा पञ्चगव्येन ॥ ७९ ॥ दशनच्छदोपहतश्च ॥ ८० ॥**

प्रक्षालनशुद्धिमाह । नाभेरधोभागे प्रबाहुषु कराग्रेषु च कायिकैर्मलैः सुराभिः मद्यैश्च वक्ष्यमाणलक्षणैरुपहतः मृत्तोयैः गन्धलेपक्षयं यावत् तदङ्गं प्रक्षाल्य शुध्येत् ॥ ७७ ॥ स्नानशुद्धिमाह । उक्ताङ्गेभ्योऽन्यत्र नाभेरूर्ध्वं पूर्वोक्तैः द्रव्यैरुपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन शुध्येत् ॥ ७८ ॥ प्रायश्चित्तशुद्धिमाह । पूर्वोक्तैरेव द्रव्यैः वक्त्रे उपहतः उपोष्य स्नात्वा पञ्चगव्यपानेन शुध्येत् । चक्षुषीत्यपि पाठः ॥ ७९ ॥ दशनच्छदावोष्ठौ । तत्रोपहतश्चोपोष्य स्नात्वा पञ्चगव्यपानेन शुध्येत् ॥ ८० ॥

[1] कृत्वा मूत्रपुरीषं—झ. [2] नरास्थिस्नेहं—ज, ठ. [3] वा—ग.
[4] अपि omitted in ग. [5] मद्यैश्च omitted in क.
[6] From here up to प्रक्षाल्य in the next Sūtra omitted in क, ज, झ, ठ.
[7] चक्षुष्युपहतः—ज, ठ.

**वसा शुक्रमसृङ् मज्जा मूत्रं विट् कर्णविण्नखाः ।**
**[1]श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ ८१ ॥**
**गौडी [2]माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।**
**यथैवैका तथा सर्वा न पातव्या द्विजातिभिः ॥ ८२ ॥**

कायिकैर्मलैरित्युक्तम् । तानाह । वसा मांसस्नेहः । शुक्रं रेतः । असृक् रक्तम् । मज्जा अस्थिसुषिरगतो रसः । मूत्रमुच्चारः । विट् पुरीषम् । कर्णविट् कर्णच्छिद्रमलः । नखाः नखराः । श्लेष्म कफः । अश्रु नेत्रजलम् । दूषिका नेत्रमलम् । स्वेदः अङ्गजलम् । एते द्वादश नृणां मलाः । नृग्रहणं पञ्चनखोपलक्षणम् ; श्वसृगालादीनामस्पृश्यत्वात् ; " विण्मूत्रे च सर्वस्याजाविकगोऽश्वेभ्योऽन्यत्र " इति **स्मरणात्** ॥ ८१ ॥

सुराभिरित्युक्तम् । तद्भेदानाह । गौडी गुडविकारः । माध्वी मधुविकारः । पैष्टी पिष्टविकारः । सेयं त्रिविधा सुरा विज्ञेया । विज्ञेयतावचनाच्च एतत्त्रये सुराशब्दस्य शक्तिं गमयति ; अन्यथा वाक्यारम्भानर्थक्यात् । न चानेकार्थत्वम् ; तालादिमद्यव्यावृत्तमदविशेषशक्तेरेकस्याः प्रवृत्तिनिमित्तत्वात् । यत्तु " द्वादशं तु सुरा मद्यम् " इति **पुलस्त्येन** गौडीमाध्वीभ्यामपि सुरायाः पृथक् निर्देशात् भेद इति प्राचोक्तम्, तत् ऐक्षवमधूत्थयोर्मद्ययोः गौडीमाध्वीत्वभ्रमेणेति मन्तव्यम् ; अन्यथा मूलवाक्ये ताभ्यां तयोः [3]पृथगुद्देशानुपपत्तेः । परिगणनादेव त्रैविध्यसिद्धौ पुनर्वचनं प्रत्येकं त्रैविध्यप्रतिपादनाय । यथाह **हारीतः**—

" गौडी माध्वी तथा पैष्टी निर्यास्या कथितापरा ।
एवं चतुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः ॥
भेदेन द्वादश प्रोक्ताः सुराः सौवीरकारसैः ।
सीधुर्गौडी च मत्स्यण्डी गुडेन प्रभवास्त्रयः ॥
माध्वीकं मधुकं माध्वी मधुना संयुतास्त्रयः ।
पैष्टी अरिष्टं जातं च तण्डुलप्रभवास्त्रयः ॥
मृद्वीकारससंभूता ताडमाडरसोद्भवा ।
निर्यास्या सा तु विज्ञेया तासां वच्मि गुणागुणान् ॥ "

इति । एषां च लक्षणानि वैद्यकादवगन्तव्यानि । गौड्यादिपरिगणनं तु क्षत्रियादीनां चतुर्थ्यनिषेधाय ।

" कामादपि हि राजन्यो वैश्यो वापि कथंचन ।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते ॥ "

[1] The reading of the line corrupt in ज.
[2] पैष्टी च माध्वी च—क, ठ.
[3] पृथगुपदेशा—ग.

इति **स्मरणात्** । तासु यथैवैका पैष्टी त्रिभिरपि द्विजैर्वर्जनीया

" सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
अतो ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ "

इति **मनुस्मरणात्**, तथा द्विजातिभिर्ब्राह्मणक्षत्रियवैश्यैर्मूर्धावसिक्ताद्यनुलोमजैश्च सर्वा गौड्यादिर्नवविधापि वर्जनीया ; " यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः " इति **मानवात्** । ब्रह्मवादिनस्त्रैवर्णिकाः ; वेदाध्येतृत्वात् । नाध्यापनयोगिनो ब्राह्मणा एव ; वदेरुच्चारणार्थत्वेनाध्यापनपरत्वाभावात् ;

" एका माध्वी च पैष्टी च गौडी च त्रिविधा सुरा ।
द्विजातिभिर्न पातव्या कथंचिदपि कर्हिचित् ॥
अज्ञानाद्वारुणीं पीत्वा प्राश्य मूत्रपुरीषके ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ "

इति [1]**यमस्मरणाच्च** । कथंचित् ; रोगादिष्वपि ; " मद्यं तावत् त्रिविधं गौडी पैष्टी च माध्वी च " इत्युपक्रम्य,

" मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्तिषु ।
द्विजैस्त्रिभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम् ॥ "

इति **धन्वन्तरिस्मरणात्** ।

यदपि

" कामादपि हि राजन्यो वैश्यो वापि कथंचन ।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते ॥ "

इति [2]**वृद्धयाज्ञवल्कीयम**भ्यनुज्ञानं, तदपि उक्तनिषेधवशीकृतं सत् तालादिमद्यमात्रविषयमेव ; असुरापदेन त्रिविधाया अपि सुराया व्यावर्तनात् ।

यत्तु

" उभौ मध्वासवक्षीबावुभौ चन्दनचर्चितौ ।
एकपर्यङ्कशयनौ दृष्टौ मे केशवार्जुनौ ॥ "

इति **लिङ्गं**, तदपि " मधुमद्ये पुष्परसे " इति **कोशेन** " यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः " इत्याद्या**युर्वेदेन** च गौडीमाध्वीव्यतिरिक्ततालादिमद्यासवपानगमकम्, न गौडीमाध्वीपानस्य ; तयोस्तद्भेदस्या-युर्वेदप्रसिद्धत्वात् ।

[1] यम omitted in च.

[2] वृद्धयाज्ञ—ख, ग, झ.

यदपि "यन्माल्यमासीत् तत्पश्चात् पर्यौहत सुरा वै माल्यं ततो राजन्यमसृजत् तस्माज्ज्यायांश्च कनीयांश्च श्वशुरश्च स्नुषा च श्वश्रूश्च सुरां पीत्वा विलपन्त आसते पाप्मा वै माल्यं तस्माद् ब्राह्मणः सुरां न पिबेदिति पाप्मना न संसृज्यत इति तदेतत् क्षत्रियो ब्राह्मणं ब्रूयान्नैव सुरा पीता हिनस्ति" इति श्रुतौ अन्यार्थदर्शनम्, तत्रापि 'ब्राह्मणः सुरां न पिबेत्' इत्युपक्रमैकवाक्यतार्थं सुराशब्दः [1]तालादिमद्यपरोऽवधेयः; अन्यथा ब्राह्मणवाक्ये सुराशब्दः त्रिविधसुरापरः; क्षत्रियवाक्ये च गौडीमाध्वीमात्रपर इति उपक्रमोपसंहारयोरर्थभेदेन वाक्यभेदापत्तेः। [1]तालादिमद्यपरत्वे तु यदेव ब्राह्मणस्य निषिद्धं, तदेव क्षत्रियस्यानुज्ञातमित्येकवाक्यत्वम्। प्रयुक्तश्च [1]तालादिमद्येऽपि सुराशब्दो **हारीतेन**—

"गौडी माध्वी तथा पैष्टी निर्यास्या कथितापरा।
एवं चतुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः॥"

इत्युपक्रम्य,

"मृद्वीकारससंभूता ताडमाडरसोद्भवा।
निर्यास्या सा तु विज्ञेया तासां वच्मि गुणागुणान्॥"

इत्युपसंहारात्। प्रपञ्चितं चैतत् **प्रमिताक्षरायाम**स्माभिरिति नेहोच्यते। बहुवचनात् शूद्रोपसंग्रहः,

"गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।
चातुर्वर्णैरपेया सा तत्स्त्रीभिश्च द्विजोत्तमाः॥"

इति **बृहन्नारदीयात्**;

"शूद्रस्य चेदृशं पापं मद्यपस्य दुरात्मनः।
काको भूत्वा चिरं देवि विष्ठाभक्षश्च जायते॥"

इति उमामहेश्वरसंवादाच्च। मद्यशब्दोऽत्र त्रिविधसुरापरः, पूर्ववाक्यानुरोधात्; अन्यथा क्षत्रियादेः मद्याद्यभ्यनुज्ञानं, शूद्रस्य च तन्निषेध इति महावैशसापत्तेः। एतेन "न पातव्या द्विजोत्तमैः" इत्यपि व्याख्यातम्, "एषोत्तमा" इत्यादिश्रुत्योत्तमशब्दस्यान्त्ये प्रयोगात्, सप्तमीतत्पुरुषात् द्वन्द्वस्य लघुत्वाच्चेत्यलं विस्तरेण॥ ८२॥

**माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसे[2]।**
**[3]मृद्वीकारसमाध्वीके मैरेयं नारिकेलजम्॥ ८३॥**
**अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च[4]।**
**राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः॥ ८४॥**

[1] तालादि omitted in ख, ग.
[2] पानसम्—श.
[3] मृद्वीरसं च माध्वीकं—क.
[4] तु—ठ.

मद्यैरित्युक्तम् । तद्भेदानाह । माधूकं मधूकपुष्पोद्भवम् । ऐक्षवम् इक्षुरससंभवं गौडीव्यतिरिक्तम् । टाङ्कम् ; टङ्कः कपित्थविशेष ; तज्जम् । कौलम् ; कोलं बदरम् ; तज्जातम् । खार्जूरम् ; खर्जूरफलोद्भवम् । पानसम् ; पनसफलोद्भवम् । मृद्वीका द्राक्षा ; तद्रसोद्भवम् । माध्वीकम् ; मधूद्भवम् , माध्वीव्यतिरिक्तम् । मैरेयम् ; धातृपुष्पजम् । गुडधान्याम्बुसहितमिति **शब्दार्णवे वाचस्पतिः** । नारिकेलजम् ; नारिकेल-वृक्षोद्भवं जलम् ॥ ८३ ॥

एतानि दश मद्यानि मदजनकानि ब्राह्मणस्यामेध्यानि अस्पृश्यानि । स्पर्शनिषेधादर्थसिद्धः पाननिषेधः ; "नित्यं मद्यं ब्राह्मणो वर्जयेत्" इति **गौतमीयात्** । राजन्यवैश्ययोः पुनरेतत्स्पर्शे न दोषः । स्पर्शः पानोपलक्षणम् ; "मद्यमेवासुरां पीत्वा" इत्यभ्यनुज्ञानात् । न च ऐक्षवमाध्वीकयोरेव मद्ययोर्गौडी-माध्वीत्वं शङ्कनीयम् ; पूर्वेण पौनरुक्त्यात् ; क्षत्रियवैश्ययोस्तन्निषेधाभ्यनुज्ञाविरोधाच्च । **पुलस्त्यस्तु** एकादशेत्याह—

"पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ।
समानानि विजानीयान्मद्यान्येकादशैव तु ॥"

इति । तालम् ; तालवृक्षोद्भवम् । सिरा सिन्दीवृक्षः ; तद्भवं सैरम् । अरिष्टः फेनिलः ; तद्भवमारिष्टम् । [1]मिरा माडीवृक्षः ; तद्भवं मैरेयम् ॥ ८४ ॥

**गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।**
**प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ ८५ ॥**
**आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।**
**निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ८६ ॥**

एवं प्रासङ्गिकं परिसमाप्य प्रकृतां प्रेतशुद्धिं पुनराह । [2]मृतस्य गुरोः कर्त्रन्तराभावे यदि शिष्यः पितृमेधं करोति, तदा असावपि प्रेताहारैः प्रेतसपिण्डैः समं दशरात्रेण शुध्यति । इदं च तदन्नभोजनतद्गृह-वासाद्यभावेऽपि गुरुशिष्यसंबन्धमात्रेणैव दाहादिकरणे द्रष्टव्यम् ॥ ८५ ॥

किंच आचार्योपाध्यायगुरवो वक्ष्यमाणलक्षणाः । स्वग्रहणात् गुरुगुर्वादौ निर्हृते व्रतं लुप्यत एवेति गम्यते । एतान् प्रेतान् निर्हृत्य व्रती ब्रह्मचारी व्रतेन ब्रह्मचर्येण न वियुज्यते, न भ्रस्यति ॥ ८६ ॥

[1] from मिरा up to मैरेयम् omitted in ख, ग.
[2] From मृतस्य up to शुध्यति omitted in च.

**आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।**
**समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति ॥ ८७ ॥**
**ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम् ।**
**वायुः कर्मार्ककालौ च [1]शुद्धिकर्तॄणि देहिनाम् ॥ ८८ ॥**

किंच आदिष्टं ब्रह्मचर्यम्; "ब्रह्मचार्यसि" इत्याद्यादेशात् । तदस्यास्तीत्यादिष्टी ब्रह्मचारी । प्रक्रान्तप्रायश्चित्त इत्यन्ये । स प्रेतानां सपिण्डादीनामाशौचनिमित्तमुदकदानं न कुर्यात्, यावत् ब्रह्मचर्यम् । समाप्ते व्रते समावृत्तः सन्, सर्वेषां प्रेतानां प्रत्येकमुदकदानं[2] कृत्वा त्रिरात्रमाशौचं कुर्यात् ॥ ८७ ॥

उक्तवक्ष्यमाणशुद्धिसाधनान्याह । ज्ञानमाध्यात्मिकं बुद्धेः शुद्धिहेतुः । तपः वेदविदाम् । अग्निः मृन्मयानाम् । आहारः पञ्चगव्यादीनामभक्ष्यभक्षणादेः । मृद्वारिणी अमेध्यादिलिप्तस्य । मनः वैकल्पिकविषयस्योपादाने । वारि क्षालनादौ । उपाञ्जनं गोमयादिभिर्लेपनं भूमेः । वायुः ऊर्णादेः रथ्याकर्दमतोयादेश्च । कर्म सन्ध्यादि अहोरात्रकृतपापस्य । अर्कः अर्कतापः "शोषयित्वार्कतापेन" इति । कालः आशौचस्य दशाहादिरिति **मेधातिथिप्रभृतयः** । तच्चिन्त्यम्, देहिनामिति वाक्यशेषासंगतेः । न चोपलक्षणतया देहिप्रभृतीनां ग्रहणम्; देहशुद्धिप्रक्रमविरोधात्; तत्र तत्र तत्तच्छुद्ध्यभिधानेन पौनरुक्त्याच्च । तस्मादेवं व्याख्येयम्—ज्ञानमात्मनः; सर्वपापक्षयहेतुत्वात् । यथोक्तं **भगवता** "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति । तपः कृच्छ्रादि तत्तन्निमित्तेषु । अग्निः उपचूलनादौ । यथाह **पराशरः**—

"शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम् ॥"

इति । आहारः पञ्चगव्यादेरभक्ष्यभक्षणादौ । मृत् शौचादौ । मनः शोधितस्यापि द्रव्यस्य मनःप्राशस्त्य एवोपादानेऽदोषात्; "मनःपूतं समाचरेत्" इति **स्मरणात्** । वारि स्नानादौ । उपाञ्जनं भस्मादिस्नानम् । वायुः "वायुभक्षो दिवा तिष्ठेत्" इत्यादौ । कर्म सन्ध्यादि; "सन्ध्याहीनोऽशुचिर्नित्यम्" इति **स्मरणात्** । अर्कः; "आदित्यमवलोकयेत्" इत्यादौ । कालः आशौचस्य दशाहादिः । एतानि देहिनां मानुषाणां शुद्धिजनकानि ॥ ८८ ॥

**सर्वेषामेव शौचानामन्नशौचं[3] परं स्मृतम् ।**
**योऽन्ने[4] शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ८९ ॥**
**क्षान्त्या शुध्यन्ति विद्वांसो [5]दानेनाकार्यकारिणः ।**
**प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ ९० ॥**

[1] शुद्धेः—ठ. [2] उदकं—च.
[3] अर्थशौचं—ग, ज, ठ. [4] अर्थे—ज, ठ. [5] ज्ञानेन—ठ.

तत्राहारशुद्धेरभ्यर्हितत्वमाह । सर्वेषां बाह्याभ्यन्तरशौचानां मध्ये अन्नस्यादनीयस्य यच्छौचं तत् परमभ्यर्हितं स्मृतं पूर्वैः; तदधीनत्वान्मनःकायशुद्धेः; अन्नेपचितानां कायावयवादीनां मांसादीनां प्रायश्चित्तरूपकर्मानपोद्यत्वात् । तदेवोपपादयति । योऽन्ने शुचिः शुच्यन्नादः, स शुचिः शौचसाध्यादृष्टभाक्; तद्व्यतिरेके मृद्वारिमात्रेण तददृष्टासिद्धेः । अर्थशौचमिति पाठेऽपि आहारशुद्ध्यर्थमेवार्थशौचापेक्षेति ॥ ८९ ॥

उक्तवक्ष्यमाणशुद्धिसाधनानामधिकारिभेदेन व्यवस्थामाह । विद्वांसः विधिनिषेधज्ञाः द्वेषेर्ष्यामत्सरादिजन्यदुरितात् क्षान्त्या क्षमया शुध्यन्ति । अकार्यं निषिद्धम्; तत्कारिणः दानेन । प्रच्छन्नं रहस्यं पापं येषां ते जप्येन गायत्र्यादीनाम् । वेदं मन्त्रब्राह्मणात्मकम् अतिशयेनार्थतो ये विदन्ति, ते तपसा वेदाभ्यासेनैव;

"वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥"

इति **योगिस्मरणात्** । शुध्यन्तीति सर्वत्रान्वेति ॥ ९० ॥

**मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति ।**
**[1]रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमाः ॥ ९१ ॥**
**अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।**
**विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ ९२ ॥**
**एष [2]शौचस्य ते प्रोक्तः शारीरस्य विनिर्णयः ।**
**नानाविधानां द्रव्याणां शुद्धेः शृणु विनिर्णयम् ॥ ९३ ॥**

इति [3]श्रीविष्णुस्मृतौ द्वाविंशोऽध्यायः

किंच शोध्यम् अमेध्यादिलिप्तमङ्गं मृत्तोयैः शुध्यति । नदः प्रवाहः; सोऽस्यास्तीति नदी नाभ्यूर्ध्ववर्ती प्रस्रवदिन्द्रियग्रामो घ्राणरसनचक्षुःश्रोत्रात्मकः वेगेन श्लेष्मादित्यागेनैव शुध्यति; न मृदाद्यपेक्षा, "ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः" इति **मानवात्** । इदं चेत्थमेव व्याख्येयम्, न सरित्परतया; शारीरिकशुद्ध्युपसंहारविरोधात् । मनसा दुष्टा व्यभिचारसंकल्पवती स्त्री रजसा रजोदर्शनेन शुध्यति । रजोऽभावे रजःप्रतीक्षासंभवे वा "मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरोदनं भुञ्जानाधः शयीत" इत्यादिना **वासिष्ठेन** प्रायश्चित्तेन, द्विजोत्तमाः ब्राह्मणाः संन्यासेन मानसत्यागेन कामक्रोधलोभदोषात् शुध्यन्ति ॥ ९१ ॥

[1] From here up to the end of verse 93, the text missing in झ.
[2] शौचविधिः—ठ.
[3] वैष्णवे—क, झ; वैष्णवे धर्मशास्त्रे अशौचविनिश्चयप्रकरणं द्वाविंशम्—ठ.

किंच गात्राणि शरीराणि लिप्तानि अद्भिः स्नानैः शुध्यन्ति । मनः सदसत्संकल्पात्मकमसत्संकल्पादशुद्धं सत्येन सत्संकल्पेन शुध्यति ; "पापं ध्यात्वा पुण्यकृतो ध्यायेत्" इति श्रुतेः । भूतान्यनितीति भूतात्मा पञ्चभूतात्मकशरीराभिमान्यात्मा जीवः । तस्य विद्यातपोभ्यां शुद्धिः । विद्या त्वंपदार्थनिरूपकवाक्यार्थ-ज्ञानम् । तपः "तपसा ब्रह्म विजिज्ञासस्व" इत्यादिनात्मज्ञानसाधनतया विहितं कृच्छ्रादि । ताभ्यां शुद्धिः शरीराभिमानजन्यदुरितनिवृत्तिः ; "देहाभिमाने यत्पापं न तद् गोवधकोटिभिः" इति **स्मरणात्** । बुद्धिः संशयविपर्ययात्मिका ज्ञानेन प्रमारूपेण शुध्यति ; असत्कोटिनिरसनात् ॥ ९२ ॥

उक्तमर्थमुपसंहरति । एषः 'ब्राह्मणस्य' इत्यारभ्योक्तः शारीरस्य शरीरसंबन्धिनः शौचस्य शुद्धेः विशिष्टः अवान्तरभेदभिन्नः निर्णयः ते तुभ्यं प्रोक्तः । उत्तराध्यायार्थं प्रतिजानीते । नानाविधानामनेकप्रका-राणां द्रव्याणां धात्वादीनां वक्ष्यमाणं शुद्धिनिर्णयं शृणु इति धरावधानविधानाय ॥ ९३ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज[2]**श्रीनन्द-पण्डित**कृतायां **विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** द्वाविंशोऽध्यायः

[1] श्रीमन्महा to वाराणसीवासि omitted in घ.

[2] श्री omitted in ग.

## त्रयोविंशोऽध्यायः

**शारीरैर्मलैः सुराभिर्मद्यैर्वा[1] यदुपहतं तदत्यन्तोपहतम् ॥ १ ॥ अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रक्षिप्तं[2] शुध्येत् ॥ २ ॥ मणिमयमश्ममयमब्जं[3] च सप्तरात्रं महीनिखननेन ॥ ३ ॥**

पूर्वाध्यायान्ते प्रतिज्ञातां नानाद्रव्यशुद्धिं त्रयोविंशेनाभिधातुमत्यन्तोपहतस्य शुद्धयभिधानाय तत्स्वरूपं लक्षयति । शरीरसंभवा मलाः वसादयः । सुराः गौड्यादयः । मद्यानि माधूकादीनि । वाशब्दात् कुणपग्रहणम् । एतैः पूर्वोक्तलक्षणैः प्रत्येकं यदुपहतम् अत्यन्तसंसृष्टं, तत् अत्यन्तोपहतम् ॥ १ ॥

तच्छुद्धिमाह । लोहानि सुवर्णरजतताम्रायसत्रपुरङ्गसीसकानि सप्तविधा धातवः । सर्वशब्दात् तद्विकाराः पित्तलादयश्च । तन्मयं भाण्डमत्यन्तोपहतमग्नौ प्रक्षिप्तमावर्तितं[4] शुध्येत्; " तैजसानां कुणपमद्यैरत्यन्तवासितानामावर्तनम् " इति **बोधायनीयात्** । इदं च सुराद्युपहते शुद्धिविधानं येषां सुरादि अस्पृश्यं तद्विषयम् । तत्स्पर्शिनां तु न दोषः ॥ २ ॥

मणयः करिकुम्भवंशवराहदंष्ट्राद्युद्भवा मुक्ताः । यथोक्तं **रत्नपरीक्षायाम्**—

" करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥ "

इति; माणिक्यादीनामश्मपदेन ग्रहणात् । अश्मा स्फटिकमरकतादिः; तन्मयमलंकारपात्रादि । अब्जं शङ्खशुक्त्यादि चात्यन्तोपहतं सप्ताहं भूमिनिखातं शुध्येत् ॥ ३ ॥

**शृङ्गदन्तास्थिमयं [5]तक्षणेन ॥ ४ ॥ दारवं मृन्मयं च जह्यात् ॥ ५ ॥ अत्यन्तोपहतस्य वस्त्रस्य यत् प्रक्षालितं [6]सद्विरज्यते तच्छिन्द्यात् ॥ ६ ॥**

[1] मद्यैः omitted in ज.
[2] क्षिप्तं—क.
[3] अश्ममयं omitted in ज ; अब्जं omitted in क.
[4] समावर्तितं—ख.
[5] संतक्षणेन—ठ.
[6] सत् न वियुज्यते—ज, झ.

शृङ्गं खड्गादीनाम् । दन्तः गजादीनाम् । अस्थि कूर्मादीनाम् । तन्मयं पात्रादि अत्यन्तोपहतं तक्षणेन तावदवयवापनयनेन शुध्येत् ॥ ४ ॥ दारुमयं कमण्डल्वादि । मृन्मयं घटादि । तदत्यन्तोपहतं जह्यात् । चकारात् अलाबुवैदलानां ग्रहणम् ;

"अलाबुदारुपात्राणां वैदलानां तथैव च ।
अत्यन्तोपहतानां तु परित्यागो विधीयते ॥"

इति **यमस्मरणात्** ॥ ५ ॥ प्रक्षालनासहस्य कुसुम्भादिरक्तवस्त्रस्य यावदत्यन्तोपहतं, तावदपनयेत् । [1]छेदो दाहोपलक्षणम् ।

"यदम्भसा न शुध्येत्तु वस्त्रं चोपहतं दृढम् ।
छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते ॥"

इति **यमस्मरणात्** । तेन च सर्वोपघाते त्याग एव[2] । प्रक्षालनसहस्य प्रक्षालनमेव ; वैराग्याभावात् ।

"यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा ।
चैलं समुपहन्येत अद्भिः प्रक्षालयेत्तु तत् ॥"

इति [3]**यमस्मरणाच्च** । अत्यन्तोपघातस्यानुवृत्तावपि पुनरुपादानं प्रकरणसमाप्त्यै ॥ ६ ॥

**[4]सौवर्णराजताब्जमणिमयानां निर्लेपानामद्भिः शुद्धिः ॥ ७ ॥ अश्ममयानां चमसानां ग्रहाणां च ॥ ८ ॥ चरुस्रुक्स्रुवाणामुष्णेनाम्भसा ॥ ९ ॥ [5]यज्ञकर्मणि यज्ञपात्राणां पाणिना संमार्जनेन ॥ १० ॥ स्फ्यशूर्पशकटमुसलोलूखलानां प्रोक्षणेन ॥ ११ ॥**

अल्पोपघाते शुद्धिमाह । सौवर्णं सुवर्णकृतम् । राजतं रजतकृतम् । अब्जं शङ्खशुक्त्यादि । मणिमयं पूर्वोक्तमुक्तादिकृतम् । एतेषां निर्लेपानामुच्छिष्टादिस्पर्शमात्रे अद्भिः प्रक्षालनेन शुद्धिः । सुवर्णं कांस्याद्युपलक्षणम् ;

"कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ।
निर्लेपानि विशुध्यन्ति केवलेन जलेन वा ॥"

इति **ब्रह्माण्डपुराणात्** ॥ ७ ॥

[1] From here up to यमस्मरणात् omitted in ख, च.
[2] एव omitted in ख.
[3] यम omitted in ख, ग.
[4] राजतताम्रमणि—क.
[5] यज्ञपात्राणां यज्ञकर्मणि—ठ.

अश्मा पाषाणः, तन्मयानि पात्राणि । चमसाः होतृचमसादयः सोमपात्राणि । ग्रहाः षोडश्यादयः । तेषां निर्लेपानामद्भिरेव शुद्धिः । सलेपानां तु अश्मनामौशनसं भस्मना त्रिर्मार्जनम्, अश्मघर्षणं वा[1] "पाषाणे तु पुनर्घर्षः शुद्धिरेषामुदाहृता" इति पाराशरं ज्ञेयम् । ग्रहचमसयोस्तु उच्छिष्टलिप्तयोरपि मार्जालीये अद्भिः प्रक्षालनमेव ॥ ८ ॥

चरुः स्थाली । स्रुक्स्रुवौ याज्ञिकप्रसिद्धौ । द्वन्द्वनिर्देशात् प्राशित्रेडापात्रादीनां ग्रहणम्,[2] "चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा" इति योगिस्मरणात् । एतेषां चर्वादिलेपरहितानामाज्यपात्रस्नेहाक्तानामुष्णोदकेन शुद्धिः । चर्वादिलेपे तु कुशैर्घर्षणेन ॥ ९ ॥

कर्माङ्गशुद्धिमाह । यज्ञकर्मणि इष्ट्यादौ प्रयुक्तानां यज्ञपात्राणाम् "एतानि वै दश यज्ञायुधानि" इत्याद्युक्तानां स्रुवादीनामेव, न पुनः सौकर्योपात्तानां संदंशादीनामपि ; पुनर्यज्ञग्रहणात् । तेषां पाणिना दक्षिणेन कुशैः दशापवित्रेण च सम्यक् यथाविधि मार्जनेन शुद्धिः ॥ १० ॥

स्फ्यः काष्ठखड्गः । शूर्पं प्रस्फोटनम् । शकटम् ; अनः । मुसलोलूखले प्रसिद्धे । तेषां प्रोक्षणीजलैः प्रोक्षणेन [3]शुद्धिः । द्वन्द्वनिर्देशात् अजिनधान्ययोर्ग्रहणम् ; "स्फ्यशूर्पाजिनधान्यानाम्" इति योगिस्मरणात् । धान्यं पुरोडाशाद्यर्थं निरुप्तं व्रीह्यादि । [4]एतेनैषामुष्णेन वारिणा शुद्धिरिति मिताक्षराव्याख्यानं प्रामादिकमवगम्यते ;

"स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम् ।
प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥"

इत्यत्र प्रोक्षणस्य चकारेणोभयत्रान्वयावगमाच्च ॥ ११ ॥

**[5]शयनयानासनानां च ॥ १२ ॥ बहूनां च ॥ १३ ॥**

स्पर्शशुद्धिमाह । शयनं पल्यङ्कतूलिकादि । यानं रथशिबिकादि । आसनं रोमबद्धस्थूलतन्तुनिर्मितादि । चकारात् वसत्यादिग्रहणम् । तथाच देवलः—

"वसतिश्चापि सोपानं वाहनं साधनानि च ।
क्षुरा नौरासनं चेति स्वयं शुद्धमिति स्मृतम् ॥"

इति । वसतिः दूष्यम् । वाहनमश्वादि । साधनं खड्गादि । एषां चण्डालादिस्पर्शेऽपि प्रोक्षणेनैव शुद्धिः ॥ १२ ॥

[1] च—ख, ग. [2] ग्रहणम् omitted in ख, ग. [3] शुचिः—ख.

[4] From here up to अवगम्यते found after धार्यत्वेन at the end of the commentary on Sūtra 13 in च.

[5] शकटयाना—ठ.

येषां क्षालनेन शुद्धिः, तेषामपि बहूनामनेकपुरुषोद्धार्याणां प्रोक्षणेनैव शुद्धिः । यथाह **बोधायनः**— " चण्डालादिस्पर्शे अनेकपुरुषोद्धार्याणां प्रोक्षणम् " इति । **मनुरपि**—

" अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ "

इति । चकारात् वक्ष्यमाणधान्याद्यतिरिक्तानां [1]कुसुम्भादीनां ग्रहणम् । " बहूनां [1]कुसुम्भकार्पासलवणानां सर्पिषां कठिनीभूतानां चण्डालादिस्पर्शे प्रोक्षणेनैव शुद्धिः " इति **बोधायन**स्मरणात् । अत्र बहूनामिति न [1]कुसुम्भादिविशेषणम् । अन्यथा [1]कुसुम्भादीनामल्पानां क्षालनापत्तेः । [1]कुसुम्भेनातसीसर्षपादीनां ग्रहणम् । कठिनीभूताः गुडादयः । बहुत्वं चानेकपुरुषधार्यत्वेन[2] ॥ १३ ॥

**धान्याजिनरज्जुतान्तववैदलसूत्रकार्पासवाससां च ॥ १४ ॥ शाकमूलफलपुष्पाणां च ॥ १५ ॥ तृणकाष्ठशुष्कपलाशानां च[3] ॥ ॥ १६ ॥ एतेषां प्रक्षालनेन ॥ १७ ॥ अल्पानां च ॥ १८ ॥**

धान्यं व्रीह्याद्यष्टादशविधम्[4] । अजिनं हारिणरौरवादिचर्ममात्रम् । तेन च तद्विकाराणामुपानद्वरत्रादीनां ग्रहणम् । रज्जुः मुञ्जादिमयी । तान्तवं त्रसरीपट्टादितन्तुनिर्मितं कौशेयपट्टदुकूलक्षौमादि । वैदलं वेणुविदलकृतं व्यजनशूर्पादि । सूत्रं कार्पासतन्तुः । कार्पासं सास्थि अनस्थि च । वासः नवमचिरयन्त्रनिर्मुक्तं क्षालनासहं कौसुम्भादिरक्तं च । चकारान्निर्यासादिग्रहणम् । एतेषामबहूनामपि चण्डालादिस्पर्शे प्रोक्षणेन शुद्धिः । यथाह **शङ्खः**—

" निर्यासानां गुडानां च लवणानां तथैव च ।
कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा ।
सेकात्तु कथिता शुद्धिरित्याह भगवान् यमः ॥ "

इति । **देवलोऽपि**—

" और्णकौशेयकुतपाः पट्टक्षौमदुकूलकाः ।
अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ॥ "

इति । **आपस्तम्बोऽपि**—" नवानां वाससां प्रोक्षणम् " इति । **शङ्खोऽपि**—

" कुसुम्भकुङ्कुमै रक्तं तथा लाक्षारसेन च ।
प्रोक्षणेनैव शुध्येत चण्डालस्पर्शने सदा ॥ "

1 कुसुम—ख.
2 उद्धार्यत्वेन—ग.
3 काष्ठपलालानां च—ठ.
4 अष्टविधम्—ग.

इति । षट्त्रिंशन्मतेऽपि—" अरक्तानां नवानां क्षालनमेव ' इति ।

" चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा ।
प्रक्षालनेन शुध्येत परित्यागान्महीमयम् ॥ "

इति स्मरणात् । धान्यप्रक्षालनं सम्यक् चिरस्पर्शविषयम्, पाकाद्यर्थं वा ॥ १४ ॥ शाकं वार्ताकादि । मूलमार्द्रकादि । फलमाम्रादि । पुष्पं जात्यादि । एतेषां चण्डालादिस्पर्शेऽपि प्रोक्षणेन शुद्धिः ॥ १५ ॥ तृणं कुशदूर्वादि । काष्ठमेधः । शुष्कं गोमयपिण्डः । पलाशं पर्णं मधूकपलाशादेः । एतेषां चण्डालादिस्पर्शेऽपि प्रोक्षणेन शुद्धिः ॥ १६ ॥ लेपशुद्धिमाह । एतेषां शयनादीनां पलाशान्तानां विष्ठादिलिप्तानां प्रकृष्टेन लेपापनोदकेन द्रव्याविनाशकेन च क्षालनेन शुद्धिः । यथाह देवलः और्णकौशेयाद्युपक्रम्य—" तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः " इति ॥ १७ ॥ येषां धान्यवासःप्रभृतीनां बहूनां स्पर्शे प्रोक्षणमुक्तं, तेषामेवाल्पानां तत्रैव क्षालनेन शुद्धिः । नेदं लेपशुद्धौ ; पूर्वसूत्रेणैव विधानात् । तेन चाल्पानां बहूनां वा लेपे क्षालनमेव ॥ १८ ॥

**ऊषैः कौशेयाविकयोः ॥ १९ ॥ अरिष्टकैः कुतपानाम् ॥ २० ॥ श्रीफलैरंशुपट्टानाम् ॥ २१ ॥ गौरसर्षपैः क्षौमाणाम् ॥ २२ ॥ शृङ्गास्थिदन्तमयानां च ॥ २३ ॥**

क्षालने प्रकर्षाय गुणनियममाह । ऊषः क्षारमृत्तिका । तया कौशेयस्य त्रसरीपट्टादिमयस्य आविकस्य च कम्बलादेः शुद्धिः । यत्तु " सोषैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् " इति गोमूत्रग्रहणं, तत् शुद्ध्यतिशयार्थम् ॥ १९ ॥ अरिष्टकैः फेनिलैः । कुतपाः पार्वतेयछागरोमनिर्मिताः कम्बलाः । तेषां शुद्धिः ॥ २० ॥ अंशुपट्टाः वल्कलतन्तुनिर्मिताः शाणीपट्टादयः । तेषां श्रीफलैः बिल्वैः शुद्धिः ॥ २१ ॥ क्षुमा अतसी । तत्तन्तुनिर्मितानां श्वेतसिद्धार्थैः शुद्धिः ॥ २२ ॥ शृङ्गादीनि पूर्वं व्याख्यातानि । तेषामपि गौरसर्षपकल्केन शुद्धिः ॥ २३ ॥

**पद्माक्षैर्मृगलोमिकानाम् ॥ २४ ॥ ताम्ररीतित्रपुसीसमयानामम्लोदकेन ॥ २५ ॥ भस्मना कांस्यलोहयोः ॥ २६ ॥ तक्षणेन दारवाणाम् ॥ २७ ॥ गोवालैः फलसंभवानाम् ॥ २८ ॥**

मृगलोमिकानि मृगलोमोद्भवानि राङ्कवादीनि । तेषां पद्माक्षैः कमलबीजैः शुद्धिः ॥ २४ ॥ रीतिः पित्तलम् । त्रपु [1]जसदमिति लोके । सीसं प्रसिद्धम् । तेषामम्लोदकेन ; अम्लं तिन्त्रिण्यादि, तत्सहितेनोदकेन शुद्धिः । अत्रोदकग्रहणं सर्वेष्वप्यूषादिषु तक्षणघर्षणयोश्चोदकप्राप्त्यर्थम् ॥ २५ ॥

[1] जस्तद—ख.

कांस्यलोहयोः पात्रयोः भस्मना शुद्धिः ॥ २६ ॥ दारु काष्ठम् । तन्मयानां पात्रादीनां प्रक्षालनानन्तरं वास्यादिना तावन्मात्रावयवापनयनेन शुद्धिः ॥ २७ ॥ फलानि नारिकेलालाबुबिल्वादीनि । तत्संभवानां पात्राणां गोवालैः गोपुच्छलोमभिः घर्षणेन शुद्धिः ॥ २८ ॥

**प्रोक्षणेन संहतानाम् ॥ २९ ॥ उत्पवनेन द्रवाणाम् ॥ ३० ॥**

प्रक्षालनापवादमाह । उक्तशुद्धिभिर्विष्ठामेध्याद्यनुलिप्तैः[1] द्रव्यैः एकराशीकरणेन संहतानां संसृष्टानां द्रव्याणां प्रोक्षणेन शुद्धिः । लिप्तानां तूक्तं प्रक्षालनमेव ;

" वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥ "

इति **स्मरणात्** । शेषप्रोक्षणविधानादुद्धृतस्य प्रक्षालनं गम्यते । पात्रसंघाते तु **शातातपः**—

" संहतानां तु पात्राणां यद्येकमुपहन्यते ।
तस्यैव शोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि ॥ "

इति । यत्तु,

" शयनासनयानानि रोमबद्धानि यानि च ।
वस्त्राण्येतानि सर्वाणि संहतानि प्रचक्षते ॥ "

इति **अङ्गिरसोक्तम्** ; तन्न ; प्रकृतोपयोगिशयनादीनां प्रागेव शुद्ध्यभिधानात् । यच्च संहतानां लिप्तानामलिप्तानां च[2] सर्वेषामपि प्रोक्षणमेवेति ; तदपि न, प्रोक्षणेन लेपानपायात् ॥ २९ ॥

कीटाद्युपहतौ शुद्धिमाह । द्रवाणां घृततैलदुग्धादीनामुत्पवनेन[3] वस्त्रान्तरितपात्रान्तरप्रक्षेपेण शुद्धिः । श्वकाकाद्युपहतस्य तु प्लावनं शुद्धिः ; " शुद्धिः प्लावो द्रवस्य तु " इति **स्मरणात्** । प्लावो नाम सजातीयेन द्रव्येण भाण्डस्यातिपूरणं यावन्निःसरणमुच्यते । द्रवोपादानात् कठिनानां तावन्मात्रोद्धरणमेव । तत्र **शातातपः**—

" तन्मात्रमुद्धृतं शुध्येत् कठिनं तु पयो दधि ।
अविलीनं तथा सर्पिर्विलीनं पवनेन तु ॥ "

इति ॥ ३० ॥

**[4]गुडादीनामिक्षुविकाराणां प्रभूतानां गृहनिहितानां वार्यग्निदानेन ॥ ३१ ॥ [5]सर्वलवणानां च ॥ ३२ ॥ पुनः पाकेन मृन्मयानाम् ॥ ३३ ॥ द्रव्यवत् कृतशौचानां [6]देवतार्चानां भूयः प्रतिष्ठापनेन ॥ ३४ ॥**

[1] अमेध्य omitted in ख.
[2] च omitted in ग.
[3] उत्प्लवनेन—ग.
[4] The reading of the Sūtra corrupt in ख.
[5] सर्वमधुलवणानां—ठ.
[6] देतानां—ज, ठ.

आवर्तनेन पिण्डीकृत इक्षुरसो गुडः । स आदिर्येषां ते तदादयः । तथाभूता ये इक्षुविकाराः फाणितशर्करादयः, तेषां प्रभूतानां द्रोणाधिकानां गृहनिहितानां स्वगृहावस्थितानां वार्यग्निदानेन; वारिदानं प्रोक्षणम्; तत्पूर्वकमग्निदानं पर्यग्निकरणम् । तेन शुद्धिः । अप्रभूतानां तु [1]कीटादियुक्तावयवापनयनं प्रोक्षणं च, "सेकात्तु कथिता शुद्धिः" इत्यभिधानात् । गृहनिर्देशात् हट्टादिस्थितानां शुद्ध्यतिरेको दर्शितः । तत्र **हारीतः**—"केशकीटपिपीलिकादिभिरन्नाद्युपघाते काञ्चनभस्मरजतताम्रवज्रवैडूर्यगोवालजानामन्यतमेन संस्पृष्टं प्रोक्षणपर्यग्निकरणादित्यदर्शनात् शुद्धं भवति" इति । आदिशब्दात् गुडादिग्रहणम् ॥ ३१ ॥

सर्वेषां शाम्भलसामुद्रसैन्धवसौवर्चलादीनां लवणानां कीटाद्युपहतौ प्रोक्षणपर्यग्निकरणाभ्यां शुद्धिः ॥३२॥

पुनर्लेपशुद्धिमाह । मृन्मयानां घटकरकादीनामुच्छिष्टादिलेपे पुनःपाकेन पुनर्भर्जनेन शुद्धिः । तत्र **बोधायनः**—"मृन्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामवधूपनमुच्छिष्टलेपोपहतानां पुनर्दहनं मूत्ररेतःप्रभृतिभिरुत्सर्गः" इति । अवधूपनं धूपेन स्वेदनम् । प्रभृतिशब्दात् चण्डालादिस्पर्शेऽपि; "चण्डालाद्यैस्तु संस्पृष्टं परित्यागान्महीमयम्" इति **पराशरस्मरणात्** ॥ ३३ ॥

लेपस्पर्शयोः शुद्धिमाह । देवतार्चाः देवताप्रतिमाः । तासाममेध्यादिलेपे यत् द्रव्यं तत्प्रकृतिः, तत्तच्छुद्धिविहितैः द्रव्यैः तत्तद्रीत्या कृतशुद्धीनां पुनः प्राणप्रतिष्ठया शुद्धिः पूज्यत्वम् । अयमभिसन्धिः—सुवर्णादिधातुप्रकृतिकायाः सुवर्णवदेव शुद्धिः । शिलाप्रकृतिकायाः शिलावत् । दारुप्रकृतिकायाः दारुवत् । मणिप्रकृतिकायाः मणिवदित्यादि ॥ ३४ ॥

**असिद्धस्यान्नस्य यन्मात्रमुपहतं तन्मात्रं परित्यज्य शेषस्य [2]कण्डनप्रक्षालने कुर्यात् ॥ ३५ ॥ [3]द्रोणाभ्यधिकं सिद्धमन्नमुपहतं न [4]दुष्यति ॥ ३६ ॥ तस्योपहतमात्रमपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः प्रक्षिपेत् [5]बस्तस्य च प्रदर्शयेदग्नेश्च ॥ ३७ ॥**

असिद्धस्यापक्वस्य अन्नस्यादनयोग्यस्य तण्डुलमुद्गादेः यावन्मात्रमुपहतं तावन्मात्रं परित्यज्य शेषमवघातप्रक्षालनाभ्यां शुध्येत् । यथाह **बोधायनः**—"मूत्रादिसंपर्के तन्मात्रापहारोऽस्थ्यादिद्रव्यसंयोगे निस्तुषीकरणम्" इति । यत्तु "तण्डुलांस्तु परित्यजेत्" इति, तत् आढकाल्पताविषयम् । अन्नपदसामर्थ्यादनदनीयस्य व्रीह्यादेः उद्धारावघातयोरन्यतरेणैव शुद्धिः । तत्र **बोधायनः**—

"व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।
तन्मात्रस्यापहाराद्वा वितुषीकरणेन वा ॥"

इति ॥ ३५ ॥

[1] From here up to हट्टादिस्थितानां missing in ग.
[2] खण्डन—ठ.
[3] द्रोणात्—ज, ठ.
[4] संदुष्यति—ठ.
[5] From बस्तस्य up to अग्नेश्च missing in क.

सिद्धमन्नमोदनादि श्वकाकाद्युपहतं न दुष्यति, न त्यज्यते ; यदि द्रोणाभ्यधिकं भवति । द्रोणवचनात् न्यूनस्य त्यागः । यथाह **पराशरः**—

"काकश्वाद्यवलीढं तु गवाघ्रातं खरेण वा ।
स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाधिके भवेत् ॥"

इति । आढकवचनं देशकालाद्यपेक्षया । यथाह **बोधायनः**—

"देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥"

इति । द्रोणाढकौ च **स्मृत्यन्तरे**—

"पलं च कुडबः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥"

इति ॥ ३६ ॥

अदोषाय तच्छुद्धिमाह । तस्य सिद्धान्नस्य यावदुपहतं तावन्मात्रमुद्धृत्योपरि गायत्र्याभिमन्त्रितं हेमाम्भः प्रक्षिपेत् । अनन्तरं छागस्य मुखं [1]प्रदर्शयेत् । अग्नेर्ज्वालाभिश्च पर्यग्नि कुर्यात् । गायत्री पवमानानुवाकोपलक्षणम् । यथाह **बोधायनः**—"सिद्धहविषां महतां च [2]वायसप्रभृतिभिरुपहतानां तद्देशपिण्डमुद्धृत्य पवमानानुवाकेन प्रोक्षणम्" इति । हेम रजतोपलक्षणम् ; "हेमोदकेन चाभ्युक्षेद्राजतेनाम्बुनाथ वा" इति **पराशरस्मरणात्** । अजः अश्वोपलक्षणम् ; 'अजाश्वं मुखतो मेध्यम्' इति वक्ष्यमाणत्वात् ॥ ३७ ॥

**पक्षिजग्धं गवा घ्रातमवधूतमवक्षुतम् ।**
**दूषितं केशकीटैश्च [3]मृत्प्रक्षेपेण शुध्यति ॥ ३८ ॥**
**यावन्नापैत्यमेध्याक्ताद् [4]गन्धो लेपश्च तत्कृतः ।**
**[5]तावन्मृद्वारि देयं स्यात् सर्वासु द्रव्यशुद्धिषु[6] ॥ ३९ ॥**

भोज्यशुद्धिमाह । पक्षिणः स्पृश्याः शुकादयः, भक्ष्याश्च लावकादयः ; तैः यत् जग्धं भक्षितम् । गवा घ्रातम् ; न तु भक्षितम् । अवधूतम् ; मुखवातेन वाससा वा निर्वापितम् ; पादेन चापहतम् । अवक्षुतम् ; क्षुतबिन्दुस्पृष्टम् । केशैः मानुषैः, कीटैः अन्नोत्पन्नैर्मृतैश्च दूषितम् अन्नं भोजनकाले मृत्प्रक्षेपेण शुध्यति, भोज्यं भवति । केशो मक्षिकाद्युपलक्षणम् ; "मक्षिकात्वक्केशलोमनखाखुपुरीषाणि दृष्ट्वा तद्देश-

[1] स्पर्शयेत्—ग.
[2] From here up to रजतोपलक्षणम् missing in ख.
[3] मृदः क्षेपेण—क.
[4] दिग्धो—क.
[5] From here up to the end of verse 40 omitted in क.
[6] जातिषु—ठ.

पिण्डमुद्धृत्याद्भिरभ्युक्ष्य भसनामिधार्य पुनरद्भिः प्रोक्ष्य वाचा प्रशस्तमुपयुञ्जीत" इति **बोधायनीयात्**। मृत् भस्मसलिलयोरुपलक्षणम्;

"गोघ्राातेऽन्ने तथा केशमक्षिकाकीटदूषिते।
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये॥"

इति **योगिस्मरणात्**॥ ३८॥

उक्तशुद्धिशेषमाह। अमेध्यं विष्ठादि;

"मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा।
स्वेदाश्रु दूषिका श्लेष्मा मद्यं चामेध्यमुच्यते॥"

इति **देवलीयात्**। तेनाक्तात् लिप्तात् शोध्यात् यावत् तत्कृतौ अमेध्यकृतौ गन्धलेपौ नापगच्छतः; तिष्ठत इति यावत्; तावत् मृद्वारि देयमिति सर्वासु उक्तासु वक्ष्यमाणासु च द्रव्यशुद्धिषु ज्ञेयम्; "अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात्" इति **योगिस्मरणात्**। तेन च कालेन गन्धलेपापगमे मृद्वार्यावृत्तिनिवृत्तेरर्थसिद्धावपि सकृदुपादानं भवत्येव; नियमार्थत्वात्। तत्कृतत्वोपादानममेध्यसंसृष्टद्रव्यान्तरीयलेपानपायेऽप्यशुद्धिज्ञापनार्थम्। चकारात् मृद्वार्यनन्तरं तत्तद्द्रव्याण्यादेयानि; दृष्टादृष्टरूपकार्यवैलक्षण्येन तैर्विना दृष्टासिद्धेः॥ ३९॥

**अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः।**
**[1]पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः[2]॥ ४०॥**
**रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।**
**मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च॥ ४१॥**

अजाश्वौ मुखे पवित्रौ। तेनाजाश्वमुखदर्शनं शुद्धिहेतुः। न गौर्मुखे मेध्या। तेन गवाघ्रातमशुचि। नरजाः मनुष्यदेहजाताः वसादयो मलाः न मेध्याः। तेन तेषां स्पर्शोऽत्यन्तोपघातकः। एवमुक्तशेषशुद्धिमुक्त्वा प्रकृतमाह। पन्थानो मार्गाः चण्डालादिस्पृष्टा अशुचिद्रव्याक्रान्ताश्च रात्रौ सोमांशुमारुताभ्यां दिवा सूर्यांशुमारुताभ्यां च शुध्यन्ति॥ ४०॥

रथ्या मार्गः; तत्र स्थितानि कर्दमतोयानि। बहुवचनात् कपालशर्करयोर्ग्रहणम्। तान्यन्त्यादिभिः स्पृष्टानि मारुतेनैव शुध्यन्ति। अन्त्याः चण्डालादयः। श्वा कुक्कुरः। वायसः काकः। तथा पक्वेष्टकचितानि धवलगृहादीनि च। एवकारः कर्तव्यशुद्ध्यन्तरनिरासार्थः। पक्वपदं तृणमृन्मयव्युदासार्थम्; तस्य स्वभावशुद्धत्वात्॥ ४१॥

[1] This half is omitted here and read as the second half of verse 41 in ज, ठ.
[2] वायुभिः—झ.

**प्राणिनामथ सर्वेषां मृद्भिरद्भिश्च कारयेत्।**
**अत्यन्तोपहतानां च शौचं नित्यमतन्द्रितम्[1] ॥ ४२ ॥**
**[2]भूमिष्ठमुदकं [3]पुण्यं वैतृष्ण्यं यत्र गोर्भवेत्।**
**[4]अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥ ४३ ॥**

अत्यन्तोपहतानां विण्मूत्रादियोगिनां सर्वेषां बाल्याद्यवस्थानादरेण प्राणिनां मनुष्याणां नित्यं यावज्जीवम् आलस्यमुदस्य मृज्जलैः कर्तव्यं शौचं कारयेत् उपदिशेत् आचार्यः ॥ ४२ ॥

अमेध्येन केशादिना ; " केशास्थिशवविण्मूत्रसंयोगैरुज्झितं यदि " इति **ब्राह्मात्**। अव्याप्तम् ; अत्यन्तसंपर्करहितं भूमिष्ठं तोयं पुण्यं पुण्यकर्मयोग्यम्। तत् कियत्? यत्र गोरेकस्याः वैतृष्ण्यं भवेत्, अवशिष्येच्च तत् ; " अक्षीणाश्चैव गोपानादापः शुद्धा इति स्मृताः " इति **देवलस्मरणात्**। अमेध्याव्याप्तिः रूपाद्यनन्यत्वोपलक्षणम् ; " रूपगन्धरसान्विताः " इति **मानवात्**। भूमिराकाशोपलक्षणम् ; " स्वभावशुचयो ह्यापो भूमिगता आकाशगताश्च " इति **शङ्खस्मरणात्**। आकाशो निर्झरः, न वर्षधारादिः ; तासां भूमिप्राप्त्यनन्तरं दशरात्रेण शुद्ध्यभिधानात्। यथाह **देवलः**—

" अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम् ॥ "

इति। भूमिग्रहणमशुचिभूमिष्ठस्यापि शुचित्वार्थम् ; अमेध्याव्याप्तेस्तत्रैव सार्थक्यादिति प्राञ्चः। शुचिभूमिप्राप्त्यर्थमित्यन्ये। तेनोद्धृतस्य नाशुचित्वम् ;

" उद्धृताश्चापि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः।
एकरात्रोषिताश्चापस्त्याज्याः शुद्धा अपि स्वयम् ॥ "

इति **देवलस्मरणात्**। उक्तार्थमतिदिशति। तद्वदेव भूमिष्ठवदेव शिलागतं पर्वतादिशिरोगतमपि ज्ञेयम्। भूमिग्रहणात् सिद्धावपि शिलाग्रहणं कटकजलनिरासाय। यथाह **यमः**—" प्रपास्वरण्ये कटके च कूपे ऋते च शूद्रात् तदपेयमाहुः " इति। " कटकोऽस्त्री नितम्बोऽद्रेः " इति **त्रिकाण्डी** ॥ ४३ ॥

**मृतपञ्चनखात् कूपादत्यन्तोपहतात् तथा।**
**अपः समुद्धरेत् सर्वाः शेषं [5]वस्त्रेण शोधयेत् ॥ ४४ ॥**
**वह्निप्रज्वालनं[6] कुर्यात् कूपे पक्केष्टकाचिते।**
**पञ्चगव्यं न्यसेत् पश्चान्नवतोयसमुद्भवे ॥ ४५ ॥**

[1] अतन्द्रितः—क, ज, ठ. [2] From here up to the end of verse 47 missing in क.
[3] शुद्धं—ज. [4] This half missing in झ. [5] शस्त्रेण—ठ. [6] प्रज्वलनं—ठ.

जलाशयशुद्धिमाह । मृताः शीर्णाः पञ्चनखाः मनुष्यादयोऽभक्ष्या यस्मिन्, तस्मात् ;

" स्थूलसूक्ष्मप्राणिशवे क्लिन्ने जीर्णे च तज्जलम् ।
येषामभक्ष्यं मांसं च तच्छरीरयुतं च यत् ॥ "

इति ब्राह्मात् । मरणमात्रे तु " शोषयेदथवा त्रिंशज्जलकुम्भान् समुद्धरेत् " इति ब्राह्मं ज्ञेयम् । तथा अत्यन्तोपहताच्च कूपात् सर्वमुपहतं जलमुद्धृत्य शेषमपां वस्त्रेण शोधयेत् अपनयेत् । शस्त्रेणेति पाठे कुद्दालादिना खनेत् ॥ ४४ ॥

पक्केष्टकाबद्धे कूपेऽयं विशेषः, यन्मध्ये वह्निप्रज्वालनं कार्यम् । इष्टका पाषाणोपलक्षणम्, शरादिबद्धनिरासाय ;

" पाषाणैरिष्टकाभिर्वा दहेत् तत्स्थानमेव च ।
शरबद्धे तु संप्रोक्ष्य विप्राशीर्वचनं तथा ॥ "

इति जामदग्न्यात् । सामान्यशुद्धिस्तु सर्वत्र दुष्टजलापनयेन । जलोद्गमे तत्तन्मन्त्रपूर्वकं पञ्चगव्यन्यासः; " पञ्चगव्यं न्यसेत् तस्मिंस्ततस्तन्मन्त्रपूर्वकम् " इति ब्राह्मात् ॥ ४५ ॥

**जलाशयेष्वथाल्पेषु स्थावरेषु वसुंधरे ।**
**कूपवत् कथिता शुद्धिर्महत्सु च न दूषणम् ॥ ४६ ॥**
**त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।**
**अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ४७ ॥**

कूपशुद्धिमन्यत्राप्यतिदिशति । या कूपे शुद्धिरुक्ता, सैवाल्पेषु, अथान्येषु स्थावरेषु वाप्यादिषु जलाशयेषु ज्ञेया । स्थावरग्रहणात् अलिञ्जरादिनिवृत्तिः । महत्स्वाह—न दूषणमिति । दोषाभावश्च तत्तीर्थपरिहारेण । यथाह देवलः—

" अक्षोभ्याणि तडागानि नदीवापीसरांसि च ।
कश्मलाशुचिसंस्पर्शे तत्तीर्थं परिवर्जयेत् ॥ "

इति । अल्पग्रहणादेव सिद्धौ महत्सु दोषाभाववचनं मध्यमेषु शुद्ध्यन्तराभिधानाय । तत्र पराशरः—

" वापीकूपतडागेषु दूषितेषु कथंचन ।
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुध्यति ॥ "

इति ॥ ४६ ॥

अनुक्तशुद्धिमाह । देवाः ब्रह्मादयः त्रीन् शुद्धिहेतून् अकल्पयन् । तानाह । अदृष्टम् उपयोगानन्तरमपि अज्ञातोपघातम् उपयोगे नादृष्टं दोषकृत् । अनुक्तशुद्धिसाधनं जलक्षालनेन । यथोक्तकृतशौचमपि मनस्तुष्ट्यभावे '[1]शुद्धमेतदस्तु' इति ब्राह्मणानां वाचा शुध्यति ॥ ४७ ॥

**नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।**
**ब्राह्मणान्तरितं भैक्ष्यमाकराः सर्व एव च ॥ ४८ ॥**
**[2]नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।**
**[3]प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ ४९ ॥**
**श्वभिर्हतस्य यन्मांसं शुचि तत् परिकीर्तितम् ।**
**क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः ॥ ५० ॥**

स्वभावशुद्धिमाह । कारूणां सूपकारादीनां हस्तः अङ्गकण्डूयनादिसंपृक्तोऽपि अक्षालित एव शुचिः । यच्चापणे प्रसारितं विक्रयं पण्यं, तदनेकक्रेतृकरकलितमपि शुचि । ब्राह्मणेनान्तरितं व्यवहितं ब्राह्मणहस्तेन दापितं क्षत्रियादिभैक्ष्यमपि यतिवनिब्रह्मचारिणां शुचि ; शूद्रान्नं विना ;

" ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ।
तावुभावप्यभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥ "

इति **स्मरणात्** । आकराः ; गुडलवणाद्युत्पत्तिस्थानानि, अनेकाशुचिसंस्पृष्टान्यपि सर्वाणि सुराकरातिरिक्तानि शुचीनि ; " आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् " इति **बोधायनीयात्** ॥ ४८ ॥

स्त्रीणां स्वीयानाम् । आस्यं सर्वाङ्गोपलक्षणम् । चुम्बनालिङ्गनादौ शुचि ; " स्वदाराश्च गृहस्थानाम् " इति " सर्वगात्राणि योषिताम् " इति च **लैङ्गबार्हस्पत्यस्मरणात्** । " स्त्रियश्च रतिसंसर्गे " इति **स्मृत्यन्तरात्** [4]रतिसंबन्धिनीनामिति प्राञ्चः । नित्यं रजोव्यतिरिक्तकाले ; " रजस्वलामुखास्वादः सुरापानसमानि तु " इति सुरासाम्यात् । स्त्रीमुखमेध्यत्वं " वातो घ्राण्योर्मुखस्य च । सुकृतानि हरन्त्येते " इत्युक्तामेध्यत्वापवादाय ; " स्त्रीणां मुखरसश्चैवं गन्धो निश्वास एव च " इति **यमस्मरणात्** । शकुनिः पक्षिमात्रं वृक्षस्थफलपातने शुचिः । " श्वकाकगृध्रोपघाते " इत्यस्यापवादोऽयम् । वृक्षात् पातने ; न तु भूमिष्ठग्रहणे । प्रस्रवे ; ऊधोगतस्तन्याकर्षणे वत्सः वत्सतरी बालो वा शुचिः । " गावो मेध्या मुखादृते " इत्यस्यापवादोऽयम् । मृगयायां धावन्मृगग्रहणे प्रवृत्तः श्वा मुखे शुचिः । श्वधृतस्य जीवतो मृगस्य दंशस्थानगतमपि मांसं शुचीत्यर्थः ; श्वमुखशुद्ध्यभिधानात् । ग्रहणे ; न तु पातितविदारणे । श्वोपघातापवादोऽयम् ॥ ४९ ॥

[1] शुभम्—ख.
[2] रतावास्यं—ठ.
[3] प्रस्रवे—झ.
[4] पति—ख.

श्वभिर्ग्रहणानन्तरमेव हतस्य मारितस्य पशोः श्वदंशात् परितो यन्मांसं, तत् शुचि कीर्तितम्; सौनस्य निषेधात्। तेन न पौनरुक्त्यम्; जीवदजीवन्मृगावस्थया भेदोपपत्तेः। न केवलं श्वहतस्यैव; किंतु अन्यैरपि क्रव्याद्भिः व्याघ्रसृगालश्येनादिभिः। चण्डालाद्यैः;

"चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा।
मागधायोगवौ चैव सप्तैते त्वन्त्यजाः स्मृताः॥"

इत्युक्तैः। दस्युभिः [1]व्याधैश्च हतस्य मांसं घातस्थानातिरिक्तं शुचीति॥ ५०॥

**ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि निर्दिशेत्।**
**[2]यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः[3]॥ ५१॥**
**मक्षिका विप्रुषश्छाया गौर्गजाश्वमरीचयः[4]।**
**रजो भूर्वायुरग्निश्च मार्जारश्च सदा शुचिः॥ ५२॥**

नाभ्यूर्ध्वदेशस्थानि खानि छिद्राणि नासादीनि सप्त मेध्यानि। 'नदी वेगेन' इत्यत्र श्लेष्मादियोगेऽपि शुद्धिरुक्ता। अत्र तु आचमनानन्तरं स्पर्शार्थमित्यपौनरुक्त्यम्। खशब्दोपादानात् ब्रह्मरन्ध्रस्तनच्छिद्रयोरपि ग्रहणम्। यानि पुनरधो नाभेः गुदोपस्थौ; बहुवचनमागन्तुकभगंदरच्छिद्रग्रहणार्थम्; तान्यमेध्यानि; स्पर्शे आचमनविधानात्। खशब्दस्येन्द्रियपरतया पादाभिप्रायेण बहुवचनमयुक्तम्; पादस्य स्पर्शे निषेधाश्रवणात्। शारीरमलाशुद्धौ हेतुमाह। देहात् स्वस्थानात् च्युता एव मला अमेध्याः; न स्वस्थानस्थिताः॥ ५१॥

मक्षिका प्रसिद्धा। विप्रुषो जलबिन्दवः अदृश्यमानरूपविशेषाः स्पर्शमात्रवेद्याः; अवश्यायबिन्दवो वा। नखादिच्युतव्यतिरिक्ताः;

"नखाग्रकेशनिर्धूतस्नानवस्त्रदशोद्भवाः।
बिन्दवोऽशुचयोऽश्रीका अशुद्धस्तान् स्पृशेद्यदि॥"

इति **लैङ्गात्**। छाया वृक्षादेः दीपमञ्चकादिव्यतिरेकेण; "दीपमञ्चकयोश्छाया हन्ति पुण्यं पुरा कृतम्" इति **स्मरणात्**। गौः अजामहिष्योरुपलक्षणम्। गोग्रहणात् वन्ध्यादीनामपि ग्रहणम्। गजाश्वौ प्रसिद्धौ। मरीचयः सूर्यादेः। रजः खरादिव्यतिरिक्तम्;

"श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम्।
अजाविरेणुसंसर्गादायुर्लक्ष्मीश्च हीयते॥"

[1] व्याघ्रैश्च—ख, ग.
[2] यान्यधस्तादमेध्यानि—ठ.
[3] च्युता मलाः—ज, ठ.
[4] गौरश्वः सूर्यरश्मयः—ज, ठ.

इति **स्मृतेः**। भूः भूमिः। वायुः; दशादिव्यतिरिक्तः;

" शिग्वातः शूर्पवातश्च वातो घ्राण्योर्मुखस्य च।
सुकृतानि हरन्त्येते संस्पृष्टाः पुरुषस्य च॥"

इति **लैङ्गात्**। शिक् वस्त्रदशा। अग्निः चितादिव्यतिरिक्तः;

" चण्डालाग्निः श्मशानाग्निः सूतिकाग्निस्तथैव च।
पतिताग्निरमेध्याग्निर्न शिष्टग्रहणोचितः॥"

इति **स्मृतेः**। मार्जारः। चकारात् शुकादिश्च। [1]यथाह **यमः**—

" गौरश्वो विप्रुषश्छाया मक्षिकाः शलभाः शुकाः।
अजो हस्ती रणे छत्रं रश्मयश्चन्द्रसूर्ययोः॥
भूमिरग्निरजो वायुरापो दधि घृतं पयः।
सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि सर्वशः॥"

इति। एते चण्डालादिस्पृष्टा अपि स्पर्शे अशुद्धिकरा न भवन्ति॥ ५२॥

**नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे न यान्ति याः।**
**न श्मश्रूणि गतान्यास्यं न दन्तान्तरवेष्टितम्॥ ५३॥**
**स्पृशन्ति बिन्दवः पादौ य आचामयतः परान्।**
**[2]भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत्॥ ५४॥**

या मुख्या विप्रुषः अङ्गे न पतन्ति, किंतु लोमभिरेव धार्यन्ते, ता उच्छिष्टमङ्गं स्वस्य परस्य वा न कुर्वन्ति। तेन न तत्प्रक्षालनादि। तथा प्रवृद्धानि श्मश्रूणि मुखं प्रविष्टान्यपि नोच्छिष्टं कुर्वन्ति। तथा दन्तान्तरे दन्तसन्धिषु वेष्टितं लग्नमन्नादि नोच्छिष्टं करोति, यावन्निःसरणं जिह्वया चेन्नाभिमृश्यते। च्युते तु निगिरेत्; न चर्वयेत्। चर्वणे त्वाचामेत्, "दन्तलग्नं तु दन्तवत्, अन्यत्र जिह्वाभिमर्शनात्। प्राक् च्युतेरित्येके। च्युते त्वास्राववद्विद्यान्निगिरन्नेव तच्छुचिः" इति **गौतमीयात्**; "चर्वणे त्वाचमेन्नित्यं मुक्त्वा ताम्बूलचर्वणम्" इति **स्मृतेः**॥ ५३॥

परान् त्रैवर्णिकान्; न म्लेच्छादीन्। आचामयतः जलं पाययतः। न वैधमाचमनं ददतः; तस्यान्यहस्तेन निषेधात्। ये भूमौ पतित्वोत्थितस्य जलस्य बिन्दवः पादौ स्पृशन्ति, तैः पाययिता अशुचिर्न भवेत्, यतस्ते अनुपहतभूम्युत्थितजलबिन्दुभिः समाः। यथाह **पराशरः**—

[1] यथाह यमः omitted in ग.

[2] भौतिकैः—ज.

" भूमिं स्पृष्ट्वागतं तोयं याश्चान्योन्यस्य विप्रुषः ।
भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत् ॥ "

इति । परग्रहणात् स्वस्याचामतोऽशुचित्वमिति प्राञ्चः ; तन्न ; " मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः " इति योगिस्मृतेः । आचामयत एव नाशुचित्वम् ; पार्श्वस्थितस्य तु भवत्येव । पादग्रहणात् अङ्गान्तरेऽप्यशुचित्वम् । बिन्दुग्रहणात् गण्डूषादिनाशुचित्वमेव ॥ ५४ ॥

**उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ।**
**अनिधायैव तद् द्रव्यमाचान्तः शुचितामियात् ॥ ५५ ॥**

पुनः स्पर्शशुद्धिमाह । ऊर्ध्वमधो वा उच्छिष्टेन कथंचन प्रमादेन संस्पृष्टः साक्षात् स्पृष्टः, द्रव्यहस्तः भक्ष्यभोज्यादि द्रव्यं हस्ते यस्यासौ, तत् द्रव्यमनिधायानिक्षिप्यैवाचान्तः सद्रव्यः शुध्येत् । हस्तशब्दः स्कन्धाङ्गपरः । तेन नानिहितद्रव्यहस्तस्याचमनासंभवः । यदि तु द्रव्यं हस्त एव स्यात्, तदा तत् प्रकोष्ठे उत्सङ्गादौ वा कृत्वा आचामेत् । अत्र भूमौ [1]तन्निधाय प्रोक्ष्याचामेत् ;

" प्रचरन्नन्नपात्रेषु उच्छिष्टं संस्पृशेद्यदि ।
आचामेद् द्रव्यमभ्युक्ष्य एवं चैव न दुष्यति ॥ "

इति स्मृतेरिति प्राञ्चः ; तन्न ; निधानाप्रतीतेः ; अनिधायेति विरोधाच्च । यत्तु,

" चरन्नभ्यवहारेषु उच्छिष्टं यदि संस्पृशेत् ।
भूमौ निधाय तद् द्रव्यमाचम्य प्रचरेत् पुनः ॥ "

इति वासिष्ठम्, तत्र बहु द्रव्यं निधेयम् ; स्वल्पमङ्गान्तरे कार्यमिति व्यवस्था । स्वयमुच्छिष्टे तु गौतमः—" द्रव्यहस्त उच्छिष्टोऽनिधायाचामेत् " इति । द्रव्यहस्तः सन्नुच्छिष्टः अनिधायाचामेत् ; उच्छिष्टः सन् द्रव्यहस्तश्चेत् निधायेति । भक्ष्यादि निधेयम् ; वस्त्रदण्डाद्यनिधेयमिति नव्याः ॥ ५५ ॥

**[2]मार्जनोपाञ्जनैर्वेश्म प्रोक्षणेनैव पुस्तकम् ।**
**संमार्जनेनाञ्जनेन सेकेनोल्लेखनेन च ॥ ५६ ॥**
**दाहेन च भुवः शुद्धिर्वासेनाप्यथवा गवाम् ।**
**गावः पवित्रमङ्गल्यं गोषु लोकाः प्रतिष्ठिताः ॥ ५७ ॥**

गृहादिशुद्धिमाह । मार्जनं मार्जन्या पांस्वाद्यपनयनम् । उपाञ्जनं गोमयेन लेपनम् । ताभ्यां प्रत्यहं वेश्म शुध्येत् । बहुवचनं लिप्तस्यापि पुनर्मार्जनलेपनप्राप्त्यर्थम् । पुस्तकं तालीपत्रशणशरादिनिर्मितम् । तत्

[1] तत् omitted in घ.

[2] This line omitted in ठ ; संमार्जनो—क.

प्रोक्षणेनैव शुध्येत्; क्षालने द्रव्यनाशात्। संमार्जनाञ्जने पूर्वोक्ते। सेकः पर्जन्यवर्षणम्; पञ्चगव्येन वा। उल्लेखनमुपरिभागतक्षणम्। चकारात् गाम्भीर्येण खननम्॥ ५६॥

दाहः तृणकाष्ठाद्यैः। चकारात् कालपूरणे। गवामेकरात्रं वासः अवस्थानम्। अपिशब्दात् संचारमात्रं वा। अथवेति छागग्रहणम्। यथाह **यमः**—

" खननात् पूरणाद् दाहादद्भिर्वर्षणलेपनात्।
गोभिराक्रमणात् कालाद्भूमिः शुध्यति सप्तभिः॥ "

इति। **संवर्तः**—" पञ्चगव्येन संप्रोक्ष्य छागैराक्रामयेद् बुधः " इति। एतैः व्यस्तैर्वा यथायथं भुवः शुद्धिः। तदाह **देवलः**—

" यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा।
चण्डालाध्युषितं यत्र यत्र विष्ठादिसंगतिः॥
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता।
श्वसूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत्॥
[1]अङ्गारतुषकेशास्थिमद्याद्यैर्मलिना भवेत॥ "

इति। एवं त्रैविध्ये तच्छुद्धिमाह—

" दहनं खननं भूमेरुपलेपनवापने।
पर्जन्यवर्षणं चेति शौचं पञ्चविधं स्मृतम्॥ "

इति। पञ्चविधां व्यवस्थामाह—

" पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति।
दुष्टा त्रिधा द्विधा वापि शुध्यते मलिनैकधा॥ "

इति। अयमर्थः—यत्र प्रसवाद्याः पञ्चापि जाताः, तस्याः दहनादिभिः पञ्चभिः शुद्धिः। यस्यां दाहचण्डालवासयोरन्यतराभावः, तस्या दाहं विना खननादिभिश्चतुर्भिः। या पुनः श्वादिभिश्चतुर्भिरधिष्ठिता, सा उपलेपनादिभिस्त्रिभिः। या पुनः श्वग्रामकुक्कुटैरधिष्ठिता, सा वापनादिद्वाभ्याम्। या तु अङ्गारादियुक्ता, सा पर्जन्यवर्षणेनैवेति। मार्जनलेपने सर्वत्र समुच्चीयेते। यस्यां तु त्रिविधं द्विविधं वा अशुचित्वं, सा मूलोक्तैर्दशभिः यमोक्तैः सप्तभिर्वा शुध्येत्। गोवासे अर्थवादमाह। गावः पवित्रम्; पवेः वज्रात् विघ्नात् त्रायत इति। मङ्गलाय शुभायार्हं मङ्गल्यम्। भूर्भुवादयो लोकाः गोषु प्रतिष्ठिताः, गवाधीनजीविताः॥ ५७॥

[1] मस्माद्यैः for मद्याद्यैः—ख, ग.

**गावो वितन्वते यज्ञं गावः सर्वाघसूदनाः ।**
**गोमूत्रं गोमयं [1]सर्पिः क्षीरं दधि च रोचना ॥ ५८ ॥**
**षडङ्गमेतत् परमं मङ्गल्यं परमं गवाम् ।**
**शृङ्गोदकं गवां पुण्यं सर्वाघविनिषूदनम् ॥ ५९ ॥**
**गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ।**
**गवां ग्रासप्रदानेन स्वर्गलोके महीयते ॥ ६० ॥**

गावो यज्ञं ज्योतिष्टोमादिकं हविःसंपादनेन संपादयन्ति । गावः सर्वमघं ब्रह्महत्यादि सूदयन्ति ; "प्रथमं गोभिः सत्कृतस्य पुरस्क्रिया" इति स्मृतेः । यतो गवां गोमूत्रादिपञ्चकं षष्ठी गोरोचना चेत्येतत् षडङ्गं, षण्णामङ्गानां समाहारः, सर्वकालं मङ्गल्यं पापनिवृत्तौ पुण्योत्पत्तौ च निमित्तमिति । गोशृङ्गोदकेन स्नानं मार्जनं च पुण्यं पुण्यजनकं पुण्यकामस्य । सर्वपापनाशकं पापक्षयकामस्य । तथैव गोकण्डूयनमुभयसाधनम् । गोग्रासदानं स्वर्गसाधनम् ॥ ५८-६० ॥

**गवां हि तीर्थे वसतीह गङ्गा**
**पुष्टिस्तथासां रजसि प्रवृद्धा ।**
**लक्ष्मीः करीषे प्रणतौ च धर्म-**
**स्तासां प्रणामं सततं च कुर्यात् ॥ ६१ ॥**

इति [2]श्रीविष्णुस्मृतौ त्रयोविंशोऽध्यायः

तीर्थे गोमूत्रे गङ्गा । रजसि खुरोद्धृते महती पुष्टिर्देवी । करीषे शुष्कगोमये ; चकारात् सद्यो जाते च 'सद्यः कृते चाप्यथ गोमये च' इति वक्ष्यमाणत्वात् ; लक्ष्मीः । प्रणतौ धर्मः । तासां गवां प्रणामं सर्वकालं कुर्यादिति विधिः । अन्ते विधिप्रदर्शनं पूर्वोक्तेषु सर्वेष्वप्यर्थवादेषु अवधारणप्रकल्पनया विधित्वं प्रदर्शयितुम् ॥ ६१ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[3]श्रीरामपण्डितात्मज[3]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां त्रयोविंशोऽध्यायः

[1] क्षीरं सर्पिः—ठ.
[2] वैष्णवे त्रयोविंशोऽध्यायः—क, ञ ; वैष्णवे धर्मशास्त्रे शुद्धिप्रकरणं त्रयोविंशम्—ज, ठ.
[3] श्री omitted in ग.

## चतुर्विंशोऽध्यायः

**अथ ब्राह्मणस्य वर्णानुक्रमेण चतस्रो भार्या भवन्ति ॥ १ ॥ तिस्रः क्षत्रियस्य ॥ २ ॥ द्वे वैश्यस्य ॥ ३ ॥ एका शूद्रस्य ॥ ४ ॥**

एवमाचारकाण्डादौ सर्वकर्माङ्गतया देहद्रव्यशुद्धिमुक्त्वा इदानीं सर्वकर्माधिकारापेक्षितसंस्काराभिधित्सया चतुर्विंशेन विवाहमादौ निरूपयति । संस्कारप्रकरणार्थोऽथशब्दः । वर्णानां ब्राह्मणादीनाम् ; अनुक्रमेण आनुलोम्येन; न तु प्रातिलोम्येन । ब्राह्मणस्य ब्राह्मणी क्षत्रिया वैश्या शूद्रेति चतस्रो भार्या भवन्ति । तेन ब्राह्मणस्य ब्राह्मणीविवाहः प्रथमम् । ततः क्षत्रियादिविवाहः । अन्यथा राजन्यापूर्व्यादिनिमित्तप्रायश्चित्तप्रसङ्गः ॥ १ ॥ क्षत्रियस्य वर्णानुपूर्व्येण क्षत्रिया वैश्या शूद्रेति तिस्रो भार्या भवन्ति ॥ २ ॥ वैश्यस्य वर्णानुक्रमेण वैश्या शूद्रेति द्वे भार्ये भवतः ॥ ३ ॥ शूद्रस्य वर्णानुक्रमेण एका भार्या भवति । क्षत्रियादिषु वर्णक्रमानुपादाने ब्राह्मण्याद्युपादानेऽपि त्रित्वसंख्यापूर्तिः स्यात् । तेन क्षत्रियादीनां न प्रातिलोम्येन ब्राह्मण्यादिविवाहः । तथाच वर्णाश्रमानुवृत्तौ दक्षः—"त्रयाणामानुलोम्यं स्यात् प्रातिलोम्यं न विद्यते" इति । त्रयाणां क्षत्रियादीनां गृहस्थाद्याश्रमाणां च ॥ ४ ॥

**तासां [1]सवर्णावेदने पाणिर्ग्राह्यः ॥ ५ ॥ [2]असवर्णावेदने शरः क्षत्रियकन्यया ॥ ६ ॥ प्रतोदो वैश्यकन्यया ॥ ७ ॥ वसनदशान्तः शूद्रकन्यया ॥ ८ ॥**

तासां भार्यात्वोत्पादकमाह । तासां सवर्णासवर्णभार्याणां मध्ये सवर्णानां परिणये ब्राह्मणादिभिः पाणिर्ग्राह्यः ॥ ५ ॥ सवर्णावेदने पाणिग्रहणविधानात् क्षत्रियायाः शरग्रहणमसवर्णविषयमिति सिद्धे पुनरसवर्णावेदनग्रहणमुत्तरविवक्षयेति गम्यते । अत्र वचनं क्षत्रियादीनां परिणेतॄणां पाणिशरादिविकल्पनिरासार्थम् । क्षत्रियकन्यायाश्चासवर्णो ब्राह्मण एव । न वैश्यादिः; आनुलोम्येन विवाहविधानात् । ततश्च क्षत्रियकन्यया ब्राह्मणेन परिणीयमानया शरो ग्राह्यः । कन्यायाः कर्तृत्वनिर्देशात् पूर्वं ब्राह्मणेन गृहीतस्य शरस्य कन्यया ग्रहणं कर्तव्यम् ; न तु कन्यया गृहीतस्य वरेण । कन्याग्रहणात् क्षतयोनिपुनर्भूसंस्कारे वधूगृहीतस्य

[1] सवर्णाधिवेदने—ज, ठ.

[2] असवर्णाधिवेदने—ठ.

शरस्य वरेण ग्रहणं गम्यते[1] ॥ ६ ॥ असवर्णावेदन इत्यत्रावतिष्ठते । असवर्णेन ब्राह्मणेन क्षत्रियेण वा परिणीयमानया वैश्यया प्रतोदो ग्राह्यः । अन्यत् पूर्ववत् ॥ ७ ॥ असवर्णावेदन इत्येव । असवर्णैः ब्राह्मणक्षत्रियवैश्यैः परिणीयमानया शूद्रया वसनस्य प्रावरणवस्त्रस्य दशान्तो ग्राह्यः । शेषं पूर्ववत् ॥ ८ ॥

**न सगोत्रां न समानार्षप्रवरां भार्यां विन्देत ॥ ९ ॥ मातृतस्त्वा पञ्चमात् पुरुषात् पितृताश्चा सप्तमात् ॥ १० ॥**

कन्यातिप्रसङ्गमाह । गोत्रम् अगस्त्याष्टमसप्तर्ष्यपत्यम् । तत् समानमेकं वंशप्रवर्तकं स्वस्य यस्याश्च, सा सगोत्रा । तां न विन्देत; वेदनं परिणयः । नन्वेवं [2]भृग्वङ्गिरोऽपत्यानामगोत्रत्वेनासमानगोत्रत्वात् निषेधाप्रवृत्त्या विवाहः प्रसज्येतेत्यत आह—न समानार्षेति । ऋषेर्भृगोरङ्गिरसश्च यत् वंशकरमपत्यं [3]जमदग्निभरद्वाजव्यतिरिक्तम् आर्ष्टिषेणमुद्गलादि तत् आर्षम् । समानमार्षमुक्तरीत्या यस्याः सा समानार्षा । तां च नोद्वहेत् । यथाह **बोधायनः**—"भृग्वङ्गिरसो भिन्नविवाहं कुर्वते" इति । भृग्वङ्गिरस्त्वेन साम्येऽपि अवान्तरवंशभेद एव विवहन्तीत्यर्थः । नन्वेवं गोत्रार्षभेदेऽपि प्रवरैक्ये विवाहः स्यादित्यत आह—प्रवरेति । आर्षं च प्रवरश्चार्षप्रवरौ । समानौ आर्षप्रवरौ यस्याः सेति द्वन्द्वगर्भबहुव्रीहिणा समानप्रवरो लभ्यते । तां च नोद्वहेत् । आर्षं पूर्वोक्तम् । प्रवरः तत्तद्वंशेषु मन्त्रकृतो मन्त्रद्रशो वा ऋषयः । "यथर्षि मन्त्रकृतो वृणीते" इति **श्रुतेः**, "ऋषिर्दर्शनात्" इति [4]**यास्कस्मृतेश्च** ।

यदा तु [5]माठरादिमतेन दशानामपि गोत्रकरत्वं, तदा आर्षपदं प्रवरविशेषणं दैवमानुषप्रवरनिरासायाध्यवसेयम्; "न देवैर्न मनुष्यैरार्षं वृणीते, ऋषिभिरेवार्षं वृणीते" इति **श्रुतेः** । गोत्रप्रवरौ च प्रत्येकं परिहार्याविति प्रत्येकं निषेधः ; अन्यथा 'असमानार्षगोत्रजाम्' इति वैशिष्ट्यदर्शनेन विशिष्टनिषेधभ्रमापत्तेः । ततश्च गोत्रभेदेऽपि प्रवरैक्ये न विवाहः । यथा—यास्कवाधूलमौनमौकादीनां गोत्राणां भेदेऽपि भार्गववैतहव्यसावेतसेति प्रवरैक्यम् । तथा प्रवरभेदेऽपि न गोत्रैक्ये । यथा—तित्तिरिकपिभूमिस्वन्दितखण्डितानां गोत्राणामाङ्गिरसशैन्यगार्ग्येति अङ्गिराः तित्तिरिः कपिभूमिरिति वेति त्र्यैक्येऽपि प्रवरभेदः । एवमन्यत्राप्यूह्यम् ॥ ९ ॥

सपिण्डातिप्रसङ्गवारणायाह । [6]सगोत्रादिविशेषणनिरासाय तुशब्दः । तेन पृथगयं निषेधः । मातृत आपञ्चमात् पुरुषात् पितृतश्चासप्तमात् पुरुषात् भार्यां न विन्देतेत्युभयत्रानुषज्यते । एकस्यामेव कन्यायां निषेधद्वयसमुच्चयार्थश्चकारः । नाङ् मर्यादायाम्; किंतु अभिव्याप्तौ; "पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा" इति **स्मृतेः** । पुरुषः शीर्षम् । मातृतः मातरमारभ्य यः पञ्चमः मातामहादीनां कुले, पितृतः पितरमारभ्य यः सप्तमः पितामहादीनां कुले, तत्संततौ योत्पन्ना कन्या, तां नोद्वहेदिति । मातापितृत

[1] गम्यते omitted in ग, घ.
[2] केवल added in च.
[3] जमदग्निगौतमभरद्वाज—ख, ग, घ.
[4] पारस्कर—घ.
[5] माथुरादि—ग.
[6] From here upto निषेधः omitted in ख.

आपञ्चमादिग्रहणात् मातापितृद्वारकः पञ्चमसप्तमावधिकसमानपुरुषान्वयसंबन्धो वरस्य कन्यापरिहारे निमित्तमिति गम्यते। स एव च [1]सापिण्ड्यप्रयोजकः, "एतत् षाट्कौशिकं शरीरं त्रीणि पितृतः, त्रीणि मातृतः। अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतः" इति **श्रुतेः**। तदतिप्रसङ्गनिवृत्त्यै चापञ्चमात् आसप्तमादिति। यानि तु "पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा" इत्यादीनि **वासिष्ठादि**वाक्यानि, तानि द्विजव्यतिरिक्तविषयाणीति ज्ञेयम्;

"पञ्चमात् सप्तमादर्वाग्यः कन्यामुद्वहेद् द्विजः।
गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन्॥"

इति **विष्णुना**,

"पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया।
क्रियापरा अपि हि ते सर्वे ते शूद्रतां गताः॥"

इति **मरीचिना** च द्विजपुरस्कारेणैव तन्निषेधात्। न च द्विजपदं चातुर्वर्ण्योपलक्षणम्; वाक्यद्वयेऽपि वाक्यद्वयशेषासंगतेः। न हि शूद्रस्य सगोत्रोद्वहने शूद्रताभिधाने [2]वा निन्दा प्रतीयते। किंच "उद्वहेत द्विजो भार्याम्" इत्युपक्रम्य "असपिण्डा च या मातुः" इति **मनुना**, "अविप्लुतब्रह्मचर्यः" इत्युपक्रम्य "पञ्चमात् सप्तमादूर्ध्वम्" इति **योगिना** चावान्तरप्रकरणे सप्तमाद्यतिक्रमस्य द्विजमात्रविषयत्वाभिधानात्, चातुर्वर्ण्योपक्रमे पुनः द्विजग्रहणस्य नियमपरिसंख्यान्यतरार्थत्वाच्च न शूद्रस्य सप्तमादूर्ध्वतानियमः सिध्यति; द्विजातिष्विव शूद्रेषु तादृशनियामकवचनाभावात्; असपिण्डावचनस्य तु [3]द्विपुरुषादिसप्तपुरुषपर्यन्तसापिण्ड्यषट्पक्षान्यतमपक्षाश्रयणेनापि चारितार्थ्यात्; सदसच्छूद्रयोः गुरुलघुपक्षाश्रयणेनाव्यवस्थानिरासाच्चेत्यलं विस्तरेण। यत्तु,

"पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतः क्रमात्।
सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः॥"

इति वचनं, तत्र सर्वपदं त्रैवर्णिकपरं व्याख्येयम्; पूर्वोक्तवचननिचयानुरोधात्। यच्च,

"सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्।
उद्वहेत्तु द्विजो भार्यां न्याय्येन विधिना नृप॥"

इति **विष्णुपुराणीयं** वचनं, तत् अनुकल्पविधानेनार्थवत्; अन्यथा न्याय्येनेति विशेषणानर्थक्यात्; अनुकल्पस्यैव न्यायप्राप्तत्वात्; न मुख्यकल्पस्य। मुख्यासंभवहेतुकमपरानुष्ठानं चानुकल्पः। स च क्वचिदार्थः, क्वचित् शाब्दः। यथा—"न दीक्षितस्यान्नमश्नाति" इति निषेधे "अग्नीषोमीये संस्थिते दीक्षितस्यान्न-

[1] सापिण्ड्ये—ख, ग, च.
[2] From here up to चातुर्वर्ण्योपक्रमे omitted in ख, ग.
[3] द्विजपुरुषादि—ख, ग.

मश्नाति" इत्यस्य गुरुपक्षस्य प्रतिप्रसवस्यासंभवे "क्रीतराजको भोज्यान्नः" इति लघुपक्षस्याभ्यनुज्ञानम्। शाब्दो यथा—"एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः" इत्यादिः। तथा **चतुर्विंशतिमते**—

"दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात्।
उद्वहेत् सप्तमादूर्ध्वं तदभावे तु सप्तमीम्॥
पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः।
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च॥
एवमुद्वाहयेत् कन्यां न दोषः शाकटायनः।
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि॥
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः।
असपिण्डा च या मातुरसगोत्रा च या पितुः॥
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने।
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्।
नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत् प्रतीयते॥"

इति। सप्तमादूर्ध्वमिति मुख्यः कल्पः; तदभावे पञ्चमीमिति पक्षद्वयेऽप्ययं सर्वमतेनानुकल्पः। तुशब्देन पक्षान्तरं परिगृह्णाति। पितृपक्षे तु अयं वक्ष्यमाणोऽपि विधिः—सप्तमीं षष्ठीं पञ्चमीं च। तथा पूर्वपूर्वाभाव एवोद्वहेत्। एवमुद्वाहे न दोष इति शाकटायनमतम्।

एवं स्वमतेन पक्षद्वयेऽनुकल्पमुक्त्वा, इदानीं मतान्तरेण पक्षद्वयेऽनुकल्पमाह। पञ्चम्यभावे चतुर्थीं, तदभावे तृतीयाम्; आर्थक्रमप्राबल्यात्। पक्षद्वयेऽप्युद्वहेदिति मनुपराशराङ्गिरोयमानां मते कन्यागतमेव सप्तमत्वादिविशेषणं वरेऽपि ज्ञेयम्, 'असपिण्डामुद्वहेत्' इत्यत्रासापिण्ड्यस्योभयविशेषणत्वात्। तेन 'सप्तमः सप्तमीं षष्ठीम्' इत्यादि सिध्यति।

ननु अनुकल्पेऽपि यदि [1]दोषाभावस्तुल्यः, तर्हि को विशेषो मुख्यकल्पादित्यत आह—सा प्रशस्तेति। सा अतीतसप्तमादिः प्रकर्षेण शस्ता। दारकर्म [2]गृहकर्म। मैथुनम् आधानादि। अनेनानुकल्पस्य द्विजातीनां दोषाजनकत्वेऽपि अप्राशस्त्यमुक्तं भवति। अन्येषां तु नाप्राशस्त्यमपि; उक्तरीत्या साप्तपुरुषसापिण्ड्यस्य द्विजातिष्विव शूद्रेष्वपि संकोचावश्यंभावेन द्विजातिमात्रविषयत्वात्।

अन्ये तु—साप्तपुरुषसापिण्ड्यं चातुर्वर्ण्यविषयम्। तद्विषयमेव चानुकल्पविधानम्। तच्च द्विजेष्वपोद्यते "पञ्चमात् सप्तमादर्वाक्" इत्यनेन। ततश्च द्विजानामेवायमनुकल्पनिषेधः, नान्येषामिति द्विजातिरिक्तविषयं सप्तम्यादिविधानमिति मन्यन्ते। तन्न सुन्दरम्; अनुकल्पविधानस्य श्रोत्रियाणामित्युपक्रमेण

[1] विशेषाभावः—ख, ग. [2] गृहकार्यम्—ख.

द्विजातीनामित्युपसंहारेण च द्विजातिमात्रविषयतया चातुर्वर्ण्यविषयत्वासंभवात्। द्विजातिमात्रविषयत्वे च विधिनिषेधयोरष्टदोषदुष्टविकल्पापत्तेः। न चास्मन्मते सः; विधेरनुकल्पविषयत्वेन निषेधस्य च मुख्यकल्पविषयत्वेनैकविषयत्वाभावात्। तस्मात् यथोक्तमेव साधीय इति।

ननु अनुकल्पे दोषाभावात् नरको न स्यात्; लोकविद्वेषस्तु मधुपर्के गोवधवत् स्यादेवेत्यत आह—यस्त्विति। देशकुलाचाराभ्यामनुकल्पस्य व्यवस्थितत्वात् न लोकविद्वेषविषयता। तत्र प्रमाणमाह—वेदादिति। "तृतीये संगच्छावहै चतुर्थे संगच्छावहै" इति वेदः तृतीयचतुर्थयोरुद्वाहे प्रमाणम्।

"ते नस्त्राध्वं तेऽवत त उ नो अधिवोचत।
मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः॥"

इति वेदः कुलाचारे प्रमाणमिति। भो देवाः ते यूयं नः त्राध्वं पालयध्वम्। ते यूयं नः अस्मान् अवत रक्षत। ते यूयं नः अस्मान् अधिवोचत अधिकं हितं[1] ब्रूत। मानवात् मनुष्यानुष्ठेयात् परावतः परलोकसंबन्धिनः पित्र्यात् पितृपरम्परागतात् पथः दूरं नः अस्मान् मा नैष्ट मा नयतेति देवान् प्रति प्रार्थ्यते। तस्मात् कुलपरंपरागतेन मार्गेण सप्तमादर्वागप्युद्वाहे न दोष इति भावः।

नन्वेवं सप्तमान्तानामस्तु अनुकल्पत्वम्। सप्तमोर्ध्वानामर्वाचीनानां तु कथम्? दशपुरुषस्यापि सापिण्ड्यस्मरणात्। तथा च बुधस्मृतिः—"सवर्णां भार्यामुद्वहेत् अतीत्य मातृतः पितृतः पञ्चमीं दशमीमन्यत्र गोत्रजाम्" इति। मातृतः पञ्चमीं पितृतो दशमीमतीत्येत्यन्वयः। **स्वयंभूस्तु** अस्यैव सापिण्ड्यस्य विवाहाशौचयोरप्यावश्यकत्वमाह—"तत्र ब्राह्मणानामेकपिण्डस्वधानामादशमात् धर्मविच्छित्तिर्भवति। आसप्तमात् रिक्थविच्छित्तिर्भवति। आतृतीयात् स्वधाविच्छित्तिर्भवति। अन्यथा सपिण्डाशौचक्रियाद्युच्छेदात् ब्रह्महतुल्या भवन्ति" इति। अस्यार्थः—'पिण्डो जनकदेहः। स्वधा श्राद्धम्। तत् न यत् किंचित्, किंतु प्रौष्ठपद्यादौ विहितं प्रपितामहपित्रादीनां नान्दीमुखं श्राद्धम्। तत्र प्रपितामहपित्रादयस्त्रयः पिण्डभाजः। तदूर्ध्वास्त्रयो लेपभाजः। स्वपित्रादयस्त्रयः तन्निरूपकाः। कर्ता चेत्येवं दशपुरुषसंबन्धि। तदुभयं ये यान्ति, ते एकपिण्डस्वधाः; ते सपिण्डा इति वाक्यशेषात्। तेषामादशमात्; दशमं पुरुषं मर्यादीकृत्य आदशमम्। तस्मात् आदशमात्। दशमोर्ध्वमिति यावत्। अत्राङ्पूर्वमर्यादावचनः; आजन्मशुद्धानामितिवत्। धर्मस्य विवाहे सपिण्डावर्जनस्य जननमरणयोः संध्यास्नानादिवर्जनस्य च विच्छित्तिः निवृत्तिर्भवति। तथा आसप्तमात् सप्तमादूर्ध्वं रिक्थनिवृत्तिः। तथा तृतीयादूर्ध्वं स्वधानिवृत्तिः। अन्यथा दशमपुरुषादर्वागेव अविवाह्यतापरिहारे जननमरणयोः संध्यास्नानादिवर्जननिवृत्तौ च सपिण्डानामाशौचस्य तन्निमित्तायाः पिण्डदानादिक्रियायाः, आदिशब्दात् अविवाह्यतायाश्च उच्छेदात् ब्रह्महतुल्या भवन्ति' इति।

1 हिते—ख,

नन्वेवमपि "एकपिण्डस्वधानाम्" इत्यत्र विशेषणद्वयोपादानं व्यर्थम्, अन्यतरविशेषणेनैवावयवपिण्डान्वयरूपैकतरसापिण्ड्यसिद्धेरिति चेत्, न; दत्तपुत्रे सत्यपि जनकावयवान्वये तत्कर्तृकश्राद्धसंबन्धाभावात् न दशपुरुषं सापिण्ड्यम्। किंतु,

"दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च॥"

इति **बृहन्मनु**वचनात् साप्तपुरुषमेव। तथा प्रतिगृहीते पुत्रे सत्यपि प्रतिग्रहीतृश्राद्धान्वये अवयवान्वयाभावात न दशपुरुषं सापिण्ड्यम्। किंतु,

"यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी॥"

इति **कार्ष्णाजिनि**वचनात् त्रिपुरुषमेव। पितुः प्रतिग्रहीतुः वर्गाः पितरः गौणमुख्याः समुच्चिता वा द्व्यामुष्यायणस्य यावन्तः त्रयः षड् वा, तावद्भिः सह दत्तकादयः मृतानां पित्रादीनां योजनं कुर्युः। दत्तकपुत्रे तु विशेषः—तस्य दत्तकस्य ये पुत्राः, ते अस्य पितुः प्रतिग्रहीतुः अग्रेतनाभ्यां द्वाभ्यां प्रतिग्रहीत्रा च समं स्वपितृयोजनं कुर्युः। एवं दत्तकस्य पौत्रा अपि जनकप्रतिग्रहीतृभ्यां तदग्रेतनेनैकेन तादृशेन सह स्वपितृयोजनं कुर्युर्यतः, तस्मादेव त्रिपौरुषीत्यर्थः। विशेषान्तरमस्मत्कृतायां **दत्तकमीमांसायाम्** अवधेयम्।

दशपुरुषमेव सापिण्ड्यं श्रुतिरप्युपोद्बलयति—

"दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः॥"

इति। ममताया अपत्यं मामतेयः दीर्घतमा नाम ऋषिः कूटस्थात् दशमे युगे द्वन्द्वे मातापितृलक्षणेऽतीते सति जुजुर्वान् भार्यासहयोगप्रीतः; "जुषी प्रीतिसेवनयोः" इत्यस्यायं प्रयोगः। कुत इत्यत आह। अर्थं गर्भलक्षणं प्रयोजनमासादयितुं यतीनां गच्छन्तीनामपां शुक्रशोणितरूपाणां जलानां सारथिः नेता ब्रह्मा जीवो भवति;

"स्त्रीपुंसयोश्च संयोगे विशुद्धे शुक्रशोणिते।
पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः॥"

इति **स्मृतेः**। तस्मादवयवान्वयरूपं सापिण्ड्यं रिक्थाशौचयोर्द्वयोरपि प्रयोजकमित्याह भगवान् **बोधायनः**—"प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रवर्जं तेषां च पुत्रपौत्रमविभक्तदायम्" इति। दायोऽत्र पिण्डः। एकपिण्डान्वयीत्यर्थः। एतच्च दशपुरुषमेवेत्युक्तमेव प्राक्।

नच इदं केवलं रिक्थग्रहण एवं दशपुरुषं सापिण्ड्यम्; आशौचे "सपिण्डेष्वा सप्तमात्" इति तेनैव पृथक् सप्तपुरुषाभिधानादिति मन्तव्यम्; "सपिण्डेष्वादशाहम्" इत्युपक्रम्य "जननमरणयोः संनिपाते" इत्युपसंहारात् मध्यपठितयोः साप्तपुरुषदशपुरुषयोः सापिण्ड्ययोः संदंशपतितत्वेनोभयत्राप्युभयोरपि वैकल्पिकाङ्गत्वसिद्धेः। तच्च "आसप्तमात् रिक्थविच्छित्तिः" इति **स्वयंभु**वाक्ये साप्तपुरुषस्य, "असत्स्वन्येषु तद्गामी ह्यर्थो भवति" इति **बोधायन**वाक्ये च दशपुरुषस्य च रिक्थग्रहणे वैकल्पिकमङ्गत्वं स्पष्टमेव। आशौचेऽपि तयोः वैकल्पिकमङ्गत्वं स्पष्टमाह **पारस्करः**—"सर्वे ज्ञातयोऽभ्यवयन्त्या सप्तमात् पुरुषात् दशमाद्वा" इति। **याज्ञवल्क्योऽपि**—"सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः" इति। यत्तु सप्तमदशमशब्दयोः दिनपरतया प्राचां व्याख्यानं, तदसत्; **पारस्करेण** पुरुषपरतायाः स्पष्टीकरणात्।

तस्मात् सिद्धं पितृद्वारकं दशपुरुषं सापिण्ड्यम्। तथा मातृद्वारकं साप्तपुरुषं सापिण्डयं स्मर्यते। यथाह **सुमन्तुः**—"मातापितृसंबद्धा आ सप्तमादविवाह्याः कन्या भवन्ति। आ पञ्चमादन्येषाम्" इति। तर्हि मातृतः सप्तमादूर्ध्वं पितृतो दशमादूर्ध्वं विवाह्यत्वस्मरणात् कथमर्वाक् विवाह्यत्वम्? अनुकल्पेनापि विध्यभावादिति चेत्; सत्यम्; न वाचनिक एवानुकल्पः; अपितु न्यायसिद्धोऽपीत्युक्तमेव "क्रीतराजको भोज्यान्नः" इत्यत्र। तस्मात् यथा पञ्चमात् सप्तमादूर्ध्वमप्यनुकल्पत्वं, तथा पञ्चमात् सप्तमादर्वागप्यस्तु; अनुपपत्तेस्तुल्यत्वात्। अयमप्यनुकल्पो ब्राह्मणातिरिक्तविषय एव; "ब्राह्मणानामादशमात् धर्मविच्छित्तिर्भवति" इति **स्वयंभु**स्मरणादिति सर्वमनवद्यम्।

प्राच्यास्तु पञ्चमात् सप्तमादर्वाग्विवाहप्रतिपादकवाक्यानां त्रिगोत्रान्तरितत्वविषयतया व्यवस्थामाहुः। तथाच **बृहन्मनुः**—

"असंबद्धा भवेद्या तु पिण्डेनैवोदकेन वा।
सपिण्डा स्याद् द्विजातीनां त्रिगोत्रान्तरिता च या॥"

इति। त्रिगोत्रान्तरिता; मूलपुरुषगोत्रमादाय त्रिगोत्रव्यवहितगोत्रोत्पन्नेति यावत्। तथाच **स** एव—"तत्संनिकर्षः कर्तव्यस्त्रिगोत्रात् परतो यदि" इति॥ १०॥

**नाकुलीनाम्॥ ११॥ न च व्याधिताम्[1]॥ १२॥ [2]नाधिकाङ्गीम्॥ १३॥ न हीनाङ्गीम्॥ १४॥ नातिकपिलाम्॥ १५॥ [3]न वाचाटाम्॥ १६॥**

कन्यायां विशेषमाह। कर्षकराजसेवकादीनां कुलमकुलम्; "कुलान्यकुलतां यान्ति कृष्या राजोपसेवया" इति **स्मरणात्**। तत्र भवा अकुलीना। तां नोद्वहेत्॥ ११॥ व्याधयः कुष्ठापस्मारादयः।

[1] न व्याधिताङ्गीम्—ठ. [2] This Sūtra omitted in झ. [3] This Sūtra omitted in ठ.

तद्युक्तां च न। चकारात् अलोमकातिलोमकादीनां ग्रहणम् ॥ १२ ॥ अधिकमङ्गमङ्गुल्यादिकं यस्यास्तां षडङ्गुल्यादिकां न ॥ १३ ॥ हीनमङ्गमङ्गुल्यादिकं यस्यास्तां चतुरङ्गुल्यादिकां न ॥ १४ ॥ अतिशयितकपिलवर्णां न। अतिशब्दात् ईषत्कपिला न दुष्टा ॥ १५ ॥ वाचाटां बहुभाषिणीं नोद्वहेदिति प्रत्येकमन्वयः ॥ १६ ॥

**अथाष्टौ विवाहा भवन्ति ॥ १७ ॥ ब्राह्मो दैव आर्षः प्राजापत्यो गान्धर्व आसुरो राक्षसः पैशाचश्चेति ॥ १८ ॥**

विवाहभेदान् प्रतिजानीते। अथेत्यवान्तरप्रकरणारम्भः। विवाहो नाम भार्यात्वोत्पादको विधिः। सोऽष्टधा ॥ १७ ॥ ब्रह्मणोऽयं ब्राह्मः। एवं दैवादयो व्याख्येयाः। प्रतिज्ञातानामष्टानामिमाः संज्ञाः व्यवहारसौकर्याय ॥ १८ ॥

**[1]आहूय [2]गुणवते कन्यादानं ब्राह्मः ॥ १९ ॥ यज्ञस्थऋत्विजे दैवः ॥ २० ॥ गोमिथुनग्रहणेनार्षः ॥ २१ ॥ प्रार्थितप्रदानेन प्राजापत्यः ॥ २२ ॥**

यथोद्देशं लक्षणान्याह। सवर्णश्रोत्रियसुपरीक्षितपुंस्त्वासपिण्डत्वादयो गुणाः। तद्वते आह्वानपूर्वकं यदयाचितकन्यादानं स ब्राह्मो विवाहः। आह्वानमलंकारोपलक्षणम्; "आच्छाद्य चार्हयित्वा च" इति **मानवात्**। आच्छादनार्हणे चाविशेषादुभयोः ॥ १९ ॥

यज्ञे ज्योतिष्टोमादौ तिष्ठति वृतः सन् कर्म आध्वर्यवादि करोतीति यज्ञस्थः। तादृशाय ऋत्विजे अध्वर्युप्रभृतये नैपुण्यदर्शनोद्भूतसंतोषविशेषेण, न तु क्रत्वर्थतया, [3]दानं दक्षिणाकाले स दैवः; "दक्षिणासु नीयमानासु अन्तर्वेदि यदृत्विजे स दैवः" इति **बोधायनीयात्**। एतद्विधिबलादेव दीक्षितस्य दाननिषेधोऽप्यन्यविषय इति सिद्धम् ॥ २० ॥

गोजातीयं मिथुनं स्त्रीपुंसम्। तस्य तयोर्वा प्रत्यर्पणाय ग्रहणेन यत् कन्यादानं स आर्षः; "एकं गोमिथुनं द्वे वा" इति **मानवात्**;

"प्रदानं यत्तु कन्यायाः सह गोमिथुनेन तु।
शस्ताय चासगोत्राय तमार्षमृषयो विदुः ॥"

इति **नारदीयाच्च** ॥ २१ ॥

[1] आहूतगुणवते—क.  [2] गुणवते omitted in ठ.  [3] यत् कन्यादानं दक्षिणादानकाले—घ.

*प्रार्थितायाः याचितायाः कन्यायाः यत् पित्रा प्रकर्षेणोक्तविधिना [1]दानं, तेन प्राजापत्यः। प्रदानमिति वक्तव्ये तृतीयानिर्देशो लक्षणान्तरसूचनार्थः। तदाह **मनुः**—

"सहोभौ चरतां धर्ममिति वाचानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः॥"

इति। यद्यपि विवाहान्तरेऽप्यपि सहधर्मचरणमस्त्येव, तथाप्यत्र यावज्जीवं सहधर्मचरणमेव; नाश्रमान्तरगमनं, नापि स्त्र्यन्तरपरिणय इति विशेषः। यत्तु धर्मशब्दोऽर्थकामयोरप्युपलक्षणार्थः "धर्मे चार्थे च कामे च नातिचर्या त्वया त्वियम्" इति **स्मृते**रिति; तन्न; "प्राजापत्ये सह धर्मश्चर्यतामिति मन्त्रः" इति **गौतम**वाक्यविरोधेन तस्य विवाहान्तरविषयत्वात्। अन्ये तु 'सह धर्मं चरतम्' इति प्रार्थिताय प्रदानमित्येकार्थतां वर्णयन्ति॥ २२॥

**द्वयोः सकामयोर्मातापितृरहितो[2] योगो गान्धर्वः॥ २३॥ क्रयेणासुरः॥ २४॥ युद्धहरणेन राक्षसः॥ २५॥ सुप्तप्रमत्ताभिगमनात्[3] पैशाचः॥ २६॥**

[4]द्वयोः कन्यावरयोः सकामयोरन्योन्यानुरक्तयोः मातापितृभ्यां रहितः अननुज्ञातो योगः परस्परानुमतिर्गान्धर्वः॥ २३॥ क्रयः कन्यापितृप्रार्थितमूल्यदानम्। तेन ग्रहणमासुरः॥ २४॥ युद्धे कन्याया हरणेन राक्षसः॥ २५॥ सुप्ता निद्रिता। प्रमत्ता मदातिशयेन नष्टचेतना। तस्यामभिगमनं मैथुनम्। तस्मात् पैशाचः;

"सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः॥"

इति **मनु**स्मरणात्। "असंविज्ञातोपसंगमनात् पैशाचः" इति **गौतम**स्मरणाच्च। "ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति" "ऋतावुपेयात्" इत्यादिप्रयोगप्राचुर्येण उपगमनाभिगमने मैथुनमेवाभिदधाते। तदवस्थाया हरणमित्यन्ये; "सुप्तानां प्रमत्तानां वापहरेत् स पैशाचः" इति **आश्वलायन**स्मरणात्। अत्र गान्धर्वादिचतुर्षु दानाश्रवणात् तत्स्थानीयैर्योगादिभिरेव स्वत्वोत्पत्तिः। अनन्तरं संस्कारः। न तावन्मात्रेण भार्यात्वम्;

"गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये।
पूर्वं परिग्रहस्तेषां पश्चाद्धोमो विधीयते॥"

* एतच्च फलितार्थकथनम्। शब्दार्थस्तु—प्रार्थिते सति प्रदानेनेति। प्रार्थितं प्रार्थना।
[1] दानेन प्राजापत्यः—ग.
[2] रहितयोः—क, ख.
[3] अभिगमनेन—ज, ठ.
[4] From द्वयोः up to गान्धर्वः omitted in ख, ग.

इति **परिशिष्टात्**;

" बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ "

इति **वासिष्ठाच्च**। इदमपि क्षत्रियादिविषयम्; पुराणे तथा दर्शनात्। ब्राह्मणानां तु गान्धर्वादिष्वपि प्रतिग्रहेणैव स्वत्वोत्पत्तिः। परस्परानुमत्यादिकं तु वरणस्थानीयं पूर्वाङ्गमेव; न स्वत्वोत्पादकम्[1]।

" मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ।
प्रयुज्य तं विवाहेषु प्रदानं स्वाम्यकारणम् ॥
ब्राह्मादिषु विवाहेषु पञ्चस्वेषु विधिः स्मृतः ।
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥ "

इति **मनुनारदा**भ्यां सामान्यविशेषाभ्यामष्टस्वपि विवाहेषु दानप्रतिपादनात्। एष विधिः दानलक्षणः। गुणः ब्राह्मण्यम्; तस्यैव संप्रदानविशेषणेषु प्राधान्यात्। प्रतिग्रहलब्धस्यासाधारण्याच्च तदपेक्षासुरादिष्वपि त्रिषु दानं भवति ॥ २६ ॥

**[2]एतेष्वाद्याश्चत्वारो धर्म्याः ॥ २७ ॥ गान्धर्वोऽपि राजन्यानाम् ॥ २८ ॥**

एतेषु पूर्वोक्तेष्वष्टसु विवाहेषु आद्याश्चत्वारः ब्राह्मदैवार्षप्राजापत्या धर्म्याः धर्मजनकाः ब्राह्मणस्य; " चत्वारो ब्राह्मणस्याद्याः शस्ताः " इति **स्मरणात्** ॥ २७ ॥

राजन्यानां क्षत्रियाणां गान्धर्वः। अपिशब्दात् राक्षसश्च धर्म्यः; " गान्धर्वराक्षसौ राज्ञः " इति **स्मृतेः**। परिशिष्टौ आसुरपैशाचौ। तत्रासुरो वैश्यशूद्रयोः; " तथासुरो वैश्ये शूद्रे चान्यस्तु गर्हितः " इति [3]**नारदस्मरणात्**। [4]अन्यः पैशाचः स गर्हितः। न कस्यापि योग्य इत्यर्थः; " पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन " इति **मनुस्मरणात्**। यद्वा यो गर्हितः पैशाचः, सः अन्यः; अन्याः शूद्राः प्रतिलोमजादयश्च; तद्योग्य इत्यर्थः; " पैशाचः शूद्रस्य " इति **पैठीनसिस्मरणात्**; " पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानां च " इति **प्रचेतःस्मरणात्** ॥ २८ ॥

**ब्राह्मीपुत्रः पुरुषानेकविंशतिं पुनीते[5] ॥ २९ ॥ दैवीपुत्रश्चतुर्दश ॥ ३० ॥ आर्षीपुत्रश्च सप्त ॥ ३१ ॥ [6]प्राजापत्यश्चतुरः ॥ ३२ ॥**

[1] स्वत्वोत्पत्तिः—ग. [2] एतेषामाद्याः—ठ. [3] योगि—ख, ग.
[4] From here up to प्रचेतःस्मरणात् omitted in ग. [5] पुनाति—ठ.
[6] प्राजापत्यीपुत्रः—क; प्राजापत्यपुत्रः षट्—ज, झ, ठ.

वक्ष्यमाणतत्तत्फलार्हताहेतुमाह । ब्राह्मोढापुत्रो दशावरान् दश परान् दातारं चैकविंशं पुनाति वक्ष्यमाणलोकार्हान् करोति । "द्वादशावरान् द्वादश परान् पुनात्युभयतः" इति **शौनकः** । उभयतः; मातापितृकुले । दातुरात्मनश्च दातारमात्मानं च पञ्चविंशमर्थात् । सद्वृत्तश्चेत्; "आत्मानं चैकविंशकम् । ब्राह्मीपुत्रः सुकृतकृत्" इति **मानवात्** ॥ २९ ॥

दैवोढापुत्रश्चतुर्दश सप्त पूर्वान् सप्तावरान् दातारं पञ्चदशमर्थात् पुनाति । "दशावरान् दश परान् पुनात्युभयतः" इति **शौनकः** । व्याख्या च प्राग्वत् ॥ ३० ॥

आर्षोढापुत्रस्त्रीन् पूर्वान् त्रीन् परान् दातारं च सप्तमं पुनाति; "आर्षोढाजः सुतस्त्रींस्त्रीन्" इति **मानवात्** । "सप्तावरान् सप्त परान् पुनात्युभयतः" इति **शौनकः** ॥ ३१ ॥

प्राजापत्ये भवः प्राजापत्यः । स द्वाववरौ द्वौ पूर्वौ दातारं च पञ्चमं पुनाति; "षट् षट् कायोढजः सुतः" इति **मनुः**; "अष्टावरानष्ट परान् पुरुषान् पुनात्युभयतः" इति **शौनकः** ।

गान्धर्वादिषु फलावचनं तेषां दुष्टताममभिप्रेत्य । तदाह **मनुः**—

"इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥"

इति ॥ ३२ ॥

**[1]ब्राह्मेण विवाहेन कन्यां ददत् ब्रह्मलोकं गमयति ॥ ३३ ॥ दैवेन स्वर्गम् ॥ ३४ ॥ आर्षेण वैष्णवम् ॥ ३५ ॥ प्राजापत्येन देवलोकम् ॥ ३६ ॥ गान्धर्वेण गन्धर्वलोकं गच्छति ॥ ३७ ॥**

तेषां फलमाह । उक्तलक्षणेन ब्राह्मेण विवाहेन कन्यां ददत् दाता पूर्वोक्तसंख्याकान् पितॄन् ब्रह्मलोकं गमयति, स्वयं च गच्छतीति वक्ष्यमाणेन संबन्धः ॥ ३३ ॥ दैवेन कन्यां ददत् उक्तसंख्याकान् पितॄन् स्वर्गं गमयति, गच्छति च ॥ ३४ ॥ आर्षेण कन्यां ददत् उक्तसंख्याकान् पितॄन् विष्णुलोकं गमयति, गच्छति च ॥ ३५ ॥ प्राजापत्येन कन्यां ददत् उक्तसंख्याकान् पितॄन् देवलोकं गमयति, गच्छति च ॥ ३६ ॥ गान्धर्वेण कन्यां ददत् गन्धर्वलोकं स्वयमेव गच्छति; पुरुषसंख्याविशेषाश्रवणेन गमयतेरनन्वयात् । अत्र फलवचनं ब्राह्मणाभिप्रायेण; "षडानुपूर्व्याद्विप्रस्य" इति **मानवात्**; तं प्रत्येव दानस्य प्रागभिधानात् । न क्षत्रियाभिप्रायेण; तं प्रत्यस्यामुख्यत्वात् । आसुरादिलोकानामकाम्यत्वादवचनम् ॥ ३७ ॥

**पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः ॥ ३८ ॥ पूर्वाभावे प्रकृतिस्थः परः पर इति ॥ ३९ ॥**

[1] Sūtra-s 33 to 38 omitted in क, ज, ठ.

कन्याप्रदातॄनाह । पिता जनकः । पितामहः पितृपिता । भ्राता सोदर्यः । तेषु ज्येष्ठः, तदभावेऽन्यः । सकुल्यः सपिण्डः आ सप्तमात् यथासंनिकर्षम् । मातामहः मातुः पिता । स च मातुलमातृसकुल्यानामुपलक्षणम् । माता जननी । चकारात् सजातयः । इतिकारात् एवंविधसंबन्धिनो मातृपितृष्वस्रीयाः । एते पित्रादयः कन्यायाः ससंबन्धिकत्वात् प्रदातारो ज्ञेयाः । तदाह **नारदः**—

" पिता दद्यात् स्वयं कन्यां भ्राता वानुमते पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवास्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि तिष्ठति ।
तस्यामप्रकृतिस्थायां दद्युः कन्यां सजातयः ॥ "

इति ॥ ३८ ॥

तेषां क्रममाह । [1]एतेषां पित्रादीनां मध्ये पूर्वपूर्वाभावे, परः परो दानाधिकारी प्रकृतिस्थः अविक्षिप्तचित्तश्चेत् । तथात्वेऽधिकारिणापि कृतमकृतमेव । यथा **नारदः**—

" स्वतन्त्रोऽपि हि यत् कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥ "

इति ॥ ३९ ॥

**ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयं वरम् ।**
**ऋतुत्रये व्यतीते[2] तु प्रभवत्यात्मनः सदा ॥ ४० ॥**
**पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।**
**सा कन्या वृषली ज्ञेया हरंस्तां न[3] विदुष्यति ॥ ४१ ॥**

इति [4]श्रीविष्णुस्मृतौ चतुर्विंशोऽध्यायः

दातृभिरदाने कथमित्यत आह । ऋतवश्च ऋतवश्च ऋतवश्चेति ऋतवो वर्षाणि । तेषां त्रयम् ऋतुत्रयम्; वर्षत्रयमिति यावत्; षण्णामृतूनामेकवर्षात्मकत्वात् एकशेषेणोपात्तानां त्रित्वान्वयात् । उपास्यैव दातृशासनं प्रतीक्ष्यैव; नान्तरा । ऋतुमती कन्या स्वयमेव स्वसमानजातीयमुत्कृष्टजातीयं वा वरं कुर्यात्, यतो वर्षत्रयापगमे कन्या आत्मनो दाने प्रभुर्भवति । यथाह **बोधायनः**—

" त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥ "

[1] एषां—ख. [2] अव्यतीते—ख, ग. [3] च—झ, ठ; तु—ख.
[4] वैष्णवे धर्मशास्त्रे विवाहप्रकरणं चतुर्विंशम्—ज; वैष्णवे चतुर्विंशोऽध्यायः—क, झ.

इति। सदेति ऋतुदर्शनं विनापि वर्षत्रयमप्रतीक्ष्यैव दात्रभावे स्वयं वरं कुर्यादिति दर्शयति। तदाह **योगी**—"गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयं वरम्" इति। यत् ऋतुत्रयं रजोदर्शनत्रयमिति; तन्न; **बोधायन**विरोधात्। इदं च ब्राह्मणातिरिक्तविषयम् ॥ ४० ॥

स्वयंवराभावे कथमित्यत आह। या कन्या अनूढैव पितृगृहे रजस्वला भवेत्, सा वृषली। तद्धर्तुः पातकं राजदण्डो वा नास्ति, सजातीया अनुलोमा वा चेत्; "सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः" इति **योगि**स्मरणात्। दोषाभाववचनं हरणाभ्यनुज्ञानार्थम्;

"रजस्वला तु या कन्या पितृवेश्मनि तिष्ठति।
पित्रादयो न यच्छन्ति हरेत् तामविशङ्कितः॥"

इति **ब्राह्मात्**। इदमप्यब्राह्मणविषयम्;

"यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने॥"

इति ब्राह्मणस्य दोषश्रवणात्। एतेन,

"यत्करोत्येकरात्रेण वृषलीसेवनाद् द्विजः।
तद्भैक्ष्यभुग्जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति॥"

इति द्विजपदं व्याख्यातम् ॥ ४१ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज[2]**श्रीनन्द-पण्डित**कृतौ **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** चतुर्विंशोऽध्यायः

[1] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[2] श्री omitted in ग.

## पञ्चविंशोऽध्यायः

**अथ स्त्रीणां धर्माः ॥ १ ॥ भर्तुः समानव्रतचारित्वम् ॥ २ ॥ श्वश्रूश्वशुरगुरुदेवतातिथिपूजनम् ॥ ३ ॥**

विवाहानन्तरं स्त्रीधर्मान् पञ्चविंशेनाभिधातुं प्रतिजानीते । अथ विवाहानन्तरम्; विवाहादेव स्त्रीणां धर्माधिकारात्; "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः" इति **स्मरणात्** । स्त्रीणाम्; अविशेषेण सर्वासाम् । धर्माः कर्तव्यान्युच्यन्ते इति शेषः ॥ १ ॥

तानाह । भर्तुः व्रतेन भर्तृसंकल्पेन समानव्रतचारिणी समानसंकल्पा भवेत्; भर्तृसंकल्पानुसरणशीला स्यादित्यर्थः; "यत्र यत्र रुचिर्भर्तुस्तत्र प्रेमवती सदा" इति **स्कान्दात्**; "स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः" इति **योगिस्मरणाच्च** ॥ २ ॥

श्वश्रूश्वशुरौ प्रसिद्धौ । गुरुः ज्येष्ठादिः । देवता सौभाग्यदात्री गौर्यादिः । अतिथिः अध्वनीनः । तेषां पूजनं पादवन्दनादि; "कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा" इति **योगिस्मरणात्** । भर्तरि विशेषमाह **गौतमः**—"स्त्रीपुंयोगेऽभिवादतोऽनियममेके" इति । स्त्रीपुंयोगे जायापतिसमवाये अभिवादतः अभिवादने प्राप्ते अनियममेके मन्यन्ते । एक इति वचनात् गौतममते नियम एव ॥ ३ ॥

**[1]सुसंस्कृतोपस्करता ॥ ४ ॥ अमुक्तहस्तता ॥ ५ ॥ सुगुप्तभाण्डता ॥ ६ ॥**

सौष्ठवेन संस्कृता अनुलेपनादिभिः उपस्कराः शूर्पादयो यया, तथात्वम् । तथाच **शङ्खलिखितौ**— "श्वः श्वः पचनभाण्डानामनुलेपनं सुसंसृष्टगृहद्वारोपलेपनमग्निपरिचर्या गृहाङ्गणबलिकर्म पूर्वोत्थानं जघन्यशायित्वं देवपूजोपकरणसंपादनं पाकक्रियाकौशल्यं व्यञ्जनपरिष्कारो भर्तृवचनसंपादनं श्वशुरयोरभिवादनं मान्यमाननं च" इति ॥ ४ ॥

वलयाद्यशून्यहस्तता असद्व्ययपराङ्मुखता च; "व्यये चामुक्तहस्तया" इति **मानवात्** ॥ ५ ॥

[1] सु omitted in ज, झ; सुसंस्कृतगृहता—ठ.

सुतरामन्यापेक्षया अतिशयेन गुप्तानि गोपितानि भाण्डानि गृहोपकरणानि मुसलोलूखलादीनि यया, तथात्वम्। भाण्डसंरक्षणे अतिशयितयत्नवतीत्यर्थः। तथाच **हारीतः**—"पतितानि प्रतिकुर्यादगुप्तं गोपायेत्" इति ॥ ६ ॥

**मूलक्रियास्वनभिरतिः ॥ ७ ॥ मङ्गलाचारतत्परता ॥ ८ ॥**

मूलक्रियाः वशीकरणादिकर्माणि; तासु अनभिरतिः अरुचिमतीत्यर्थः। मूलक्रियेत्युपलक्षणम् "परशयनवस्त्राभरणानि मनसापि नाध्यवस्येत्। आ पुनः संस्कारात् एकपात्रमद्यमांसाद्युच्छिष्टनिर्माल्यं चान्यत्र गुरुभर्तृसुतेभ्यः" इति **हारीत**स्मरणात्; "पानाटनदिवास्वप्नमक्रिया दूषणं स्त्रियाः" इति **बार्हस्पत्याच्च**। आ पुनः संस्कारात्; मार्जनप्रक्षालनादिसंस्कारं यावत्। अक्रिया गृहकार्यानभिरुचिः। **वसिष्ठोऽपि**—"न भर्तारं तद्बन्धून् वा द्विष्यात्" इति ॥ ७ ॥

मङ्गलं हरिद्राकुङ्कुमाञ्जनादि। आचारो वृद्धस्त्रीणां, वस्त्राञ्चलेन दीपनिर्वापणादिः। तत्र तत्परा सादरा, तच्छीलत्वम्। तथा च **स्कान्दे**—

"स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत्।
स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न शुध्यति ॥
सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित्।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा।
कूर्पासकं च ताम्बूलं मङ्गलाभरणं शुभम् ॥
केशसंस्कारकबरीकरकर्णविभूषणम्।
भर्तुरायुष्यमिच्छन्ती दूषयेन्न कचित् सती ॥"

इति। **ऋष्यशृङ्गोऽपि,**

"मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च।
हसते बहु भाषेत सा नारी कुलदूषणी।
नित्यं स्नानकृतां वेणीमर्चयेत् पुष्पमालया ॥"

इति। स्नानाय कृतेत्युक्त्या वेणीबन्धनानन्तरं स्नानावगमात् अशिरस्कं स्नानमवगम्यते। तथाच **व्यासः**—

"सधवा सशिरःस्नानं नित्यमेव विवर्जयेत्।
अन्यत्र मलवद्वासस्तीर्थेष्वपि च पर्वसु ॥"

इति । **शङ्खोऽपि**—"नानुक्ता गृहान्निर्गच्छेत्, नानुत्तरीया, न त्वरितं व्रजेत्, न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः, न नाभिं दर्शयेत्, आगुल्फाद्वासः परिदध्यात्, न स्तनौ विवृतौ कुर्यात्, न हसेदपावृतं, न भर्तारं तद्बन्धून् वा द्विष्यात्, न गणिकाधूर्ताभिचारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहकक्कारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्; संसर्गेण हि चारित्रं दुष्यति दुष्यति" इति ॥ ८ ॥

**भर्तरि प्रवसितेऽप्रतिकर्मक्रिया ॥ ९ ॥ परगृहेष्वनभिगमनम् ॥ १० ॥ [1]द्वारदेशगवाक्षेष्वनवस्थानम् ॥ ११ ॥**

प्रोषितपतिकां प्रत्याह । भर्तरि पत्यौ प्रवसिते देशान्तरगते, न विद्यते प्रतिकर्म अलंकरणं क्रिया क्रीडादिश्च यस्याः सा तथोक्ता; पतिप्रवासे अलंकरणादिशून्या भवेदित्यर्थः । तदाह **योगीश्वरः**—

"क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥"

इति । **हारीतोऽपि**—"न प्रोषितेऽलंकुर्यान्न वेणीं मुञ्चेत्" इति । वेणीमोक्षाभावेन केशप्रसाधननिषेधः । तद्वृत्तिमाह **मनुः**—

"विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते [2]त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥"

इति । शिल्पैः; कर्तनादिभिः । **शङ्खलिखितावपि**—"प्रेङ्खाताण्डवविहारचित्रदर्शनाङ्गरागोद्यानयानविवृतशयनोत्कृष्टवासोभोजनकन्दुकक्रीडाधूपगन्धमाल्यालंकारदन्तधावनाञ्जनादर्शप्रसाधनादीनामस्वतन्त्राणां प्रोषितभर्तृकाणामनारम्भः" इति । प्रेङ्खा दोला । ताण्डवं नृत्यम् । विहारः क्रीडा । एषां चित्रान्तानां दर्शनम् । दर्शननिषेधात् अनुष्ठाननिषेधोऽर्थसिद्धः । विवृतं निष्प्रावरणं शयनम् । प्रसाधनादीनामनारम्भोऽस्वतन्त्राणामित्यन्वयः ॥ ९ ॥

भर्तरि प्रवसिते परेषां पितृश्वशुरभ्रातृमातुलादिव्यतिरिक्तानां गृहेषु अनभिगमनमभिरुच्या गमनाभावः । परगृहगमननिषेधात् तत्र वासनिषेधोऽप्यर्थसिद्ध एव । तथाच **बृहस्पतिः**—

"पित्रा भ्रात्रा सुतैर्न स्त्री वियुक्तान्यगृहे वसेत् ।
असत्सङ्गे विशेषेण गर्ह्यतामेति सा ध्रुवम् ॥"

इति । बहुवचनात् रथ्यादिग्रहणम्; "परगृहरथ्यावीथीचत्वरचतुष्पथसमाजप्रव्रजितालापांश्च नाभिगच्छेत् कूपपथसंस्थानं संधिवेलासंचरणं च वर्जयेत्" इति **हारीत**स्मरणात् ॥ १० ॥

[1] द्वारदेशगवाक्षकेषु—ठ.

[2] ह्यविधायैव—ग.

प्रकृतमाह । द्वारदेशो द्वारचत्वरः । गवाक्षो वातायनम् । तत्रानवस्थानमस्थिरता । बहुवचनात् कूपपथग्रहणम् ; हारीतवाक्यात् । अवस्थानमुपवेशोपलक्षणम् ;

" नोलूखले न मुसले न वर्धन्यां दृषद्यपि ।
न यन्त्रके न देहल्यां सती चोपविशेत् क्वचित् ॥ "

इति **स्कान्दात्** ॥ ११ ॥

**सर्वकर्मस्वस्वतन्त्रता ॥ १२ ॥ बाल्ययौवनवार्धकेष्वपि पितृभर्तृपुत्राधीनता ॥ १३ ॥ मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा ॥ १४ ॥**

सर्वेषु नित्यनैमित्तिककाम्येषु कर्मसु स्वातन्त्र्याभावः ; भर्त्राद्यनुज्ञापेक्षेत्यर्थः ;

" बाल्या वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं कर्म किंचिद् गृहेष्वपि ॥ "

इति **मनुस्मरणात्** । किंचित् लौकिकमलौकिकं वेति ॥ १२ ॥

तत्र हेतुः । बाल्यादिषु पित्राद्यधीनतानां यथाक्रममन्वयः । अपिशब्दात् एतेषामभावे ज्ञात्यधीनता । तेषामप्यभावे राजाधीनतेति ;

" रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः ।
कुलद्वयेऽपि चोच्छिन्ने राजा भर्ता प्रभुः स्त्रियाः ॥ "

इति **स्मरणात्** । भर्ता पोषकः । प्रभुर्नियोक्ता ॥ १३ ॥

मृतभर्तृकां प्रत्याह । पतिमरणानन्तरं यावज्जीवं ब्रह्मचर्यम् । ब्रह्मणि वेदे गृह्यमाणे यत् चीर्यते व्रतं तत् ब्रह्मचर्यम् । तच्च मधुमांसादिवर्जनं ब्रह्मचारिधर्मप्रकरणोक्तमविरुद्धं सर्वम् । यथाह **गौतमः**—" वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादनहर्षगीतनृत्यपरिवादनभयानि " इति । **भरद्वाजोऽपि**—" यावज्जीवं प्रेतपत्नी [1]उदकस्पर्शनमेकभुक्तमधःशय्या ब्रह्मचर्यं क्षारलवणमधुमांसवर्जनं च " इति । प्राह **प्रचेताः**—

" ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥

[1] भक्तं for भुक्तं—घ.

एकाहारः सदा कार्यो न द्वितीयः कदाचन ।
पर्यङ्कशायिनी[1] नारी विधवा पातयेत् पतिम् ॥
गन्धद्रव्यस्य संयोगो[2] नैव कार्यस्तया पुनः ।
तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः ॥
वैशाखे कार्तिके माघे विशेषनियमं चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं पुनः ॥ ”

इति । तर्पणं पुत्राद्यभावे इति प्राञ्चः, तन्न; नित्यवत् श्रवणविरोधात्;

“ अपुत्रा पुत्रवत् पत्नी पुत्रवत्यपि भर्तरि ।
श्राद्धं तिलोदकं कुर्याज्जलमात्रं तु पुत्रिणी ॥ ”

इति **रत्नावलीस्मरणाच्च** । **स्कान्देऽपि**—

“ विधवाकबरीबन्धो भर्तृबन्धाय जायते ।
शिरसो वपनं तस्याः पक्षे पक्षे विधीयते ॥
नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ।
नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥
कञ्चुकं न परीदध्यान्न वासो विकृतं वसेत् ॥ ”

इति । विकृतं माञ्जिष्ठादि । तद्दाहे [3]अग्निनिर्णयमाह **हारीतः**—“ आहिताग्निश्चेत् प्रमीयेत तदा औपासनावक्षणाग्निं परिगृह्य खर्पराग्निभिरनुसवनमिष्ट्वा वसेत् भर्तुः पितुः श्वशुरस्य वा गृहमाश्रित्य ” इति । अर्धाधानिनं मृतमाहिताग्निं त्रेताग्निना दग्ध्वा तत्पत्नी औपासनावक्षणस्थमुल्मुकावस्थितमौपसनाग्निं खर्पराग्निभिः “ भूमिर्भूम्ना ” इति चतसृभिः अनुसवनं त्रिकालमिष्ट्वा परिगृह्य श्वशुरादिगृहे वसेत् । तेन तद्दाहः । विधुरस्याहिताग्नेरप्येवमेव । तदाह **भरद्वाजः**—“ तयोर्यः पूर्वो म्रियेत यजमानः पत्नी वा तस्याग्निेत्रेतया पितृमेधः संपद्यते । पश्चात् तस्यौपासनेन ” इति । तस्य च परिचरणं नित्यं कार्यम्; “ स्त्री चैवं भर्तरि प्रमीते ” इति **भरद्वाजस्मरणात्** । परिचरेदित्यनुषज्यते ।

अनाहिताग्निपत्नीं प्रत्याह **हारीतः**—“ अनाहिताग्निश्चेदन्यमादध्याज्जनाग्निं वा परिगृह्य ” इति । प्रमीयेतेत्यनुषङ्गः । तदा तत्पत्नी स्वगृह्योक्तविधिनान्यमग्निमादध्यात् । जनाग्निं लौकिकाग्निं वा परिगृह्य परिचरेत् । निर्मन्थ्यमिति **भरद्वाजः**—“ औपासनेनानाहिताग्निं दहन्ति ; निर्मन्थ्येन पत्नीम् ” इति । सर्वाधानिपत्न्यपि त्रेताग्निभिः पतिं दग्ध्वा निर्मन्थ्यं परिचरेदाजीवितमन्ते तेनैव तद्दाहः ; “ निर्मन्थ्येन पत्नीम् ”

[1] शयनी—ख. [2] संभोगः—ग. [3] अग्नि omitted in ख.

इति **भरद्वाजस्मरणात्**। तदन्वारोहणं वा। [1]ऐच्छिकोऽयं विकल्पः। तं पतिमनुलक्ष्य आरोहणमग्नेः। न तु पश्चात्; चातुवर्ण्याविशेषबाधप्रसङ्गात्; "पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति" इति **स्मरणात्**। अन्वारोहणे महानभ्युदयः; नैमित्तिककाम्यत्वात्; जातेष्टिवत्[2]। तच्चागर्भिणीनामबालापत्यानामाचण्डालं साधारणो धर्मः;

"[3]बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति।
रजस्वला सूतिका च रक्षेद्गर्भं च गर्भिणी॥"

इति **बृहस्पतिस्मरणात्**। **व्यासोऽपि**—

"दिनैकगम्यदेशस्था साध्वी चेत् कृतनिश्चया।
न दहेत् स्वामिनं तस्या यावदागमनं भवेत्॥"

इति। **बृहन्नारदोऽपि**—

"बालापत्याश्च गर्भिण्यो ह्यदृष्टरजसस्तथा।
रजस्वला राजसुते नारोहन्ति हुताशनम्॥"

इति। राजसुते इति संबोधनं सगरमातुरिति प्राच्याः। गर्भिण्या अन्वारोहणे गर्भहननप्रत्यवायः; "गर्भिणी गर्भहननप्रत्यवायेन दुष्यति" इति **स्मरणात्**। वाशब्दात् प्रव्रज्या, "प्रव्रज्या वा स्त्रीणां चैके" इति **बोधायनस्मरणात्**। "स्त्रियाः श्रुतौ वा शास्त्रे वा प्रव्रज्या न विधीयते" इति **याम्यात्** एकीयत्वोपन्यासः॥१४॥

**नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्।**
**पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते॥ १५॥**
**पत्यौ जीवति या योषिदुपवासव्रतं चरेत्।**
**आयुः सा हरते भर्तुर्नरकं [4]चैव गच्छति॥ १६॥**
**मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता।**
**स्वर्गं गच्छत्यपुत्रापि यथा ते [5]ब्रह्मचारिणः॥ १७॥**

इति [6]श्रीविष्णुस्मृतौ पञ्चविंशोऽध्यायः

[1] ग omits this sentence.
[2] जातेष्टिवत् omitted in ख.
[3] बालसंबन्धिनी—ख.
[4] प्रतिपद्यते—ठ.
[5] ब्रह्मवादिनः—घ.
[6] वैष्णवे धर्मशास्त्रे स्त्रीधर्मप्रकरणं पञ्चविंशम्—ज.

ननु सर्वथैवास्वातन्त्र्ये स्त्रियाः कथं पारलौकिककर्मसिद्धिरित्यत आह । **यज्ञो महादानादिः** । **व्रतं** कृच्छ्रचान्द्रायणादि । उपोषितमुपवासः । एतानि पृथक् स्वातन्त्र्येण भर्त्राज्ञामन्तरेण स्त्रीणां **सभर्तृकाणां** स्वर्गार्थं न विधीयन्ते ; तादृशविध्यभावात् । किंतु यत् पतिं मनोवाक्कायकर्मभिः शुश्रूषते नातिक्रामति, **तेन** भर्त्रनुज्ञापालनपूर्वेणैव स्वर्गलोके महीयते भोगभाग्भवति, न स्वातन्त्र्यानुष्ठितैरेतैः । तथाचान्वयव्यतिरेकाभ्यां **मनुमार्कण्डेया**वाहतुः—

" न व्रतेनोपवासेन धर्मेण विविधेन च ।
[1]नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥
नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा ।
निष्फलं तु भवेत् तस्या यत् करोति व्रतादिकम् ॥ "

इति ॥ १५ ॥

पृथक् व्रतादिनिषेधे हेतुमाह । या जीवद्भर्तृका स्वातन्त्र्येण, उपवासश्च व्रतं च तयोः समाहारः, तत् कुर्यात्, सा भर्तुरायुर्हरते । तदपुण्येन नरकभाग्भवति । अनुज्ञया तु न दोषः ; " कामं भर्तुरनुज्ञया व्रतोपवासादीन्याचरेत् " इति **शङ्ख**स्मरणात् ; " भार्या भर्तुर्मतेनैव व्रतादीन्याचरेत् सदा " इति **कात्यायन**स्मरणाच्च ॥ १६ ॥

ननु ब्रह्मचर्यान्वारोहणयोः कथं ब्रह्मचर्यस्य विकल्पः ? नैमित्तिकत्वात् ; अन्वारोहणे च फलश्रवणेन काम्यतया विषमशिष्टत्वादित्यत आह । या मृतभर्तृका स्त्री साध्वी निषिद्धाचरणरहिता सती **ब्रह्मचर्ये** विशेषयत्नवती, सा स्वर्गं गच्छति । ननु अपुत्रायाः ब्रह्मचर्यमात्रेण कथं स्वर्ग इत्यत आह । यथा **नैष्ठिक**-**ब्रह्मचारिणः** अपुत्रा अपि ब्रह्मचर्येणैव स्वर्गभाजः, तथा साप्यपुत्रा स्वर्गभागिति । अयं च दृष्टान्तो **मनुना** स्पष्टीकृतः—

" अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥ "

इति । ब्रह्मचर्येण स्वर्गं गच्छतीत्येव वक्तव्ये यदपुत्रापीत्युक्तं, तत् " नापुत्रस्य लोकोऽस्ति " इति श्रुत्याकर्णनभ्रान्तचित्ततया अपत्यार्थं न यतितव्यमित्येतदर्थम् । तथाच **मनुः**—

" अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥ "

[1] This line omitted in ख.

इति । तस्मात् पुत्रोत्पत्त्या गृहस्थानामेव स्वर्गः; न विधवादीनाम् । ततश्च पुत्रोत्पत्तिनिरपेक्षस्य ब्रह्मचर्यस्यापि स्वर्गसाधनतया तुल्यफलकत्वात् विकल्पो युक्तः ॥ १७ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज[2]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां पञ्चविंशोऽध्यायः

1. From श्रीमन्महा up to पण्डितकृतौ omitted in घ.

2. श्री omitted in ग.

## षड्विंशोऽध्यायः

**सवर्णासु [1]बहुभार्यासु विद्यमानासु ज्येष्ठया[2] सह धर्मकार्यं कुर्यात् ॥ १ ॥ मिश्रासु च कनिष्ठयापि समानवर्णया ॥ २ ॥ [3]समानवर्णाया अभावे त्वनन्तरयैवापदि च ॥ ३ ॥ न त्वेव द्विजः शूद्रया ॥ ४ ॥**

स्त्रीधर्मप्रसङ्गेन [4]सवर्णासवर्णस्त्रीधर्मान् षड्विंशेनाह । सवर्णानेकभार्यासमवाये ज्येष्ठैव सहधर्मचारिणी पत्युः ॥ १ ॥ ज्येष्ठापवादमाह । मिश्रणं सवर्णासवर्णासमवायः । तत्र कनिष्ठापि सवर्णैव सहधर्मचारिणी ; न ज्येष्ठाप्यसवर्णा । चकारात् सवर्णज्येष्ठात्ययेऽपि सवर्णकनिष्ठाधिकारिणीति ॥ २ ॥ सवर्णापवादमाह । सवर्णाभावे आपदि च सवर्णाप्रतीक्षणे प्रधानबाधप्रसङ्गे चानन्तरैव । विप्रस्य क्षत्रियैव ; क्षत्रियस्य वैश्यैव । नैकान्तरा द्व्यन्तरा वा ॥ ३ ॥ विप्रस्यैकान्तराभ्यनुज्ञयाह । द्विजस्य विप्रादेः शूद्रा सहधर्मचारिणी नैव । विप्रस्यानन्तरानियमेनैव शूद्राप्रतिषेधात् पृथक् निषेधो वैश्याभ्यनुज्ञार्थोऽवगम्यते । स चायमापत्कल्पः । तेन चापद्यनन्तराभावे एकान्तरापि विप्रस्येति सिध्यति ॥ ४ ॥

**द्विजस्य भार्या शूद्रा तु धर्मार्थे न क्वचिद्भवेत्[5] ।**
**रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्तिता ॥ ५ ॥**
**[6]हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः ।**
**कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥ ६ ॥**
**दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।**
**नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥ ७ ॥**

इति [7]श्रीविष्णुस्मृतौ षड्विंशोऽध्यायः

1 बहुषु भार्यासु—ठ.
2 ज्येष्ठयैव—ठ.
3 समानवर्णाभावे—ठ.
4 सवर्णास्त्री—ख.
5 भवेत् क्वचित्—ख, ग, घ, ठ.
6 हीनजातिस्त्रियम्—ख.
7 वैष्णवे धर्मशास्त्रे धर्मनिर्णयप्रकरणं षड्विंशम्—ज, ठ.

तर्हि किमर्थं शूद्रापरिणयनं द्विजस्येत्यत आह । द्विजस्य त्रैवर्णिकस्य भार्या शूद्रा क्वचित् आपदि अनापदि च धर्मार्थं न भवति । किंतु रागातिशये रत्यर्थम् । एवकारः पुत्रार्थताप्रतिषेधार्थः ; "तत्रात्मा जायते स्वयम्" इति स्मरणात् । सहाधिकारिकधर्मस्य पूर्वेणैव निषेधात् पुनर्वचनमाश्रमधर्मनिषेधार्थम् ॥ ५ ॥

पुत्रार्थं तदुद्वाहे फलमाह । हीनजातिं शूद्रां स्त्रियं मोहात् उक्तदोषाज्ञानात् उद्वहन्तो द्विजाः ससंतानानि सान्वयानि कुलान्येव आशु पुरुषसंख्यामनपेक्ष्यैव शूद्रत्वं प्रापयन्ति ॥ ६ ॥

धर्मनिषेधे धर्मशब्दार्थमाह । यस्य द्विजातेः तत्प्रधानानि ; सैव शूद्रा प्रधानं सर्वोपकरणसंपादिका येषां तानि, तथाविधानि दैवपित्र्यातिथेयानि । दैवं देवपूजादि ; पित्र्यं श्राद्धादि ; आतिथेयम् अतिथिसत्कारादि । तस्य पितृदेवाः, बहुवचनादतिथयश्च तदुपक्लृप्तं नैवेद्यपिण्डभोजनादिं नाश्नन्तीति कर्मासिद्धिः । तत्कर्मापूर्वानिष्पत्त्या च स्वर्गमप्यसौ न गच्छतीति फलासिद्धिश्च ॥ ७ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[2]श्री**रामपण्डिता**त्मज[2]श्री**नन्दपण्डितकृतौ** श्री**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** षड्विंशोऽध्यायः

[1] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, चं.

[2] श्री omitted in गं.

## सप्तविंशोऽध्यायः

**गर्भस्य स्पष्टताज्ञाने निषेककर्म ॥ १ ॥ स्पन्दनात् पुरा[1] पुंसवनम् ॥ २ ॥**

एवं विवाहं तत्प्रसक्तानुप्रसक्तं चाभिधाय इदानीं तदनन्तरभाविनो गर्भाधानादिसंस्कारानाह। गर्भः ऋतुः; "बीजगर्भसमुद्भवम्" इति **योगिस्मरणात्**। तस्य स्पष्टतां प्रादुर्भावं ज्ञात्वा निषेकः गर्भाधानाख्यं कर्म कार्यमिति सर्वत्र संबन्धः। इदं च क्षेत्रसंस्कारत्वात् सकृत् कार्यम्; "अथ ऋतुमत्याः प्राजापत्यमृतौ प्रथमे" इति **परिशिष्टात्**। यद्यपि "निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः" "निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः" "यस्यैते चत्वारिंशत् संस्काराः" इत्यादिभिः **योगिमनुगौतमादि**वाक्यैः गर्भाधानस्य [2]गर्भसंस्कारत्वमवगम्यते, तथापि

"जायाया दक्षिणे नासारन्ध्रे सिञ्चेत्तु तद्रसम्।
उदरस्थे रसे तस्मिन्नाचान्तसलिलां सतीम्॥
उपगच्छेद्वधूमेवं गर्भस्य स्थिरता भवेत्।
विष्णुर्योनिं जपेत् सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती॥"

इत्यादि**शौनका**दिवाक्येषु द्वितीयानिर्दिष्टत्वेन वध्वादिसंस्कारत्वमेवोचितम्; अन्यथा प्रतिगर्भमावृत्त्यापत्तेः। यत्तु आधानेनाग्नेरिव गर्भस्य संस्कार इति, तन्न; प्रागाधानात् गर्भस्यैवासिद्ध्या [3]संस्कारासंभवेन दृष्टान्तवैषम्यात्; **मन्वादि**वाक्यानां तु संस्कृतक्षेत्रोत्पत्तिकताभिप्रायेणाप्युपपत्तेः; "गर्भाधानस्याकरणात् तस्यां जातस्तु दुष्यति" [4]इत्यसंस्कृतोत्पन्नस्य दुष्टत्वस्मरणादित्यलम्॥ १॥

स्पन्दनं गर्भस्य चलनम्। तत् चतुर्थे मासि भवति; "तस्माच्चलनादावभिप्रायं करोति" इति **शारीरकात्**। तस्मात् पुरा प्रागेव द्वितीये तृतीये वा मासि व्यक्ते गर्भे; "द्वितीये वा मासि पुंसवनं भवेत्" इति **जातूकर्ण्य**स्मरणात्। पुंसवनं गर्भस्य पुंरूपतापादकं कर्म। इदं च प्रतिगर्भमावर्तनीयम्; गर्भसंस्कारत्वात्; "तस्मात् पुंसवसंस्कारः प्रतिगर्भं प्रवर्तते" इति **शौनक**स्मरणात्। एतेन पुंसवनस्य क्षेत्रसंस्कारतया

[1] पुरा omitted in ज, ठ.
[2] गर्भ omitted in ग.
[3] संस्काराभावे तद्दृष्टान्त—ख.
[4] From here the reading of the line corrupt in ख.

सकृत्करणं मन्यमानो **विज्ञानेश्वरोऽपि** परास्तः। यत्तु "अथ सीमन्तोन्नयनं पुंसवनवत् प्रथमगर्भे" इति **पारस्करवचनं** तद्व्याख्याधारत्वेन प्रतीयते, तत्रापि पुंसवनवदित्यतिदेशो न सकृत्करणप्रापणार्थः; पुंसवनसूत्र एव तदनभिधानात्। किंतु पुंसवनीयपुंनक्षत्ररूपकालातिदेशार्थ इति [1]तद्भाष्यीयव्याख्यानादित्यलं वृद्धमर्मोद्भेदनेन ॥ २ ॥

**षष्ठेऽष्टमे [2]वा मासि सीमन्तोन्नयनम् ॥ ३ ॥ जाते च [3]दारके जातकर्म ॥ ४ ॥ आशौचव्यपगमे[4] नामधेयम् ॥ ५ ॥**

गर्भग्रहणमासात् षष्ठे अष्टमे वा मासि सीमन्तोन्नयनम्। सीमन्त उन्नीयते यस्मिन् कर्मणि तत्। यथाकुलधर्मं विकल्पः। अस्य च क्षेत्रसंस्कारत्वमेके मन्यन्ते;

"सकृत् संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥"

इति **हारीतस्मरणात्**। गर्भसंस्कारत्वमपरे;

"सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।
गर्भस्यैव तु संस्कारो [5]गर्भे गर्भे प्रयोजयेत् ॥"

इति **विष्णुस्मरणात्** ॥ ३ ॥ दारके कुमारे जाते गर्भकोशान्निर्गते सति जातकर्म मधुसर्पिर्हिरण्यनिकषाणां हिरण्येन प्राशनम् ॥ ४ ॥ विप्रादीनां स्वस्वाशौचव्यपगमोत्तरदिने नामधेयं नामकरणम्; "जननात् दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणम्" इति **परिशिष्टात्**। दशरात्रस्त्वाशौचोपलक्षणम्। **नारदस्तु** आशौचान्तं क्षत्रियादित्रयविषयमेवाह—

"जन्मनो दशमे वापि द्वादशे वापि तत्पुनः।
विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः ॥
शूद्राणामपि चैवं स्यात् सतां नामासतामपि ॥"

इति ॥ ५ ॥

**[6]मङ्गल्यं ब्राह्मणस्य ॥ ६ ॥ बलवत्[7] क्षत्रियस्य ॥ ७ ॥ धनोपेतं वैश्यस्य ॥ ८ ॥ जुगुप्सितं शूद्रस्य ॥ ९ ॥**

[1] तद्भाष्योपव्याख्यानात्—ग.
[2] वा मासि omitted in च, घ.
[3] कुमारे—च, घ.
[4] व्यपगमने—क.
[5] तस्माद्गर्भे—घ, च.
[6] माङ्गल्यं—घ, च.
[7] बलोपेतं—ज.

नाम्नि विशेषमाह । मङ्गलाय साधु मङ्गल्यम् । मङ्गलं नाम [1]उदर्कशुभसूचकं वस्तु । तदभिधानमेव शब्दस्य तत्त्वम् । तादृशं ब्राह्मणस्य नाम कर्तव्यम् ; यथा लक्ष्मीधर इत्यादि । मङ्गल्यग्रहणात् पालवर्मादिव्युदासः ॥ ६ ॥ बलवत् ; बलपर्यायशब्दार्थाभिधायकमिति यावत् । तादृशं क्षत्रियस्य ; यथा युधिष्ठिर इत्यादि ॥ ७ ॥ धनपर्यायशब्दार्थोपेतं वैश्यस्य ; यथा अर्थपतिरिति ॥ ८ ॥ जुगुप्सितं गर्होपेतं शूद्रस्य ; यथा लोकदास इति । यद्वा मङ्गलं सुखादिपर्यायः शर्मादिशब्दः । तस्मै साधु ; उपपदीभूतमिति यावत् । तादृशं विष्णुशर्मेति ब्राह्मणस्य । बलं बलसाधनं वर्मादि । तद्वत् क्षत्रियस्य, भीमवर्मेति । धनं गुप्तं, तदुपेतं तच्छब्दवत् वैश्यस्य, देवगुप्त इति । जुगुप्सितं निन्दितं दासत्वादि । तत् शूद्रस्य, धर्मदास इति । मङ्गलादिपर्यायाणामानन्त्येऽपि **मानवो** नियमो यथा—

" शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
गुप्तान्तं वैश्यजातेस्तु दासान्तं शूद्रजन्मनः ॥ "

इति । ब्राह्मणादिपदेषु पुंस्त्वस्योद्देश्यगतत्वादविवक्षा । तेन तत्स्त्रीणामपि तन्नियमः । तथा च **आश्वलायनः**— " तत्तत्स्त्रीणां तथा तथा " इति । तथेति शर्माद्यन्तम् । तस्य च स्त्रीत्वेऽपि " मनः " इति नान्तलक्षणस्य ङीपः प्रतिषेधात् ' गार्गीशर्मा ' इत्यादिः पुंवत्प्रयोगः । " डावुभाभ्यामन्यतरस्याम् " इति डाबन्तत्वे तु आबन्तवत् ' गार्गीशर्माम् ' इत्यादिरिति विशेषः । विशेषान्तरं चाह स एव— " युग्मानि त्वेव पुंसाम् ; अयुजानि स्त्रीणाम् " इति । युग्माक्षराणि पुंसाम् । अयुग्माक्षराणि स्त्रीणामित्यर्थः ; यथा सुभद्रा, सावित्रीत्यादि । ब्राह्मणादिग्रहणमन्येषामनियमाय ;

" देवालयगजाश्वानां वृक्षाणां वापिकूपयोः ।
सर्वापणानां [2]पृष्ठ्यानां [3]चिह्नानां योषितां नृणाम् ॥
काव्यादीनां कवीनां च पश्वादीनां विशेषतः ।
गजप्रासादयज्ञानां नामकर्म यथोचितम् ॥ "

इति **स्कान्दात्** ॥ ९ ॥

**चतुर्थे मास्यादित्यदर्शनम् ॥ १० ॥ षष्ठेऽन्नप्राशनम् ॥ ११ ॥**
**तृतीयेऽब्दे चूडाकरणम् ॥ १२ ॥**

सूत्रद्वयमिदं साकाङ्क्षमन्यतः पूरिताकाङ्क्षम् । ततश्च जन्मतः चतुर्थे मासि गर्भागारात् शिशुं बहिःकृत्य चन्द्रदर्शनं कारयेत् । तृतीये मासि बहिःकृत्य आदित्यदर्शनं कारयेदिति । यथाह **यमः**—

[1] शुद्धिसूचकं—ग. [2] पृष्यानां—ख, ग ; पृष्ठयानां—घ, च. [3] चिह्नान्तां—ग.

"ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥"

इति ॥ १० ॥

जन्मतः षष्ठे मासि [1]अन्नप्राशनं कार्यम् । तदभावेऽष्टमादौ ;

"जन्मतो मासि षष्ठे स्यात् सौरेणोत्तममन्नदम् ।
तदभावेऽष्टमे मासि नवमे दशमेऽपि वा ॥
द्वादशे वापि कुर्वन्ति प्रथमान्नाशनं द्विजाः ।
संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः ॥"

इति **नारद**स्मरणात् । नवम इति कन्याभिप्रायेण; "नरस्यान्नाशने युग्मं स्त्रीणां चान्नाशनेऽयुगम्" इति **गर्ग**स्मरणात् ॥ ११ ॥

गर्भतो जन्मतो वा तृतीयेऽब्दे चूडाकरणं शिखाधारणम्; "तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा शिखाकृतिः" इति **बृहस्पति**स्मरणात् । तृतीय इति कुलधर्मागतकालोपलक्षणम्;

"आद्येऽब्दे कुर्वते केचित् पञ्चमेऽब्दे तृतीयके ।
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ॥

इति **स्मरणात्** ॥ १२ ॥

**एता एव क्रियाः स्त्रीणाममन्त्रकाः ॥ १३ ॥ [2]तासां समन्त्रको विवाहः ॥ १४ ॥**

एता एव जातकर्मादिकाः क्रियाः स्त्रीणां कन्यकानाममन्त्रकाः मन्त्ररहिताः कार्याः । यद्यपि एतच्छब्देन प्रक्रान्तानां गर्भाधानादीनामपि परामर्शः संभवति, तथापि तदानीं गर्भस्य स्त्रीत्वानिश्चयात् "अविज्ञाता हि गर्भाः पुमांसो भवन्ति" इति न्यायेन नामन्त्रत्वम् । अस्तु तर्हि गर्भसंस्काराणां समन्त्रत्वम्; क्षेत्रसंस्काराणां तु कथं स्यात्? विवाहमात्रे समन्त्रत्वाभ्यनुज्ञानादिति चेत्—मैवम्; विवाहार्वाचीनास्वमन्त्रत्वविधानेनोत्तरत्र मन्त्रप्राप्त्या विवाहस्योपलक्षणत्वात् । अन्यथा अन्यसंस्कारस्यापि अमन्त्रत्वापत्तेः । एतदेव स्पष्टयितुमेवकारः । कुमारीणामिति वक्तव्ये स्त्रीग्रहणं स्त्रीनपुंसके संस्काराभावबोधनाय; "न मत्तोन्मत्तमूकषण्ढकुब्जवामनजड-बधिरान् संस्कुर्यात्" इति **शङ्खेन** षण्ढसामान्याभिधानात् ॥ १३ ॥ समन्त्रत्वे विधिमाह । तासां स्त्रीणां विवाहमारभ्य संस्कारः समन्त्रकः ॥ १४ ॥

[1] अन्नस्य प्राशनं—ग.

[2] तासां च—ज

**गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनम् ॥ १५ ॥ गर्भैकादशे राज्ञः ॥ १६ ॥ [1]गर्भद्वादशे विशः ॥ १७ ॥**

गर्भधारणमारभ्याष्टमेऽब्दे ब्राह्मणस्योपनयनं गायत्रीसंबन्धः; "सावित्र्याः प्रापणमुपनयनम्" इति **कात्यायन**स्मरणात्। गर्भाष्टमं जन्माष्टमोपलक्षणम्; "गर्भाष्टमेऽष्टमे वाब्दे" इति **स्मरणात्** ॥ १५ ॥ राज्ञः क्षत्रियस्य गर्भैकादशे एकादशे वा ॥ १६ ॥ विशो वैश्यस्य गर्भद्वादशे द्वादशे वा उपनयनमित्युभयत्रानुषज्यते; "राज्ञामेकादशे सैके विशाम्" इति **स्मरणात्**। नित्योऽयं कालः। काम्यमाह **आपस्तम्बः**—"अथ काम्यानि सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकाममुपनयेत्" इति। अयं च त्रैवर्णिकसाधरणः; अविशेषात्। ब्राह्मणादीन् प्रति तु सप्तमादीनां नित्यकाम्यत्वम्; संयोगपृथक्त्वन्यायात्। प्रागप्यष्टमात् काम्यकालमाह **मनुः**—

"ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे॥"

इति ॥ १७ ॥

**तेषां मुञ्जज्याबल्बजमय्यो मौञ्ज्यः ॥ १८ ॥ कार्पासशाणाविकान्युपवीतानि वासांसि च ॥ १९ ॥**

तेषां ब्राह्मणादीनाम्। मुञ्जः इषीकात्वक्। ज्या मूर्वा। बल्बजो दीर्घस्तृणजातिः। तन्मय्यः तन्निर्मिताः मौञ्ज्यो मेखलाः क्रमेण। ज्याशब्देन धनुषोऽपनीय ग्रहणं गम्यते। बल्बजः शाणसूत्राविलोमोपलक्षणम्; "शाणतान्तवी" "सौत्र्यो मेखलाः" "आवी वैश्यस्य" इति **मनुगौतमाश्वलायन**स्मरणात्। मेखला इति वक्तव्ये मौञ्जीग्रहणं ज्याद्यभावे सर्वेषां मुञ्जप्राप्त्यर्थम्; "सर्वेषां वा मौञ्जी" इति **शङ्ख**स्मरणात् ॥ १८ ॥

कार्पासं तूलम्। शणः शणत्वक्। अविः तल्लोम। तैर्निर्मिते वस्त्रोपवीते तेषां क्रमेण। चकारादन्यान्यप्याह **मनुः**—"वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च" इति। **वसिष्ठो**ऽपि—"कार्पासं ब्राह्मणस्य क्षौमं क्षत्रियस्य कौशेयं वैश्यस्य" इति। "कार्पासं वा सर्वेषाम्" इति **गौतमः**। उपवीतेऽप्येतत् समानम्; "कार्पासं चोपवीतं सर्वेषाम्" इति **पैठीनसि**स्मरणात् ॥ १९ ॥

**मार्गवैयाघ्रबास्तानि चर्माणि ॥ २० ॥ पालाशखादिरौदुम्बरा दण्डाः ॥ २१ ॥**

[1] गर्भात्—ग, च.

मृगः कृष्णः । व्याघ्रो द्वीपी । बस्तः छागः । तेषां चर्माणि क्रमेण । **मनुः** क्षत्रियस्य रौरवमाह । "गव्यं बस्ताजिनं वा वैश्यस्य" इति **वसिष्ठः** । "सर्वेषां वा गव्यम्" इति **पारस्करः** । वस्त्राजिनयोः परिधानोत्तरीयत्वेन विनियोगः ;

"तत्रादौ परिधानार्थं कल्पयेन्नववस्त्रकम् ।
यथोक्तमजिनं वापि कल्पयेदवगुण्ठनम् ॥"

इति **शौनकस्मरणात्** ॥ २० ॥ पलाशः किंशुकः । खदिरो गायत्री । उदुम्बरो जन्तुफलः । तत्प्रभवा दण्डाः क्रमेण । **मनुस्तु** बिल्ववटपैलवानप्याह । **शौनकस्तु** "औदुम्बरः क्षत्रियस्य, बैल्वो वैश्यस्य" इत्याह ॥ २१ ॥

**[1]केशान्तललाटनासादेशतुल्याः ॥ २२ ॥ सर्वे एव वा ॥ २३ ॥ अकुटिलाः सत्वचश्च ॥ २४ ॥ [2]भवदाद्यं भवन्मध्यं [3]भवदन्तं च भैक्ष्यचरणम् ॥ २५ ॥**

केशान्तदेशः निष्केशतोपलक्षितः ललाटान्तः । ललाटदेशः भ्रूमध्यम् । नासादेशः नासाग्रम् । तत्तुल्याः तत्पर्यन्ताः भूतलमारभ्य क्रमेण ॥ २२ ॥ सर्वेषां सर्वे एव वा दण्डा भवन्ति उक्ता अनुक्ताश्च । "सर्वे वा सर्वेषाम्" इति **शौनकः** । "एतेषामप्यलाभे तु सर्वेषां यज्ञियाः स्मृताः" इति **यमः** । "वार्क्षो वा दण्ड इत्यवर्णसंयोगेन" इति **पारस्करः** ॥ २३ ॥ सर्वेऽपि ते अकुटिलाः अवक्राः सत्वचः अनिष्कुषिताः । चकारः कीटकोटरादिव्यावृत्त्यर्थः । "अव्रणानग्निदूषिताः" इति **मनुः** । "-अपीडिता यूपवक्राः सशल्काः" इति **गौतमः** ॥ २४ ॥ आदिमध्यावसानेषु भवच्छब्दो भैक्ष्यचरणे क्रमेण योज्यः ॥ २५ ॥

**आ षोडशाद् ब्राह्मणस्य [4]सावित्री नातिवर्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥ २६ ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ २७ ॥**

उपनयनकालावधिमाह । षोडशद्वाविंशचतुर्विंशानि वर्षाण्यभिव्याप्य ब्रह्मक्षत्रविशां यथाक्रममुपनयनकालो नात्येति । आङ्यमभिविधौ, न मर्यादायाम् ;

"औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिः परोऽन्यस्य चतुर्विंशतिमः परः ॥"

[1] केशान्तललाटान्तांसदेश—ठ.
[2] भवदादिमध्यान्तं भैक्ष्य—ज, ठ.
[3] तदन्तं च—ग, झ.
[4] गायत्री—ज.

इति **व्यास**स्मरणात् । षोडशादिसंख्या गर्भतो जन्मतश्च ;

" सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।
सशिखं वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥ "

इति **यम**स्मरणात् । सावित्रीग्रहणं गायत्र्यादित्रितयप्राप्त्यर्थम् ; " गायत्र्या ब्राह्मणमुपनयीत । त्रिष्टुभा राजन्यम् । जगत्या वैश्यम् । सर्वेषां वा गायत्रीं " इति **कात्यायन**स्मरणात् । ताश्चाह **शातातपः**—" तत्सवितुर्वरेण्यमिति गायत्री ब्राह्मणस्य । देवसवितरिति त्रिष्टुप् राजन्यस्य । विश्वा रूपाणीति जगती वैश्यस्य " इति ॥२६॥

[1]अवध्यतिक्रम आह । अतः गर्भात् जन्मतो वा षोडशद्वाविंशचतुर्विंशवर्षादूर्ध्वं त्रयोऽप्येते ब्रह्मक्षत्रविशः यथाकालमपि मध्ये असंस्कृताः सावित्रीतः पतिताः उपनयनायोग्याः आर्याणां त्रैवर्णिकानां विगर्हिताः निन्द्याः ; व्यवहारायोग्या इति यावत् ; व्रात्यसंज्ञा भवन्ति ॥ २७ ॥

**यद्यस्य विहितं चर्म यत् सूत्रं या च मेखला ।**
**यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ २८ ॥**
**मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।**
**अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्[2] ॥ २९ ॥**

**इति [3]श्रीविष्णुस्मृतौ सप्तविंशोऽध्यायः**

उपनयनधर्मातिदेशमाह । यानि ब्राह्मणादीनां चर्मयज्ञोपवीतमेखलादण्डवस्त्राण्युपनयने अभिहितानि, तान्येव तेषां व्रतेषु महानाम्न्यादिषु भवन्ति ; तेषामपि वेदाध्ययनाङ्गोपनयनवत् महानाम्न्यध्ययनाङ्गोपनयनत्वात् ॥ २८ ॥

मेखलादिधारणस्य नित्यतां द्योतयति । मेखलाजिनदण्डोपवीतकमण्डलून् विनष्टान् अप्सु प्रास्य ब्रह्मचारी मन्त्रपूर्वकमन्यान् गृह्णीयात् ; ब्रह्मचर्याङ्गत्वात् तद्धारणस्य । प्रतिपत्तिविधानादेवानुक्तस्यापि कमण्डलोः पूर्वग्रहणमवगम्यते । यथाह **आश्वलायनः**—" अच्छिन्नान् धारयेन्नित्यं दण्डाजिनकमण्डलून् " इति ॥ २९ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेयश्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[5]श्री**रामपण्डिता**त्मज[5]श्री**नन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** सप्तविंशोऽध्यायः

[1] अवधि omitted in ग.
[2] मन्त्रतः—ज, ठ.
[3] वैष्णवे धर्मशास्त्रे संस्कारप्रकरणं सप्तविंशम्—ज, ठ.
[4] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[5] श्री omitted in ग.

# अष्टाविंशोऽध्यायः

**अथ [1]ब्रह्मचारिणां गुरुकुलवासः ॥ १ ॥ संध्याद्वयोपासनम् ॥ २ ॥ पूर्वां संध्यां जपेत् तिष्ठन् पश्चिमामासीनः ॥ ३ ॥**

[2]अष्टाविंशेन ब्रह्मचारिधर्मानाह । अथ उपनयनानन्तरं ब्रह्मचारिणां त्रैवर्णिकानां गुरोः अध्यापकस्य कुले अध्याप्यवर्गे वासः स्थितिः अध्ययनार्था विधीयते । गुरुरत्राध्यापकः ;

"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥"

इति **स्मरणात्** । न पितैव ; तत्राध्ययनाभावे दृष्टहानिः, अदृष्टार्थता च वासस्य स्यात् ; "गुरुं चैवाप्युपासीत स्वाध्यायार्थम्" इति गुरुकुलवासस्य दृष्टार्थत्वात् । एवं चाचार्यकुलवासस्मरणमप्यध्यापकत्वोपाधिना संगच्छते । यदा तु पितैवाध्यापयति तदाप्यध्यापकत्वमेव गुरुशब्दप्रवृत्तिनिमित्तम्, न पितृत्वम् । कुलं च शिष्यसमूहः ; "शौनकस्य कुलपतेः" इत्यादिदर्शनात् । तथाच **स्मर्यते**—

"शिष्याणां दशसाहस्रीं योऽध्यापयति नित्यशः ।
संभावयति चान्नाद्यैरसौ कुलपतिः स्मृतः ॥"

इति ॥ १ ॥

संधिः अहोरात्रयोरुपक्रमावसाने । तत्र विहिता क्रिया संध्या । तयोः द्वयम् ; सायंप्रातःकालभेदात् । तस्योपासनमनुष्ठानं ब्रह्मचारी कुर्यादिति विधीयते । यद्यपि "अहरहः संध्यामुपासीत" इत्याश्रमविशेषानादरेण तद्विहितं, तथापि आद्योपक्रमस्योपनयनानन्तर्यसूचनाय ब्रह्मचारिप्रकरणेऽस्यारम्भः, "उपायनादिमारभ्य सायं प्रातश्च कालयोः" इति **प्रजापतिस्मरणात्** । द्वयपदात् तृतीया नावश्यकीति गम्यते, "उभे संध्ये तु कर्तव्ये ब्राह्मणैः स्वगृहेष्वपि" इति **अत्रिस्मरणात्** ॥ २ ॥

पूर्वां सूर्योदयकालीनां संध्याम् । मुहूर्तद्वयं कालः प्रागुदयात् ;

"संध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्तकः ।
क्षत्रियस्य तदर्धं स्यात् तदर्धं स्याद्विशोऽप्युत ॥

[1] ब्रह्मचारिणः—ज ; ब्रह्मचारिणो गुरुकुले निवासः—झ.

[2] This sentence corrupt in ख, ग.

अर्धास्तमयवेलादि सायं नक्षत्रदर्शनात् ।
विप्रादीनां त्रयाणां तु सामान्यमिति केचन ॥ ”

इति **अत्रिस्मरणात्** । तामभिव्याप्य; द्वितीययात्यन्तसंयोगात् तिष्ठन् स्थित एव । पश्चिमाम्; सूर्यास्तमयकालीनामासीन एव गायत्रीं जपेत्; यावत्सूर्यनक्षत्रदर्शनम्;

“ जपन्नासीत सावित्रीं प्रत्यगा तारकोदयात् ।
संध्यां प्राक् प्रातरेवं हि तिष्ठेदा सूर्यदर्शनात् ॥ ”

इति **योगिस्मरणात्** ॥ ३ ॥

**[1]कालद्वयमभिषेकाग्निकर्मकरणम् ॥ ४ ॥ अप्सु दण्डवन्मज्जनम्[2] ॥ ५ ॥**

कालद्वयम्; सायं प्रातश्च । अभितः सेकोऽभिषेकः; परिसमूहनपर्युक्षणे; न स्नानम्; तत्पूर्वकमग्नौ कर्म समित्प्रक्षेपः; तत्करणम्;

“ अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदिष्यते ।
पर्यूहनोक्षणे स्यातामादावन्ते च कर्मणः ॥ ”

इति **यमस्मरणात्** । कालद्वयासंभवे सायमेवेति **आपस्तम्बः**—“ सायमेवाग्निपूजेत्येके ” इति ॥ ४ ॥

अप्सु जलाशये दण्डवत् स्नानीयमन्त्रवर्जमेव मज्जनमाप्लवः । अप्सु इत्यनेनोद्धृतोदकनिषेधः; “ आजीवस्नानाभ्यञ्जनवर्जम् ” इति **वसिष्ठस्मरणात्** । आजीवम्; उद्धृतोदकम् । मज्जनमित्यनेनाङ्गघर्षणादिनिषेधः; “ नाप्सु श्लाघमानः[3] स्नायात् ” इति **आपस्तम्बीयात्** । गोदानाद्येव स्नानमित्येके; “ एके गोदानादि ” इति **गौतमस्मणात्** । नित्यस्नानस्यायं प्रतिषेधः, न नैमित्तिकस्य; प्रकरणात् । तच्चैकवारमेव; “ सकृत्तु ब्रह्मचारिणः ” इति **कात्यायनीयात्** । त्रिषवणं त्वाचार्याज्ञयैव; “ तदाज्ञया त्रिषवणं स्नायीत च सदा शुचिः ” इति **आश्वलायनस्मरणात्** । नैष्ठिकानां तु नित्यं त्रिषवणम्; “ त्रिरह्नोऽभ्युपेयादपः ” इति **वसिष्ठस्मरणात्** ॥ ५ ॥

**आहूताध्ययनम् ॥ ६ ॥ गुरोः प्रियहिताचरणम् ॥ ७ ॥ मेखलादण्डाजिनोपवीतधारणम् ॥ ८ ॥ गुरुकुलवर्जं गुणवत्सु भैक्ष्यचरणम् ॥ ९ ॥ गुर्वनुज्ञातं भैक्ष्याभ्यवहरणम् ॥ १० ॥**

1 कालद्वयमभिषेकः अग्निकर्म च—ज, ठ. 2 स्नानम्—घ. 3 श्लाघायमानः—ख.

गुरुणाहूतेनाध्ययनं कार्यम् । यत्तु " चोदितो गुरुणा नित्यमप्रणोदित एव वा । कुर्यादध्ययने योगम् " इति **मानवम्**, तत् गुणाधिकाभिप्रायेण ॥ ६ ॥ गुरोः पूर्वोक्तस्य, प्रियमनुकूलं, हितमायत्यामुपकारकम्; तयोराचरणं यावज्जीवं कुर्यात्; " हितं चास्याचरेन्नित्यम् " इति **योगिस्मरणात्** ॥ ७ ॥ मेखलादीनि पूर्वोक्तानि । तेषां धारणम् । **यमः**—

" दण्डं कमण्डलुं वेदं मौञ्जीं च रशनां तथा ।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥ "

इति । वेदः; दर्भमुष्टिः ॥ ८ ॥ गुरोः कुलं स्वस्य च ज्ञातिबन्धुकुलानि वर्जयित्वा गुणवत्सु वेदयज्ञादिसंपन्नेषु भैक्ष्यं भिक्षासमूहः, तदर्थं चरणमटनम् । यथाह **मनुः**—

" गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अभावे त्वन्यगेहानां पूर्वपूर्वं परित्यजेत् ॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम् ॥ "

इति । वेदादियोगस्य त्रैवर्णिकसाधारण्येऽपि ब्राह्मणासंभवे क्षत्रियादौ ज्ञेयम्; " ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्येष्वात्मवृत्तये " इति **योगिस्मरणात्** । यत्तु " सार्ववर्णं चरेद्भैक्ष्यम् " इति, तत् त्रैवर्णिकाभिप्रायम् । तत्राप्यलाभे " चातुर्वर्ण्यं चरेद्भैक्ष्यम् " इति द्रष्टव्यम् ॥ ९ ॥ निवेदितस्य गुरुणानुज्ञातस्य भैक्ष्यस्याभ्यवहरणं भोजनम् । **गौतमः**—" निवेद्य गुरवेऽनुज्ञातो भुञ्जीत । असंनिधौ गुरोस्तद्भार्यापुत्रसब्रह्मचारिभ्यः " इति । **योगीश्वरोऽपि**—" आपोऽशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् " इति । सत्कारमाह **हारीतः**—" भैक्षमवेक्षितमवोक्षितं पर्यग्निकृतमादित्यदर्शितममृतं प्राहुर्लौहे मृन्मये वा पात्रे भुञ्जीत " इति । लोहग्रहणात् कांस्यनिषेधः;

" ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च[1] भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥ "

इति [2]**प्रचेतःस्मरणात्** । तच्च सायं प्रातः; " सायं प्रातर्भुञ्जीत " इति **गौतमीयात्** । तच्च भिक्षाचरणपूर्वम्; " सायं प्रातर्भिक्षेत " इति **शौनकीयात्** । नास्य ग्रासनियमः; " अमितं ब्रह्मचारिणः " इति **वासिष्ठात्** ॥ १० ॥

**[3]श्राद्धकृतलवणशुक्तपर्युषितनृत्यगीतस्त्रीमधुमांसाञ्जनोच्छिष्टप्राणिहिंसाश्लीलपरिवर्जनम् ॥ ११ ॥**

[1] पात्रेषु—ग. [2] प्रचेतसः—घ. [3] शुक्र for शुक्त—ख; प्राण for प्राणि—ज.

श्राद्धं पित्रादेः ;

" असमासव्रतस्यापि कर्तव्यं ब्रह्मचारिणः ।
श्राद्धादि मातापितृभिर्न तु तेषां करोति सः ॥ "

इति **ब्राह्मात्** । बहुवचनमाचार्यादिग्रहणाय । इदमधिकार्यन्तरसद्भावे । तदभावे तु न निषेधः ;

" निरन्वये सपिण्डे तु मृते सति दयान्वितः ।
तदशौचं पुनश्चीर्त्वा कुर्यात् तत्पितृवत् क्रियाम् ॥ "

इत्युक्तानन्तरवाक्यात् । एतेन,

" पण्डिता ज्ञानिनो मूर्खाः स्त्रियो वा ब्रह्मचारिणः ।
क्षयाहं समतिक्रम्य चण्डालाः कोटिजन्मसु ॥ "

इत्यादीनि **प्रचेतःप्रभृतिवाक्यानि** व्याख्यातानि । न तु श्राद्धभोजनम् ; तस्य त्रैवर्णिकसाधारण्याभावात् "ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्" इति ब्राह्मणस्याभ्यनुज्ञानाच्च । कृतलवणं कृत्रिमलवणम् । [1]शुक्तं निष्ठुरभाषणम्[2] ; " [3]शुक्ता वाचः " इति **गौतमीयात्** । न तु कालेनाम्लीभूतम् ; पर्युषितनिषेधेनैव तन्निषेधात् । पर्युषितं रात्र्यन्तरितम् । नृत्यं नाट्यम् । गीतं गानम् । स्त्री स्पर्शालापादौ ; " स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायाम् " इति **गौतमीयात्** । मधु क्षौद्रम् । मांसं भक्ष्यमपि । अञ्जनं कज्जलादिना अक्ष्णोः । उच्छिष्टम् अगुरोः । प्राणिहिंसा प्राणिपीडा ; न प्राणवियोगः ; तस्य " न हिंस्यात् सर्वभूतानि " इत्यनेनैव निषेधात् । अश्लीलम् असभ्यम् । एतेषां परिवर्जनम् । **गौतमोऽपि**—" वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादनस्नानदन्तधावनहर्षनृत्यगीतपरिवादभयानि[4] " इति ॥ ११ ॥

**अधः शय्या ॥ १२ ॥ गुरोः पूर्वोत्थानं चरमं संवेशनम् ॥ १३ ॥**
**कृतसंध्योपासनश्च गुर्वभिवादनं कुर्यात् ॥ १४ ॥**

अधः शय्या ; भूमौ शयनम् । अधोविधानात् खट्वानिषेधः ॥ १२ ॥ गुरोः शयनोत्थानात् पूर्वमुत्थानं शयनात् ; गुरुसंवेशनादनन्तरं च संवेशनम् ॥ १३ ॥ कृतं संध्याया उपासनं येन ; विहितयोः संध्यावन्दनाग्निकार्ययोरनुष्ठानं येन स तथोक्तः । गुरूणां मातापित्रादीनां वक्ष्यमाणानाम् अभिवादनं कुर्यात् । अभिवादनं नाम गुरोः स्वाभिमुख्येनाशीर्वचनानुकूलीकरणम् । तच्च नमस्कारविशेषेण । नमस्कारश्च पूज्यताप्रयुक्तः क्रियाविशेषः । अत एव **शातातपः**[5]—

[1] शुक्लं—ख, ग.    [2] वाक्यम्—ख, ग.    [3] शुक्लाः—ख.
[4] परिवादनभयानि—ग.    [5] अपि added in ख.

" अभिवाद्यो नमस्कार्यः शिरसा वन्द्य एव च ।
ब्राह्मणः क्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥ "

इति भेदेन व्याजहार ॥ १४ ॥

**तस्य च व्यस्यस्तकरः पादावुपस्पृशेत् ॥ १५ ॥ दक्षिणं दक्षिणेनेतरमितरेण ॥ १६ ॥ स्वं च नामास्याभिवादनान्ते भोःशब्दान्तं निवेदयेत् ॥ १७ ॥**

अभिवादनप्रकारमाह । व्यत्यस्तौ स्वस्तिकीकृतौ करौ येन स तथा, उक्तस्य गुरोः पादावुपस्पृशेत् । गुरुप्रक्रमेऽपि तस्येति वचनमन्यनिरासाय ; तस्य पादत उपरिष्टात् आजानूपसंग्रहणम् । यथाह **बोधायनः**— " श्रोत्रे संस्पृश्य मनः समाधायाधस्ताज्जान्वोरा पद्भ्यामन्योपसंग्रहणम् " इति ॥ १५ ॥ व्यत्यासे कारणमाह । दक्षिणं पादं [1]दक्षिणेन पाणिना सव्यं सव्येनोपस्पृशेत् । तच्च करव्यत्यासे भवति ॥ १६ ॥ तद्वाक्ये नियममाह । ' अभिवादये ' इति शब्दान्ते ' भोः ' इति शब्दः अन्ते यस्य तादृशं स्वं च नाम निवेदयेत् । तथाच ' अभिवादये विष्णुशर्माहं भोः ' इत्येषा वचनव्यक्तिर्भवति ; " असावहमिति ब्रुवन् " इति **योगिस्मरणात्** अस्मच्छब्दः । अन्ये गोत्रप्रवरानपि कीर्तयन्ति ;

" स्वगोत्रनामशर्माहं भो इत्यन्तेऽभिवादये ।
इत्येतद्भाषणं यत्तन्मन्त्रः स्यादभिवादने ॥ "

इति **भरद्वाजस्मरणात्** । तत्र च ' अमुकप्रवरान्वितोऽमुकगोत्रो विष्णुशर्माहं भोः ' इत्यन्ते ' अभिवादये ' इति वाक्यम् । गोत्रपरिचायकत्वात् प्रवरावश्यंभावः । तच्चोत्थाय कार्यम् ; " सर्वत्र प्रत्युत्थायाभिवादनम् " इति **आपस्तम्बीयात्** । प्रत्यभिवादनं त्वर्थसिद्धमिति नोक्तम् । तदाह **मनुः**—

" आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥ "

इति । तथाच ' आयुष्मान् भव देवदत्तशर्मा३न् अ ' इति वाक्यं संपद्यते । **वसिष्ठस्तु**— " योऽन्त्यः स्वरः स प्लवते संध्यक्षरमप्रगृह्यम् आउआइभावं संपद्यते " इति । तत्र च ' आयुष्मान् भव पिनाकपाणा३य ' इति ' विष्णा३व ' इति प्रयोगः । शूद्रविषये तु **आपस्तम्बः**— " नीचैः शूद्रः प्राञ्जलिः " इति । तत्प्रत्यभिवादने न प्लुतः ; " प्रत्यभिवादेऽशूद्रे " इति **पाणिनीयात्** । तेन ' आयुष्मानेधि तुषजक ' इति । स्त्रियामपि प्लुतो न ; " स्त्रियामपि प्रतिषेधो वक्तव्यः " इति **कात्यायनीयात्** । तेन ' आयुष्मती भव

[1] दक्षिणपाणिना—ख.

गार्गीशर्मन्' इति प्रयोगः; "मनः" इति ङीप्प्रतिषेधात्। "डाबुभाभ्यामन्यतरस्याम्" इति डाप्पक्षे 'गार्गीशर्मे' इति प्रयोगः ॥ १७ ॥

**तिष्ठन्नासीनः शयानो भुञ्जानः पराङ्मुखश्च नास्याभिभाषणं कुर्यात् ॥ १८ ॥ आसीनस्य स्थितः [1]कुर्यादभिगच्छंस्तु गच्छतः। आगच्छतः प्रत्युद्गम्य पश्चाद्धावंस्तु धावतः ॥ १९ ॥**

तिष्ठन् स्थितः। आसीन उपविष्टः। शयानः तिर्यग्भूतः। भुञ्जानः अभ्यवहरन्। पराङ्मुखः; चकारादन्यदपि कर्म कुर्वन् अस्य गुरोः अभिभाषणं प्रत्युत्तरदानं न कुर्यात्। प्रत्युत्तरं प्रतिश्रवणोपलक्षणम्; "प्रतिश्रवणसंभाषे शयानो न समाचरेत्" इति **मानवात्**। प्रतिश्रवणमाज्ञास्वीकारः ॥ १८ ॥ कथं तर्हि? इत्यत आह। उपविष्टस्याग्रे तिष्ठन्, गच्छतः पराङ्मुखस्याभिगच्छन् संमुखीभवन्; तिष्ठत इति वा पाठः; आगच्छतः प्रत्युद्गम्य, धावतः पश्चाद्धावन् प्रत्युत्तरप्रतिश्रवणे कुर्यात् ॥ १९ ॥

**पराङ्मुखस्याभिमुखः ॥ २० ॥ दूरस्थस्यान्तिकमुपेत्य ॥ २१ ॥ शयानस्य प्रणम्य ॥ २२ ॥ तस्य च चक्षुर्विषये न यथेष्टासनः स्यात्[2] ॥ २३ ॥ न चास्य केवलं नाम ब्रूयात् ॥ २४ ॥**

पराङ्मुखस्योपविष्टस्य तिष्ठतो वा अभिमुखो भूत्वा ते कुर्यात् ॥ २० ॥ दूरस्थस्य निकटे गत्वा ते कुर्यात् ॥ २१ ॥ शयानस्य तिर्यग्भूतस्य प्रणम्य ते कुर्यात् ॥ २२ ॥ तस्य गुरोः चक्षुर्विषये समक्षं यथेष्टम् अवसक्थिकादिबन्धेन आसनं यस्येति स तथोक्तः न स्यात्। तदाह **गौतमः**—"गुरुदर्शने कण्ठप्रावृतावसक्थिकापाश्रयपादप्रसारणानि वर्जयेत्" इति। विशिष्टनिषेधेऽप्यत्र विशेष्यनिषेधोऽपि पृथक्;

"ऊर्ध्वं प्राणा व्युत्क्रामन्ति यूनः स्थविर आगते।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥"

इति **मानवात्**। चकारात् हसितादि; "निष्ठीवितहसितविजृम्भितावस्फोटनानि" इति **गौतमीयात्** ॥ २३ ॥ अस्य गुरोः केवलं श्रीशब्दादिशून्यं नाम न कुर्यात् समक्षं परोक्षं वा; "नोदाहरेदस्य नाम परोक्षमपि केवलम्" इति **मानवीयात्**। यत्तु

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
आयुष्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥"

इति, तत् काम्यम्; आयुष्काम इति श्रवणात् ॥ २४ ॥

[1] कुर्यात्। तिष्ठतस्त्वभिगच्छन्, आगच्छतः प्रत्युद्गतः, पश्चाद्धावन् धावतः—उ.

[2] भवेत्—ठ.

**गतिचेष्टाभाषिताद्यं[1] नास्यानुकुर्यात् ॥ २५ ॥ यत्रास्य निन्दापरिवादौ स्यातां न तत्र तिष्ठेत् ॥ २६ ॥ नास्यैकासनो भवेत् ॥ २७ ॥ ऋते शिलाफलकनौयानेभ्यः ॥ २८ ॥**

गतिर्गमनम् । चेष्टा हस्तपादादिक्रिया । भाषितं वाक्यपरिपाटी । आदिशब्दात् मनोरथादिकल्पनम् । एतान् परिहासेच्छया गुरोः नानुकुर्यात् ॥ २५ ॥ निन्दा असद्दोषख्यापनम्; परिवादः विद्यमानदोषोद्घाटनम्; तद्द्वयं यत्र गुरोर्भवेत्, तत्र न तिष्ठेत् । ततोऽन्यत्र गच्छेत्; कर्णौ वा पिधातव्यौ; "कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः" इति **मानवात्** ॥ २६ ॥ एकत्रासने गुरुणा समं न तिष्ठेत् । गुरुप्रक्रमे पुनरेतच्छब्दोऽन्येषामप्येतद्धर्मप्राप्त्यर्थः । यथा **मनुः**—

"विद्यागुरुष्वेवमेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्स्वपि ॥"

इति । विद्याः पुराणाद्याश्चतुर्दश ॥ २७ ॥ अस्यापवादमाह । शिलाफलकं शिलापट्टः । नौः तरिः । यानं रथाश्वादि । तैर्विना । तत्रैकासने न दोषः । बहुवचनात् प्रासादादिग्रहणम्;

"गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥"

इति **मानवात्** ॥ २८ ॥

**गुरोर्गुरौ संनिहिते गुरुवद्वर्तेत ॥ २९ ॥ अनिर्दिष्टश्च गुरुणा [2]स्वान् गुरून् नाभिवादयेत् ॥ ३० ॥ बाले समानवयसि वाध्यापके गुरुपुत्रे गुरुवद्वर्तेत ॥ ३१ ॥ नास्य पादौ प्रक्षालयेत् ॥ ३२ ॥ नोच्छिष्टमश्नीयात् ॥ ३३ ॥**

गुरोर्गुरुः अध्यापकस्याध्यापकः । तस्मिन् संनिहिते समागते गुरुवत् अभिवादनादि सर्वं कुर्यात् । द्वयोः समवाये क्रम **आपस्तम्बेनोक्तः**—"आचार्यप्राचार्यसमवाये प्राचार्यमुपसंगृह्योपजिघृक्षेदाचार्यम्" इति ॥ २९ ॥ गुरुणा अनिर्दिष्टः अननुज्ञातः स्वान् गुरून् पितृव्यादीन् नाभिवादयेत् । पित्राचार्ययोः समवाये विकल्पः;

"उत्थाय मातापितरौ पूर्वमेवाभिवादयेत् ।
आचार्यश्च ततो नित्यमभिवाद्यो विजानता ॥"

[1] भाषितादि—ठ.

[2] न स्वान् गुरुनभिवदेत्—ठ.

इति **ब्राह्मात्**; "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" इति **मानवाच्च**। गुणाधिकस्य प्राथम्यं वा॥ ३०॥ पुनरतिदेशमाह। बाले न्यूनवयसि समानवयसि वाध्यापयति गुरुपुत्रे गुरुवत् वर्तेत। नेदमखिलवेदाध्यापकत्वप्रयुक्तम्; आचार्योपसदनविधिनैव सिद्धत्वात्। नाप्येकदेशाध्यापकत्वप्रयुक्तम्; उपाध्यायोपसदनविधिना गतत्वात्। नापि गुरुपुत्रत्वप्रयुक्तम्; अध्यापकत्वविशेषणानर्थक्यात्। तस्मात् एवं व्याख्येयम्—यो गुरौ स्नानादिव्यापृते वर्गं वर्गद्वयं वाध्यापयति, तं प्रतीदमुच्यते। बालादिविशेषणमनध्यापकेऽपि[1] ज्येष्ठे गुरुपुत्रे गुरुवृत्तिप्राप्त्यर्थम्;

"श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत्।
गुरुपुत्रे तथाचार्ये गुरोश्चैव सबन्धुषु॥"

इति **मनुना** अध्यापकगुरुपुत्रादस्य पृथगभिधानात्। वाशब्दात् शिष्यस्यापि ग्रहणम्;

"बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति॥"

इति [2]**मनुस्मरणात्**। यज्ञकर्मणीति यज्ञकर्मविषयककल्पादिग्रन्थप्रदर्शनेनाङ्गादीन्युपलक्ष्यन्ते। तेषु शिष्योऽपि अध्यापिताङ्गादिविद्योऽपि वेदाध्यापनेन गुरुवन्मान्यः। यदा तु गुरुपुत्रोऽपि अस्मादेवाधीतवेदान्तरो वेदान्तरमध्यापयत्यस्मै, न तदैवम्॥ ३१॥ उक्तापवादमाह। अस्य गुरुपुत्रस्य पादौ न प्रक्षालयेत्। प्रशब्दात् स्नापनादि च॥ ३२॥ तस्योच्छिष्टं च नाश्नीयात्;

"उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने।
न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम्॥"

इति **मानवात्**॥ ३३॥

**एवं वेदं वेदौ वेदान् वा स्वीकुर्यात्॥ ३४॥ ततो वेदाङ्गानि॥ ३५॥ यस्त्वनधीतवेदोऽन्यत्र श्रमं कुर्यादसौ ससंतानः शूद्रत्वमेति॥ ३६॥**

एवम् उक्तेन प्रकारेण एकं द्वौ त्रीन् वा वेदान् स्वीकुर्यात्। वेदशाखास्वीकारश्चान्यानपेक्षपाठक्षमता। सा चार्थज्ञानावसायिनी; तेन विना कर्मानुष्ठानासिद्धेः। यथा **पराशरः**—

"ज्ञातव्यः सर्वदैवार्थो वेदानां कर्मसिद्धये।
पाठमात्रमधीते यः पङ्के गौरिव सीदति॥"

[1] अध्यापकेऽपि—ख, च.

[2] मानवात्—ख.

इति । कर्मानधिकारेऽप्यर्थज्ञानमावश्यकम् ; "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति **स्मरणात्** । यद्यपि प्रथमोपादानेन एकवेदाध्ययनस्यैव मुख्यकल्पत्वमवगम्यते, तथापि त्र्यध्ययनं मुख्यकल्पः ; तामृते वैतानिकक्रमासिद्धेः । ततश्च त्र्यध्ययनाशक्तस्यैकवेदाध्ययनमनुकल्प एव । तथाच **मनुः**—"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्" इति । प्रथमोपादानं तु स्वशाखाभिप्रायेण ; "अधीत्य शाखामात्मीयां परशाखां ततः पठेत्" इति **वासिष्ठात्** ॥ ३४ ॥

ततो वेदाध्ययनानन्तरं वेदाङ्गानि शिक्षादीनि स्वीकुर्यात् । यद्यपि,

"एवं दण्डादिकैर्युक्तं संस्कृत्य तनयं पिता ।
वेदमध्यापयेत् पश्चाच्छास्त्रं मन्वादिकं तथा ॥

इति **बृहस्पतिना** स्मृतीनामपि पश्चादध्ययनमुक्तम् ; तथापि वेदाध्ययनात् स्मार्तयमनियमादिज्ञानायाथात् पूर्वमेवेति ज्ञेयम्। तेन स्मृतिव्यतिरिक्तानां पुराणादीनां पश्चादध्ययनं सिद्धम् ॥ ३५ ॥

तद्व्युत्क्रमं निन्दति । नाधीता वेदाः वेदौ वेदो वा येनासौ अनधीतवेदः ;वेदमनधीत्यैवेति यावत् । यः अन्यत्र शास्त्रादौ श्रममभ्यासं कुर्यात्, स ससंतानः शूद्रत्वमाप्नोति; शूद्रवत् कर्मानधिकारी भवतीत्यर्थः ॥३६॥

**मातुरग्रे [1]विजननं द्वितीयं मौञ्जिबन्धनम्[2] ॥ ३७ ॥ तत्रास्य माता सावित्री [3]भवति पिता त्वाचार्यः ॥ ३८ ॥ एतेनैव तेषां[4] द्विजत्वम् ॥ ३९ ॥ प्राङ् मौञ्जीबन्धनाद् द्विजः शूद्रसमो भवति ॥ ४० ॥**

द्विजत्वमुपपादयति । अग्रे प्रथमं विजननं जन्म मातुः सकाशात् । द्वितीयं जन्म मौञ्जिबन्धनम् उपनयनम् । तृतीयं दीक्षेत्यपि द्रष्टव्यम् ;

"मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनम् ।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥"

इति **मानवात्** । न चैवं त्रिजन्मेत्युच्येत ; दीक्षाया उत्तरक्रतुमात्राधिकारापादकत्वेनोपनयनवत् कर्ममात्राधिकारानापादकत्वात् ॥ ३७ ॥ तत्र पितरावाह । तत्रोपनयाख्ये द्वितीये जन्मनि, अस्य त्रैवर्णिकवटोः सावित्री माता ; आचार्यः पिता भवति ॥ ३८ ॥ निगमयति । एतेन द्वितीयेनोपनयनाख्येन जन्मना तेषां त्रैवर्णिकानां द्विजत्वम् । एवकारो निषेकादिश्मशानान्तसंस्कारवतोऽप्यनुपनीतस्य द्विजत्वनिरासार्थः । बहुवचनात् अनुपनीतोत्पन्नानां पुत्रपौत्रप्रपौत्राणामप्यद्विजत्वं गमयति । अत एव **आपस्तम्बः**—"यस्य पिता पितामह

[1] अधिजननम्—ठ.
[2] बन्धने—ठ.
[3] पिता त्वाचार्य उच्यते—ठ.
[4] एषां—ठ.

इत्यनुपेतौ स्यातां तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्यम्; यस्य प्रपितामहादेर्नानुस्मर्येतोपनयनं तस्य द्वादश-वर्षाणि " इत्याह ॥ ३९ ॥ प्रागुपनयनादाह । उपनयनं यावत् द्विजस्त्रैवर्णिकः शूद्रसमः शूद्रवत् वेदानधिकरी भवति । न तु शूद्रधर्मा; अनुपनीतस्यापि नमोमन्त्रेण पञ्चयज्ञोपपत्तेः । न चोपनयनकालं लक्षयति; कालात्यये सर्वकर्माधिकारप्रसङ्गात् । तच्चेदं मुख्यगौणकालानुपनीतसाधारणम्; अनुपनीतत्वाविशेषात् । व्रात्यत्वं परमधिकम्; व्रात्यस्तोमाम्नानात्; "श्रौतस्मार्ताधिकारी स्यान्नौपनायनिकं विना " इति **भृगुस्मरणात्** । न चोपनयनेनैव व्रात्यत्वमप्यपैति; प्रायश्चित्तानन्तरमुपनयनविध्यनुपपत्तेः । तस्मात् ब्राह्मणपरिव्राजकवत् सामान्य-विशेषाविमे । तेन " न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यात् । न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात् " इत्युभयसाधारणं सिद्धम् ॥ ४० ॥

**ब्रह्मचारिणा मुण्डेन जटिलेन वा भाव्यम् ॥ ४१ ॥ वेद-स्वीकरणादूर्ध्वं गुर्वनुज्ञातस्तस्मै वरं दत्त्वा स्नायात् ॥ ४२ ॥**

त्रैवर्णिकेन ब्रह्मचारिणा मुण्डेन उत्सर्वकेशेन, जटिलेन जटाभारवता वा भवितव्यम् । जटा केशसंहतिः । वाशब्दात् शिखाजटो वा; "मुण्डजटिलशिखाजटाश्च " इति **गौतमस्मरणात्** । मुण्डत्वं छन्दोगविषयम्; "वापयेच्छिखावर्जम् " इति समावर्तनीयखा**दिरसूत्रात्** प्राक् मुण्डत्वसिद्धेः । जटिलत्वं नैष्ठिकविषयम्, "अक्लृप्तलोमकेशनखः " इति **देवलस्मणात्** । शिखामात्रमेव जटा यस्यासौ तथा; "शिखाजटो वा वापयेदितरान् " इति **आपस्तम्बस्मरणात्**[1] । इतरविषयमिदम्; यथावर्णं वा ॥ ४१ ॥

वेदस्य वेदयोर्वेदानां वा स्वीकारः पूर्वोक्तः । तस्मादूर्ध्वं गुरुणा अनुज्ञातो गुरवे वरमभिलषितं दत्त्वा स्नायात् समावर्तेत । स्नानपदोपादानमर्वाक् गोदानात् स्नानस्यानित्यताबोधनाय; "अपामुपस्पर्शनमेके गोदानात् " इति **गौतमीयात्** । यद्यपि क्त्वाप्रत्ययेन स्नानपूर्वकालत्वं वरदानस्याविशेषेण गम्यते, तथापि विद्यास्नातकव्रतस्नातकयोरेव तत्संभवः, वेदस्वीकरणोत्तरकालतायास्तत्रैव संभवात् । न तु व्रतस्नातके; असमाप्तविद्यस्यैव व्रतमात्रेण स्नानविधानात् । तत्र तु स्नानविद्यान्तकालयोर्विरोधेन दक्षिणाकालेऽपि विकल्पः, "स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् " "विद्यान्ते गुरुरर्थेन निमन्त्र्यः " इति **मनुगौतमाभ्यां** कालद्वयविधानात् । अनुज्ञानवरदानयोरप्यर्थाद्विकल्पः, वरदानेनाप्यनुज्ञाया एव साध्यत्वात् । अत एव **गौतमः**—"कृत्वानुज्ञातस्य वा स्नानम् " इति । वरदानमिति शेषः । तच्चाह **मनुः**—

"क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ।
धान्यं वासांसि शाकं वा गुरवे प्रीतिमावहेत् ॥ "

इति ॥ ४२ ॥

[1] आपस्तम्बीयात्—ख.

**[1]ततो गुरुकुल एव वा जन्मनः शेषं नयेत् ॥ ४३ ॥ तत्राचार्ये प्रेते गुरुवत् गुरुपुत्रे वर्तेत ॥ ४४ ॥ गुरुदारेषु सवर्णेषु वा ॥ ४५ ॥ तदभावेऽग्निशुश्रूषुर्नैष्ठिको ब्रह्मचारी स्यात् ॥ ४६ ॥**

नैष्ठिकं प्रत्याह । तत इति पञ्चम्या वेदस्वीकरणादित्येव परामृश्यते ; न संनिहितमपि स्नानम् । पञ्चमीकल्पनात् ऊर्ध्वमित्यनुषज्यते ; अपेक्षितत्वात् । तेन वेदाध्ययनानन्तरं न स्नायात् ; किंतु गुरुकुल एवायुःशेषं नयेत् ॥ ४३ ॥ तत्र गुरुकुलावासे क्रियमाणे आचार्यश्चेत् प्रमीयेत, तदा गुरुपुत्रे गुरुवत् वर्तितव्यम् ॥ ४४ ॥ गुरुपुत्रे प्रेते गुरुदारेषु । दारशब्दोपादानं बह्वीषु अन्यतमप्राप्त्यर्थम् । सवर्णग्रहणमसवर्णनिरासाय । वाशब्दो वृद्धादिग्रहणाय ; " तदभावे वृद्धे सब्रह्मचारिण्यग्नौ वा " इति **गौतमीयात्** ॥ ४५ ॥ गुरुदाराद्यभावे अग्निमेव शुश्रूषेत् समिदाधानादिना । ब्रह्मचारी वेदोद्धरणशीलश्च । नैष्ठिकः ; यावज्जीविको ब्रह्मचर्यनियमो निष्ठा । तद्वान् नैष्ठिकः स्यात् ; " गुरोः कर्मशेषेण जपेत् " इति **गौतमीयात्** । शुश्रूषातिरिक्तकाले वेदं जपेदित्यर्थः ॥ ४६ ॥

**एवं चरति यो विप्रो ब्रह्मचर्यमतन्द्रितः ।**
**स [2]गच्छत्युत्तमं स्थानं न चेहाजायते पुनः ॥ ४७ ॥**

नैष्ठिकस्य फलमाह । एवमुक्तरीत्या यो विप्रः अतन्द्रितः अनलसः सन् ब्रह्मचर्यं चरति, स उत्तमं स्थानम् ; स्थीयतेऽस्मिन् जगदिति स्थानं ब्रह्म ; गच्छति प्राप्नोति ; " ब्रह्मलोकमवाप्नोति " इति **योगिस्मरणात्** । ब्रह्मैव लोको ब्रह्मलोक इति व्याख्येयम् ; अन्यथा अपुनरावृत्तिस्मरणविरोधात् । तामेवाह । न चेह संसारे पुनराजायते प्रभवतीति । विप्रग्रहणात् ब्राह्मणस्यैव नैष्ठिकत्वम् ; नान्येषाम् । अन्ये तु प्रक्रमात् त्रैवर्णिकानामित्याहुः ॥ ४७ ॥

**कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः ।**
**अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मचारिणः[3] ॥ ४८ ॥**

प्रसङ्गात् नैमित्तिकं विधास्यन् निमित्तमाह । त्रैवर्णिकस्य ब्रह्मचारिणः बुद्धिपूर्वं स्त्रीसङ्गमन्तरेण रेतःसेकं व्रतस्य ब्रह्मचर्यस्य धर्मशास्त्राभियुक्ता ब्रह्मचर्यशीलातिक्रमं लोपमाहुः । ब्रह्मचारिप्रक्रमे व्रतस्थपदोपादानं वानप्रस्थसंन्यासिनोरपि प्राप्त्यर्थम् ;

" वानप्रस्थो यतिश्चैव स्कन्दने सति कामतः ।
पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत् ॥ "

इति **शाण्डिल्यस्मरणात्** । ब्रह्मचर्यस्य व्रतशब्देनोपादानं व्रतान्तरेऽप्यस्य निमित्तताज्ञापनाय ॥ ४८ ॥

[1] ततः omitted in ठ. [2] गच्छेत्—ठ. [3] व्रतवादिनः—ठ.

**एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ।**
**सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन्[1] ॥ ४९ ॥**
**तेभ्यो लब्धेन भैक्ष्येण वर्तयन्नेककालिकम् ।**
**उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति ॥ ५० ॥**

तत्र प्रायश्चित्तमाह । एतस्मिन् कामतो रेतःस्कन्दनरूपे पापकर्मणि प्राप्ते सति, रासभीयं चर्म प्रावृत्य, स्वकर्म कीर्तयन् 'मयैवं [2]कृतम्' इति ख्यापयन्, सप्तागाराणि चरित्वा, तेभ्योऽगारेभ्यो लब्धं भैक्षमेककालं भक्षयन्, त्रिकालस्नानं कुर्वन्, अब्देन विशुध्यति । एतच्छब्दस्तु व्रतान्तरलोपेऽप्येतदेवेति ज्ञापयितुम्; "व्रतान्तरेषु चैवम्" इति **वासिष्ठात्** । स्त्रीसंगमेऽपि स एव—"ब्रह्मचारी चेत् स्त्रियमुपेयात् अरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत" इति । चतुष्पथारण्ययोर्विकल्पः । काणेन रात्रौ चेति विशेषः,

"अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥"

इति **मानवात्** । पाकयज्ञविधानम् "अथ पशुकल्पः" इति **आश्वलायनोक्तं** ज्ञेयम् । पश्वभावे चरुः कार्यः; "नैर्ऋतं वा चरुं निर्वपेत् तस्य जुहुयात् कामाय स्वाहा कामकामाय स्वाहा निर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहा" इति **वासिष्ठात्** । उक्तनिमित्तयोः समुच्चये तु नैमित्तिकयोरपि समुच्चयः; "गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत । तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्त गृहान् भैक्ष्यचरः कर्माचक्षाणः संवत्सरेण शुध्येत्" इति **गौतमीयात्** ॥ ४९; ५० ॥

**स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।**
**स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ ५१ ॥**
**अकृत्वा भैक्षचरणमसमिद्ध्य च पावकम् ।**
**अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ ५२ ॥**
**तं चेदभ्युदियात् सूर्यः शयानं कामकारतः ।**
**निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ ५३ ॥**

**इति [3]श्रीविष्णुस्मृतौ अष्टाविंशोऽध्यायः**

[1] कीर्तयेत्—ठ.
[2] कर्म कृतम्—ग.
[3] श्रीवैष्णवे—ङ; वैष्णवे धर्मशास्त्रे ब्रह्मचारिप्रकरणमष्टाविंशम्—ठ.

द्विजः त्रैवर्णिको ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च, स्वप्ने अकामतश्चास्वप्नेऽपि शुक्रं रेतः सिक्त्वा प्रच्याव्य प्रातः स्नात्वा अर्कं गन्धादिभिरभ्यर्च्य "पुनर्मामैत्विन्द्रियम्" इत्येतामृचं त्रिवारं जपेत् ॥ ५१ ॥

अनातुरः स्वस्थः ब्रह्मचारी यदि सप्तरात्रं भैक्षचर्यामग्निकार्यं च न करोति, तदा अवकीर्णी भवतीति तदुक्तं [1]प्रायश्चित्तं कुर्यात् । तच्च गर्दभेज्या चरुयोगो वेति । गुरुपरिचर्याद्यव्यग्रस्यैतत् । तद्व्यग्रस्य त्वाह **याज्ञवल्क्यः**—

"भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ।
उपस्थानं ततः कुर्यात् सं मा सिञ्चन्त्वनेन तु ॥"

इति ॥ ५२ ॥

तं ब्रह्मचारिणमविज्ञानात् शास्त्रार्थापरिज्ञानात् कामकारतः बुद्धिपूर्वं सुप्तं सूर्यश्चेदभ्युदेति, निम्लोचेत् अस्तमियाद्वा, तदा असौ ब्रह्मचारी गायत्रीं जपन् दिनमुपवसेत्; दिवा न भुञ्जीत । दिनग्रहणात् अस्तमिते नक्तं भुञ्जीत । यथा **गौतमः**—"सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽस्तमितश्च रात्रिं जपन् सावित्रीम्" इति । [2]गायत्रीसंख्या चाष्टसहस्रम्, "गायत्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः" इति **संवर्त**स्मरणात् । अकामतस्त्वष्टशतं चतुष्पञ्चाशत्तमे वक्ष्यति ॥ ५३ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[4]श्री**रामपण्डिता**त्मज[4]श्री**नन्द-पण्डित**कृतौ श्री**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** अष्टाविंशोऽध्यायः

[1] प्रायश्चित्तं omitted in ख, झ.
[2] जपसंख्या—ग.
[3] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, चं.
[4] श्री omitted in ग.

## एकोनत्रिंशोऽध्यायः

**यस्तूपनीय व्रतादेशं कृत्वा वेदमध्यापयेत् तमाचार्यं विद्यात् ॥ १ ॥ [1]यस्त्वेनं मूल्येनाध्यापयेत् तमुपाध्यायमेकदेशं वा ॥ २ ॥**

'पिता त्वाचार्यः' इत्युक्तम्। तत्रैकोनत्रिंशेनाचार्यादिलक्षणमाह। यो वटुमुपनीय गायत्र्या संयोज्य व्रतानि महानाम्न्याद्युपनिषदध्ययनाङ्गानि उपदिश्य वेदमेकां शाखां साङ्गामध्यापयेत्, असावाचार्यो वेदितव्यः;

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इति **मानवात्**। कल्पोऽङ्गान्तरोपलक्षणम्। रहस्यमुपनिषत्। यत्तु "उपनीय ददद्वेदमाचार्यः स उदाहृतः" इति, तत्र वेदपदेनैव साङ्गशाखाभिप्रेतेति न विरोधः। वेदात् पृथग्भावो महानाम्न्यादीनां व्रतस्नातकतासिद्ध्यै व्युत्क्रमेणाप्यध्ययनबोधनार्थः; "नेदमनधीयन् स्नातको भवति" इति **आश्वलायन**स्मरणात्। नात्र व्रतादेशः "सायं प्रातः समिधमादध्यात्" इत्याद्युपदेशः; "मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत्" इति **आश्वलायने**नोपनयनभावनान्तःपातेनैव तदभिधानात् ॥ १ ॥

यः पुनरेनमन्योपनीतं मूल्येन भृत्या कृत्स्नं वेदमभृत्या वा वेदैकदेशमष्टकाध्यायादि अध्यापयेत् तमुपाध्यायं विद्यात्। वाशब्दादङ्गानि वा;

"एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥"

इति [2]**मानवात्**। वृत्तिः भृतिः; "भृतकाध्यापको यस्तु स उपाध्याय उच्यते" इति **शङ्ख**स्मरणात्। अनेन 'मूल्यं विना जीविका वृत्तिः' इति परास्तम्; मूल्येनेत्यभिधानात्। **योगीश्वरस्तु** अस्योपपातकतामभिप्रेत्य "एकदेशमुपाध्यायः" इत्येव लक्षणमलक्षयत् ॥ २ ॥

[1] This Sūtra omitted in झ.

[2] शङ्खस्मरणात्—ख.

**यो यस्य यज्ञकर्माणि कुर्यात् तमृत्विजं विद्यात्[1] ॥ ३ ॥**
**नापरीक्षितं याजयेत् ॥ ४ ॥ नाध्यापयेत् ॥ ५ ॥ [2]नोपनयेत् ॥ ६ ॥**

यो याजनार्हो यस्य याजनार्हस्य यज्ञे श्रौते ज्योतिष्टोमादौ स्मार्ते च पाकयज्ञादौ वृतो मन्त्रेणामन्त्रेण वा यज्ञकर्माणि, न लौकिकानि, कुर्यात् न त्वन्येन कारयेत्, स ऋत्विक् वेदितव्यः। यथा **मनुः**—

"अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥"

इति। क्रियापुनर्वचनमेकतरविशेषणाभावेऽप्यनृत्विक्त्वार्थम्। तदाह **उशना**—

"अदेशकालेऽविधिना योऽयाज्यमुपयाजयेत्।
न तं याज्यं विदुर्विप्रा न चासावृत्विगुच्यते ॥"

इति ॥ ३ ॥ कुलशीलवृत्तादिभिरपरीक्षितं न याजयेत् ॥ ४ ॥ उक्तगुणैरपरीक्षितं नाध्यापयेत् ॥ ५ ॥ उक्तलक्षणं नोपनयनेन संस्कुर्यात्; यौनस्रौवमुख्यैः पातित्याभिधानात् ॥ ६ ॥

**अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति।**
**तयोरन्यतरः प्रैति[3] विद्वेषं वाधिगच्छति ॥ ७ ॥**
**धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।**
**तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ८ ॥**

प्रकृतमाह। 'इदं मया न ज्ञायते; तदुपदेष्टव्यम्' इति सविनयं प्रश्नो धर्मः। तद्विपरीतः छलेन 'अत्र भवद्भिः कथं पठ्यते?' इत्यधर्मः। तेन यः पृच्छति; यश्च तस्मै प्रष्ट्रे उक्तप्रश्नधर्माभावेऽपि स्वख्यात्यै 'इदमेवमध्येतव्यम्' इति ब्रूते, तयोरेकतरः प्रष्टा वक्ता वा प्रैति म्रियते। उभयोः छलवादित्वे द्वावपि म्रियेते। प्रबलतरायुःशेषसद्भावे [4]विशिष्टं द्वेषं वा प्राप्नोति। अत एव **मनुः**—

"नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥"

इति ॥ ७ ॥

अनाथाध्यापने धर्मः। धनिकाध्यापने अर्थः। शक्ताध्यापने शुश्रूषा। तत् त्रयं यदध्यापने नास्ति, तस्मिन् विद्या वेदादिः न देया; यथोषरे शुभं फलजनकं बीजं यवव्रीह्यादि। वाशब्दादकृतज्ञादावपि;

[1] विद्यात् omitted in ठ.
[2] This Sūtra omitted in ठ.
[3] अपैति—च.
[4] विशिष्टे—च.

" कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतः साधु शक्तासज्ञानवित्तदाः ॥ "

इति योगिस्मरणात् ॥ ८ ॥

**विद्या ह वै ब्राह्मणमाजगाम**
**गोपाय मा[1] शेवधिष्टेऽहमस्मि ।**
**असूयकायानृजवेऽयताय**
**न मां ब्रूया अवीर्यवती[2] तथा स्याम् ॥ ९ ॥**
**यमेव विद्याः शुचिमप्रमत्तं**
**मेधाविनं ब्रह्मचर्योपपन्नम् ।**
**यस्ते न द्रुह्येत् कतमच्च नाह**
**तस्मै मां ब्रूया निधिपाय ब्रह्मन् ॥ १० ॥**

इति [3]श्रीविष्णुस्मृतौ एकोनत्रिंशोऽध्यायः

उक्तार्थे श्रुतिमाह । विद्या तदधिष्ठात्री देवता ब्राह्मणं प्रत्याजगाम । गत्वा चेदमाह । मा मां गोपाय पालय । पालने प्रयोजनमाह । ते अहं शेवधिः निधिरस्मि । कथं पालनीयेत्यत आह । असूयकाय गुरोरीर्ष्यावते, अनृजवे कुटिलाय, अयताय अवश्याय, मां न ब्रूयाः नाध्यापयेः । किं तथा स्यादित्यत आह । तथा तादृशस्याध्यापनेन अवीर्यवत्यहं स्यामिति । तस्मादेते नाध्याप्या इति ॥ ९ ॥

अध्याप्यानाह । यमध्येतारं शुचिमकल्मषम्[4], अप्रमत्तं सावधानं, मेधाविनं धारणावन्तं, ब्रह्मचर्येणोक्तेनोपपन्नं युक्तं विद्याः जानीयाः, यश्च ते तुभ्यं न द्रुह्येत् अनिष्टकारी न स्यात्, कतमच्च किमपि अप्रियं न माह न ब्रूते, तस्मै निधिपाय निधिवत् विद्यापालकाय मां, हे ब्रह्मन्, ब्रूयाः । तथा सति अहं वीर्यवती स्यामिति ॥ १० ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मज[6]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां एकोनत्रिंशोऽध्यायः

[1] मां—ठ.
[2] वीर्यवती—झ, ठ.
[3] वैष्णवे—झ; वैष्णवे धर्मशास्त्रे गुरुप्रकरणमेकोनविंशम्—ज, ठ.
[4] अकल्मषम् omitted in ग
[5] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[6] श्री omitted in ग.

## त्रिंशोऽध्यायः

**श्रावण्यां प्रौष्ठपद्यां वा छन्दांस्युपाकृत्यार्धपञ्चमान्**[1] **मासानधीयीत ॥ १ ॥ ततस्तेषामुत्सर्गं बहिः कुर्यात् ॥ २ ॥** [2]**उत्सर्जनोपाकर्मणोर्मध्ये वेदाङ्गाध्ययनं कुर्यात् ॥ ३ ॥**

अथ त्रिंशेनाध्ययनधर्माभिधानायादौ तदुपक्रमकालमाह । श्रावणीप्रौष्ठपद्योस्तुल्यवद्विकल्पः; "तदेतद्वार्षिकमित्याचक्षते" इति **शौनकीयात्** । प्रथमोपस्थितत्वात् पूर्वोपादानं श्रावण्याः । वाशब्दात् आषाढीहस्तश्रवणानामुपादानम् । तेषां दिनद्वयप्राप्तौ उत्तरं ग्राह्यम्;

"धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वन्ति ऋग्यजुःसामपाठकाः ॥"

इति **स्मरणात्** । तेषु ग्रहसंक्रान्तिदुष्टेषु नोपाकर्म;

"उपाकर्म न कुर्वन्ति क्रमात् सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥"

इति निषेधात् । किंतु आषाढ्यां हस्तान्वितश्रावणशुक्लपञ्चम्यां [3]केवलपञ्चम्यां केवलहस्ते वा कार्यम्; "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य" इति **बोधायनीयात्**; "पञ्चम्यां हस्तेन वा" इति **शौनकीयात्**; "उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः" इति **स्मरणात्**; "हस्तेनौषधिभावे वा" इति **योगिस्मरणात्**। छन्दांसि चतुरोऽपि वेदानुपाकृत्य प्रारभ्य अर्धपञ्चमान् सार्धचतुरो मासान् अधीयीत, अध्याप्याभावे । तत्सद्भावे तु अध्यापयेदपि । पौषमाघशुक्लप्रतिपदि उत्सर्गपक्षे एतत् । कालान्तरोपाकर्मोत्सर्जनयोर्यथासंभवं द्रष्टव्यम् ॥ १ ॥

ततः उपाकर्मानन्तरम् । तेन च कथंचित् स्वकालेऽनुपाकृतौ उत्सर्गकालप्राप्तावपि नोत्सर्गः । किंतु उपाकर्माकरणप्रायश्चित्तपूर्वकमेव तदनुष्ठानम् । तेषामिति येषामुपाकरणं तेषामेवोत्सर्गः; नानुपाकृतानाम् । ततश्चानारब्धवेदान्तरस्य तत्कालप्राप्तावपि नोत्सर्ग इति । उत्सर्गम् उत्सर्जनाख्यं कर्म बहिर्ग्रामात् जलान्ते

1 अर्धपञ्चमासान्—घ, च.  2 उत्सर्जनोपाकर्ममध्ये—क, ख.  3 केवलपञ्चम्यां omitted in ख.

कुर्यादित्याचार्यस्यैव प्राधान्यम्; नाध्येतॄणाम्। तत्र च कालः अर्धपञ्चमान् मासानित्यनेनैवोक्तः। तेन च श्रावण्युपाकरणे पौषशुक्लप्रतिपत्; प्रौष्ठपद्युपाकरणे माघशुक्लप्रतिपत् उत्सर्गकालः सिध्यति;

"पौषे तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि॥"

इति **मानवात्**। शुक्लप्रथमेऽहनीति पौषेऽप्यन्वेति; साकाङ्क्षत्वात्; अर्धपञ्चमानिति लिङ्गाच्च। पुष्य इति पाठेऽपि मासपरतैव। तदसंभवे तु उपाकर्मदिन एव तत् कार्यम्; "उत्सर्जनं पौषमास उपाकर्मदिनेऽथवा" इति **स्मरणात्**[1]॥ २॥

अङ्गाध्ययनकालमाह। [2]उत्सर्जनानन्तरं यावदुपाकर्म भवति तावत्कालं शिक्षाद्यङ्गान्यधीयीत। परं तु कृष्णपक्षे,

"अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि तु सर्वाणि कृष्णपक्षे तु संपठेत्॥"

इति **मानवात्**॥ ३॥

**नाधीयीताहोरात्रं [3]चतुर्दश्यष्टमीषु च॥ ४॥ नर्त्वन्तरग्रह-सूतके[4]॥ ५॥ नेन्द्रप्रयाणे॥ ६॥ न वाति चण्डपवने॥ ७॥**

अनध्यायानाह। चतुर्दश्यामष्टम्यां, बहुवचनात् पञ्चदश्यां, चकारात् प्रतिपदि चाहोरात्रं नाधीयीत। तथाच **हारीतः**—

"प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः।
श्वोऽनध्यायेऽथ शर्वर्यां नाधीयीत कदाचन॥"

इति॥ ४॥

ऋतूनां चतुर्मासात्मकानां त्रयाणामन्तरे संधौ द्वितीयास्वनध्यायः; "आषाढीकार्तिकीफाल्गुनीसमनन्तरासु द्वितीयासु" इति **स्मृत्यन्तरात्**। एतेन "कार्तिकीफाल्गुन्याषाढीप्रभृति त्रिरात्रम्" इति **गौतमीयमपि** व्याख्यातम्। द्वितीयाभिप्रायेण मूलोक्तमेकरात्रमत्र द्रष्टव्यम्। न तु 'ऋतुसंधिगतासु प्रतिपत्सु' इति व्याख्यानं भव्यम्; तासां नित्यानध्यायत्वेन ऋतुसंधित्वविशेषणानर्थक्यात्। नापि सौरर्तुसंधीनां कदाचित् स्वाध्यायत्वेन विशेषणसार्थक्यं वाच्यम्;

"निशाद्वयं दिवा रात्रौ संक्रमे दिवसद्वयम्।
अनध्यायं प्रकुर्वीत यावत् सोपपदा तिथिः॥"

1 परिग्रहात्—ग.
2 उत्सर्गानन्तरं—ख.
3 चतुर्दशीपञ्चदश्य—झ, ठ.
4 ग्रह omitted in च.

इति **नारदीये** संक्रान्तिमात्रेऽनध्यायस्मरणात्। तस्मात् यथोक्तमेव साधु। ग्रहो ग्रहणम्। तत्संभवं सूतकमशुचित्वम्। तत्र त्रिरात्रम्; "त्र्यहं न कीर्तयेद् ब्रह्म राज्ञो राहोश्च सूतके" इति **मानवात्** ॥ ५

इन्द्रः इन्द्रध्वजः। तस्य प्रयाणं पातनम्। तेनोच्छ्रयोऽपि लक्ष्यते। तत्रोभयत्राहोरात्रमनध्यायः; "शक्रपाते तथोच्छ्रये" इति **स्मरणात्**। भाद्रपदशुक्लद्वादश्यां शक्रध्वजोत्थापनम्। निपातनं च आश्विनकृष्णचतुर्थ्याम्;

"द्वादश्यां भाद्रशुक्लस्य इन्द्रध्वजसमुच्छ्रयः।
इषे कृष्णचतुर्थ्यां तु सप्ताहात् पात इष्यते॥"

इति **ब्राह्मात्** ॥ ६ ॥

चण्डपवनो वात्या। तस्यां वात्यायां तत्कालमनध्यायः, "गीतवादित्ररुदितातिवातेषु तत्कालम्" इति **गोभिलस्मरणात्**। अतिशयश्च "कर्णश्रवेऽनिले रात्रौ दिवा पांसुसमूहने" इति ज्ञेयः ॥ ७ ॥

**नाकालवर्षविद्युत्स्तनितेषु[1] ॥ ८ ॥ न भूकम्पोल्कापातदिग्दाहेषु ॥ ९ ॥ नान्तःशवे[2] ग्रामे ॥ १० ॥**

अकाले वर्षाकालादन्यत्र वृष्टौ, विद्युद्द्योतने गर्जिते च त्रिरात्रमनध्यायः; "विद्युत्स्तनयित्नुवृष्टिष्वपर्तौ त्र्यहम्" इति **आपस्तम्बीयात्**। वर्षाकाले तु आकालिकोऽनध्यायः;

"विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे।
आकालिकमनध्यायमेतेषु मनुरब्रवीत्॥"

इति **मानवात्**। वृष्ट्यादित्रयसंनिपातकाले तु[3] त्र्यहमेव; "वर्षविद्युत्स्तनयित्नुसंनिपाते त्र्यहम्" इति **गौतमीयात्** ॥ ८ ॥

[4]भूकम्पः भूमिचलनम्। उल्का दिव्यं ज्योतिः; तत्पातः। दिग्दाहः; दिशां पीतिमदर्शनम्। तेषु आकालिकाहोरात्रयोर्विकल्पः;

"निर्घाते भूमिचलने ज्योतिषां चोपदर्शने।
एतानाकालिकान् विद्यादनध्यायानृतावपि॥"

इति **मानवात्**; "भूकम्पोल्कानिपातने। समाप्य वेदं द्युनिशम्" इति **योगिस्मरणाच्च**। भूकम्पादित्रयसंनिपाते तु त्रिरात्रम्; "उल्काविद्युत्समासे त्रिरात्रम्" इति **स्मरणात्** ॥ ९ ॥

1 स्तनिते—ठ.
2 शवग्रामे—ज, झ.
3 अपि—ग.
4 भूकम्पः omitted in च.

ग्रामान्तः स्थिते शवे तत्कालमनध्यायः। शवश्चण्डालोपलक्षणम्, "अन्तःशवम्, अन्तश्चण्डालम्" इति **आपस्तम्बीयात्**। शवानुगमनादौ तु अहोरात्रम्, "शवानुगमनपरिचरणेषु कोशशवदर्शने वाहोरात्रम्" इति **स्मृत्यन्तरात्**। कोशः शवपेटिका ॥ १० ॥

**न शस्त्रसंपाते ॥ ११ ॥ न श्वसृगालगर्दभनिर्ह्रादेषु[1] ॥ १२ ॥ न वादित्रशब्दे ॥ १३ ॥ न शूद्रपतितयोः समीपे ॥ १४ ॥ [2]न देवतायतनश्मशानचतुष्पथरथ्यासु ॥ १५ ॥**

शस्त्रसंपातो युद्धम्। तस्मिन् प्रवर्तमाने तत्कालमनध्यायः। **मनुः** "न विवादे न कलहे न सेनायां न संगरे" इति ॥ ११ ॥ श्वादीनां निर्ह्रादे शब्दे श्रूयमाणे तत्कालमनध्यायः। श्वादय उपलक्षणम्, "श्वगर्दभनादाः सालावृकदन्तिकाकोलूकशब्दाः" इति **आपस्तम्बीयात्** ॥ १२ ॥ वादित्रं भेर्यादि। तच्छब्देऽनध्यायः; "बाणभेरीमृदङ्गगर्तार्तशब्देषु" इति **गौतमीयात्**। बाणो वीणाविशेषः शततन्तुः; महाव्रते दर्शनात्। गर्तः शकटम्; "गर्तसदम्" इत्यादिदर्शनात्। वादित्रं गीताद्युपलक्षणम्; "नृत्यगीतवादित्ररुदितशब्देषु तावन्तं कालम्" इति **बोधायनीयात्** ॥ १३ ॥ शूद्रपतितयोः समीपे अनध्यायः; "अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके" इति **योगिस्मरणात्** ॥ १४ ॥ देवतानां हरिहरादीनामायतनमालयः। श्मशानं पितृवनम्। चतुष्पथः मार्गचतुष्टयसंनिपातः। रथ्या राजमार्गः। एतेष्वनध्यायः। **प्रचेताः**—चतुष्पथसंक्रमोद्यानेषु न देवसमीपेऽधीयीत" इति। **मनुः**—"नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा" इति। **आपस्तम्बः**—"न वृक्षस्थो न तीर्थस्थो नाप्सु नौषु सभासु च" इति। अध्ययननिषेधात् जपाद्यनिषेधः ॥ १५ ॥

**नोदकान्तः ॥ १६ ॥ न पीठोपहितपादः ॥ १७ ॥ न हस्त्यश्वोष्ट्रनौगोयानेषु[3] ॥ १८ ॥ न वान्तः ॥ १९ ॥ न विरिक्तः ॥ २० ॥ नाजीर्णी ॥ २१ ॥**

जलमध्ये अनध्यायः।

"श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥"

[1] निर्ह्रादे—ठ.

[2] न देवायतने न श्मशान—ञ

[3] नौयानेषु—ठ.

इति **यमः** ॥ १६ ॥ पीठे श्रीपर्ण्यादिकाष्ठनिर्मिते स्थापितपादतलस्यानध्यायः । एतेन भूमिस्थितपादस्य नानध्याय इति ॥ १७ ॥ हस्त्याद्यारूढस्य, यानग्रहणात् तद्युक्तरथादियानस्थस्य चानध्यायः । **मनुः**—

"नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम् ।
न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥"

इति ॥ १८ ॥ वान्तः कृतवमनो नाधीयीताहोरात्रम् ॥ १९ ॥ विरेकः अतिसारः । तद्युक्तः नाधीयीताहोरात्रम् ॥ २० ॥ अजीर्णी यावदजीर्णपाकं नाधीयीत ॥ २१ ॥

**न पञ्चनखान्तरागमने ॥ २२ ॥ न [1]राजश्रोत्रियगोब्राह्मणव्यसने ॥ २३ ॥**

पञ्चनखाः मनुष्यादयः । तेषां गुरुशिष्ययोरन्तरा गमने अहोरात्रमनध्यायः । तत्र विशेषः—"काकोलूककुक्कुटमूषकमण्डूकाद्यन्तरागमने द्विदिनम् । श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्च" इति **गौतमः** । विप्रवासः आचार्यकुलादन्यत्र वासः । अत्राशक्तौ **वसिष्ठः**—"मार्जारनकुलव्याघ्राणामहोरात्रम्" इति । अभोजनमनुवर्तते । "खरवराहोष्ट्रचण्डालसूतिकोदक्याशवादौ मासम् । अविगवयाजादिव्यष्कुनास्तिकादौ त्रिमासं चण्डालश्वपाकशशानां च षण्मासान् गजगण्डसारससिंहव्याघ्रमहापापिकृतघ्नानामष्टमासम्" इति **शङ्खः** । [2]व्यष्कुर्मार्जारः । "यदि हस्ती संवत्सरो यदि व्याघ्रस्तथैव च" इति **आपस्तम्बः** । व्याघ्रावान्तरजातिभेदेन कालभेदः ॥ २२ ॥

राजा राष्ट्राधिपः । श्रोत्रियः एकशाखाध्यायी । गोब्राह्मणौ जातिमात्रम् । तेषां व्यसने आपदि यावदुपशमनमनध्यायः । मरणे तु अहोरात्रम् । अहोरात्रानुवृत्तौ **गोभिलः**—"प्रेते भूमिपतावपि" इति । तथा "अहोरात्रमनूचाने" इति । "गोब्राह्मणमृतावेकाहः" इति **शङ्खयमौ** । इदमल्पगुणे । गुणातिशयवति त्रिरात्रम् । "सार्वभौमे त्रिरात्रं स्यादाशौचं संस्थिते सति" इति **भृगुः** । त्र्यहानुवृत्तौ "स्वशाखाश्रोत्रिये तथा" इति **योगीश्वरः** । "गोविप्रमृतौ त्रिरात्रम्" इति **स्मृत्यन्तर**मिति ॥ २३ ॥

**नोपाकर्मणि ॥ २४ ॥ नोत्सर्गे ॥ २५ ॥ न सामध्वनावृग्यजुषी ॥ २६ ॥**

उपाकर्मानन्तरं त्र्यहमनध्यायः ॥ २४ ॥ उत्सर्जनेऽपि[3] त्र्यहम् । त्र्यहानुवृत्तौ "उपाकर्मणि चोत्सर्गे" इति **योगीश्वरः** ॥ २५ ॥ सामवेदध्वनौ जायमाने ऋग्यजुषोरनध्यायः ;

"ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः ।
सामवेदः स्मृतः पित्र्यस्तस्मात् तस्याशुचिर्ध्वनिः ॥"

[1] राज omitted in ज, ट.   [2] व्यक्कुः—घ, च.   [3] अपि omitted in ख, ग.

इति **मानवात्**। उपलक्षणमेतदथर्वणोऽपि; "सामशब्दे नाथर्वयजुषी" इति **याम्यात्**। एवं वेदान्तरध्वनौ साम्नोऽनध्यायः; "शाखान्तरध्वनौ साम्नामनध्यायः" इति **आपस्तम्बीयात्** ॥ २६ ॥

**नापररात्रमधीत्य शयीत ॥ २७ ॥ अभियुक्तोऽप्यनध्याये-ष्वध्ययनं परिहरेत् ॥ २८ ॥ यस्मादनध्यायाधीतं नेहामुत्र फल-प्रदम्[1] ॥ २९ ॥ तदध्ययनेनायुषः क्षयो गुरुशिष्ययोश्च ॥ ३० ॥ तस्मादनध्यायवर्जं गुरुणा ब्रह्मलोककामेन विद्या सच्छिष्यक्षेत्रेषु वप्तव्या ॥ ३१ ॥**

रात्रेरपरभागः अपररात्रः। तत्राधीत्य न शयीत। किंतु यावत्सूर्योदयं जागृयात्। अपररात्रग्रहणात् पूर्वरात्रे न निषेधः;

"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन योजयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥"

इति **मानवात्** ॥ २७ ॥ अभियुक्तः अन्येन पृष्टोऽपि अनध्यायेषूक्तेषु अध्ययनं परिहरेत्। नाभियोगेनाभि-निविष्टः पठेत् ॥ २८ ॥ तत्र हेतुमाह। ऐहिकं फलमभियोगे जयप्राप्तिः। आमुष्मिकं फलं ब्रह्मलोकप्राप्तिः। तदुभयमनध्यायाध्ययने नश्यतीति हेतुः;

"अनध्यायेष्वध्ययने प्रज्ञामायुः प्रजाः स्त्रियः।
ब्रह्म वीर्यं श्रियं तेजो निकृन्तति यमः स्वयम् ॥"

इति **स्मरणात्** ॥ २९ ॥ किंच तेषु अनध्यायेषु अध्ययनेन गुरुशिष्ययोः आयुःक्षयश्च भवतीति हेत्वन्तरम् ॥ ३० ॥ उक्तार्थं निगमयति। यस्मादनध्यायाध्ययने दोषोऽभिहितः, तस्मात् अनध्यायान् वर्जयित्वा ब्रह्मलोकाप्तये गुरुणा उक्तलक्षणेषु शिष्यक्षेत्रेषु विद्या वेदादिचतुर्दशान्यतमा वप्तव्या। अध्यापन एवानध्याय-निषेधात् अन्यत्र दोषाभावः;

"वेदोपकरणे चैव स्वाध्याये चैव नैत्यके।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥"

इति **मानवात्**। वेदोपकरणान्यङ्गानि। 'वेदोपाकरणे' इति पाठे उपाकर्मणीत्यर्थः। नित्यस्वाध्यायो ब्रह्म-यज्ञः। होमो बल्याद्युपलक्षणम्। चकारात् नैमित्तिकादिग्रहणम्।

[1] फलदम्—ठ.

"नित्ये नैमित्तिके [1]कार्ये व्रते यज्ञे क्रतौ तथा ।
प्रक्लृप्ते कामकार्ये च नानध्यायः स्मृतस्तथा ॥"

इति ॥ ३१ ॥

**शिष्येण ब्रह्मारम्भावसानयोर्गुरोः पादोपसंग्रहणं कार्यम् ॥ ३२ ॥ प्रणवश्च व्याहर्तव्यः ॥ ३३ ॥**

शिष्यधर्मानाह । ब्रह्म वेदः । तदध्ययनोपक्रमे अध्ययनसमाप्तौ चोक्तरीत्या शिष्येण गुरोः अध्यापकस्य पादोपसंग्रहणम् अभिवादनं कार्यम् । ब्रह्मग्रहणात् अङ्गादावनियमः ॥ ३२ ॥ अध्ययनोपक्रमावसानयोः ओंकारः पठनीयः । चकारात् भूमिस्पर्शश्चान्ते कार्यः ;

"ओंकारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् ।
ओंकारं च पुनः कृत्वा भूमिं स्पृष्ट्वा विरामयेत् ॥"

इति **यमस्मरणात्** ॥ ३३ ॥

**तत्र च यदृचोऽधीते तेनास्याज्येन पितॄणां तृप्तिर्भवति ॥ ३४ ॥ यद्यजूंषि तेन मधुना ॥ ३५ ॥ यत्सामानि तेन पयसा ॥ ३६ ॥ यदाथर्वणं तेन मांसेन ॥ ३७ ॥ यत्पुराणेतिहासवेदाङ्गधर्मशास्त्राण्यधीते तेनास्यान्नेन ॥ ३८ ॥**

तत्र ग्रहणाध्ययनफलमाह । तत्रोक्तकाले यदृचोऽधीते, तेनास्याध्येतुः पितॄणामाज्येन तृप्तिर्भवति । बहुवचनात् ,

"ऋचां दशसहस्राणि ऋचां दशशतानि च ।
ऋचामशीतिः पादश्चैतत् पारायणमुच्यते ॥"

इत्युक्तसंख्याग्रहणम् । यदि च वेदोपक्रमात् ऋगादिपदस्य तत्परतयैवोक्तसंख्यालाभः, तदा तावदध्ययनाशक्तौ एकदेशाध्ययनाभ्यनुज्ञानार्थं बहुवचनारम्भोऽस्तु । यथाह **पराशरः**—"अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते" इति । एवं यजुरादावपि ज्ञेयम् ॥ ३४ ॥ यदि यजूंषि अधीते, तेन मधुना पितॄणां तृप्तिर्भवति ॥ ३५ ॥ यदि सामान्यधीते, तेन पयसा पितॄणां तृप्तिर्भवति ॥ ३६ ॥ यदि आथर्वणमथर्वसंबन्धिनं भागमधीते, तेन पितॄणां मांसेन तृप्तिर्भवति ॥ ३७ ॥ पुराणं ब्राह्मादि । इतिहासः **महाभारतादिः** । वेदाङ्गानि **शिक्षादीनि** । धर्मशास्त्राणि **मानवादीनि** । द्वन्द्वनिर्देशात् न्यायमीमांसादीन्यपि गृह्यन्ते । तदध्ययनेन पितॄणामन्नतृप्तिर्भवति । यद्यपीदं सादृश्यात् ब्रह्मयज्ञफलमिति प्रतिभाति, तथापि "ब्रह्मयज्ञेन

[1] काम्ये—च.

तृप्यन्ति देवाश्च पितरस्तथा" इत्यादिपैठीनस्यादिवाक्यैः ब्रह्मयज्ञस्य देवपितृतृप्त्यर्थत्वेनोभयदेवताकत्वावगमात् अत्र च [1]पितृमात्रतृप्तिश्रवणेनैकदेवत्यत्वात् विधिलक्षणस्य देवतान्तरस्योपलक्षणत्वासंभवात् प्रकरणासंभवेनोत्कर्षासंभवाच्च नास्य तत्फलत्वम्। किंतु उपक्रमोपसंहारमध्यपठितत्वेन विध्यपेक्षितत्वाच्च ग्रहणाध्ययनस्यैवेदं फलकथनमिति युक्तम्। एवं च फलवतोऽध्ययस्याकरणे दोषश्रवणात् नित्यविध्यपेक्षितत्वाच्च[2] नित्यत्वमविरुद्धम् ॥ ३८ ॥

**यश्च विद्यामासाद्यास्मिन् लोके तया जीवेत्, न सा तस्य परलोके [3]फलप्रदा भवेत् ॥ ३९ ॥ यश्च विद्यया यशः परेषां हन्ति ॥ ४० ॥**

नेदं भृतकाध्यापनविषयम्; तस्योपपातकत्वेन निषिद्धत्वात्। नाप्यध्यापनादिविषयम्; तस्य वृत्त्यर्थतयाभ्यनुज्ञानात्। किंतु परार्थं वेदपारायणादिना यो जीवेत्, तस्य सा परत्र फलप्रदा न भवेत्; विद्याध्ययनजन्या लोका न भवन्तीत्यर्थः;

"[4]यो धनार्थं परान् वेदं श्रावयेद्याजनादृते।
स वेदविक्रयी नाम इहामुत्र च गर्हितः॥"

इति व्यासस्मरणात् ॥ ३९ ॥ उक्तार्थमन्यत्राप्यतिदिशति। यश्च विद्यया वादजल्पाभ्यां परेषां यशः हन्ति पराजयेन नाशयति, तस्यापि परत्राफलैव विद्या ॥ ४० ॥

**अननुज्ञातश्चान्यस्मादधीयानान्न विद्यामादद्यात् ॥ ४१ ॥ तदादानमस्य ब्रह्मस्तेयं नरकाय भवति ॥ ४२ ॥**

गुर्वनुज्ञामन्तरेणान्यार्थमधीयानादपि गुरोर्विद्यां नादद्यात्; "आहूतश्चाप्यधीयीत" इति **स्मरणात्** ॥ ४१ ॥ निषेधातिक्रमे फलमाह। तस्या अननुज्ञाताया विद्यायाः अननुज्ञापयितुर्गुरोः सकाशात् आदानमध्ययनं नरकफलकं ब्रह्मस्तेयं भवति ॥ ४२ ॥

**लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा।**
**आददीत यतो ज्ञानं न तं द्रुह्येत् कदाचन ॥ ४३ ॥**
**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।**
**ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ४४ ॥**

[1] पितृश्रवणेन—घ.
[2] आक्षेपाच्च—च, ग.
[3] फलदा भवति—ज, ठ.
[4] From यो धनार्थं up to व्यासस्मरणात् omitted in ख.

गुरुद्रोहं निषेधति। लौकिकं काव्यालंकारादिविषयम्; वैदिकं साङ्गवेदविषयम्; आध्यात्मिकं वासिष्ठादिविषयम्, औपनिषदस्य वैदिकत्वेनैव सिद्धत्वात्। एतदन्यतमं ज्ञानं यतो यस्मात् गुरोः आददीत उत्पादयेत्, तं कदाचनापि लौकिकवैदिकविवादे न द्रुह्येत्। द्रोहोऽनिष्टासञ्जनम् ॥ ४३ ॥

त्रिष्वप्याचार्यातिशयमाह। उत्पादकः शरीरजनकः माता पिता च, ब्रह्मदाता गायत्र्युपदेष्टेति[1] त्रयोऽपि पितरः; पातृत्वात्। तेषां मध्ये ब्रह्मदः पिता गरीयान् अतिशयेन गुरुः। अतिशयमेवाह— ब्रह्मणि गायत्र्यां यज्जन्म विप्रस्य त्रैवर्णिकस्य, तत् प्रेत्य मोक्षयोग्यतापादकत्वात्, इह च सर्वकर्मार्हतापादकत्वात् शाश्वतं नित्यमित्युक्तमधस्तात् ॥ ४४ ॥

**कामान्माता पिता चैनं यदुत्पादयतो मिथः।**
**संभूतिं तस्य तां विद्याद्यद्योनाविह जायते ॥ ४५ ॥**
**आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।**
**उत्पादयति सावित्र्या सा सत्या साजरामरा ॥ ४६ ॥**
**य आवृणोत्यवितथेन कर्णा-**
**वदुःखं कुर्वन्नमृतं संप्रयच्छन्।**
**तं मन्येत पितरं मातरं च**
**तस्मै न द्रुह्येत् कृतमस्य जानन् ॥ ४७ ॥**

## इति [2]श्रीविष्णुस्मृतौ त्रिंशोऽध्यायः

ब्रह्मजन्मनो नित्यत्वं योनिजन्मनोऽनित्यतयोपपादयति। यत् यस्मात् कारणात् मिथः अन्योन्यं कामात् परस्पराभिलाषात् प्रवृत्तौ मातापितरौ एनं पुत्रमनु निष्पादयतः वाजिनवज्जनयतः, न तूद्देश्यतया[3]; कामोपभोगस्यैवोद्देश्यत्वात्। अतस्तस्य पुत्रस्य तां संभूतिं संभवमात्रं विद्यात्। न तु नित्याम् अव्यभिचारिणीम्; मैथुनसंभवेऽपि पुत्रानुत्पत्तेः। तत्र हेतुः—यदिहास्मिन् संसारे पश्वादिसाधारण्येन योनौ जायत इति न तावन्मात्रेण ऐहिकामुष्मिकफलसिद्धिः ॥ ४५ ॥

किंतु वेदपारगोऽखिलवेदवित् आचार्यस्तु अस्य वटोः विधिवदुपनयनविधिना सावित्र्या गायत्र्यादिकया सह यां जातिं जन्म उत्पादयति संपादयति, सा सत्या नित्या; अकरणे व्रात्यतापत्तेः। सर्वकर्माधिकारापादकत्वेन सैवाजरा अविकृता यावज्जीवमेकरूपा; सैवामरा परलोकसंबन्धितया अविनाशिनी ॥ ४६ ॥

[1] देष्टा। ते—च.
[3] दृश्यतया—ग, घ.
[2] वैष्णवे—झ; वैष्णवे धर्मशास्त्रे अनध्यायप्रकरणं त्रिंशम्—ज.

ब्रह्मजन्मैव श्रेष्ठमित्युक्तमर्थं श्रुत्योपसंहरति । [1]वेदाध्ययनेनैहिकामुष्मिकसकलदुःखनिरासेनाध्येतारमदुःखं कुर्वन्, तेन च मोक्षाधिकारसंपत्त्या अमृतं महावाक्याध्यापनार्थप्रतिपादनद्वारा संप्रयच्छन् अवितथेनाप्रतारकतया यथार्थेन वेदेनाध्येतुः कर्णौ य आवृणोति पूरयति, तं पातृत्वेन पितरं मातरं च मन्येत । अस्य कृतमुपकारं [2]वेदाध्यापनलक्षणं जानन् तस्मै गुरवे न द्रुह्येत् ॥ ४७ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[4]श्रीरामपण्डितात्मज[4]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां त्रिंशोऽध्यायः

[1] विद्याध्ययनेन—ख.

[2] वेदाध्ययन—ग.

[3] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.

[4] श्री omitted in ग.

## एकत्रिंशोऽध्यायः

**त्रयः पुरुषस्यातिगुरवो भवन्ति ॥ १ ॥ माता पिता आचार्यश्च ॥ २ ॥ तेषां नित्यमेव शुश्रूषुणा भवितव्यम् ॥ ३ ॥**

गुरुभक्तेरर्थवादार्थमेकत्रिंशेनातिगुरूनाह । त्रैवर्णिकप्रक्रमे पुरुषग्रहणं वर्णजातिप्राप्त्यर्थम् । तेन चतुर्णामपि वर्णानामनुलोमजादिजातीनां [1]चातिगुरवः गुरुभ्यो ज्येष्ठभ्रात्रादिभ्यः अतिशयिता अतिगुरवः त्रयो भवन्ति ॥ १ ॥

तानाह । माता पिता आचार्यश्च । निषेक्तृत्वेन पितुः प्राधान्येऽपि अभ्यर्हितत्वात् मातुः पूर्वनिर्देशः; "तेभ्यो माता गरीयसी" इति **स्मरणात्** । माता जननी । पिता निषेक्ता । आचार्य उक्तलक्षणः । यद्यप्ययं शूद्रादीनां न संभवति, उपनयनाभावात्, तथापि याजकाभिप्रायेण तेषामपि त्रितयसंभवः ॥ २ ॥

तेषां मात्रादीनां नित्यं सर्वकालं शुश्रूषुणा सेवानिरतेन[2] भाव्यम् । एवकारोऽत्र नियमचतुष्टयं गमयति । तच्च धर्मव्याधोपाख्याने स्पष्टीकृतम् ॥ ३ ॥

**यत्ते ब्रूयुस्तत् कुर्यात् ॥ ४ ॥ तेषां प्रियहितमाचरेत् ॥ ५ ॥ न तैरननुज्ञातः किंचिदपि कुर्यात् ॥ ६ ॥**

ते मात्रादयो यत् कार्यं विहितमविहितं वा ब्रूयुः, तत् कुर्यात् । तच्च कुन्तीवाक्यात् पञ्चभिर्द्रौपदीपरिणये, जमदग्निवाक्यात् परशुरामेण रेणुकावधे च स्पष्टीकृतम् ॥ ४ ॥ तेषां मात्रादीनां प्रियमनुकूलं सत् यत् आयत्यां श्रेयस्करं कार्यं, तदाचरेत् । परस्परविरोधे तु पैतृकम्; परशुरामीयमातृवधलिङ्गात् ॥ ५ ॥ तैः मात्रादिभिरननुज्ञातः अननुमतः किंचिदल्पमपि कार्यं न कुर्यात् ॥ ६ ॥

**एत एव त्रयो वेदा एत एव त्रयः सुराः ।**
**एत एव त्रयो लोका एत एव त्रयोऽग्नयः ॥ ७ ॥**
**पिता गार्हपत्योऽग्निः [3]दक्षिणाग्निर्माता गुरुराहवनीयः ॥ ८ ॥**

[1] From here up to निषेक्तृत्वेन missing in घ, च.
[2] अभिरतेन—ख.
[3] माताग्निर्दक्षिणः, तथा गुरुराहवनीयश्च—ठ.

उक्तेऽर्थे अर्थवादमाह । एते मात्रादय एव त्रयो वेदाः ऋग्यजुःसामाख्याः। अनुलङ्घनीयवाक्यत्वेन वेदसंस्तवः। त्रयः सुराः ब्रह्मविष्णुशिवाः। पूज्यत्वेन सुरसंस्तवः। त्रयो लोकाः नरसुरब्रह्मलोकाः। तत्प्राप्तिसाधनत्वात् तत्संस्तवः। त्रयोऽग्नयः वक्ष्यमाणाः। नित्यपालनीयत्वेनाग्निसंस्तवः[1] ॥ ७ ॥

अग्नित्रयस्य विशेषनिर्देशेन तान् स्तौति। पितुर्गार्हपत्यत्वमाहवनीययोनित्वेन; "तव योनिरस्मि" इति श्रुतेः। पूर्वोत्पन्नत्वेन च पूर्वनिर्देशः। मातुर्दक्षिणाग्नित्वं पृथग्योनित्वेन; "दक्षिणाग्नेररणी[2] पाणौ कुरुते" इति मानवसूत्रात्। उलूखलमुसलाद्यनुपालकत्वेन वा; "उलूखले मुसले यच्च शूर्पे" इत्यादिमन्त्रलिङ्गात्। गुरोराहवनीयत्वं सर्वहवनीयद्रव्यभागित्वेन[3] "लब्धं चास्मै निवेदयेत्" इति स्मरणात् ॥ ८ ॥

**सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः।**
**[4]अनादृत्यास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ ९ ॥**
**इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।**
**गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥ १० ॥**

इति [5]श्रीविष्णुस्मृतौ एकत्रिंशोऽध्यायः

यस्य पुरुषस्यैते त्रयो मात्रादय आदृताः, तस्य सर्वेऽपि धर्मा आदृताः; सर्वधर्ममूलत्वात् त्रयाणाम्। यस्य पुनरेते त्रयः अनादृत्याः अनादरणीयाः, तस्य सर्वाः कृष्याद्या लौकिक्यः नित्यनैमित्तिकाद्या वैदिक्यश्च क्रियाः निष्फलाः; मात्राद्यनादरोत्पन्नाधर्मेण प्रतिबन्धात् फलजननायोग्याः ॥ ९ ॥

मात्रादिशुश्रूषाफलमाह। इमं मनुष्यलोकं मातृभक्त्या, मध्यमं देवलोकं पितृभक्त्या, गुरोराचार्यस्य शुश्रूषया तु ब्रह्मलोकमेव प्राप्नोति ॥ १० ॥

इति [6]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीलक्ष्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[7]श्रीरामपण्डितात्मज[7]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां एकत्रिंशोऽध्यायः

[1] अग्निस्तवः—ख.
[2] सृणी—ग, घ.
[3] भावित्वेन—ग, घ.
[4] अनादृतास्तु—ठ.
[5] वैष्णवे धर्मशास्त्रे गुरुप्रकरणमेकत्रिंशम्—ज, ठ; वैष्णवे एकविंशोऽध्यायः—झ.
[6] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[7] श्री omitted in ग.

## द्वात्रिंशोऽध्यायः

**राजर्त्विक्श्रोत्रियाधर्मप्रतिषेध्युपाध्यायपितृव्यमातामह-मातुलश्वशुरज्येष्ठभ्रातृसंबन्धिनश्चाचार्यवत्[1] ॥ १ ॥ पत्न्य[2] एतेषां सवर्णाः ॥ २ ॥ मातृष्वसा पितृष्वसा ज्येष्ठा स्वसा च ॥ ३ ॥**

द्वात्रिंशे गुरुधर्मातिदेशविषयानाह। राजा अभिषिक्तः क्षत्रियः। ऋत्विक् उक्तलक्षणः। श्रोत्रियः एकशाखाध्यायी। अधर्मप्रतिषेधी निषिद्धकर्मणो निवर्तकः। उपाध्यायः उक्तलक्षणः। पितृव्यः पितृभ्राता। मातामहः मातुः पिता। मातुलः मातुर्भ्राता। श्वशुरः पत्नीपिता। ज्येष्ठभ्राता अग्रजः सोदर्यः। संबन्धिनौ पुत्रदुहितृश्वशुरौ। चकारात् पितामहादीनां ग्रहणम्;

"पितामहो भयत्राता चान्नदाता तथैव च।
वर्णज्येष्ठो यतिश्चैव सर्वे ते गुरवः स्मृताः ॥"

इति [3]**स्मरणात्**। एते आचार्यवन्मान्याः। तेन च प्रत्युत्थानाभिवादनादिकं सिध्यति ॥ १ ॥ एतेषां राजादीनां सवर्णाः पत्न्यश्च तद्वदेव मान्याः। सवर्णग्रहणात् असवर्णासु वक्ष्यति ॥ २ ॥ ज्येष्ठेति तिसृणामपि विशेषणम्; "पितुर्भगिन्यां मातुश्च ज्येष्ठायां च स्वसर्यपि" इति **देवलीयात्**। तेन स्वापेक्षया ज्येष्ठा एताः तिस्रोऽप्याचार्यवन्मान्याः। ज्येष्ठेति विशेषणात् कनिष्ठास्वभ्युत्थानमेव। चकारात् पितामह्यादीनां ग्रहणम्।

"माता मातामही चैव तथैव च पितामही।
मातृष्वसा मातुलानी श्वश्रूर्धात्री पितृष्वसा।
ज्येष्ठस्त्री च पितृव्यस्त्री गुरुस्त्री मातृवत् स्मृताः ॥"

इति **स्मरणात्**। मातात्र सपत्नमाता ज्ञेया; मातृवदित्यतिदेशात् ॥ ३ ॥

1 पूजनीयाः added in ज, झ, ठ. 2 पत्न्यश्च—ठ. 3 यमस्मरणात्—ग.

**श्वशुरपितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनम्[1] ॥ ४ ॥ हीनवर्णानां गुरुपत्नीनां दूरादभिवादनं न पादोपस्पर्शनम् ॥ ५ ॥ गुरुपत्नीनां गात्रोत्सादनाञ्जनकेशसंयमनपादप्रक्षालनादीनि न कुर्यात् ॥ ६ ॥**

श्वशुरादीनां स्वापेक्षया कनीयसां प्रत्युत्थानमेवाभिवादनकार्यकारि ; न पुनरभिवादनं कार्यम् । किंतु 'असावहम्' इति ब्रूयात् ;

"मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥"

इति **मानवात्** । गुरवो ज्ञानवृद्धादयः ; "भूयिष्ठार्थवन्तो गुरवः" इत्युपक्रम्य "ज्ञानवृद्धतपोवृद्धयोः" इति **हारीतस्मरणात्** ; तयोश्च कनिष्ठयोरपि संभवात् । परिगणनं राजादिनिवृत्त्यर्थम् ; तेषां कनीयसामपि मान्यत्वात् ; "बालोऽपि नावमन्तव्यो मनुष्य इति भूपतिः" इति **मानवात्** ॥ ४ ॥

हीनवर्णे क्षत्रियावैश्ये । बहुवचनात् मूर्धावसिक्ताद्याः । न शूद्रा ; पत्नीत्वविशेषणात् । तासां दूरादेवाभिवादनं कार्यम् । न पादावुपस्पृश्य । प्रत्युत्थानं त्वनुवर्तते ; "असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः" इति **मानवात्** । शूद्रायां प्रत्युत्थानमेव ; नाभिवादनम् ;

"उदक्यां सूतिकां शूद्रां भर्तृघ्नीं ब्रह्मघातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति ॥"

इति **शातातपीयात्** ॥ ५ ॥

गुरुशुश्रूषाणां कासांचित् तत्पत्नीष्वपवादमाह । अत्र पत्नीपदात् त्रैवर्णिकलाभेऽपि न शूद्रापरिहारः ; दृष्टदोषस्य तत्रापि समानत्वात् । गात्राणामुत्सादनमुद्वर्तनमभ्यञ्जनं च । अञ्जनं नेत्रयोः कज्जलादिना । केशानां संयमनं प्रसाधनं कबरीबन्धश्च । पादयोः प्रक्षालनमश्मादिना घर्षणेन मलापकर्षणम् । आदिपदात् स्नापनादिग्रहणम् । "नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षालनोन्मर्दनोपसंग्रहणानि" इति **गौतमीयात्** । गुरुपत्नीनामिति शेषः ॥ ६ ॥

**[2]असंस्तुतापि परपत्नी भगिनीति वाच्या पुत्रीति मातेति वा ॥ ७ ॥ न च गुरूणां त्वमिति ब्रूयात् ॥ ८ ॥ [3]तदतिक्रमे निराहारो दिवसान्ते तं प्रसाद्याश्नीयात् ॥ ९ ॥**

[1] अभिवादः—ठ. [2] असंस्कृतापि—घ. [3] तदभिधाने—ज.

असंस्तुता अपरिचिता । अपिशब्दात् योन्यसंबद्धा च । परपत्नी ; न परदास्यादिः । भगिन्यादिशब्दैः वाच्या । व्यवस्थितश्चायं विकल्पः । समानवयस्का भगिनीति, न्यूनवयस्का पुत्रीति, अधिकवयस्का मातेति ;

" परपत्नी च या स्त्री स्यादसंबद्धा च योनितः ।
तां ब्रूयाद्भवतीत्येवं[1] सुभगे भगिनीति च ॥ "

इति **मानवात्** ॥ ७ ॥

गुरूणां पूर्वोक्तानां त्वंकारम्, इतिकरणादेवंजातीयकमन्यदप्यपकर्षवचः हुंकारादि न ब्रूयात् । चकारादन्येषामपि मान्यानाम् ; प्रायश्चित्तस्मरणात् ॥ ८ ॥

तदेवाह । तेषां गुरूणामतिक्रमे त्वंकारादिवचने आहाररहितः सायं तं गुरुं प्रसाद्यापराधं क्षमापयित्वा श्नीयात् । पुनस्तच्छब्दनिर्देशः अन्यस्याप्यतिक्रमे उक्तप्रायश्चित्तविधानार्थः ;

" गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः ।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥ "

इति **योगिस्मरणात्** । दिवसान्ते अशनविधानादेव सिद्धौ निराहारवचनं यावत्प्रसादनं निराहारत्वार्थम् ; " कृते निःसंशये पापे न भुञ्जीतानुपस्थितः " इति लिङ्गात् ॥ ९ ॥

**न च गुरुणा सह [2]विगृह्य कथाः कुर्यात् ॥ १० ॥ न चैवास्य [3]परीवादम् ॥ ११ ॥ न चानभिप्रेतम् ॥ १२ ॥**

गुरुणा सह विगृह्य विजिगीषया कथाः जल्पवितण्डाः न कुर्यात् । चकारादन्येनापि विप्रेण ; " विप्रं निर्जित्य वादतः " इति **स्मरणात्** ॥ १० ॥ अस्य गुरोः परीवादं दोषाभिव्यक्तिं न कुर्यात् । चकारात् निन्दादिग्रहणम् ;

" परीवादात् खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ "

इति **मानवात्** । सद्दोषोक्तिः परीवादः । असद्दोषोक्तिर्निन्दा । वञ्चयित्वा भोजनं परिभोजनम् । उत्कर्षासहनं मत्सरः ॥ ११ ॥ गुरोः अनभिप्रेतं प्रतिकूलं न कुर्यात् ; " प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति " इति **योगिस्मरणात्** ॥ १२ ॥

**गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
[4]पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ १३ ॥**

[1] भगिनीत्येवं—घ.
[2] गुप्तकथाः—ज.
[3] परिवादान—ज, ठ.
[4] पूर्णे विंशतिवर्षे च—क.

**कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।**
**विधिवद्वन्दनं[1] कुर्यादसावहमिति ब्रुवन् ॥ १४ ॥**

पूर्णतारुण्या गुरुभार्या पूर्णविंशेन शिष्येण गुणे पादोपसंग्रहणोत्थे अदृष्टविशेषे दोषौ स्त्रीणां मोहकत्वं पुमिन्द्रियाणां दुर्निग्रहत्वं चेह लोके विजानता पादयोर्नोपसंग्राह्या । विंशतिवर्षत्वं व्यवहारक्षमत्वम्, "नैके युवतीनां व्यवहारप्राप्तेन" इति **गौतमीयात्** । तेन बालस्य युवत्यभिवादने यूनां वृद्धाभिवादने च नायं दोषः । दोषौ च,

"स्वभाव एष नारीणां नराणामिह दूषणम् ।"
"बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।"

इति **मनुना** स्पष्टीकृतौ । पत्नीपदान्न शूद्राव्युदासः ; दृष्टदोषतौल्यात् ॥ १३ ॥

तर्हि कथमभिवाद्येत्यत आह । युवा शिष्यो युवतीनां गुरुपत्नीनां भुवि पादावनुपस्पृशन् असावहमिति 'अभिवादयेऽहं भो अमुकशर्मा' इति स्वनाम निर्दिशन्, विधिवत् "व्यत्यस्तपाणिना" इत्यादिनोक्तरीत्या कामं यथेच्छमभिवादनं कुर्यात् ॥ १४ ॥

**[2]विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।**
**गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ १५ ॥**
**वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।**
**एतानि [3]मानस्थानानि गरीयो यद्यदुत्तरम् ॥ १६ ॥**

उक्तयोर्विधिनिषेधयोः कालप्रतिप्रसवावाह । यत् यूनो युवसु गुरुदारेषु पादग्रहणं निषिद्धं, तत् विप्रोष्य प्रवासादेत्य कार्यम् । यच्च भुव्यभिवादनं विहितं, तत् अन्वहमिति व्यवस्था । एतेन "विप्रोष्य पादोपसंग्रहणं गुरुभार्याणाम् । नैके युवतीनां व्यवहारप्राप्तेन" इति **गौतमीयोऽपि** विकल्पो व्याख्यातः । तत्र प्रमाणमाह—सतां धर्ममनुस्मरन्निति । शिष्टाचार एवात्र व्यवस्थाहेतुः । गुरुदारेष्विति सामान्योपादानेऽपि मात्रादीनामविप्रोष्याप्यन्वहं पादोपसंग्रहणं कार्यम् ; "नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्याभगिनीनाम्" इति **गौतमीयात्** ;

"उपसंग्रहणं कुर्याद्भगिन्या मातुरेव च ।
तथा पितृव्यभार्याणां समवायेऽन्वहं द्विजः ॥"

[1] वेदनं—ग.  [2] This verse omitted in ज.  [3] मान्यस्थानानि—ठ.

इति **स्मृत्यन्तराच्च**। भ्रातृभार्यादीनां तु विप्रोष्यापि न पादोपसंग्रहणम्; "नोपसंग्रहणं भ्रातृभार्याणां श्वश्र्वाश्च" इति **गौतमः**। भ्रातृभार्यादीनां श्वश्र्वाश्चोपसंग्रहणं न कार्यम्। अभिवादनमात्रं तु भवत्येव। तत्रापि अत्यन्तगुरुस्थानीयानां [1]मातुलान्यादीनामुपसंग्रहणम्; अन्यासामभिवादनमिति **हरदत्तः** ॥ १५ ॥

मान्यताहेतूनाह। वित्तं धनम्। बन्धुरभिजनः। वयो जन्मनः कालः। कर्म श्रौतस्मार्तादि। विद्या वेदादिः। परिगणनादेव संख्यासिद्धौ पञ्चमीग्रहणं "वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि" इति [2]**गौतमो**क्तवयोबलीयस्त्वनिराकरणाय। अत एव **गौतमः**—"श्रुतं तु सर्वेभ्यो गरीयः। एतन्मूलत्वाद्धर्मस्य" इति। यत्तु "विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्" इति **योगिस्मरणं**, तत्रापि पूर्वपूर्वपाठक्रमेण बलवत्त्वमिति ध्येयम्। संनिधावप्येतच्छब्दः **गौतमो**क्तजातिपरिग्रहणाय। एतानि आत्मनोऽतिरिक्तानि मानस्याभिवादनादेः प्रत्येकं स्थानानि निमित्तानि। [3]परस्परसमवाये तु उत्तरोत्तरं गरीयो वेदितव्यम्। अयमर्थः—अल्पधनस्य बहुधनः; अल्पबन्धोः बहुबन्धुर्मान्य इति। धनवद्बन्धुमतोः समवाये बन्धुमान्; बन्धुमद्वयोवृद्धयोः समवाये वयोवृद्धो मान्य इत्यादि। यदा तु द्वयोरपि तुल्यं धनादि, तदा उत्तरोत्तरगुणयोगेन मान्यः। तदाह **मनुः**—

"पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च।
यत्र स्युः स्यात् स मानार्हः शूद्रोऽपि दशमीं गतः॥"

इति। भूयांसि; धनबन्धू धनबन्धुवयांसीत्यादि। तेषामपि तौल्ये धनादावेव गुणो वाणिज्याद्युपायेभ्यः [4]प्रतिग्रहादिः अन्वेष्टव्यः। दशमीं नवत्यूर्ध्ववयस्कताम्॥ १६ ॥

**ब्राह्मणं दशवर्षं च शतवर्षं च भूमिपम्।**
**पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता॥ १७ ॥**
**विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः।**
**वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः॥ १८ ॥**

**इति [5]श्रीविष्णुस्मृतौ द्वात्रिंशोऽध्यायः**

जातिवयसोर्बलीयस्त्वे उदाहरणप्रत्युदाहरणे आह। दशवर्षत्वमुपनयनोर्ध्वकालताप्रदर्शनाय। शतवर्षत्वं च मान्यतातिशयप्रदर्शनाय; "शूद्रोऽपि दशमीं गतः" इत्यपिशब्दात् क्षत्रियादीनां सुतरां तत्सिद्धेः।

[1] मातुलान्यादीनाम् omitted in घ, छ.
[2] परबलीयस्त्व for वयोबलीयस्त्व—ख.
[3] परसमवाये—ग.
[4] धनादिः—ग.
[5] वैष्णवे —झ; वैष्णवे धर्मशास्त्रे गुर्वभिवादादेशप्रकरणं द्वात्रिंशम्—ज, ठ.

चकारात् वैश्यशूद्रयोर्ग्रहणम् । तेनाल्पवया अपि ब्राह्मणः वृद्धतमानामपि क्षत्रियादीनां पितेवाभिवादनीय इति ॥ १७ ॥

त्रैवर्णिकसाधारणं मान्यतानिमित्तमुक्त्वा प्रतिवर्णमसाधारणं तदाह । ज्ञानं वेदादिविद्याविषयकम् । वीर्यं युद्धादौ शौर्यम् । धान्यधने प्रसिद्धे । जन्मोत्पत्तिः । एतैः क्रमेण विप्रादीनां ज्यैष्ठ्यम् । एवकारो विप्रादिव्यावृत्त्यर्थः । तेन तेषां ज्ञानादिनैवेति नियमेन वित्तादीनामनियतत्वं गम्यते । ततश्च वित्तादिचतुष्टयवतोऽपि केवलविद्यावानेव ज्येष्ठ इति सिध्यति ;

" न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ "

इति **मानवात्** ॥ १८ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डित**तात्मज[2]**श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** द्वात्रिंशोऽध्यायः

---

[1] From श्रीमहाराजा up to पण्डितकृतौ omitted in घ, च.

[2] श्री omitted in घ.

## ADYAR LIBRARY PUBLICATIONS
### of Permanent Interest

**Mānameyodaya of Nārāyaṇa Bhaṭṭa**

*Ed. C. Kunhan Raja and S.S. Suryanarayana Sastri*
On Bhāṭṭa Mīmāmsā Epistemology and Ontology



**Vedāntaparibhāṣā of Veṅkaṭādhvarin**

*Ed. S.S. Suryanarayana Sastri*
On Advaita Epistemology and Ontology



**The Philosophy of Viśiṣṭādvaita**

*by P.N. Srinivasachari*
A critical and comprehensive study of Viśiṣṭādvaita Philosophy



**Indian Theories of Meaning**

*by K. Kunjunni Raja*
A study on meaning according to the various schools of thought in India



**Bhāmatī Catuḥsūtrī**

*Translated by C. Kunhan Raja and S.S. Suryanarayana Sastri*
Commentary on Śaṅkara-bhāṣya on the first four Sūtras of the *Brahma Sūtras*



**Amarakośa with South Indian Commentaries**

*Ed. by A.A. Ramanathan*
vols. I, II and III (Index, with English Meaning)



**Śrī Śaṅkara**

His Life, Philosophy and Relevance to Man in Modern Times
*by Dr S. Sankaranarayanan* (published in 1995)